ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसं[1]प्लवे ॥ 28 ॥
ये तु ज्ञानविदः शुद्ध[1]चेतसस्तेऽखिलं जगत्, ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ 29 ॥
प्रसीद सर्वभूतात्मन्[1]), भवाय जगतस्त्व[2]माम् ।
उद्धरोर्वीममेयात्मन् निमग्नाम[3]ब्जलोचन[4]) ! ॥ 30 ॥
सत्त्वोद्रिक्तोऽसि भगवन् गोविन्द, पृथिवीमिमाम् ।
समुद्धर भवायेश, कुरु सर्वजगद्धितम्[1]) ! ॥ 31 ॥

| सर्गप्रवृत्तिर्भवतो जगतामुपकारिणी ।
| भवत्वेषा, नमस्तेऽस्तु, शं नो देह्यब्जलोचन ! ॥ $31_1$ ॥

एवं संस्तूयमानोऽथ[1]) परमात्मा महीधरः । ]
उज्जहार क्षितिं[2]) क्षिप्रं न्यस्तवान् स[3]) महार्णवे[4]) ॥ 32 ॥

---

तस्योपरि जलौघस्य[1]) महती नौरिव स्थिता[2]), ।
विततत्वाच्च[3]) देहस्य न मही याति संप्लवम् ॥ 33 ॥
ततः क्षितिं समां कृत्वा[1]) पृथिव्यां सोऽचिनोद्[2]) गिरीन् ।
यथाविभागं भगवाननादिः पुरुषोत्तमः[3]) ॥ 34 ॥

प्राक् सर्गे दह्यमाने तु
तदा संवर्तकाग्निना ।
तेनाग्निना विशीर्णास्ते पर्वता भुवि सर्वशः ॥ 35 ॥
शैला एकार्णवे मग्ना वायुनापस्तु संहताः; ।
निषक्ता यत्र यत्रासंस्तत्र तत्राचलाभवन् ॥ $35_1$ ॥

| [ प्राक् सर्गदग्धानखिलान्
| पर्वतान् पृथिवीतले ।
| अमोघेन प्रभावेण
| ससर्जामोघवाञ्छितः ॥ 35 ॥ ]

भूविभागं[1]) ततः कृत्वा सप्त द्वीपान्[2] यथातथम्[3]) ।
भूरा[4]द्यांश्चतुरो लोकान् पूर्ववत् समकल्पयत् ॥ 36 ॥

---

28 = P.1 I. 3.49b, 50ª. P.2 V. 3.42; Vi. I. 4.40. 1) P.1P.2 तमसः ।
29 = P.1 I. 3.50b, 51ª; P.2 V. 3.43; Vi. I. 4.41. 1) P.2-द्दो बृद्धाद्य् ।
30 = P.1 I. 3.51b, 52ª; P.2 V. 3.44; Vi. I. 4.42. 1) Vi. सर्व सर्वात्मन् । 2) Vi. –तामि– । 3) Vi. शं नो देवा– ।
4) P.2-शां जलसंप्लवे ।
31 = P.1 I. 3.52b, 53ª; P.2 V. 3.45; Vi. I. 4.43. 1) Vi. शं नो देह्यब्जलोचन ।
| $31_1$ = Vi. I. 4.44.
32 = P.1 I. 3.53b, 54ª; P.2 V. 3.46; Vi. I. 4.44. 1) P.1P.2 –मानश्च; Vi.2 नस्तु । 2) Vi.2 महीं ।
3) Vi. –वांश्च । 4) Vi.2 महाम्भसि ।

---

33 = Mr. 47.10; P.1 I. 3.54b = a; P.2 V. 3.47ª = a; Vi. I. 4.46. 1) Vi. समुद्रस्य । 2) P.2 –वास्थिता ।
3) Mr. Vi.2 तु ।
34 = Mr. 47.11ª = a; P.1 I. 3.55; P.2 V. 3.47b, 48ª; Vi. I. 4.47. 1) Mr. समीकृत्य । 2) Mr. –ऽसृजद् ;
P.1 अचि–; P.2 उच्चि– । 3) Vi. परमेश्वरः ।
35ª = Mr. 47.11b.
35b = Mr. 47.12ª.
$35_1$ = Mr. 47.12b, 13ª.
| 35 = Vi. I. 4.48.
36 = Mr. 47.13b, 14ª; P.1 I. 3.56; P.2 V. 3.48b, 49ª; Vi. 4.49. 1) P.2 T. भूरिमारां; V. भूरिमागं । 2) Vi.1 –पं ।
3) Mr. –पोपशोभितम् । 4) Vi.1 भुवा– ।

ब्रह्मणे विष्णुना पूर्व-
मेतदेव प्रदर्शितम् ।
तुष्टेन देवदेवेन
त्वं देवः पुरुषोत्तमः, ॥ 37 ॥
त्वया मया जगच्चेदं
धार्यं पाल्यं च यत्नतः ।
येषां त्वसुरमुख्यानां
वरो दत्तो मयाऽधुना ॥ 38 ॥
देवानां हितकामेन,
हन्तव्यास्ते त्वया विभो ! ।
अहं सृष्टिं करिष्यामि,
सा च पाल्या त्वया विभो ।
एवमुक्तो गतो विष्णु-
र्देवादीनसृजद्[1]) विभुः ॥ 39 ॥

ब्रह्मरूपधरो देव-
स्ततोऽसौ रजसा वृतः ।
चकार सृष्टिं भगवां-
श्चतुर्वक्त्रधरो हरिः ॥ 37 ॥
(निमित्तमात्रमेवासीत्[1])
सृज्यानां सर्गकर्मणि[2]), ।
प्रधानकारणीभूता
यतो वै सृज्यशक्तयः ॥ 38 ॥
निमित्तमात्रं मुक्त्वैकं
नान्यत् किंचिदवे[1]क्ष्यते, ।
नीयते तपतां श्रेष्ठ
स्वशक्त्या वस्तु वस्तुताम् ॥ 39 ॥

## चतुर्थोऽध्यायः

( A. 20. 1-6; Ga. 4. 14b-18; Kū. 7. 1-18a; Mr. 47.14b-36; P.1 I. 3.60b-83a; P.2 V. 3.53a-75; Var. 2.27-41; Vi. I. 5.1-24.

( मैत्रेय उवाच :
यथा ससर्ज देवोऽसौ देवर्षिपितृदानवान् ।
मनुष्यतिर्यग्वृक्षादीन् भूव्योमसलिलौकसः ॥ $1_1$ ॥
यद्गुणं यत्स्वरूपं च यत्स्वभावं[1]) जगद् द्विज ।
सर्गादौ सृष्टवान् ब्रह्मा, तन् ममाचक्ष्व तत्त्वतः[2]) ! ॥ $1_2$ ॥
पराशर उवाच :
मैत्रेय कथयाम्येष, शृणुष्व सुसमाहितः, ।
यथा ससर्ज देवोऽसौ देवादीनखिलान् प्रभुः[1]) ॥ $1_3$ ॥

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकः सर्गः[1]) प्रादुर्भूतस्तमोमयः ॥ 1 ॥
तमो मोहो महामोहस्तामिस्रो ह्य[1])न्धसंज्ञितः[2]) ।
अविद्या पञ्चपर्वैषा[3]) प्रादुर्भूता महात्मनः ॥ 2 ॥
पञ्चधावस्थितः सर्गो ध्यायतोऽप्रतिबोधवान्[1]) ।
संवृतस्तमसा चैव बीजकुम्भवदावृतः, ।
वहिरन्तश्चाप्रकाशः
स्तब्धनिःसंज्ञ[1]) एव च ॥ 3 ॥

वहिरन्तश्चाप्रकाशः[1])
संवृतात्मा नगा[2]त्मकः ॥ 3 ॥

---

37 = P.1 I. 3.57; P.2 V. 3.49b, 50a.
38 = P.1 I. 3.58; P.2 V. 3.50b, 51a.
39 = P.1 I. 3.59; 60a, P.2 V. 3.51b, 52a.
1) P.2 –खिलं ।

37 = Vi. I. 4.50.
38 = Vi. I. 4.51. 1) Vi.2 –सौ । 2) Vi.2 –णाम् ।
39 = Vi. I. 4.52. 1) Vi.2 –पे– ।

---

$1_1$ = Vi. I. 5.1.
$1_2$ = Vi. I. 5.2; 1) Vi.2 –भावं च यद्रूपं च । 2) Vi.2 विस्तरात् ।
$1_3$ = Vi. I. 5.3; Vi.2 विभुः ।

1 = Kū. 7.1; Mr. 47.14b, 15a; P.1 I. 3.60b = b; P.2 V. 3.53a = b; Var. 2.27; Vi. I. 5.4.
1) Mr. तस्मात्; P.1P.2 Var. तस्य ।
2 = Kū. 7.2; Mr. 47.15b, 16a; P.1 I. 3.61a = a; P.2 V. 3.53b = b; Var. 2.28; Vi. I. 5.5. 1) Kū. T. –त्वथा– । 2) P.1 –ध्रकः । 3) Kū. पञ्चमी तेषां; P.2 –धा यं च सर्वेषां ।
3a = Kū. 7.3a; Mr. 47.16b; P.1 I. 3.61b; P.2 V. 3.54a; Var. 2.29a; Vi. I. 5.6a.

मुख्या नागा यतश्चोक्ता[1]), मुख्यसर्गस्ततस्त्वयम्[2]) ।
तं दृष्ट्वासाधकं सर्गममन्यदपरं पुन:[3]) ॥ 4 ॥

तस्याभिध्यायतः सर्ग[1]) तिर्यक्स्रोतोऽभ्यवर्त[2]त[3]) ।
यस्मात्[4] तिर्यक् प्रवृत्तः स[5]), तिर्यक्स्रोतस्[6]) ततः[7]) स्मृतः ॥ 5 ॥

पश्वादयस्ते विख्यातास्तमः[1]प्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव[2]), तेऽज्ञाने ज्ञानमानिनः ॥ 6 ॥

अहंकृता अहं[1]माना अष्टाविंशद्विधात्मकाः[2]) ।
अन्तः प्रकाशास्ते सर्वे[3]) आवृतास्तु[4]) परस्परम् ॥ 7 ॥

तमप्यसाधकं[1]) मत्वा[2]) ध्यायतोऽन्यस्ततोऽभवत्[3]) ।
ऊर्ध्वस्रोत[4]स्तृतीयस्तु[5]) सात्त्विकोर्ध्वम् (!) अवर्तत[6]) ॥ 8 ॥

ते सुखप्रीतिबहुला बहिरन्तस्त्व[1]नावृताः, ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोभवाः स्मृताः[2]) ॥ 9 ॥

तुष्टात्मन[1]स्तृतीयस्तु देव[2]सर्गस्तु[3]) स[4]) स्मृतः, ।
तस्मिन् सर्गेऽभवत् प्रीतिर्निष्पन्ने[5]) ब्रह्मणस्तदा[6]) ॥ 10 ॥

---

1) Kū. –तः सोऽभिमानिनः, P.1 –तस्तु महात्मनः; P.2 –तः प्रतिबुद्धवान् ; Var. –तः प्रतिबोधवान् ।

3bc = Kū. 7.3b, 4a. 1) Kū. T. –शस्तत्र निःसङ्ग ।

3b = Mr. 47.17a; P.1 I. 3.62a; P.2 V. 3.54b; Vi. I. 5.6b. 1) Vi. –न्तोऽप्रकाशश्च । 2) P.2 –नमा– ।

4 = Kū. 7.4b, 5a; Mr. 47.17b, 18a; P.1 I. 3.62b, 63a; P.2 V. 3.55; Var. 2(29b); Vi. I. 5.7. 1) Kū. इति प्रोक्ता । 2) Kū. –र्गस्तु स स्मृतः । 3) Kū. P.1P.2 प्रभुः; Var. स मुख्यसर्गो विज्ञेयः सर्गविद्भिर्विचक्षणैः ।

5 = Kū. 7.5b, 6a; Mr. 47.18b, 19a; P.1 I. 3.63b, 64a; P.2 V. 3.56; Var. 2.30(ab); Vi. I. 5.8. 1) P.1, Vi.2 –र्गस् ; P.2 –तो नस्तस् । 2) Mr. –तो ह्यवर्त–; Vi. ताभ्यवर्तत । 3) Var. पुनरन्यमभूत् तस्य ध्यायतः सर्गमुत्तमम् । 4) P.2 तस्मात् । 5) Mr. –वृत्तिः सा; P.1P.2 –वृत्तिः स्यात् ; Var. तिर्यक्स्रोतस्तु वै यस्मात् । 6) P.2 –त्रातस् ; Vi.1 –तास् । 7) Var. तु वै ।

6 = Kū. 7.6b = a[I]b[I]; Mr. 47.19b, 20a; P.1 I. 3.64b, 65a; P.2 V. 3.57; Var. 2 31a = a[I]b[I]; Vi. I. 5.9. 1) Kū. Var. –ता त –। 2) Kū. –णो द्विजाः, Var. –णः कृताः ।

7 = Mr. 47.20b, 21a; P.1 I. 3.65bc; P.2 V. 3.58; Vi. I. 5.10. 1) P.1P.2 –तास्त्वहं– । 2) Vi.1 –शद्वधा–; Vi.2 –शद्वधान्विताः । 3) Mr., Vi. –र्वे । 4) P.1P.2 ते; Vi.2 ताश्च ।

8 = Kū. 7.7; Mr. 47.21b, 22a; P.1 I. 3.66; P.2 V. 3.59; Var. 2.31b, 32a; Vi. I. 5.11. 1) Var. –र्न । 2) Kū. ज्ञात्वा । 3) Kū. सर्गमन्यं ससर्ज ह; Var. तिर्यक्स्रोतश्चतुर्मुखः । 4) Vi. –ता– । 5) Kū. त इति प्रोक्तो; Var. –त्तखिषा यस्तु । 6) Kū. देवसर्गस्तु सात्त्विकाः; Var. –को धर्मवर्तनः ।

9 = Kū. 7.8 ; Mr. 47.22b, 23a; P.1 I. 3.67; P.2 V. 3.60; Vi. I. 5.12. 1) P.1P.2 –न्तर् ; Vi.2 –न्तश्च । 2) Kū. स्वभावाद् देवसंज्ञिताः; Mr. –तःसमुद्भवाः; P.1 –तास्ततः स्मृताः; P.2 –तस्ततः स्मृतः ।

10 = Mr. 47.23b, 24a; P.1 I. 3.68; P.2 V. 3.61; Var. 2(33a); Vi. I. 5.13. 1) Vi.2 तुष्ट्यात्मक– । 2) P.2 वेद– । 3) Mr. –र्गो हि । 4) P.1P.2 सं–; Vi.2 यः । 5) P.2 –र्निष्पन्दे । 6) Var. तदा सृष्टान्यसर्गं तु तदा दध्यौ प्रजापतिः ।

ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
असाधकांस्तु ताञ् ज्ञात्वा[1]) मुख्यसर्गादिसंभवान्[2]) ॥ 11 ॥
तथा[1]भिध्यायतस्तस्य सत्याभिध्यायिनस्ततः[2]) ।
प्रादुर्बभूव[3]) चा[4]व्यक्तादर्वाक्स्रोतस्तु साधकः[5]) ॥ 12 ॥
यस्मादर्वाक् प्रवर्तन्ते[1]), ततोऽर्वाक्स्रोतसस्तु ते ।
ते च[2]) प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः, ॥ 13 ॥
तस्मात् ते दुःखबहुला भूयो भूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकाश्च ते[1]) ॥ 14 ॥

> पञ्चमोऽनुग्रहः सर्गः, स चतुर्धा व्यवस्थितः[1]) : ।
> विपर्ययेण सिद्ध्या च शक्त्या[2]) तुष्ट्या तथैव च ॥ 15 ॥
> निवृ[1]त्तं वर्तमानं च तेऽर्थं[2]) जानन्ति वै पुनः ।
> भूतादिकानां भूतानां, षष्ठः सर्गः स उच्यते ॥ 16 ॥
> ते परिग्राहिणः[1]) सर्वे संविभागरतास्तथा[2]) ।
> चोद[3]नाश्चाप्यशीलाश्च[4]) ज्ञेया भूतादिकास्तु[5]) ते ॥ 17 ॥

इत्येते कथिताः सर्गाः षडत्र मुनि[1]सत्तम[2]) : ।
प्रथमो महतः सर्गो, विज्ञेयो[3]) ब्रह्मणस्तु सः[4]) ॥ 18 ॥
तन्मात्राणां[1]) द्वितीयस्तु[2]), भूतसर्गो हि स स्मृतः[3]) ।
वैकारिकस्तृतीयस्तु[4]) सर्गश्चैन्द्रि[5]यकः स्मृतः ॥ 19 ॥

---

11 = Mr. 47.24b = a; P.1 I. 3.69; P.2 V. 3.62; Var. 2 33b = b; Vi. I. 5.14. 1) Var. मत्वा । 2) Vi. –वम् ।

12 = Kū. 7.9; Mr. 47.25; P.1 I. 3.70; P.2 V. 3.63; Var. 2.(34); Vi. I. 5.15. 1) Kū. ततोऽ । 2) Kū. तदा; Var. ततः संचिन्तयामास अर्वाक्स्रोतस्तु स प्रभुः । 3) Kū. –दुरासीत्; Mr. –दुर्बभौ; P.1P.2. Vi.2 –दुर्भूतस् । 4) Kū. Mr. P.1P.2 Vi.2 तदा– । 5) Vi.1 –कम् ; Var. अर्वाक्स्रोतसि चोत्पन्ना मनुष्याः साधका मताः ।

13 = Kū. 7.10[a] = b; Mr. 47.26; P.1 I. 3.71; P.2 V. 3.64; Var. 2.35[a] = b; Vi. I. 5.16. 1) Mr. –र्वाग् व्यवर्तन्त । 2) Kū. तत्र ।

14 = Kū. 7.(10b); Mr. 47.27; P.1 I. 3.72; P.2 V. 3.65; Var. 2.35b = a; Vi. I. 5.17. 1) Vi.2 –स्तु ते; Kū. दुःखोत्कटाः सत्त्वयुता मनुष्याः परिकीर्तिताः ।

> 15 = Kū. 7(11b); Mr. 47.28; P.1 I. 3.73; P.2 V. 3.66. 1) Kū. तस्याभिध्यायतः सर्गं सर्गो भूतादिकोऽभवत् । 2) Mr. शान्त्या ।
> 16 = Mr. 47.29; P.1 I. 3.74; P.2 V. 3.67. 1) Mr. निर्वृ– । 2) P.1 तेन; P.2 तेऽनु– ।
> 17 = Kū. 7.12; Mr. 47.30; P.1 I. 3.75; P.2 V. 3.68. 1) P.1P.2 –ग्राहिणः । 2) Kū. –ताः पुनः; P.1P.2 –सविभागतरास्तु ते । 3) Kū. खादि– । 4) Kū. T. –शाकाश्च; P.1P.2 –नाचाप्यशीलाश्च । 5) Kū. भूताद्याः परिकीर्तिताः; Mr. –काश्च ।

18 = A. 20.1[a] = b; Ga. 4.14b = b; Kū. 7.13([a])b; Mr. 47.31[a] = b; P.1 I. 3.76; P.2 V. 3.69; Var. 2.36[ab]I = abI; Vi. I. 5.18. 1) P.1P.2 नृप– । 2) Var. षडेते सुभगे तव; Kū. इत्येते पञ्च कथिताः सर्गा वै द्विजपुङ्गवाः । 3) Ga. विरूपो; P.1 द्वितीयो । 4) P.1P.2 यः ।

19 = A. 20.1b, 2[a]; Ga. 4.15; Kū. 7.14; Mr. 47.31b, 32[a]; P.1 I. 3.77; P.2 V. 3.70; Var. 2.36bII, 37[a] = aIb; Vi. I. 5.19. 1) Var. –शाख्यो । 2) Var. –तीयकः; Vi. –यश्च । 3) Kū. T. संस्मृतः; Mr. –र्गः स उच्यते; Vi. –र्गस्तु स स्मृतः । 4) Mr. –यश्च । 5) A. Kū. Vi. –नो ऐन्द्रि–; Ga. –श्चेन्द्रि– ।

इत्येष प्राकृतः सर्गः संभूतोऽबुद्धि[1]पूर्वकः ।
मुख्य[2]सर्गश्चतुर्थस्तु, मुख्या वै स्थावराः स्मृताः ॥ 20 ॥
तिर्यक्स्रोत[1]स्तु[2]) यः प्रोक्तस्तैर्यग्योन्यः[3]) स पञ्चमः[4]) ।
तथो[5]र्ध्वस्रोतसां[6]) षष्ठो[7]), देवसर्गस्तु स स्मृतः ॥ 21 ॥
ततोऽर्वाक्स्रोतसां[1]) सर्गः सप्तमः, स तु मानुषः[2]) ।
अष्टमोऽनुग्रहः सर्गः, सात्त्विकस्तामसश्च सः[3]) ॥ 22 ॥
पञ्चैते वैकृताः सर्गाः, प्राकृतास्तु[1]) त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव[2]) कौमारो नवमः स्मृतः[3]) ॥ 23 ॥
इत्येते वै[1]) समाख्याता नव सर्गाः प्रजापतेः ।
प्राकृता वैकृताश्चैव[2]) जगतो मूलहेतवः ।
सृजतो जगदीशस्य[3]) किमन्यच्छ्रोतुमिच्छसि[4]) ? ॥ 24 ॥

---

20 = A. 20.2b, 3ª; Ga. 4.16; Kū. 7.15; Mr. 47.32b, 33ª; P.1 I. 3.78; P.2 V. 3 71. Var. 2.37b, 38ª; Vi. I. 5.20 1) A. Ga. Kū. Mr. P.1 Var. बुद्धि– । 2) A. Mr. –स्यः ।

21 = A. 20 3b, 4ª; Ga. 4.17; Kū. 7.16; Mr. 47.33b, 34ª; P.1 I. 3.79; P.2 V. 3.72; Var. 2.38b, 39ª1; = ab1; Vi. I. 5.21. 1) A. T. Ga. Vi.1 –ता– । 2) P.1P.2 Var. –श्च । 3) Kū. P.1P 2 –स्तिर्यग्योन्यः; Var. –स्तैर्यक्स्रोतः । 4) A. ततः स्मृतः; Ga. P.1P.2 Var. Vi. उच्यते । 5) Ga. Vi.2 तदू–; Mr., Var. ततो–। 6) P.2 –रेतसाम् ; Vi.1 ऊर्ध्वस्रोतस्ततः । 7) Var. श्रेष्ठः ।

22 = A. 20.4b, 5ª; Ga. 4.18; Kū. 7.17; Mr. 47. 34b, 35ª; P.1 I. 3.80; P.2 V. 3.73; Var. 2.39ªIIb = aIIb; Vi. I. 5.22. 1) Vi.1 –स्रः । 2) Var. मानवः । 3) A. यः; Ga. P.1 P.2 –स्तु सः; Kū. –मो भौतिकः सर्गो भूतादीनां प्रकीर्तितः ।

23 = A. 20.5b, 6ª; Ga. 4.19; Kū. 7.(18ª) = b; Mr. 47.35b, 36ª; P.1 I. 3.81; P.2 V. 3.74ª = a; Var. 2.40; Vi. I. 5.23. 1) A. –श्च । 2) Ga. –ता वैकृताश्चापि । 3) A. –मस्तथा; Kū. नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे ।

24 = A. 20.6b = b; Mr. 47.36b = a; P.1 I. 3.82, 83ª; P.2 V. 3.74b, 75; Var. 2.41; Vi. I. 5 24. 1) P.1P 2 एते तव; Vi.2 तु । 2) A. ब्रह्मतो नवसर्गास्तु । 3) Var. इत्येते कथितः सर्गः । 4) P.2 –मर्हसि ।

---

## पञ्चमोऽध्यायः

( Ga. 4.20–35; Kū. 7.38–67; Mr. 48.1–45; P.1 I. 3.83b–124; P.2 V. 3.76–116; Vi. I. 5.25-65. )

क्रौष्टुकिरुवाच :
समासात्कथिता सृष्टिः
सम्यग्भगवता मम, ।
देवादीनां भवं ब्रह्मन्
विस्तरात्तु ब्रवीहि मे ! ॥ 1 ॥
मार्कण्डेय उवाच :
कुशलाकुशलैर्ब्रह्मन्
भाविताः पूर्वकर्मभिः ।

मैत्रेय ( भीष्म ) उवाच :
संक्षेपात् कथितः[1]) सर्गो[2])
देवादीनां मुने[3]) त्वया[4]), ।
विस्तराच्छ्रोतुमिच्छामि
त्वत्तो मुनिवरोत्तम ! ॥ 1 ॥
पराशर ( पुलस्त्य ) उवाच
कर्मभिर्भाविताः पूर्वैः[1])
कुशलाकुशलैस्तु[2]) ताः[3]),

ख्यात्या तया[1]) ह्यनिर्मुक्ताः संहारे ह्यु[2]पसंहृताः[3]) ॥ 2 ॥

देवाद्याः स्थावरान्ताश्च
प्रजा ब्रह्मंश्चतुर्विधाः

स्थावरान्ताः[1]) सुराद्यास्तु[2])
प्रजा ब्रह्मंश्च[3]तुर्विधाः ।

ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसास्तु[1]) ताः[2]) ॥ 3 ॥

ततो देवासुरपितॄन् मानुषांश्च[1]) चतुष्टयम् ।
सिसृक्षुरम्भांस्येतानि[2]) स्वमात्मानमयूयुजत्[3]) ॥ 4 ॥

यु[1]क्तात्मनस्तमोमात्रा[2]) उद्रिक्ताभूत्[3]) प्रजापतेः, ।
सिसृक्षोर्ज[4]घनात्पूर्वमसुरा जज्ञिरे[5]) ततः[6]) ॥ 5 ॥
उत्ससर्ज ततस्तां तु[1]) तमोमात्रात्मिकां तनुम्[2]); ।

---

1 = Mr. 48.1.

2ᵃ = Mr. 48.2ᵃ.

1 = P.1 I. 3.83b, 84ᵃ; P.2 V. 3.76; Vi. I. 5.25. 1) P.1P.2 –ताः । 2) P.1P.2 –र्गो । 3) P.1 गुरोस् ; P.2 गुरो । 4) P.1 तथा; Vi.2 त्वया मुने ।

2ᵃ = P.1 I. 3.84b; P.2 V. 3.77ᵃ; Vi. I. 5.26ᵃ. 1) P.1P.2 सर्वै । 2) P.2 -लास्तु । 3) P.1P.2 ने ।

2b = Mr. 48.2b; P.1 I. 3.85ᵃ; P.2 V. 3.77b; Vi. I. 5.26b. 1) Mr. –ता तया; P.2 –तास्त्वया । 2) Mr. प्रलये ह्यु ; P.2 –राद्यु– । 3) P.2 –हृताः ।

3ᵃ = Mr. 48.3ᵃ.

3ᵃ = Ga. 4.20ᵃ; P.1 I. 3.85b; P.2 V. 3.78ᵃ; Vi. I. 5.27ᵃ. 1) P.2 –राद्याः । 2) Vi.2 –श्च । 3) Ga. रुद्र च–; P.1P.2 रान्तंश्च– ।

3b = Ga. 4.20b; Mr. 48.3b; P.1 I. 3.86ᵃ; P.2 V. 3.78ᵇ; Vi. I. 5.27b. 1) Vi.2 –सीस्तु । 2) Ga. –साः सुताः; Mr. तदा; Ga. P.1P.2 –साः स्मृताः ।

4 = Ga. 4.21; Kū. 7.38ᵇᶜ; Mr. 48.4; P.1 I. 3.86b, 87ᵃ; P.2 V. 3.79; Vi. I. 5.28. 1) P.1P.2 –स्तु । 2) Kū. –क्षुर्भगवानीशः । 3) Kū. T. –योजयत् ।

5 = Ga. 4.22; Kū. 7.39; Mr. 48.5; P.1 I. 3.87b, 88ᵃ; P.2 V. 3.80; Vi. I. 5.29. 1) Ga. P.1P.2 सु– । 2) Ga. ततो मात्रा; P.1P.2 ततो जाता । 3) Kū. बुद्धि–; P.1P.2 दुरात्मानः । 4) Kū. ततोऽस्य ज– । 5) P.1P.2 जज्ञिरे त्वसुरास् । 6) Kū. सुताः ।

6ᵃ = Ga. 4.23ᵃ; Kū. 7(40ᵃ); Mr. 48.6ᵃ; P.1 I. 3.88b; P.2 V. 3.81ᵃ; Vi. I. 5.30ᵃ. 1) P.1P.2 तत्याज तां ततो दुर्गां । 2) Kū. [illegible] ।

सापविद्धा[1]) तनुस्तेन
सद्यो रात्रिरजायत ॥ 6 ॥
अन्यां तनुमुपादाय
सिसृक्षुः प्रीतिमाप सः, ।
सत्त्वोद्रेकास्ततो देवा
मुखतस्तस्य जज्ञिरे ॥ 7 ॥
उत्ससर्ज च भूतेश-
स्तनुं तामप्यसौ विभुः, ।
सा चापविद्धा दिवसं
सत्त्वप्रायमजायत ॥ 8 ॥

सा तु[1]) त्यक्ता तनु[2]स्तेन[3])
मैत्रेयाभूद्[4]) विभावरी ॥ 6 ॥
सिसृक्षुरन्यदेहस्थः
प्रीतिमाप[1]), ततः सुराः ।
सत्त्वोद्रिक्ताः समुद्भूता
मुखतो[2]) ब्रह्मणो द्विज[3]) ॥ 7 ॥
त्यक्ता सापि[1]) तनुस्तेन
सत्त्वप्रायम[2]भूद् दिनम्; ।
ततो हि बलिनो रात्रा-
वसुरा, देवता दिवा ॥ 8 ॥

सत्त्वमात्रात्मिकामेव[1]) ततोऽन्यां जगृहे तनुम्,[2]) ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे[3]) ॥ 9 ॥

उत्ससर्ज पितॄन् सृष्ट्वा[1]) ततस्[2]) तामपि स प्रभुः[3]), ।
सा चोत्सृष्टाभवत् संध्या दिननक्तान्तर[4]स्थिता[5]) ॥ 10 ॥

रजोमात्रात्मिकामन्यां
तनुं भेजेऽथ स प्रभुः[1]), ।
ततो मनुष्याः संभूता
रजोमात्रासमुद्भवाः[2]) ॥ 11 ॥
सृष्ट्वा मनुष्यान् स विभु-
रुत्ससर्ज तनुं ततः, ।
ज्योत्स्ना समभवत् सा च
नक्तान्तेऽह्नमुखे च या ॥ 12 ॥

रजोमात्रात्मिकामन्यां
जगृहे स तनुं ततः, ।
रजोमात्रोत्कटा जाता
मनुष्या द्विज[1]सत्तम[2]) ॥ 11 ॥
तामप्याशु[1]) स तत्याज
तनुं सद्यः[2]) प्रजापतिः, ।
ज्योत्स्ना समभवत्[3]) सापि[4]),
प्राक्संध्या या[5]भिधीयते ॥ 12 ॥

---

6b = Kū. 7.40b; Mr. 48.6b. 1) Kū. सा चोत्सृष्टा ।

7 = Mr. 48.7.

8 = Mr. 48.8.

6b = Ga. 4.23b; P.1 I. 3.89a; P.2 V. 3.81b; Vi. I. 5.30b. 1) P.2 च । 2) P.2, Vi. तत- । 3) Ga. तमोमात्रा तनुस्त्यक्ता । 4) Ga. शङ्करामूद्; P.1P.2 राजेन्द्राभूद् ।

7 = Ga. 4.24; P.1 I. 3.89b, 90a; P.2 V. 3.82; Vi. I. 5.31. 1) P.1P.2–मापुस् । 2) Ga. –कास्तु मुखतः संभूता । 3) Ga. हर; P.1 नृप; P.2 ब्राह्मणादयः ।

8 = Ga. 4.25; P.1 I. 3.90b, 91a; P.2 V. 3.83; Vi. I. 5.32. 1) Ga. सत्त्वप्राया; Vi.1 सा तु । 2) Ga. संत्यक्ता साप्य– ।

9 = Ga. 4 (26a) = a; Kū. 7.44; Mr. 48.9; P.1 I. 3.91b, 92a; P.2 V. 3.84; Vi. I. 5.33. 1) P.1P 2–ऽन्वेव । 2) Ga. –मात्रां तनूं गृह्य पितरश्च ततोऽभवन् । 3) Kū. –रः संप्रजज्ञिरे ।

10 = Ga. 4.26b = b; Kū. 7.45a(b); Mr. 48.10; P.1 I. 3.92b, 93a; P.2 V. 3.85; Vi. I. 5.34. 1) P.1P 2 कृत्वा । 2) Mr. सृष्ट्वा पितॄनुत्ससर्ज तनुं । 3) Kū. विश्वदृक् । 4) P.1 –न्तरा । 5) P.1P.2, Vi. –तिः; Kū. सापविद्धा तनुस्तेन सद्यः संध्या व्यजायत ।

11 = Kū. 7.(48); Mr. 48.11. 1) Kū. –कां ब्रह्मा तनुमन्यां ततोऽसृजत । 2) Kū. ततोऽस्य जज्ञिरे पुत्रा मनुष्या रजसावृताः ।

12 = Mr. 48.12

11 = Ga. 4.(27a); P.1 I. 3.93b, 94a; P.2 V. 3.86; Vi. I. 5.35. 1) P.1P 2 –म्याः कुरु– । 2) Ga. –मात्रां तनूं गृह्य मनुष्यास्त्वभवंस्ततः ।

12 = Ga. 4.27b = b; Kū. 7.49; P.1 I. 3.94b, 95a; P.2 V.

इत्येतास्तनवस्तस्य देवदेवस्य धीमतः ।
ख्याता राज्यहनी चैव संध्या ज्योत्स्ना च वै द्विज ॥ $12_1$ ॥
ज्योत्स्ना संध्या तथैवाहुः सत्त्वमात्रात्मकं त्रयम्, ।
तमोमात्रात्मिका रात्रिः, सा वै तस्मात् त्रियामिका ॥ $12_2$ ॥
तस्माद् देवा दिवा, रात्रावसुरास्तु बलान्विताः, ।
ज्योत्स्नागमे च मनुजाः, संध्यायां पितरस्तथा ॥ $12_3$ ॥

| | |
|---|---|
| भवन्ति बलिनोऽनुष्या | ज्योत्स्नागमे तु[1]) बलिनो |
| विपक्षाणां न संचयः । | मनुष्याः, पितरस्तथा । |
| तद्विपर्ययमासाद्य | मैत्रेय[2]) संध्यासमये |
| प्रयान्ति च विपर्ययम् ॥ 13 ॥ | तस्मादेते[3]) भवन्ति वै ॥ 13 ॥ |

ज्योत्स्ना राज्यहनी संध्या चत्वार्येतानि वै प्रभोः[1]) ।
ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि तु[2]) ॥ 14 ॥

---

| | |
|---|---|
| चत्वार्येतान्यथोत्पाद्य | रजोमात्रात्मिकामेव |
| तनुमन्यां प्रजापतिः । | ततोऽन्यां जगृहे तनुम् । |
| रजस्तमोमयीं रात्री | ततः क्षुद्[1]) ब्रह्मणो जाता, |
| जगृहे क्षुत्तृडन्वितः ॥ 15 ॥ | जज्ञे कोपस्तया[2]) ततः[3]) ॥ 15 ॥ |
| तदन्धकारे क्षुत्क्षामा- | क्षुत्क्षामान[1]न्धकारे तु[2]) |
| नसृजद् भगवानजः । | सो[3])ऽसृजद् भगवांस्ततः[4]); । |
| विरूपान् श्मश्रुलानस्तु- | विरूपाः श्मश्रुला जाताः[5]) |
| मारब्धास्ते च तां तनुम् ॥ 16 ॥ | समधावन्त तं[6]) प्रभुम् ॥ 16 ॥ |

---

3.87; Vi. I. 5.36. 1) Kū. T. तामथाशु । 2) P.1P.2 आर्द्या; Vi.2 आद्य: । 3) Kū. सा चाभवद् । 4) Ga. सा त्यक्ता चाभवज् ज्योत्स्ना; Kū. विप्राः; P.1P.2 चापि । 5) P.2 –था– ।

$12_1$ = Mr. 48.13.
$12_2$ = Mr. 48.14.
$12_3$ = Mr. 48.15.

13 = Mr. 48.16.

13 = P.1 I. 3.95b, 96[a]; P.2 V. 3.88; Vi. I. 5.37. 1) Vi.1 –स्त्वायामेव; Vi.2 –स्त्वोद्गमे । 2) P.1P.2 राजेन्द्र । 3) P.1P.2 –स्माद् ते प्र– ।

14 = Ga. 4.28[a] = a; Mr. 48.17; P.1 I. 3.96b, 97[a]; P.2 V. 3.89[a] = b; Vi. I.5.38. 1) Ga. शरीराणि तु तस्य वै; P.1 Vi.2 विभोः । 2) Mr. –णोपश्रितानि तु; P.1P.2 Vi.2 च ।

15 = Mr. 48.18.

15 = Ga. 4.(28b); P.1 I. 3.97b, 98[a]; P.2 V. 3.89b, 90[a]; Vi. I. 5.39. 1) P.2 –तस्तु । 2) P.2 –था । 3) P.1P.2 कृतः; Ga. रजोमात्रां तनूं गृह्य क्षुदभूत कोप एव च ।

16 = Mr. 48.19.

16 = Ga. 4.(29[a]I) = a; P.1 I. 3.98b, 99[a]; P.2 V. 3.90b, 91[a]; Vi. I. 5.40. 1) P.1P.2 –मो बा–। 2) Vi. –ऽथ । 3) P.2 ते । 4) Ga. –मान् (?) असृजद् यक्षान् । 5) P.1 –पा अश्मश्रुकास्ते; P.2 –श्रुजातास्ते । 6) Vi.2 तेऽन्य–; Vi.1 तेऽन्यथावंस्ततः ।

रक्षाम इति तेभ्योऽन्ये
य ऊचुस्ते तु राक्षसाः, ।
खादाम इति ये चोचु-
स्ते यक्षा यक्षणाद् (!) द्विज ॥ 17 ॥
तान् दृष्ट्वा ह्यप्रियेणास्य
केशाः शीर्यन्त वेधसः ।
समारोहणहीनाश्च
शिरसो ब्रह्मणस्तु ते ॥ 18 ॥

र[1]क्ष्यताम् (!) एव[2]) यैरुक्तं,
राक्षसास्ते ततोऽभवन्[3]), ।
ऊचुः खादाम इत्यन्ये
ये, ते यक्षास्तु जक्षणात्[4]) ॥ 17 ॥
अप्रियानथ[1]) तान् दृष्ट्वा
केशाः शीर्यन्त[2]) वेधसः, ।
हीनाश्च शिरसो भूयः
समारोहन्त तच्छिरः[3]) ॥ 18 ॥

सर्पणात् तेऽभवन् सर्पा, हीनत्वादहयः स्मृताः[1]) ।

सर्पान् दृष्ट्वा ततः क्रोधात्
क्रोधात्मनो[1]) विनिर्ममे ॥ 19 ॥

ततः क्रुद्धो जगत्स्रष्टा
क्रोधात्मनो[1]) विनिर्ममे[2]) ॥ 19 ॥

वर्णेन कपिशे[1]नोग्रा भूतास्ते[2]) पिशिताशनाः[3]) ।

धायतो गां ततस्तस्य
गन्धर्वा जज्ञिरे सुताः ॥ 20 ॥

धयतो[1]) गां समुद्भूता[2])
गन्धर्वास्तस्य तत्क्षणात् ॥ 20 ॥

पिबन्तो जज्ञिरे[1]) वाचं, गन्धर्वास्तेन ते स्मृताः[2]) ।

अष्टास्वेतासु सृष्टासु
देवयोनिषु स प्रभुः ॥ 21 ॥

एतानि सृष्ट्वा भगवान्
ब्रह्मा तच्छक्तिचो[1]दितः ॥ 21 ॥

ततः स्वच्छन्दतो[1])ऽन्यानि वयांसि वयसो[2]ऽसृजत् ।

---

17 = Mr. 48.20.

17 = Ga. 4.(29aIIb.I); P.1 I. 3.99b, 100a; P.2 V. 3.91b, 92a; Vi. I. 5.41. 1) Vi. मेवं भो रक्ष- । (Vi.1 क्ष्य-) 2) P.2 एव । 3) Vi. -क्षसास्तु ते; Ga. राक्षसान् रक्षणाच्च सः । 4) P.1P.2 तु तेऽभवन्; Ga. यक्षाख्या यक्षणाज् ज्ञेयाः; Vi.2 यक्षणात् ।

18 = Mr. 48.21.

18 = P.1 I. 3.100b, 101a; P.2 V. 3.92b, 93a; Vi. I. 5.42. 1) P.1 अतिभीतस्य; P.2 T. अपि येनास्य; V. अपि भीतस्य । 2) P.1P.2 -न्ति । 3) P.1P.2 न्ति ते शिरः; Vi.2 -न्त ते शिरः ।

19a = Ga. 4.(29bII) = a; Mr. 48.22a; P.1 I. 3.101b; P.2 V. 3.93b; Vi. I. 5 43a.
1) Ga. सर्पा वै केशसर्पणात् ।

19b = Mr. 48.22b. 1) Mr. T. -त्मानो ।

19b = P.1 I. 3.102a; P.2 V. 3.94a; Vi. I. 5.43b. 1) Vi.2 -त्मानो । 2) P.1P.2 -थेन वै जगत्स्रष्ट्रा क्रोधात्मानो विनिर्मिताः ।

20a = Mr. 48.23a; P.1 I. 3.102b; P.2 V. 3.94b; Vi. I. 5.44a. 1) Mr. -शे- ।
2) Mr. -ग्रास्ते भूता-: । 3) P.1 Vi.2 -शिनः ।

20b = Mr. 48.23b.

20b = P.1 I. 3.103a; P.2 V. 3.95a; Vi. I. 5.44b.
1) P.1P.2 Vi.1 -न्तो । 2) Vi. -त्पन्ना ।

21a = Ga. 4.30b; Mr. 48.24a; P.1 I. 3.103b; P.2 V. 3.95b; Vi. I. 5.45a.
1) Mr. जज्ञिरे पिबता; Vi.2 -न्तो जज्ञि- । 2) Ga. -ऽनघ; P.1P.2 ऽभवन् ; Vi. द्विज ।

21b = Mr. 48.14b.

21b = P.1 I. 3.104a; P.2 V. 3.96a; Vi. I. 5.45b.
1) Vi.1 -क्तिनो- ।

22a = Kū. 7 (53a); Mr. 48.25a; P.1 I. 3.104b; P.2 V. 3.96b; Vi. I. 5.46a. 1) Mr. -देहतो ।
2) Mr. पशवो; Kū. वयांसि वयसः सृष्ट्वा अवीन् वै वक्षसो ।

मुखतोऽजाः[1]) ससर्जाथ[2]),
वक्षसश्चावयोऽसृजत् ॥ 22 ॥
गावश्चैवोदराद् ब्रह्मा
पार्श्वाभ्यां च विनिर्ममे[1])

अवयो वक्षस[1]श्चक्रे
मुखतोऽजाः स[2]) सृष्टवान्, ॥ 22 ॥
सृष्टवानुदराद् गावश्च
पार्श्वाभ्याम्च[1]) प्रजापतिः ।

पद्भ्यां चाश्वान्[1]) समातङ्गान् रासभान्[2]) गवयान्[3]) मृगान्[4]) ॥ 23 ॥

उष्ट्रानश्वतरांश्चैव न्यङ्कुन्[1]) अन्याश्च[2]) जातयः[3]) ।

ओषध्यः फलमूलिन्यो[4]) रोमभ्यस्तस्य जज्ञिरे ॥ 24 ॥

तस्मादादौ तु कल्पस्य
त्रेतायुगमुखे तदा
एवं पश्वोषधीः सृष्ट्वा
ह्ययजच्चाध्वरे विभुः ॥ 25 ॥

त्रेतायुगमुखे ब्रह्मा
कल्पस्यादौ द्विजोत्तम[1]) ।
सृष्ट्वा पश्वोष[2]धीः सम्यग्
युयोज स[3]) तदाध्वरे ॥ 25 ॥

गौरजः पुरुषो मेषो[1]) अश्वाश्वतरगर्दभाः,[2])

एतान् ग्राम्यान्[3]) पशूना[4]हुरारण्यांश्च निबोध मे ! ॥ 26 ॥

श्वापदो[1]) द्विखुरो[2]) हस्ती[3]) वानरः[4]) पक्षिपञ्चमाः[5]), ।

औदकाः[6]) पशवः षष्ठाः, सप्तमास्तु[7]) सरीसृपाः ॥ 27 ॥

गायत्रं[1]) च ऋचश्चैव[2]) त्रिवृत्स्तोमं[3]) रथंतरम् ।

अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान् मुखात् ॥ 28 ॥

यजूंषि त्रैष्टुभं छन्दः[1]) स्तोमं पञ्चदशं तथा ।

---

22b = Kū. 7.53b I = I; Mr. 48.25b. 1) Kū. –ऽश्वान् । 2) Kū. T. –जान्यान् ।

23a = Kū. 7.(53b II); Mr. 48.26a. 1) Kū. उदराद् गाश्च निर्ममे ।

22b = Ga. 4.31a; P.1 I. 3.105a; P.2 V. 3.97a; Vi. I. 5.46b. 1) P.2 T. वाहुतश्च । 2) P.1P.2 –जांश्च ।

23a = Ga. 4.31b; P.1 I. 3.105b; P.2 V. 3.97b; Vi. I. 5.47a. 1) P.1 P.2 महिषांश्च ।

23b = Ga. 4.32a; Kū. 7.54a; Mr. 48.26b; P.1 I. 3.106a; P.2 V. 3. 98a; Vi. I. 5.47b. 1) P.2 न श्वान् ; Vi. अश्वान् । 2) Vi.1 शरभान् । 3) Mr. शशकान् । 4) Ga. नर्दमोष्ट्रादिकांस्तथा ।

24 = Ga. 4.32b = b; Kū. 7.54b, 55a; Mr. 48.27; P.1 I. 3. 106b, 107a; P.2 V. 3 98b,99a; Vi. I. 5.48. 1) P.2 पशून् ; Vi. अश्वान् । 2) Mr. –व नानारूपाश्च । 3) Kū. T. भरत्नेश्च प्रजापतिः । 4) Kū. P.2 –लानि ।

25 = Mr. 48.28b,a.

25 = P.1 I. 3.107b, 108a; P.2 V. 3.99b, 100a; Vi. I. 5.49. 1) P.1P.2 नृपोत्तम । 2) P.2 –ह्यपश्वोष– । 3) P.2 –म्यक् स युयोज ।

26 = Ga. 4.33; Mr. 48.29; P.1 I. 3.108b, 109a; P.2 V. 3.100b, 101a; Vi. I. 5.50. 1) Ga. –षः; P.1 गामजं महिषं मेषम् ;P.2–ष; Vi.1 –षा मेषा । 2) P.1 –भान् ; Vi.1 अश्वा अश्वतराः खराः । 3) P.1 –म्य–; P.2 अन्यान् । 4) Ga. Vi. –न्प्रा– ।

27 = Ga. 4.34; Mr. 48.30; P.1 I. 3.109b, 110a; P.2 V. 3.101b, 102a; Vi. I. 5.51. 1) Ga. Mr. P.2 –दं । 2) Ga. Mr. P.2 –रं । 3) Ga. –स्ति– । 4) Ga. Mr. –राः; P.2 –रं । 5) Vi.1 –मः; P.1 पञ्चमः खगः; P.2 –मं । 6) P.1 उष्ट्रकाः; P.2 क्षुद्रकाः; Vi.2 उदकाः । 7) Ga. –माश्च ।

28 = Kū. 7.55b, 56a; Mr. 48.31; P.1 I. 3.110b; 111a; P.2 V. 3.102b, 103a; Vi. I. 5.52. 1) Mr. –त्रीं । 2) Mr. च ऋचं चैव; P.2 –श्चवस्त्यवश्चैव । 3) Mr. –साम; P.2 बृहत् साम; P.1 –सोम ।

29 = Kū. 7.56b, 57a; Mr. 48.32; P.1 I. 3.111b, 112a; P.2 V. 3.103b, 104a; Vi. I. 5.53. 1) Kū. P.2 Vi.1 –ष्टु– ।

बृहत् साम तथोक्थं च दक्षिणादसृजन् मुखात् ॥ 29 ॥

सामानि जगतीच्छन्दः[1]) स्तोमं सप्त[2]दशं तथा ।
वैरूपमतिरात्रं च पश्चिमादसृजन्[3]) मुखात् ॥ 30 ॥

एकविंशमथर्वाणमाप्तोर्या[1]माणमेव च ।
अ[2]नुष्टुभं स[3]वैराजमुत्तरादसृजन् मुखात् ॥ 31 ॥

| विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
| वयांसि च ससर्जादौ कल्पस्य भगवान् विभुः ॥ $31_1$ ॥

उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे, ।

सृष्ट्वा चतुष्टयं पूर्वं[1])
देवासुरपितॄन् प्रजाः[2]), ॥ 32 ॥
ततोऽसृजत् स[1]) भूतानि
स्थावराणि चराणि च, ।

| देवा[1]सुरपितॄन् सृष्ट्वा
| मनुष्यांश्च प्रजापतिः, ॥ 32 ॥
| ततः पुनः ससर्जादौ
| स कल्पस्य[1]) पितामहः ।

यक्षान् पिशाचान् गन्धर्वांस्तथैवाप्सरसां गणान्[1]), ॥ 33 ॥

नर[1]किन्नररक्षांसि वयःपशु[2]मृगोरगान् ।
अव्ययं च व्ययं चैव यदिदं स्थाणु[3]जङ्गमम् ॥ 34 ॥

| तत् ससर्ज तदा[1]) ब्रह्मा भगवानादिकृद् विभुः[2]) ।
तेषां ये[1]) यानि कर्माणि प्राक् सृष्ट्यां[2]) प्रतिपेदिरे, ॥ 35 ॥

तान्येव प्रति[1]पद्यन्ते सृज्यमानाः पुनः पुनः ।
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृ[2]तानृते ॥ 36 ॥

तद्भाविताः प्रपद्यन्ते, तस्मात् तत् तस्य रोचते ।
इन्द्रियार्थेषु भूतेषु[1]) शरीरेषु च स प्रभुः[2]) ॥ 37 ॥

---

30 = Kū. 7.57bc; Mr. 48.33; P.1 I. 3.112b, 113a; P.2 V. 3.104b, 105a; Vi. I. 5.54. 1) Kū. T. जागतं छन्द–; P.2 –छन्द्– । 2) पञ्च– । 3) Mr. निर्ममे पश्चिमान् ।

31 = Kū. 7.58; Mr. 48.34; P.1 I. 3.113b, 114a; P.2 V. 3.105b, 106a; Vi. I. 5.55. 1) Kū. T. –सोर्या–; P.2 सामोर्या– । 2) P.1 आ– । 3) Vi.1 च ।

| $31_1$ = Mr. 48.35.

32a = Kū. 7.59a; Mr. 48.36a; P.1 I. 3.114b; P.2 V. 3.106b; Vi. I. 5.56a.

32b = Kū. 7.60a; Mr. 48.36b. 1) Kū. सर्गं । 2) Kū. देवर्षिपितृमानुषं, V. –मानवम् ।

33a = Kū. 7.60b; Mr. 48.37a. 1) Kū. –जव ।

| 32b = P.1 I. 3.115a; P.2 V. 3.107a; Vi. I. 5.56b. 1) P.1 सुरा– ।

| 33a = P.1 I. 3.115b; P.2 V. 3.107b; Vi. I. 5.57a. 1) P.1P.2 ब्रासौ स कल्पादौ ।

33b = Kū. 7.59c; Mr. 48.37b; P.1 I. 3.116a; P.2 V. 3.108a; Vi. I. 5.57b. 1) Kū. –सः शुभाः ।

34 = Kū. 7.61; Mr. 48.38; P.1 I. 3.116b, 117a; P.2 V. 3.108b, 109a; Vi. I. 5.58. 1) P.1P.2 सिद्ध– । 2) P.1 सिंहान् पक्षि–; P.2 हयान् पक्षि– । 3) Kū. द्वयं स्थावर– ।

| 35a = P.1 I. 3.117b; P.2 V. 3.109b; Vi. I. 5.59a. 1) P.2 T. तद तद समसृजद् । 2) P.2 T. द्विजाः ।

35b = Kū. 7.62a; Mr. 48.39a; P.1 I. 3.118a; P.2 V. 3.110a; Vi. I. 5.59b. 1) P.2 च । 2) Kū. Mr. सृष्टेः ।

36 = Kū. 7.62b, 63a; Mr. 48.39b, 40a; P.1 I. 3.118b, 119a; P.2 V. 3.110b, 111a; Vi. I. 5.60ab. 1) Kū. Vi.1 ते प्र– । 2) P.2 –र्मे ऋ– ।

37 = Kū. 7.63b, (64a); Mr. 48.40b, 41a; P.1 I. 3.119b, 120a; P.2 V. 3.111b, 112a Vi. I. 5.60c, 61a. 1) P.2 सर्वेषु । 2) Kū. महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्तिषु ।

नानात्वं विनियोगं च[1]) धातैव व्यसृजत्[2]) स्वयम् ।
नामरूपं च भूतानां कृत्यानां च[3]) प्रपञ्चनम्[4]) ॥ 38 ॥

वेदशब्देभ्य एवादौ देवादीनां चकार सः,[1]) ।

ऋषीणां नामधेयानि[1])
याश्च देदेषु[2]) सृष्टयः, ॥ 39 ॥
शर्वर्यन्ते प्रसूताना-
मन्येषां च[1]) ददाति सः[2]) ।

ऋषीणां नामधेयानि
यथा वेद[1]श्रुतानि वै ॥ 39 ॥
यथानियोगं[1]) योग्यानि
अन्येषाम[2]पि सोऽकरोत् ।

यथर्तावृतु[1]लिङ्गानि नानारूपाणि पर्यये ॥ 40 ॥
दृश्यन्ते, तानि तान्येव तथा भावा युगादिषु ।

एवंविधाः सृष्टयस्तु
ब्रह्मणोऽव्यक्तजन्मनः ।
शर्वर्यन्ते प्रबुद्धस्य
कल्पे कल्पे भवन्ति वै ॥ 41 ॥

करोत्येवंविधां सृष्टिं
कल्पादौ स पुनः पुनः ।
सिसृक्षुः[1]) शक्तियुक्तोऽसौ
सृज्यशक्ति[2]प्रचोदितः ॥ 41 ॥

---

38 = Kū. 7.64b, 65a; Mr. 48.41b, 42a; P.1 I. 3.120b, 121a; P.2 V. 3.112b, 113a; Vi. I. 5.61b, 62a. 1) Kū. विनियोगं च भूतानां; P.2 तु । 2) Kū. Mr. व्यदधात । 3) Kū. प्राकृतानां । 4) Vi.2 प्रवर्तनम् ।

39a = Kū. 7.65b; Mr. 48.42b; P.1 I. 3.121b; P.2 V. 3.113b; Vi I. 5.62b. 1) Kū. निर्ममे स महेश्वरः ।

39b = Kū. 7.66a; Mr. 48.43a. 1) Kū. आर्षाणि चैव नामानि । 2) Kū. वेदेषु ।

40a = Kū. 7.66b; Mr. 48.43b. 1) Kū. –नां तान्येवैभ्यो । 2) Kū. –स्यजः ।

39b = P.1 I. 3.122a; P.2 V. 3.114a; Vi. I. 5.63a. 1) P.1–वेदे ।

40a = P.1 I. 3.122b; P.2 V. 3.114b; Vi. I. 5.63b. 1) P.2 –योग्यस्य; Vi. –नियोग– । 2) Vi. सर्वेषाम– ।

40b = Kū. 7.67a; Mr. 48.44a; P.1 I. 3.123a; P.2 V. 3.115a; Vi. I. 5.64a. 1) Kū. यावन्ति प्रति–; P.2 यथायथर्तु– ।

41a = Kū. 7.67b; Mr. 48.44b; P.1 I. 3.123b; P.2 V. 3.115b; Vi. I. 5.64b.

41bc = Mr. 48.45.

41bc = P.1 I. 3.124; P.2 V. 3.116; Vi. I. 5.65. 1) Vi. –क्षा– । 2) P.2 –सृष्टि– ।

## षष्ठोऽध्यायः

( P.1 I. 3.125—163[a]; P.2 V. 3.117—155[a]; Vi. I. 6.1—41. )

मैत्रेय ( भीष्म ) उवाच :

अर्वाक्स्रोतस्तु[1]) कथितो भवता, यस्तु[2]) मानुषः ।
ब्रह्मन्, विस्तरतो ब्रूहि, ब्रह्मा तमसृजद् यथा, ॥ 1 ॥

यथा स[1]) वर्णान[2]सृजद् गुणांश्च स[3]) महामुने, ।
यच्च तेषां स्मृतं कर्म विप्रादीनां, तदुच्यताम् ॥ 2 ॥

पराशर ( पुलस्त्य ) उवाच :

सत्त्वा[1]भिध्यायिनस्तस्य[2]) सिसृक्षोर्ब्रह्मणो जगत्[3]) ।
अजायन्त द्विज[4]श्रेष्ठ सत्त्वोद्रिक्ता मुखात् प्रजाः[5]) ॥ 3 ॥

वक्षसो रजसोद्रिक्तास्तथान्या[1]) ब्रह्मणोऽभवन् ।
रजस[2]स्तमस[3]श्चैव[4]) समुद्रिक्ता[5]स्तथोरुतः[6]) ॥ 4 ॥

पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज द्विज[1]सत्तम[2]) ।
तमः[3]प्रधानास्ताः सर्वाश्चा[4]तुर्वर्ण्यमिदं ततः ॥ 5 ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विज[1]सत्तम ।
पादोरुवक्षःस्थलतो[2]) मुखतश्च समुद्गताः[3]) ॥ 6 ॥

यज्ञनिष्पत्तये सर्वमेतद् ब्रह्मा चकार ह[1]) ।
चातुर्वर्ण्यं महाभाग[2]) यज्ञसाधनमुत्तमम् ॥ 7 ॥

यज्ञैरा[1]प्यायिता देवा, वृष्ट्युत्सर्गेण मानवाः[2]), ।
आप्याययन्ते धर्मज्ञ[3]) यज्ञाः[4]) कल्याणहेतवः ॥ 8 ॥

निष्पाद्यन्ते[1]) नरैस्तैस्तु[2]) स्वधर्म[3]निरतैः[4]) सदा[5]) ।
विरुद्धा[6]चरणापेतैः[7]) सद्भिः सन्मार्गगामिभिः ॥ 9 ॥

---

1 = P.1 I. 3.125; P.2 V. 3.117; Vi. I. 6.1. 1) P.1 –तास्तु; P.2 –तश्च । 2) P.2 यश्च ।

2 = P.1 I. 3.126; P.2 V. 3.118; Vi. I. 6.2. 1) Vi. च । 2) P.2 –था वर्णान् सम– । 3) Vi.1 यद्गुणांश्च; Vi.2 यद्रूपांश्च ।

3 = P.1 I. 3.127; P.2 V. 3.119; Vi. I. 6.3. 1) Vi. सत्या– । 2) P.1P.2 V. Vi.1 –नः पूर्वं । 3) P.1P.2 –णः प्रजाः 4) P.1P.2 कुरु– । 5) P.2 T. द्विजाः ।

4 = P.1 I. 3.128; P.2 V. 3.120; Vi. I. 6.4. 1) Vi.1 –तथा वै । 2) P.2T. राजन्या– ; Vi. –सा । 3) P.2 T., Vi. –स्तमसा चैव । 4) P.2 T. तमसा वैश्यास् । 5) P.2 तमोद्रिक्ता– । 6) Vi.1 –जाः ।

5 = P.1 I. 3.129; P.2 V. 3.121; Vi. I. 6.5. 1) P.1P.2 T. कुरु– । 2) P.2 T. पद्भ्यां समसृजद् ब्रह्मा शूद्रान् नृपवरोत्तम । 3) P.2 T. ततः । 4) P.2 T. –स्ते सर्वे चा– ।

6 = P.1 I. 3.130; P.2 V. 3.122; Vi. I. 6.6. 1) P.1P.2 नृप– । 2) P.2 –जा । 3) P.2 –द्भवाः ।

7 = P.1 I. 3.131; P.2 V. 3.123; Vi. I. 6.7. 1) Vi. वै । 2) P.1 –राज ।

8 = P.1 I. 3.132; P.2 V. 3.124; Vi. I. 6.8. 1) P.1P.2 –र्हेना– । 2) Vi. वै प्रजाः । 3) P.1 आप्यायन्ते धर्मयज्ञाः; P.2 आप्यायनं वै कुर्वन्ति । 4) P.1 यतः ।

9 = P.1 I. 3.133; P.2 V. 3.125; Vi. I. 6.9. 1) P.1 –ष्पद्यन्ते । 2) P.1P.2 V. ते तु । 3) P.1 सुकर्म–; P.2 स्वकर्म– । 4) Vi. –याभिरतैः । 5) Vi.1 ततः; Vi.2 तथा । 6) Vi.1 विशुद्धा– । 7) Vi.1 –गोपेतैः ।

स्वर्गापवर्गौ मानुष्यात् प्राप्नुवन्ति नरा मुने[1]), ।
यच्चा[2]भिरुचितं स्थानं, तद् यान्ति मनुजा द्विज[3] ॥ 10 ॥

प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थितौ ।
सम्यक्श्रद्धासमाचारप्रवणा[1]) मुनि[2]सत्तम, ॥ 11 ॥

यथेच्छावास[1]निरताः सर्वबाधाविवर्जिताः ।
शुद्धान्तःकरणाः शुद्धा[2]) धर्मा[3]नुष्ठाननिर्मलाः ॥ 12 ॥

शुद्धे च तासां मनसि शुद्धेऽन्तः[1]संस्थिते[2]) हरौ ।
शुद्ध[3]ज्ञानं प्रपश्यन्ति, विष्ण्वा[4]ख्यं येन तत्पदम् ॥ 13 ॥

ततः कालात्मको योऽसौ
वैरिञ्च्या[1]वास उच्यते, ।
संसारपातमत्यर्थं
घोरमल्पाल्पसारवत् ॥ 14 ॥

ततः कालात्मको योऽसौ,
स चांशः कथितो हरेः, ।
स पातयत्यघं[1]) घोर-
मल्पमल्पाल्पसारवत्[2]) ॥ 14 ॥

अधर्मबीजभूतं च[1]) तमो[2]लोभसमुद्भवम्[3]) ।
प्रजासु तासु मैत्रेय[4]) रागादिकर्मसाधकम्[5]) ॥ 15 ॥

ततः सा सहजा[1]) सिद्धिस्तासां[2]) ना[3]तीव जायते ।
रसो[4]ल्लासादय[5]श्चान्याः सिद्धयोऽष्टौ भवन्ति याः ॥ 16 ॥

तासु क्षीणास्वशेषासु वर्धमाने च पातके ।
द्वन्द्वाभिभवदुःखार्तास्ता भवन्ति ततः प्रजाः ॥ 17 ॥

ततो दुर्गाणि ताश्चक्रुर्धान्वं पार्वतमौदकम् ।
कृत्रिमं[1]) च तथा दुर्गं पुरं खर्वटकादिकम्[2]) ॥ 18 ॥

गृहाणि च यथान्यायं तेषु चक्रुः पुरादिषु ।
शीतातपादिबाधानां प्रशमाय महामते[1]) ॥ 19 ॥

प्रतीकार[1]मिमं[2]) कृत्वा शीतादेस्ताः प्रजाः पुनः ।
वार्तोपायं ततश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ॥ 20 ॥

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।

---

10 = P.1 I. 3.134; P.2 V. 3.126; Vi. I. 6.10. 1) P.1P.2 नृप । 2) Vi.1 यथा- । 3) P.1P.2 विभो ।
11 = P.1 I. 3.135; P.2 V. 3.127; Vi. I. 6.11. 1) P.1 -शुद्धाः समाचाराचरणा; P.2 -राचरणान् । 2) P.1P.2 नृप- ।
12 = P.1 I. 3.136; P.2 V. 3.128; Vi. I. 6.12. 1) -चार- । 2) P.2 T. पुण्या । 3) Vi. सर्वा- ।
13 = P.1 I. 3.137; P.2 V. 3.129; Vi. I. 6.13. 1) P.1P.2 V. शुद्धान्तः- । 2) P.2 -करणे । 3) Vi.1 -द्धं । 4) P.1P.2 ब्रह्मा- ।
14 = P.1 I. 3.138; P.2 V. 3.130 1) P.1 विरिञ्चा- ।
14 = Vi. I. 6.14. 1) Vi.2 -घो । 2) Vi.2 C. Var. lec. अत्यल्प- ।
15 = P.1 I. 3.139; P.2 V. 3.131; Vi. I. 6.15. 1) P.1 तत; Vi.1 -संभूतं; Vi.2 -भूतं तु । 2) P.2 मोह- । 3) P.1-द्भुतम् ; P.2 -मन्वितम् । 4) P.1P.2 राजेन्द्र । 5) P.2 -कर्मसाधनम्; P.2 T. बरादिक्रम-; V. -कर्मसाधनम् ; Vi. -विक्रमसा- ।
16 = P.1 I. 3.140; P.2 V. 3.132; Vi. I. 6.16. 1) P.2 साहसजा; Vi.1 सहसा । 2) P.1 Vi.1 -स्तेषां । 3) P.2 चा- । 4) P.2 T. रागो- । 5) P.1P.2 राजन् वश्यादय- ।
17 = P.1 I. 3.141; P.2 V. 3.133; Vi. I. 6.17.
18 = P.1 I. 3.142; P.2 V. 3.134; Vi. I. 6.18. 1) P.1 धान्वनं । 2) P.1 Vi.2 -दि यत ।
19 = P.1 I. 3.143; P.2 V. 3.135; Vi. I. 6.19. 1) Vi.1 -मुने ।
20 = P.1 I. 3.144; P.2 V. 3.136; Vi. I. 6.20. 1) P.1P.2 प्रतिहार-; Vi.2 प्रतिकार- । 2) Vi.1 इदं- ।

प्रियङ्गवो ह्यु[1]दाराश्च कोरदूषाः सचीनकाः ॥ 21 ॥
माषा[1]) मुद्गा मसूराश्च निष्पावाः न[2]कुल[3]त्थकाः ।
आढक्यश्चणकाश्चैव शणाः[4]) सप्तदश[5]) स्मृताः ॥ 22 ॥
इत्येता ओ[1]षधीनां तु ग्राम्याणां जातयो मुने[2]), ।
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्या[3]श्चतुर्दश ॥ 23 ॥
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ।
प्रियङ्गुसप्तमा ह्येता अष्टमास्तु[1]) कुल[2]त्थकाः ॥ 24 ॥
श्यामाकास्त्वथ नीवारा जर्तिलाः[1]) स[2]गवेधुकाः[3]) ।
तथा[4] वेणुयवाः प्रोक्तास्तद्वन् मर्कटका मुने[5]) ॥ 25 ॥
ग्राम्यारण्याः[1]) स्मृता ह्येता ओषध्यश्च[2]) चतुर्दश ।
यज्ञनिष्पत्तये, यज्ञस्त[3]थासां हेतुरुत्तमः ॥ 26 ॥
एताश्च सह यज्ञेन प्रजानां कारणं परम्, ।
परापरविदः[1]) प्राज्ञास्ततो यज्ञान् वितन्वते ॥ 27॥
अहन्यहन्यनु[1]ष्ठानं यज्ञानां मुनिस[2]त्तम ।
उपकारकरं पुंसां क्रियमाणस्य[3]) शान्तिदम्[4]) ॥ 28 ॥
येषां तु[1]) काल[2]सृष्टो[3])ऽसौ पाप[4]बिन्दुर्महामते ।
चेतःसु ववृधे[1]), चक्रुस्ते न यज्ञेषु[2]) मानसम् ॥ $28_1$ ॥
वेदवादांस्तथा वेदान्[1]) यज्ञकर्मादिकं[2]) च यत्, ।
तत् सर्वं निन्द[3]मानास्ते यज्ञव्यासेधकारिणः ॥ $28_2$ ॥
प्रवृत्तिमार्गव्युच्छित्ति[1]कारिणो वेदनिन्दकाः ।
दुरात्मानो दुराचारा बभूवुः कुटिला[2]शयाः ॥ $28_3$ ॥
संसिद्धायां तु वार्तायां प्रजाः सृष्ट्वा प्रजापतिः ।
मर्यादां स्थापयामास यथास्थानं यथागुणम् ॥ 29 ॥

---

21 = P.1 I. 3.145; P.2 V. 3.137; Vi. I. 6.21. 1) P.1P.2 –त्कुकोवि– ।
22 = P 1 I. 3 146; P.2 V. 3.138; Vi. I. 6.22. 1) P.2 माष–। 2) P.2 –वाश्च । 3) P.1 कुलु–। 4) Vi.2–ण ।
5) Vi.2 –शाः ।
23 = P 1 I. 3.147; P.2 V. 3.139; Vi. I. 6.23. 1) Vi.1–ताश्चौ–। 2) P.1P.2 नृप । 3) P.1 –ण्या वन्या– ।
24 = P.1 I. 3.148; P.2 V. 3.140; Vi. I. 6 24. 1) P.2 –माश्च । 2) P.1 कुलु–।
25 = P.1 I. 3.149; P.2 V. 3.141; Vi. I. 6.25. 1) P.1 –रो वर्तुलः 2) P.2 –लाश्च । 3) P.1–काः ।
4) P.1 अथ । 5) P.1P.2 नृप ।
26 = P 1 I. 3.150; P.2 V. 3.142; Vi. I. 6.26. 1) P.1–ण्या वन्याः । 2) Vi.1 –स्तु । 3) P.1P.2 तद्वत्– ।
27 = P.1 I. 3.151; P.2 V. 3.143; Vi. I. 6.27. 1) P.2 एतैरेव महा– ।
28 = P.1 I. 3.152; P.2 V. 3.144; Vi. I. 6.28. 1) Vi.1 –नात्नु– । 2) P.1P.2 पार्थिवो– । 3) P.1P.2 –माणं च;
Vi.2–माणाच– । 4) P.1P.2 V. –णफलार्थिनाम् ।
28.1a = P.1 I. 3.153a; P.2 V. 3.145a; Vi. I. 6.29a. 1) P.1 च । 2) P.2 चकार । 3) Vi.1 रूपो ।
4) P.1 पपा–; P.2 पर– ।
28.1b = P.2 V., Vi. I. 6.29b. 1) P.2 चेतस्स्ववमये । 2) P.2 –ह्वेन ।
28.2 = P.2 V.; Vi. I. 6.30. 1) P.2 देवान् । 2) Vi.1 –निष्पादकं । 3) P.2 निन्द्य– ।
28.3 = P.2 V.; Vi. I. 6.31. 1) P.2 गुरुमार्गत्युत्थितं तु । 2) P.2 –के–।
29a = Vi. I. 6.32a.
29b = P.1 I. 3.153b; P.2 V. 3.145b; Vi. I. 6.32b.

वर्णानामाश्रमाणां च धर्मान्[1]) धर्मभृतां वर ।
लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम् ॥ 30 ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्[1]), ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्तिनाम्, ॥ 31 ॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम्, ।
गान्धर्वं शूद्रजातीनां[1]) परिचर्यानु[2]वर्तिनाम्[3]) ॥ 32 ॥
अष्टाशीतिसहस्राणां[1]) यती[2]नामूर्ध्वरेतसाम् ।
स्मृतं ते[3]षां तु यत्[4]) स्थानं, तदेव गुरुवासिनाम् ॥ 33 ॥
सप्तर्षीणां तु[1]) यत् स्थानं, स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां, न्यासिनां ब्रह्म[2]संज्ञितम् ॥ 34 ॥
योगिनाममृतं स्थानं, यद्[1]) विष्णोः[2]) परमं पदम् ।
एकान्तिनः सदोद्युक्ता ध्यायिनो[3]) योगिनो हि ये ॥ 35 ॥
तेषां तत्[1]) परमं स्थानं, यत् तत्[2]) पश्यन्ति सूरयः ।
गतागता[3]) निवर्तन्ते चन्द्रादित्या[4]दयो ग्रहाः, ॥ 36 ॥
अद्यापि न[1]) निवर्तन्ते | अद्यापि न निवर्तन्ते
नारायण[2]परायणाः । | द्वादशाक्षरचिन्तकाः ।
तामिस्रमन्धतामिस्रं महारौरव-रौरवौ[1]) ॥ 37 ॥
असिपत्रवनं घोरं कालसूत्रमवीचिमत् ।
विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम् ।
स्थानमेतत् समाख्यातं, स्वधर्मत्यागिनश्च ये ॥ 38 ॥

---

30 = P.1 I. 3.154; P.2 V. 3.146; Vi. I. 6.33. 1) P.2 धर्मा– ।
31 = P.1 I. 3.155; P.2 V. 3.147; Vi. I. 6.34. 1) P.1P.2 तु पार्थिव ।
32 = P.1 I. 3.156; P.2 V. 3.148; Vi. I. 6.35. 1) P.2 सर्वशूद्राणां । 2) P.1, Vi.2 –र्यासु । 3) Vi.2 वर्तताम् ।
33 = P.1 I. 3,157; P.2 V. 3.149; Vi. I. 6.36. 1) Vi.1 –स्राणि । 2) Vi.1 मुनी– । 3) P.2 ये–। 4) Vi.1 मरुत ।
34 = P.1 I. 3.158; P.2 V. 3.150; Vi. I. 6.37. 1) P.1P.2 च । 2) P.1 ब्रह्म– ।
35 = P.1 I. 3.159; P.2 V. 3.151; Vi. I. 6.38. 1) Vi.2 तद् । 2) P.1P.2 ब्राह्मणः । 3) P.2 व्यापिनो; Vi. सदा ब्रह्मध्यायिनो ।
36 = P.1 I. 3.160; P.2 V. 3.152; Vi. I. 6.39. 1) Vi.2 तु । 2) P.2 यत्र; Vi.1 यत्तु । 3) Vi. गत्वागत्वा । 4) Vi. –न्द्रसूर्या– ।
37a = P.1 I. 3.161a; P.2 V. 3.153a. 1) P.2 नो । 2) P.2 प्राणायाम–। | 37a = Vi. I. 6.40a.
37b = P.1 I. 3.161b; P.2 V. 3.153b; Vi. I. 6.40b. 1) P.1P.2–वम् ।
38 = P.1 I. 3.162, 163a; P.2 V. 3.154,155a; Vi. I. 6.41.

## सप्तमोऽध्यायः

( A. 20.17b–20a; Ga. 5.19–32; Mr. 50.1–32; P.1 I. 3.163b–195a; P.2 V. 3.155b–187a; Vi. I. 7.1–33; cfr. Var. 2.43–56. )

ततोऽभिध्यायतस्तस्य जज्ञिरे मानसी:[1]) प्रजा:[2]) ।
तच्छरीरसमुत्पन्नैः कार्यैस्तै:[3]) का[4]रणैः सह ॥ 1 ॥

क्षेत्रज्ञाः समवर्तन्त, गात्रेभ्यस्तस्य धीमतः; ।
ते सर्वे समवर्तन्त, ये मया प्रागुदाहृता:[1]) ॥ 2 ॥

देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषये स्थिता:[1]) ।
एवं भूतानि सृष्टानि स्थावराणि चराणि[2]) च ॥ 3 ॥

यदास्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः, ।
अथान्यान् मानसान् पुत्रान् सदृशानात्मनो[1])ऽसृजत् : ॥ 4 ॥

भृगुं पुलस्त्यं पुलहं[1]) क्रतुमङ्गिरसं तथा ।
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसम्[2]) ॥ 5 ॥

नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ।

ततोऽसृजत् पुनर्ब्रह्मा रुद्रं क्रोधात्मसंभवम् ।
संकल्पं चैव धर्मं च पूर्वेषामपि पूर्वजम् ॥ 6 ॥

सनन्दनादयो ये च पूर्वं सृष्टास्तु[1]) वेधसा[2]), ।
न ते लोकेष्वसज्जन्त[3]) निरपेक्षाः प्रजासु ते[4]) ॥ 7 ॥

सर्वे ते ह्या[1]गतज्ञाना[2]) वीतरागा विमत्सराः ।
तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥ 8 ॥

ब्रह्मणोऽभून्महाक्रोधस्त्रैलोक्यदहनक्षम:[1]) ।
तस्य क्रोधात् समुद्भूतं[2]) ज्वालामालाव[3]दीपितम् ।
ब्रह्मणस्तु[4]) तदा ज्योतिस्त्रै[5]लोक्यमखिलं दहत्[6]) ॥ 9 ॥

---

1 = Mr. 50.1; P.1 I. 3.163b, 164a; P.2 V. 3.155b, 156a; Vi. I. 7.1. 1) P.1 –साः; P.2-सी । 2) P.2 –जा ।
3) P.1P.2 कायस्थैः; Vi.2 स्वैः । 4) P.1P.2 क– ।

2 = Mr. 50.2; P.1 I. 3.164b, 165a; P.2 V. 3.156b, 157a; Vi. I. 7.2. 1) Vi.1 –ईरिताः ।

3 = Mr. 50.3; P.1 I. 3.165b, 166a; P.2 V. 3.157b, 158a; Vi. I. 7.3. 1) Mr. –याः स्मृताः । 2) Vi. चराणि स्थावराणि ।

4 = Mr. 50.4; P.1 I. 3.166b, 167a; P.2 V. 3.158b, 159a; Vi. I. 7.4. 1) P.2 –ना ।

5 = Mr. 50.5; P.1 I. 3.167b, 168a; P.2 V. 3.159b, 160a; Vi. I. 7.5. 1) P.1 मां पुलहं चैव; P.2 च पुलहं चैव ।
2) P.1P.2 Vi.2 –सान् ।

6a = Mr. 50.6a; P.1 I. 3.168b; P.2 V. 3.160b; Vi. I. 7.6a.

6bc = Mr. 50.6b, 7a.

7 = Mr. 50.7b, 8a; P.1 I. 3.169; P.2 V. 3.161; Vi. I. 7.6b, 7a. 1) P.2 –ष्टाश्च । 2) Mr. –ष्टाः स्वयम्भुवा ।
3) Mr. –केषु सज्जन्तो; P.2 –सज्यन्त । 4) Mr. समाहिताः ।

8 = Mr. 50.8b, 9a; P.1 I. 3.170; P.2 V. 3.162; Vi. I. 7.7b, 8a. 1) Mr. तेऽना–; Vi.2 ते चा– ।
2) P.1P.2 –र्वे ह्यागतविज्ञाना ।

9 = Mr. 50.9b = a; P.1 I. 3.171, 172a; P.2 V. 3.163, 164a; Vi. I. 7.8b, 9. 1) Mr. –स्तत्रोत्पन्नोऽर्कसंनिभः ।
2) Vi.1–त– । 3) Vi. –ज्ञावि– । 4) Vi. –णोऽभूत । 5) Vi. सर्वं त्रै – । 6) Vi. मुने ।

भ्रू[1]कुटीकुटिलात् तस्य ललाटात् क्रोधदीपितात्[2]) ।
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः[3]), ॥ 10 ॥

अर्धनारीनरवपुः प्रचण्डो[1])ऽतिशरीरवान्[2]) ।
विभजात्मानमित्युक्त्वा तं ब्रह्मा[3]न्तर्दधे ततः[4]) ॥ 11 ॥

तथोक्तोऽसौ द्विधा[1]) स्त्रीत्वं पुरुषत्वं तथाकरोत्[2]) ।
बिभेद पुरुषत्वं च दशधा चैकधा च सः[3]) ॥ 12 ॥

सौम्यासौम्यैस्तथा रूपैः[1]) शान्तैः[2]) स्त्रीत्वं च स प्रभुः ।
बिभेद बहुधा देवः[3]) स्वरूपै[4]रसितैः सितैः ॥ 13 ॥

ततो ब्रह्मात्मसंभूतं[1]) पूर्वं स्वायंभुवं प्रभुम्[2]) ।
आत्मानमेव कृतवान्[4]) प्रजापाल्ये[5]) मनुं द्विज[6]) ॥ 14 ॥

शतरूपां च तां नारीं तपोनिर्धूत[1]कल्मषाम् ।
स्वायंभुवो मनुर्देवः[2]) पत्नीत्वे[3]) जगृहे विभुः[4]) ॥ 15 ॥

तस्माच्च पुरुषाद् देवी[1]) शतरूपा[2]) व्यजायत ।

प्रियव्रतोत्तानपादौ,
प्रख्यातावात्मकर्मभिः ॥ 16 ॥
कन्ये द्वे च तथा ऋद्धिं
प्रसूतिं च ततः पिता ।
ददौ प्रसूतिं दक्षाय
तथा ऋद्धिं रुचेः पुरा ॥ 17 ॥

प्रियव्रतोत्तानपादौ[1])
प्रसूत्याकूतिसंज्ञितम्[2] ॥ 16 ॥
कन्याद्वयं च धर्मज्ञ
रूपौदार्यगुणान्वितम् ।
ददौ प्रसूतिं दक्षाय,
आ[1]कूतिं रुचये[2]) पुरा[3]) ॥ 17 ॥

---

10 = P.1 I. 3.172b, 173[a]; P.2 V. 3.164b, 165[a]; Var. 2.48b([a]); Vi. I. 7.10. Cfr. Mr. 50.9b[II] = b[II]. 1) Vi.2 भ्रू- । 2) Var. परमेष्ठिनः । 3) Var. योऽसौ रुद्रेति विख्यातः पुत्रः क्रोधसमुद्भवः ।

11 = Kū. 11.3; Mr. 50.10; P.1 I. 3.173b, 174[a]; P.2 V. 3.165b, 166[a]; Var. 2.49; Vi. I. 7.11. 1) Kū. दुष्प्रेक्ष्यो; Mr. पुरुषो । 2) Kū. Var. ऽतिभयङ्करः । 3) Mr. –क्त्वा स तदा–; Kū. Var. –क्त्वा ब्रह्मा चा– । 4) Kū. भयात्; Var. Vi.2 पुनः ।

12 = Kū. 11 4; Mr. 50.11; P.1 I. 3 174b, 175[a]; P.2 V. 3.166b, 167[a]; Var. 2.50; Vi. I. 7.12. 1) Mr. स चोक्तो वै पृथक् । 2) Var. चकार सः । 3) Kū. पुनः; Mr. तु सः ।

13 = Mr. 50 12; P.1 I. 3.175b, 176b; P.2 V. 3 167b, 168[a]; Vi. I. 7.13. 1) Mr. शान्तैः । 2) Mr. पुंस्त्वं; Vi. शान्ताशान्तः ( Vi.2–न्तः ) । 3) P 1P.2 चैव । 4) Mr. पुरुषे– ।

14 = Ga. 5.19; Mr. 50.13; P.1 I. 3.176b, 177[a]; P.2 V. 3.168b, 169[a]; Vi. I. 7.14. 1) P.1P.2 –ह्मा स्वयं ( P.2सं ) भूतं । 2) P.2 स– । 3) Ga. Mr. Vi.1 –भुः । 4) Mr. आत्मनः सदृशं कृत्वा । 5) Mr. –ल्यो; P.1P.2 प्राजापत्ये; Vi.1 –त्य; Vi.2 –पालं । 6) Ga. हर; Mr. –जः; P.1P.2 नृप ।

15 = Ga. 5 20; Mr. 50.14; P.1 I. 3.177b, 178[a]; P.2 V. 169b, 170[a]; Vi. I. 7.15. 1) Ga. -पोनिहत । 2) P.1P.2 –र्नाम । 3) Vi.2 पत्न्यर्थं । 4) Ga. ततः; P.1P.2 प्रभुः ।

16[a] = Ga. 5.21[a]; Mr. 50.15[a]; P.1 I. 3.178b; P.2 V. 3 170b; Vi. I. 7.16[a]. 1) Mr. पुत्रौ । 2) P.2 स्वरूपाच्च ।

16b = Mr. 50.15b.

17 = Mr. 50.16.

16b = Ga. 5.21b; P.1 I. 3.179[a]; P.2 V. 3.171[a]; Vi. I. 7.16b. 1) P.1P.2 –पाद– । 2) Ga. –ते ।

17 = Ga. 5.(22); P.1 I. 3.179b = b; P.2 V. 3.171b = b; Vi. I. 7.17. 1) Vi.2 -याप्या– । 2) Vi.1 तथाकूतिं रुचेः । 3) Ga. देवहूतिं मनुस्तासु आकूतिं रुचये ददौ। प्रसूतिं चैव दक्षाय देवहूतिं च कर्दमे ।

प्रजापतिः स जग्राह, तयोर्जज्ञे[1]) स-दक्षिणः ।
पुत्रो यज्ञो[2]) महाभाग[3]) दम्पत्योर्मि[4]थुनं ततः ॥ 18 ॥

यज्ञस्य दक्षिणायां तु[1]) पुत्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवाः स्वायंभुवे मनौ[2]) ॥ 19 ॥
[ तस्य पुत्रास्तु यज्ञस्य दक्षिणायां सभास्वराः ]

प्रसूत्यां च तथा[1]) दक्षश्चतस्रो[2]) विंशति[3]) तथा ।
ससर्ज कन्यास्तासां तु[4]) सम्यङ् नामानि मे शृणु[5]) ॥ 20 ॥

श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिर्ऋद्धिः[1]) कीर्तिस्त्रयोदशी[2]) ॥ 21 ॥

पत्न्यर्थं[1]) प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ।
ताभ्यः शिष्टा[2]) यवी[3]यस्य एकादश सुलोचनाः ॥ 22 ॥

ख्यातिः सत्य[1]थ संभूतिः स्मृतिः प्रीतिः क्षमा तथा[2]) ।
संन[3]तिश्चान[4]सूया च ऊर्जा स्वाहा स्वधा तथा ॥ 23 ॥

भृगुर्भवो[1]) मरीचिश्च तथा चैवाङ्गिरा मुनिः ।
पुलस्त्यः[2]) पुलहश्चैव क्रतुश्चर्षिवर[3]स्तथा ॥ 24 ॥

अत्रिर्वसिष्ठो वह्निश्च[1]) पितरश्च यथाक्रमम् ।
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तमाः[2]) ॥ 25 ॥

श्रद्धा कामं, चला[1]) दर्पं[2]), नियमं धृतिरात्मजम्[3]), ।
संतोषं च तथा तुष्टिर्लोभं पुष्टिरसू[4]यत ॥ 26 ॥

---

18 = Mr. 50.17; P.1 I. 3.180; P.2 V. 3.172; Vi. I. 7.18. 1) Mr. Vi.1 –यंज्ञः । 2) Mr. Vi.1 यज्ञे । 3) Vi.2 –गो । 4) Mr. –त्तीमि–; Vi.1 दाम्पत्यं मि– ।

19 = Ga. 5.23; Mr. 50.18; P.1 I. 3.181; P.2 V. 3.173; Vi. I. 7.19. 1) Ga. रुचेर्यज्ञो दक्षिणाभूद् 2) Mr. –वेऽन्तरे; Ga. दक्षिणायां च यज्ञतः । अभवन् द्वादश सुता यामा नाम महाबलाः ।

[ ] = Mr. 50.19a.

20 = Ga. 5.(24a); Mr. 50.19b, 20a; P.1 I. 3.182; P.2 V. 3.174; Vi. I. 7.20. 1) P.2 Vi.2 –दा । 2) P.2 जाताश्चत्वारो । 3) Mr. P.2 Vi.1–तिस् । 4) Mr. च । 5) Ga. चतुर्विंशतिकन्याश्च सृष्टवान् दक्ष उत्तमः ।

21 = Ga. 5.24b, 25a; Mr. 50.20b, 21a; P.1 I. 3.183; P.2 V. 3.175; Vi. I. 7.21. 1) Mr. P.2 Vi.1 –न्तिः सिद्धिः । 2) Vi.1 –श ।

22 = Ga. 5.25b = a; Mr. 50.21b, 22a; P.1 I. 3.184; P.2 V. 3.176; Vi. I. 7.22. 1) Mr. –र्थे । 2) P.2 सृष्टा । 3) Vi.2 –ष्टाः कनी– ।

23 = Ga. 5.26; Mr. 50.22b, 23a; P.1 I. 3.185; P.2 V. 3.177; Vi. I. 7.23. 1) P.2 T. शान्त्य– । 2) Mr. तथा क्षमा । 3) Mr.–त– । 4) Ga. P.2 Vi.2 –त्रु– ।

24 = Ga. 5.27; Mr. 50.23b, 24a; P.1 I. 3.186; P.2 V. 3.178; Vi. I. 7.24. 1) P.2 –गो । 2) P.1P.2 अहं च । 3) Mr. –श्च ऋषय–; P.1 –र्मुनिवर– ।

25 = Ga. 5.28; Mr. 50.24b, 25a; P.1 I. 3.187; P.2 V. 3.179; Vi. I. 7.25. 1) Mr. वशिष्ठोऽग्निस्तथा वह्निः । 2) P.1P.2 राजसत्तम; Vi. मुनिसत्तम ।

26 = Ga. 5.29; Mr. 50.25b, 26a; P.1 I. 3.188; P.2 V. 3.180; Vi. I. 7.26. 1) Mr. श्रीश्च । 2) P.1 बलं कश्मीर् । 3) P.2 तथालक्ष्मीर्दर्पं च नियमं धृतिः । 4) Mr. –जा– ।

मेधा श्रुतं[1]), क्रिया दण्डं नयं[2]) विनयमेव च ।
बोधं बुद्धिस्तथा लज्जा विनयं, वपुरात्मजम् ॥ 27 ॥
व्यवसायं प्रजज्ञे वै[1]), क्षेमं शान्तिरसूयत, ।
सुखमृद्धि[2]र्यशः कीर्तिरित्येते धर्मसूनवः[3]) ॥ 28 ॥
कामान् नन्दी[1]) सुतं[2]) हर्षं धर्मपौत्रम्[3]) असूयत[4]) ।
हिंसा भार्या त्वधर्मस्य, तस्यां[5]) जज्ञे तथा[6]नृतम् ॥ 29 ॥
कन्या च निकृति[1]स्ताभ्यां भयं नरकमेव च[2]) ।
माया च[3]) वेदना चैव मिथुनं त्विदमे[4]तयोः[5]) ॥ 30 ॥
तयोर्जज्ञेऽथ वै[1]) माया मृत्युं भूतापहारिणम्, ।
वेदना स्व'सुतं[3]) चापि दुःखं जज्ञेऽथ रौरवात् ॥ 31 ॥
मृत्योर्व्याधि-जरा-शोक-तृष्णा-क्रोधाश्च जज्ञिरे ।
दुःखोत्तराः[1]) स्मृता ह्येते सर्वे चा[2]धर्मलक्षणाः ॥ 32 ॥
नैषां भार्यास्ति पुत्रो वा, ते सर्वे[1]) ह्यूर्ध्वरेतसः ।
| रौद्राण्येतानि[1]) रूपाणि विष्णोर्मुनि[2]वरात्मज ।
| नित्यं[3]) प्रलयहेतुत्वं जगतोऽस्य प्रयान्ति वै ॥ 33 ॥
[ मार्कण्डेय पु० 50.33-51.121 ] | [ विष्णु पु० 1. 7.34-45. ]

---

27 = Ga. 5.30; Mr. 50.26b, 27a; P.1 I. 3.189; P.2 V. 3.181; Vi. I. 7.27. 1) P.2 श्रियं । 2) P.2 नघं (?) ।
28 = Ga. 5 31; Mr. 50.27b, 28a; P.1 I. 3.190; P.2 V. 3.182; Vi. I. 7.28. 1) P.2 -यं क्रिया जज्ञे । 2) Mr. P.2 Vi.1 -खं सिद्धि- । 3) Mr. -योनयः ।
29 = A. 20.17b = b; Ga. 5.(32) = a; Mr. 50.28b, 29a; P.1 I. 3.191; P.2 V. 3.183; Vi. I. 7.29ab. 1) Vi.1-न्दा । 2) Mr. -माद्रतिसुदं । 3) P.2 -पुत्राद् । 4) Ga. कामस्य च रतिर्भार्या, तत्पुत्रो हर्ष उच्यते । 5) A. Vi.2 तयोर् ; P.1P.2 तस्य । 6) P.1 तदा-।
30 = A. 20.18; Mr. 50.29b, 30a; P.1 I. 3.192; P.2 V. 3.184; Vi. I. 7.29c, 30a. 1) Mr. निर्ऋति- । 2) Mr. -स्तस्यां सुतौ द्वौ नरकं भयम् । 3) P.2 -याऽथ । 4) Mr. द्वयमे-; P.1P.2 द्वन्द्वमे-। 5) P.1P.2 -मेत्र च ।
31 = A. 20.19; Mr. 50 30b, 31a; P.1 I. 3 193; P.2 V. 3 185; Vi. I. 7.30b, 31a. 1) P.2 तथा । 2) A. च; Mr.- नात्म- । 3) P.1 -नाय:स्ततश् ।
32 = A. 20.20a = a; Mr. 50.31b, 32a; P.1 I. 3.194; P.2 V. 3.186; Vi. I. 7.31b, 32a. 1) Mr. -खोद्भवाः । Mr. वा- ।
33a = Mr. 50 32b; P.1 I. 3.195a; P.2 V. 3. 187a; Vi.1 I. 7.32b. 1) Mr. Vi.2 सर्वे ते ।
| 33bc = P.1 I. 3.195b, 196a; P.2 V. 3.187b, 188a; Vi. I. 7.33. 1) Vi.1 -णि तानि । 2) P.1P.2 ब्रह्मणो नृ-; Vi.1 -ष्णुर्मुनि- । 3) Vi.1 -स्य- ।

## अष्टमोऽध्यायः

( Mr. 52.1–15ª; P.1 I. 3.196b–206; P.2 V. 3. 189b–201; Vi. I. 8 1–13; cfr. A. 20.20b -22; Kū. 10.22–30. )

| इत्येष[1]) तामसः सर्गो ब्रह्मणोऽव्यक्तजन्मनः[2]) ।
रुद्रसर्गं प्रवक्ष्यामि, तन्मे निगदतः शृणु[1]) ! ॥ 1 ॥

[ तनयाश्च तथैवाष्टौ पत्न्यः पुत्राश्च ते तथा ] ।

कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः[1]) ।
प्रादुरासीत् प्रभोरङ्के[2]) कुमारो नीललोहितः ॥ 2 ॥

रुदन् वै[1]) सुस्वरं सोऽथ द्रवंश्च द्विज[2]सत्तम, ।
किं रोदिषीति तं ब्रह्मा[3]) रुदन्तं प्रत्युवाच ह[4]) ॥ 3 ॥

नाम दे[1]हीति तं सोऽथ प्रत्युवाच प्रजा[2]पतिम् ।
रुद्रस्त्वं देव[3]) नाम्ना[4]सि, मा रोदीर्धैर्यमावह ! ॥ 4 ॥

एवमुक्तः पुनः[1]) सोऽथ सप्तकृत्वो रुरोद ह[2]), ।
ततोऽन्यानि ददौ तस्मै सप्त नामानि वै[3]) प्रभुः[4]), ॥ 5 ॥

स्थानानि चैषा[1]मष्टानां पत्नीः पुत्रांश्च वै प्रभुः[2]) ।
भवं शर्व[3]मथे[4]शानं तथा[5]) पशुपतिं द्विज[6]) ॥ 6 ॥

भीममुग्रं महादेवमुवाच स पितामहः ।
| चक्रे नामान्यथैतानि स्थानान्येषां चकार सः[1]) ॥ 7 ॥

---

| 1ª = Mr. 52.1ª; Vi. I. 8 1ª. 1) Vi. कथितस् । 2) Vi. –णस्ते महामुने ।

1b = Mr. 52.1b; P.1 I. 3.196b; P.2 V. 3.188b; Vi. I. 8.1b. 1) P.1P.2 यथा ब्रह्मा चकार ह । |
[ ] = Mr. 52.2ª.

2 = Mr. 52.2b, 3ª; P.1 I. 3 197; P.2 V. 3.189; Vi. I. 8 2. 1) Mr. –तः प्रभोः; P.1P.2 ततः । 2) Mr. –सीद्धयाङ्केऽस्य ।

3 = Mr. 52.3b, 4ª; P.1 I. 3.198; P.2 V. 3 190; Vi. I. 8 3. 1) Mr. रुरोद । 2) P.1P.2 नृप– । 3) P.1 देवो । 4) Vi.2 वै ।

4 = Mr. 52.4b, 5ª; P.1 I. 3.199; P.2 V. 3.191; Vi. I. 8.4. 1) P.1 धे– । 2) Mr. जगद्– । 3) P.1 रोदनाद् रुद्र– । 4) P.1 –नामा–; P.2 देवनामा– ।

5 = Mr. 52.5b, 6ª; P.1 I. 3 200; P.2 V. 3.192; Vi. I. 8.5ªb. 1) Mr. ततः । 2) Vi. वै । 3) Vi.2 स । 4) P.2 –भो ।

6 = A. 20.21ª = b; Mr. 52.6b, 7ª; P.1 I. 3.201; P.2 V. 3.193; Vi. I. 8.5ᶜ, 6ª. 1) P.1 मूर्तीनां चैव– । 2) Mr. द्विज; P.1 स्थानान्यष्टौ चकार ह; P.2 –स्तथैव च; Vi.2 विभुः । 3) Mr. सर्व– । 4) Mr. –र्वं तथे–; Vi.1 –र्वं महे– । 5) P.2 शिवं । 6) Mr. प्रभुः; P.1P.2 नृप ।

7ª = A. 20.21b = a; Mr. 52.7b; P.1 I. 3.202ª; P.2 V. 3.194ª; Vi. I. 8.6b.
| 7b = Mr. 52.8ª; Vi. I. 8.7ª. 1) Mr. ह ।

ततोद्धृत्य क्षितिं[1]) देवो जगतः स्थापनेच्छया ।
पृथिव्याः प्रविभागाय मनश्चक्रेऽम्बुजेक्षणः ॥ 18 ॥

(Cp. Ch. 6. श्लो. 9—12ª.)

पृथिवीं[1]) तु[2]) समीकृत्य[3]) पृथिव्यां सोऽचिनोद् गिरीन् ।
प्राक्सर्गे दह्यमाने[4]) तु[5]) तदा संवर्तकाग्निना[6]) ॥ 19 ॥
तेनाग्निना विशीर्णा[1]स्ते पर्वता भुवि सर्वशः[2]) ।
शैत्या[3]देकार्णवे तस्मिन् वायुनापस्तु[4]) संहृताः[5]) ॥ 20 ॥
निषिक्ता यत्र यत्रासंस्तत्र तत्राचलोऽभ[1]वन् ।
तदा[2]चलत्वादचलाः, पर्वभिः पर्वताः स्मृताः ॥ 21 ॥
गिरयोऽद्रिनि[1]गीर्णत्वाच्चयनाच्च शि[2]लोच्चयाः ।
ततस्तेषु विकीर्णेषु[3]) लोकोदधिगिरिष्व[4]थ[5]) ॥ 22 ॥

विश्वकर्मा विभजते कल्पादिषु पुनः पुनः ।
ससमुद्रामिमां पृथ्वीं सप्तद्वीपां सपर्वताम् ॥ 23 ॥

भूराद्यांश्चतुरो लोकान् पुनः सोऽथ व्य[1]कल्पयत् ।
लोकान् प्रकल्पयित्वा च[2]) प्रजासर्गं ससर्ज ह ॥ 24 ॥

ब्रह्मा स्वयंभूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ।
ससर्ज सृष्टिं तद्रूपां[1]) कल्पादिषु यथा पुरा ॥ 25 ॥

तस्याभिध्यायतः सर्गं तदा वै बुद्धिपूर्वकम् ।
प्रधान[1]समकाले[2]) वै[3]) प्रादुर्भूतस्तमोमयः ॥ 26 ॥
तमो मोहो महामोहस्तामिस्रश्चान्ध[1]संज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ 27 ॥
पञ्चधावस्थितः[1]) सर्गो ध्यायतः सो[2]ऽभिमानिनः ।
सर्वतस्त[3]मसा चैव बीजकुम्भवदा[4]वृतः[5]) ॥ 28 ॥

---

18 = L. 70.$131^{b}$, $132^{a}$; Vā. 6.28. 1) L. तत उत्क्षिप्य तां ।

19 = Bd. I. 5.$24^{c}$, $25^{a}$; Kū. 6.25; L. 70.$132^{b}$, $133^{a}$; Vā. 6.29. 1) Bd. पृथक् तास् । 2) Kū. स; L. च । 3) L. संमां कृत्वा । 4) Bd. Vā. दह्यमानास् । 5) Kū. –सर्गदग्धानखिलान् । 6) Kū. ततः सर्गेऽदहन्मनः ।

20 = Bd. I. 5.$25^{b}$, $26^{a}$; L. 70.$133^{b}$, $134^{a}$; Vā. 6.30. 1) Bd. विलीना–। 2) L. भूरिविस्तराः । 3) Bd. सत्या–। 4) Bd.1 –ना यस्तु; Bd.2 –नायस्तु । 5) L. –ना तेन । 6) Bd. –हिताः; L. –हृताः ।

21 = Bd. I. 5.$26^{b}$; L. 70.$134^{b}$, $135^{a}$; Vā. 6.31. 1) L. –लाऽम–। 2) Vā. स्फला ।

22 = Bd. 5.$27^{a}$ = b; L. 70.$135^{b}$, $136^{a}$; Vā. 6.32. 1) L. –द्रि नि–; Vā. –ऽन्तर्नि–। 2) L. –च्छयानत्वाच्छि– । 3) Bd. प्रकीर्णेषु; Vā. विशीर्णेषु । 4) L. कोटिशो द्रि; गिरिष्व–। 5) Bd. –गिरींस्तथा ।

23 = Bd. I. 5.$27^{b}$, $28^{a}$; L. 70.$136^{b}$, $137^{a}$; Vā. 6.33.

24 = Bd. I. 5.$28^{b}$, $29^{a}$; L. 70.$137^{b}$, $138^{a}$; Vā. 6.34. 1) Bd. पुनर–; Vā. प्र–। 2) L. –यित्वाथ ।

25 = Bd. I. 5.$29^{b}$, $30^{a}$; L. 70.$138^{b}$, $139^{a}$; Vā. 6.35. 1) Bd. –ष्टं तद्रूपं ।

26 = Bd. I. 5.$30^{b}$, $31^{a}$; L. 70.$139^{b}$, $140^{a}$; Vā. 6.36. 1) Bd.1 –धान–; Bd.2 –धानं; L. बुद्ध्याख्य । 2) Vā. –लं । 3) Bd. च ।

27 = Bd. I. 5.$31^{b}$, $32^{a}$; L. 70.$140^{b}$, $141^{a}$; Vā. 6.37. 1) Bd. –स्रो ह्यन्ध–; Vā. –स्रो( ह्य् )अन्ध–।

28 = Bd. I. 5.$32^{b}$, $33^{a}$; L. 70.$141^{b}$, $142^{a}$; Vā. 6.38. 1) Vā. –धा चाश्रितः । 2) Bd.1 सा–। 3) L. संवृतस्त–। 4) Bd. –अकुम्भलता–; L. बीजाङ्कुरवदा–; Vā. दीपः कुम्भवदा–। 5) Bd. –ताः ।

बहिरन्तश्चाप्रकाश:[1]) स्तब्धो[2]) नि:संज्ञ एव च ।
यस्मात् तेषां वृता[3]) बुद्धिर्दुःखानि[4]) करणानि च, ॥ 29 ॥

तस्मात् ते[1]) संवृतात्मानो नगा मुख्याः प्रकीर्तिताः ।
मुख्यसर्गं[2]) तथाभूतं[3]) दृष्ट्वा ब्रह्मा[4]) ह्यसाधकम्[5]) ॥ 30 ॥

अप्रसन्नमना:[1]) सोऽथ ततोऽन्यं सो[2] ह्य[3]मन्यत[4]) ।
तस्याभिध्यायतश्चैव[5]) तिर्यक् स्रोतोऽभ्य[6]वर्तत ॥ 31 ॥

य[1]स्मात् तिर्यक् प्रवृत्तः स[2]) तिर्यक्स्रोतस्त[3]तः स्मृतः[4]) ।

पश्वादयस्ते विख्याता
उत्पथग्राहिणो द्विजाः ॥ 32 ॥

तमोबहुत्वात्ते सर्वे
ह्यज्ञानबहुलाः स्मृताः ।
उत्पथ[1]ग्राहिणश्चैव[2])
तेऽज्ञाने ज्ञान[3]मानिनः ॥ 32 ॥

[ तिर्यक्स्रोतस्तु दृष्ट्वा वै द्वितीयं विश्वमीश्वरः । ]
अहंकृता अहंमाना अष्टाविंशद्विधात्मकाः, ॥ $32_1$ ॥
एकादशेन्द्रियविधा नवधा चोदय[1]स्तथा ।
अष्टौ च[2]) तारकाद्याश्च तेषां शक्तिविधाः[3]) स्मृताः ॥ $32_2$ ॥
अन्तःप्रकाशास्ते सर्वे[1]) आवृताश्च बहिः पुनः ।
*यस्मात् तिर्यक् प्रवर्तेत तिर्यक्स्रोतः*[2]) स उच्यते[3]) ॥ $32_3$ ॥
तिर्यक्स्रोतस्तु[1]) दृष्ट्वा[2]) वै द्वितीयं विश्वमीश्वरः ।
अभिप्रायमथोद्भूतं दृष्ट्वा सर्गं[3]) तथाविधम् ॥ $32_4$ ॥

तस्याभिध्यायतोऽन्यं वै[1]) सात्त्विकः समवर्तत[2]) ।
ऊर्ध्वस्रोतास्तृतीयस्तु स वै[3]) चो[4]र्ध्वं व्यवस्थितः[5]) ॥ 33 ॥

---

29 = Bḍ. I. 5.33[b], 34[a]; L. 70.142[b], 143[a]; Vā. 6.39. 1) Vā. –न्तः प्रकाशश्च । 2) Bḍ. तथा; L. –शस्तब्धो; Vā. शुद्धो । 3) Bḍ. कृता; Vā. तैः संवृता । 4) Vā. –र्मुख्यानि ।

30 = Bḍ. I. 5.34[b], 35[a]; L. 70.143[b], 144[a]; Vā. 6.40. 1) Bḍ.1 –मात्र; Bḍ.2 माद– । 2) Bḍ.1 –र्गे । 3) Bḍ. तदोद्भूतं । 4) Vā. ब्रह्मा दृष्ट्वा । 5) Bḍ. –ह्यात्मसंभवः ।

31 = Bḍ. I. 5.35[b], 36[a]; L. 70.144[b], 145[a]; Vā. 6.41. 1) Bḍ.1 अप्रतीसमनाः; Bḍ.2 अप्रतीतमनाः । 2) Vā. ततो न्यासो । 3) Bḍ.1 –तदोत्पत्तिम–; Vā. ऽस्य– । 4) Bḍ.2 –न्यमतिमन्यतः । 5) Bḍ. –श्चान्यस्; Vā. –स्तत्र । 6) L. –ता ह्य– ।

32[a] = Bḍ. I. 5.36[b]; L. 70.145[b]; Vā. 6.42[a]. 1) Vā. त– । 2) Bḍ. विवर्तेत; Vā. –र्यग् व्यवर्तन्त । 3) L. –तास्त– । 4) Vā. –तम् ।

32[b] = L. 70.146[a].

32[bα] = Bḍ.I. 5.37; Vā. 6.42[b], 43[a]. 1) Bḍ.1 उत्पाथ– । 2) Vā. –श्चापि । 3) Vā. ते ध्यानाद् ध्यान– ।

$32_1$ = Bḍ. I. 6.38[a] = b; Vā. 6.43[b], 44[a].
$32_2$ = Bḍ. I. 5.38[b], 39[a]; Vā. 6.44[b], 45[a]. 1) Bḍ. –धात्मादय– । 2) Bḍ. तु । 3) Bḍ.1 –वधाः ।
$32_3$ = Bḍ. I. 5.39[b], (40); Vā. 6.45[b], 46[a]. 1) Bḍ. –र्वे । 2) Vā. –ताः । 3) Bḍ. तिर्यक्स्रोतस (Bḍ.2–त यद्) उच्यन्ते वश्या(Bḍ.2 पश्या )त्र मानविसंज्ञकाः ।
$32_4$ = Bḍ. I. 5.41; Vā. 6.46[b], 47[a]. 1) Vā. –श्च । 2) Bḍ.1 सृष्ट्वा; Bḍ.2 पृष्ट्वा (?) । 3) Vā. सर्वं ।

33 = Bḍ. I. 5.42; L. 70.146[b], 147[a]; Vā. 6.47[b], 48[a]. 1) Bḍ.1 –न्योऽन्त्यः; Bḍ.2 –न्योऽन्यः; Vā. नित्यं । 2) Bḍ. –जायत । 3) Bḍ. तद्वै । 4) Vā. स चैवो– । 5) Bḍ. –तम् ।

यस्माद् व्यवर्ततोर्ध्वं तु[1]) ऊर्ध्वस्रोतास्ततः स्मृतः[2]) ।
ते[3]) सुख[4]प्रीतिबहुला बहिरन्तश्च संवृताः[5]) ॥ 34 ॥

प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः[1]) स्मृताः ।

ते सत्त्वस्य च योगेन
सृष्टाः सत्त्वोद्भवाः स्मृताः ॥ 35 ॥

| नव धात्वादयस्ते वै
| तुष्टात्मानो बुधाः स्मृताः[1]) ॥ 35 ॥

ऊर्ध्वस्रोता[1]स्तृतीयो वै[2]) देव[3]सर्ग[4]स्तु स स्मृतः[5] ) ।
ऊर्ध्वस्रोतःसु सृष्टेषु देवेषु स तदा[6]) प्रभुः ॥ 36 ॥

प्रीतिमानभवद् ब्रह्मा ततोऽन्यं सोऽभ्य[1]मन्यत ।
ससर्ज सर्गमन्यं स[2]) साधकं प्रभु[3]रीश्वरः ॥ 37 ॥

ततो[1]ऽभिध्यायतस्तस्य[2]) सत्याभिध्यायिनस्तदा ।
प्रादुर्बभूव[3]) चाव्यक्ताद्[4]) अर्वाक्[5]स्रोत[6]स्तु साधकः[7]) ॥ 38 ॥

यस्मादर्वाङ्[1]) न्यवर्तन्त[2] ततोऽर्वाक्स्रोतसस्तु ते[3]) ।
ते च प्रकाशबहुलास्तमःपृक्ता[4]) रजोऽधिकाः ॥ 39 ॥

त[1]स्मात् ते दुःखबहुला भूयो भूयश्च कारिणः ।
प्रकाशा[2]) बहिरन्तश्च मनुष्याः साधकाश्च ते ॥ 40 ॥

लक्षणैस्तार[1]काद्यैस्ते अ[2]ष्टधा च[3]) व्यवस्थिताः ।
सिद्धात्मानो मनुष्यास्ते गन्धर्व[4]सहधर्मिणः ॥ 41 ॥

इत्येष तैजसः सर्गो ह्यर्वाक्स्रोताः प्रकीर्तितः ।
पञ्चमोऽनुग्रहः सर्गश्चतुर्धा स[1]) व्यवस्थितः ॥ 42 ॥

विपर्ययेण शक्त्या च तुष्ट्या सिद्ध्या[1] तथैव च ।

---

34 = Bd. I. 5.43; L. 70.$147^b$, $148^a$; Vā. 6.$48^b$, $49^a$. 1) Bd. –स्मादूर्ध्वं न्यवर्तन्त; L. –स्मात् प्रवर्तेत चोर्ध्वम् । 2) Bd.1 तदूर्ध्वस्रोतसंज्ञकम् । 3) Bd. ताः । 4) Bd.1 –खं । 5) Bd.1 श्च वावृताः; Bd.2 –स्तथावृताः ।

$35^a$ = Bd. I. 5.$44^a$; L. 70.$148^b$; Vā. 6.$49^b$. 1) Bd. स्रोतः प्रजाः; L. –तोभवाः ।

$35^b$ = L. 70.$149^a$.

| $35^b$ = Bd. I. 5.$44^b$; Vā. 6.$50^a$. 1) Vā. तेन वातादयो ज्ञेयाः सुष्टात्मानो व्यवस्थिताः ।

36 = Bd. I. 5.45; L. 70.$149^b$, $151^a$; Vā. 6.$50^b$, $51^a$. 1) Bd.1 –त–। 2) Bd.1 यः; Bd.2 ऽयं । 3) Bd. स्मृतः; Vā. तेन । 4) Bd.1 सर्वः– । 5) Bd. सदैविकः । 6) L. वरदः ।

37 = Bd. I. 5.46; L. 70.$151^b$, $152^a$; Vā. 6.$51^b$, $52^a$. 1) Bd.1 नाभि–; Bd.2 –न्यमभि–। 2) L. हि; Bd. सर्गमन्यं सिसृक्षुस्तं । 3) Bd. पुन–।

38 = Bd. I. 5.47; L. 70.$152^b$, $153^a$; Vā. 6.$52^b$, $53^a$. 1) Bd. तस्या–; Vā अथा–। 2) Bd. –तः सर्गं । 3) Bd. –बभौ; L. –रासीत् । 4) Bd.1 भौतसर्गः; Bd.2 ततः सर्गः; L. तदाव्यक्ताद् । 5) Bd. सोऽर्वाक्–। 6) L. –तास् । 7) Vā. ह्यसाधकम् ।

39 = Bd. I. 5.48; L. 70.$153^b$, $154^a$; Vā. 6.$53^b$, $54^a$. 1) Bd. –स्मात् तेऽर्वाक् । 2) Bd. प्रवर्तन्ते; Vā. व्यवर्तंत । 3) Vā. –स्रोत उच्यते । 4) Bd.1 –मस्पृष्ट–; Vā. –मःसत्त्व–।

40 = Bd. I. 5.49; L. 70.$154^b$, $155^a$; Vā. 6.$54^b$, $55^a$. 1) Bd.2 य–। 2) L. संवृता ।

41 = Bd. I. 5.50; L. 70.$155^b$, $156^a$; Vā. 6.$55^b$, $56^a$. 1) Bd. –र्नार–। 2) Bd. –स्तैर–; L. –श्चस्ते अ–। 3) L. तु । 4) Bd. –र्वैः ।

42 = Bd. I. 5.$51^a$ = b; L. 70.$156^b$, $157^a$; Vā. 6.$56^b$, $57^a$. 1) L. तु ।

43 = Bd. I. 5.$51^b$, $52^a$; L. 70.$157^b$, $158^a$; Vā 6.$57^b$, $58^a$. 1) Bd. सिद्धमुख्यास् ।

निवृत्ति[2]) वर्तमानं[3]) च तेऽर्थं[4]) जानन्ति वै पुनः[5]) ॥ 43 ॥
भूतादिकानां सत्त्वानां[1]) षष्ठः सर्गः स उच्यते[2]) ।
ते परिग्राहिणः सर्वे संविभागरताः पुनः ॥ 44 ॥

खा[1]दनाश्चाप्यशीलाश्च ज्ञेया भूतादिकाश्च[2]) ते ।
विपर्ययेण भूतादिरशक्त्या च व्यवस्थितः ॥ 45 ॥

प्रथमो महतः सर्गो, विज्ञेयो ब्रह्मण[1]स्तु सः[2]) ।
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ 46 ॥

वैकारिकस्तृतीयस्तु सर्ग[1]) ऐन्द्रियकः स्मृतः[2]) ।
इत्येष[3]) प्राकृतः[4]) सर्गः संभूतो[5]) बुद्धिपूर्वकः[6]) ॥ 47 ॥

मुख्यसर्गश्चतुर्थस्तु[1]), मुख्या वै स्थावराः स्मृताः ।
तिर्यक्स्रोताश्च यः सर्गस्तै[2]र्यग्योन्यः स[3]) पञ्चमः ॥ 48 ॥

तथोर्ध्वस्रोतसां षष्ठो, देवसर्गस्तु स स्मृतः[1]) ।
ततोऽर्वाक्[2]स्रोतसां सर्गः सप्तमः, स तु मानुषः ॥ 49 ॥

अष्टमोऽनुग्रहः सर्गः, सात्त्विकस्तामसश्च[1]) सः ।
पञ्चैते वैकृताः सर्गाः, प्राकृतास्तु[1]) त्रयः स्मृताः ॥ 50 ॥

प्राकृतो वैकृतश्चैव कौ[1]मारो नवमः स्मृतः ।
प्राकृतास्तु *त्रयः सर्गाः*, कृतास्तेऽबुद्धिपूर्वकाः[2]) ॥ 51 ॥

बुद्धिपूर्वं[1]) प्रवर्तन्ते[2]) षट् *सर्गा*[3]) ब्रह्मणस्तु ते[4]) ।
विस्तरानुग्रहं सर्गं[5]) कीर्त्यमानं[6]) निबोधत ॥ 52 ॥

चतुर्धावस्थितः[1]) सोऽथ[2]) सर्वभूतेषु कृत्स्नशः ।
| विपर्ययेण शक्त्या च *तुष्ट्या*[3]) सिद्ध्या तथैव च ॥ 53 ॥
| स्थावरेषु विपर्यासस्तिर्यग्योनिषु शक्तिता[1]) ।
| सिद्धा[2]त्मानो मनुष्यास्तु, तुष्टि[3]र्देवेषु कृत्स्नशः ॥ $53_1$ ॥

---

L. सिद्ध्या तुष्ट्या । 2) Bḍ. –ता; Vā. विवृत्तं । 3) Bḍ. –नाश् । 4) L. तेषां । 5) Bḍ. प्रजायन्ते पुनः पुनः; Vā.–ति तत्त्वतः ।

44 = Bḍ. I. $5.52^{b}$ = a; L. $70.160^{b}$, $161^{a}$; Vā. $6.58^{b}$, $59^{a}$. 1) L. भूतानां । 2) L. सप्तमः सर्गं एव च ।

45 = Pḍ. I. $5.53^{a}$ = a; L. $70.161^{b}$, $162^{a}$; Vā. $6.59^{b}$, $60^{a}$. 1) Bḍ. स्वा–। 2) Vā. –स्तु ।

46 = Bḍ. I. $5.53^{b}$, $54^{a}$; L. $70.162^{b}$, $163^{a}$; Vā. $6.60^{b}$, $61^{a}$. 1) Vā. महत–। 2) L. –णः स्मृतः ।

47 = Bḍ. I. $5.54^{b}$, $55^{a}$; L. $70.163^{b}$, $164^{a}$; Vā. $6.61^{b}$, $62^{a}$. 1) Vā. –र्वे । 2) Bḍ. चैन्द्रियः सर्गं उच्यते । 3) Bḍ. –त्येते । 4) Bḍ. –ताः । 5) Bḍ. –र्गा उत्पन्ना । 6) Bḍ. –काः ।

48 = Bḍ. I. $5.55^{b}$, $56^{a}$; L. $70.164^{b}$ = a; Vā. $6.62^{b}$, $63^{a}$. 1) L. –र्थश्च । 2) Bḍ. –नमसर्गस्तु ते । 3) Bḍ. –य्यौनस्तु; Vā. –स्तिर्यग्योनिः स ।

49 = Bḍ. I. $5.56^{b}$, $57^{a}$; L. $70.165^{a}$ · b; Vā. $6.63^{b}$, $64^{a}$. 1) Bḍ. –सां सर्गः षष्ठो दैवत उच्यते । 2) Bḍ. तत्रोर्ध्व–; Vā. तथार्वाक्–।

50 = Bḍ. I. : $.57^{b}$, $58^{a}$; L. $70.165^{b}$, $166^{a}$; Vā. $6.64^{b}$, $65^{a}$. 1) Vā. –स्तु । 2) Bḍ.1 –नाथास् ।

51 = Bḍ. I. $5.58^{b}$, ($59^{a}$); L. $70.166^{b}$, ($167^{a}$); Vā. $6.65^{b}$, $66^{a}$. 1) L. कु–। 2) Bḍ. –ना बुद्धिपूर्वास्तु त्रयः सर्गास्तु वैकृताः; L. अबुद्धिपूर्वकाः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।

52 = Bḍ. I. $5.59^{b}$, $60^{a}$; L. $70.167^{b}$, $168^{a}$; Vā. $6.66^{b}$, $67^{a}$. 1) Bḍ. –र्गाः । 2) Bḍ.1 –र्नेयुस् । 3) Bḍ.1 षड्वर्गाः; Bḍ.2 षड्वर्गाः; L. पुनर् । 4) Bḍ. ब्राह्मणास्तु वै । 5) Bḍ.1 –राच्च यथा सर्वे; Bḍ.2 विस्तरावयवं सर्वं; L. विस्तरानुग्रहः सर्गः । 6) L. –मानो ।

53 = Bḍ. I. $5.60^{b}$, $61^{a}$; L. $70.168^{b}$ = a; Vā. $6.67^{b}$, $68^{a}$. 1) Bḍ.1 –र्धा च स्थितः । 2) Bḍ.1 सोऽपि; Bḍ.2 सो वै । 3) Bḍ. बुद्ध्या ।

| $53_1$ = Bḍ. I. $5.61^{b}$, $62^{a}$; Vā. $6.68^{b}$, $69^{a}$. 1) Bḍ. –ता । 2) Vā. –द्ध्या– । 3) Bḍ. पुष्टि– ।

इत्येते प्राकृताश्चैव वैकृताश्च नव स्मृताः ।

परस्परानुरक्ताश्च | सर्गाः परस्परस्याथ

कारणैश्च बुधैः स्मृताः ॥ 54 ॥ | प्रकारा बहवः स्मृताः ॥ 54 ॥

अग्रे[1]) ससर्ज वै ब्रह्मा मानसानात्मनः समान् ।
सनन्दनं च सनकं[2]) विद्वांसं च सनातनम्[3]) ॥ 55 ॥
विज्ञानेन निवृत्तास्ते, वैवर्तेन[1]) महौजसः ।
संबुद्धाश्चै[2]व नानात्वे अ[3]प्रवृत्ता[4]स्त्रयोऽपि ते[5]) ॥ 56 ॥

असृष्ट्वैव प्रजासर्गं प्रतिसर्गं गताः पुनः[1]) ।
तदा[2]) तेषु व्यतीतेषु[3]) ततो[4])ऽन्यान् साधकान् सुतान्[5]) ॥ 57 ॥

मानसानसृजद् ब्रह्मा पुनः स्थानाभिमानिनः[1]) ।

आभूतसंप्लवावस्था | आभूतसंप्लवावस्थान्[1]) ।

यैरियं विधृता मही ॥ 58 ॥ | नामत[2]स्तान् निबोधत[3]) ॥ 58 ॥

Cp. Ch. 5. Sl. 186–218

आपोऽग्निं पृथिवीं वायु म[1]न्तरिक्षं[2]) दिवं तथा[3]) ।

समुद्रांश्च नदीश्चैव | स्वर्गं[1]) दिशः[2]) समुद्रांश्च[3])

तथा शैलवनस्पतीन् ॥ 59 ॥ | नदान् शैलान्[4]) वनस्पतीन् ॥ 59 ॥

ओषधीनां तथात्मानो ह्यात्मानो[1]) वृक्षवीरुधाम् ।
लवाः[2]) काष्ठाः कलाश्चैव मुहूर्तान्[3]) संधिरात्र्यहान्[4]) ॥ 60 ॥
अर्धमासांश्च[1]) मासांश्च अयनाब्दयुगानि च ।
स्थानाभिमानिनः सर्वे[2]) स्थानाख्याश्चैव ते स्मृताः ॥ 61 ॥

---

$54^a$ = L. 70.169$^a$; Vā. 6.69$^b$.

$54^b$ = L. 70.169$^b$. | $54^b$ = Vā. 6.70$^a$.

55 = Bḍ. I. 5.62$^b$ = a; Kū. 7.12; L. 70.170$^b$, 174$^a$; Vā. 6.70$^b$, 71$^a$. 1) Bḍ. अथो । 2) Kū. सनकं सनातनं चैव; L. –नं सनकं चैव । 3) Kū. तथैव च सनन्दनम् ।

56 = Bḍ. I. 5.63; L. 70.175; Vā. 6.71$^b$, 72$^a$. 1) Bḍ. वैवर्ते( र्त्ये )न तु ज्ञानेन निवृत्तास्ते; L. व्यवर्तन्त । 2) Bḍ.1 –बुध्य चै–; Bḍ.2 –ध्यश्चै– । 3) Bḍ.1 नामाथो अ– । Bḍ.2 नानाते ह्य–; Vā. –त्वाद्– । 4) L. प्रवृत्ता–; Vā.– वृद्ध– । 5) Bḍ. –यस्तु ते; L. प्रवृत्ताश्च योगिनः ।

57 = Bḍ. I. 5.64; L. 70.176; Vā. 6.72$^b$, 73$^a$. 1) Bḍ. ततस्ततः । 2) Bḍ. ब्रह्मा; L. ततस् । 3) Bḍ. व्यरक्तेषु । 4) Vā. तदा– । 5) Bḍ. सृजन्; Vā. –कांश्च तान् ।

$58^a$ = Bḍ. I. 5.(65$^a$); L. 70.177$^a$; Vā. 6.73$^b$. 1) Bḍ. स्थानाभिमानिनो देवाः पुनर्ब्रह्मानुशासनम् ।

$58^b$ = L. 70.177$^b$. | $58^b$ = Bḍ. I. 5.65$^b$; Vā. 6.74$^a$. 1) Bḍ.1 अभूतसृष्टथवस्था ये; Bḍ.2 प्लुवस्था ये । 2) Bḍ. स्थानिन– । 3) Bḍ. –ध मे ।

$59^a$ = Bḍ. I. 5.66$^a$; L. 70.178$^a$; Vā. 6.74$^b$. 1) Bḍ. Vā. ऽग्निः पृथिवी वायुर– । 2) Bḍ.1 –क्षो । 3) Bḍ.2 तथा दिवम्; Vā. दिशस्तथा ।

$59^b$ = L. 70.178$^b$. | $59^b$ = Bḍ. I. 5.66$^b$; Vā. 6.75$^a$. 1) Bḍ. –र्गो । 2) Vā. –शः । 3) Bḍ. –द्राश्च । 4) Bḍ. नद्यश्चैव ।

60 = Bḍ. I. 5.67; L. 70.179; Vā. 6.75$^b$, 76$^a$. 1) L. –नो वल्लीनां । 2) Bḍ.1 लताः । 3) Bḍ. L. Vā. –र्ताः । 4) Bḍ. Vā. –हाः ।

61 = Bḍ. I. 5.68; L. 70.180; Vā. 6.76$^{bc}$. 1) Bḍ. Vā. –सांश्च । 2) Bḍ.1 स्थाने स्रोतःस्वभीमानाः; Bḍ.2 स्थाने स्रोतस्य सीमाना ।

| स्थानात्मनः स सृष्ट्वा तु ततोऽन्यान् स तदासृजत् ।
| देवांश्चैव पितॄंश्चैव यैरिमा वर्धिताः प्रजाः[1]) ॥ $61_1$ ॥

मरीचिभृग्वङ्गिरसः[1]) पुलस्त्यं[2]) पुलहं[3]) क्रतुम्[4]) ।

Cp. Ch. 6. Śl. $661^b$–$664^a$

दक्षमत्रिं[5]) वसिष्ठं च[6]) सोऽसृजन् नव मानसान्[7]) ॥ 62 ॥
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
तेषां ब्रह्मा[1]त्मकानां वै[2]) सर्वेषां ब्रह्मवादिनाम्[3]) ॥ 63 ॥
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् ।
संकल्पं चैव धर्मं च, पूर्वेषामपि पूर्वजम्[1]) ॥ 64 ॥

Cp. Ch. 6. Śl. 821–828

सोऽसृजद्व्य[1]वसायं[2]) तु, धर्मं[3]) भूतसुखावहम्[4]) ।
संकल्पं[5]) चैव संकल्पात्[6]) सर्वलोकपितामहः[7]) ॥ 65 ॥
प्राणाद् ब्रह्मा[1])ऽसृजद् दक्षं[2]), चक्षुर्भ्यां च मरीचिनम् ।
भृगुस्तु[3]) हृदयाज्जज्ञे, ऋषिः सलिलजन्मनः[4]) ॥ 66 ॥
शिरसोऽङ्गिरसं[1]) चैव श्रोत्रादत्रिं तथासृजत्[2]) ।
पुलस्त्यं च[3]) तथोदानाद् व्यानाच्च[4]) पुलहं पुनः[5]) ॥ 67 ॥
समानजो[1]) वसिष्ठश्च, अ[2]पानान्निर्ममे क्रतुम् ।
इत्येते ब्रह्मणः पुत्रा[3]) दिव्या[4]) वै द्वादश[5]) स्मृताः ॥ 68 ॥
धर्मादयः प्रथमजा विज्ञेया[1]) ब्रह्मणः सुताः ।
भृग्वादयस्तु ये[2]) सृष्टा नवैते[3]) ब्रह्मवादिनः ॥ 69 ॥
गृहमेधिपुराणास्ते[1]) धर्मस्तैः संप्रवर्तितः[2]) ।
द्वादशैते प्रसूयन्ते सह रुद्रेण वै[3]) प्रजाः[4]) ॥ 70 ॥
ऋभुः[1]) सनत्कुमारश्च द्वावेतावूर्ध्वरेतसौ ।
पूर्वोत्पन्नौ[2]) पुरा[3]) ह्येतौ[4]), सर्वेषामपि पूर्वजौ ॥ 71 ॥

---

| $61_1$ = Bḍ. I. 5.69; L. 70.($181^a$) = b. 1) L. देवान् ऋषींश्च महतो गदतस्तान्निबोधत ।

62 = Bḍ. I. 5.70; L. 70.$181^b$, $182^a$; cfr. Kū. 7.34. 1) Bḍ. भृग्वङ्गिरा मरीचिश्च; L. –रसं । 2) Bḍ. –स्त्यः । 3) Bḍ. –हः । 4) Bḍ. –तुः । 5) Bḍ. –क्षोऽत्रिश्च । 6) Bḍ. –ष्ठश्च । 7) L. मानसाश्च ।

63 = Bḍ. I. 5.71; L. 70.$182^b$, $183^a$. 1) Bḍ. ब्रह्मा यथा– । 2) Bḍ. तु । 3) Bḍ. –योगिनाम् ।

64 = Bḍ. I. 5.72; L. 70.($184^a$). 1) Bḍ. सर्वेषामेव पर्वतौ; L. ततोऽसृजच्च संकल्पं धर्मं चैव सुखावहम् ।

65 = Bḍ. I. 5.73; L. 70.$184^b$, $185^a$. 1) Bḍ.1 –द्व्य– । 2) L. –यात् । 3) Bḍ. ब्रह्मा । 4) Bḍ. भूतं सुखात्मकम् ; L. देवो महेश्वरः, cfr. L. 70.$184^a$. 5) Bḍ. –ल्पाच्च । 6) Bḍ. –ल्पो । 7) Bḍ.1 जज्ञे सोऽव्यक्तयोनिनः; Bḍ.2 जज्ञेऽसौ व्यक्तयोनिनः ।

66 = Bḍ. I. 5.74; L. 70.186. 1) Bḍ. दक्षोऽ । 2) Bḍ. वाचं । 3) Bḍ. –श्च । 4) Bḍ. –योगिनः ।

67 = Bḍ. I. 5.75; L. 70.187. 1) Bḍ. –सश्चाङ्गिराश्; L. –रसश् । 2) Bḍ. –दत्रिस्तथैव च । 3) Bḍ. –स्त्यश्च । 4) Bḍ. –नाच्च । 5) Bḍ. –हस्तथा ।

68 = Bḍ. I. 5.76; L. 70.188; cfr. Kū. 7.39. 1) Bḍ.1 –नतो । 2) Bḍ.1 ब्र– । 3) Bḍ.1 श्रेष्ठाः 4) Bḍ.1 पुत्राः; Bḍ.2 पौत्रा । 5) L. एकादश ।

69 = Bḍ. I. 5.77; L. 70.189. 1) L. –ज्ञाः सर्वे ते । 2) L. ते । 3) Bḍ. न च ते ।

70 = Bḍ. I. 5.78; L. 70.$190^a$($^b$). 1) Bḍ.2 L. –धिनः पुराणास्ते । 2) Bḍ. विज्ञेया ब्रह्मणः सुताः । 3) Bḍ.1 च । 4) Bḍ. द्विजाः; L. तेषां द्वादश ते वंशा दिव्या देवगुणान्विताः ।

71 = Bḍ. I. 5.79; L. 70.$170^b$, $171^a$; $191^b$, $192^a$. 1) Bḍ. क्रतुः । 2) Bḍ. –पन्नौ । 3) L. परं । 4) Bḍ. चैतौ; L. तेभ्यः ।

Cp. Ch. 6. śl. 82⁹–82¹²

व्यतीते[1]) प्रथमे[2]) कल्पे पुराणौ लोकसाधकौ[3]) ।
विराजेतामुभौ[4]) लोके तेजः संक्षिप्य धिष्ठितौ[5]) ॥ 72 ॥
तावुभौ योगधर्मा[1]णावारोप्यात्मानमात्मनि[2]) ।
प्रजा[3]धर्मं च कामं च वर्तयेते महौजसौ[4]) ॥ 73 ॥
यथोत्पन्नस्तथैवेह[1]) कुमार इति चो[2]च्यते ।
तस्मात्[3]) सनत्कुमारेति नाम तस्य[4]) प्रतिष्ठितम्[5]) ॥ 74 ॥
तेषां द्वादश ते वंशा दिव्या देवगणान्विताः ।
क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः ॥ $74_1$ ॥
प्राणजांस्तु स दृष्ट्वा वै ब्रह्मा द्वादश सात्त्विकान्[1]) ।
ततोऽसुरान् पितॄन् देवान् मनुष्यांश्चासृजत् प्रभुः ॥ $74_2$ ॥
मुखाद्देवानजनयत् पितॄंश्चैवाथ वक्षसः ।
प्रजननान्मनुष्यान् वै जघनान्निर्ममेऽसुरान् ॥ $74_3$ ॥
नक्तं सृजन् पुनर्ब्रह्मा ज्योत्स्नाया मानुषात्मनः ।
संध्यायाश्च[1]) पितॄंश्चैव देवदेवः ससर्ज ह ॥ $74_4$ ॥
मुख्यामुख्यान् सृजन् देवानसुरांश्च ततः पुनः ।
मनसश्च मनुष्यांश्च[1]) पितृवन्महतः पितॄन् ॥ $74_5$ ॥

Ch. 6. śl. 53b–56a

विद्युतोऽशनिमेघांश्च लोहितेन्द्रधनूंषि च ।
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥ $74_6$ ॥
उच्चावचानि भूतानि महसस्तस्य जज्ञिरे ।
ब्रह्मणस्तु प्रजासर्गं (सृजतो हि प्रजापतेः ॥ $74_7$ ॥
सृष्ट्वा चतुष्टयं पूर्वं) देवर्षिपितृमानवम् ।
पुनः सृजति भूतानि चराणि स्थावराणि च ॥ $74_8$ ॥

Ch. 6. śl. 56b–59a

यक्षान् पिशाचान् गन्धर्वान् सर्वशोऽप्सरसस्तथा ।
नरकिन्नररक्षांसि वयः पशुमृगोरगान्, ॥ $74_9$ ॥
अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ।
तेषां ये[1]) यानि कर्माणि प्राक् सृष्टानि स्वयंभुवा ॥ $74_{10}$ ॥
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ।
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मौ कृताकृते ॥ $74_{11}$ ॥

---

72 = Bḍ. I. 5.80; L. 70.171ᵇ, 172ᵃ; 192ᵇ, 193ᵃ. 1) Bḍ. –तौ । 2) Bḍ. सप्तमे; L. त्वष्टमे । 3) L. –साक्षिणौ । 4) Bḍ. –जेतेऽत्र वै; L. 70.172 तौ वाराहे तु भूर् । 5) Bḍ.–जसाक्षिप्य चात्मनः ।

73 = Bḍ. I. 5.81; L. 70.172ᵇ, 173ᵃ; 193ᵇ, 194ᵃ. 1) L. 70.172 मोक्षकर्मा–; L. 70.193 –गकर्मा–। 2) Bḍ. –ना । 3) L. –जां । 4) L त्यक्त्वा वैराग्यमास्थितौ ।

74 = Bḍ. I. 5.82; L. 70.173ᵇ, 174ᵃ; 194ᵇ, 195ᵃ. 1) L. –नः स एवेह । 2) L. –रः स इहो–। 3) Bḍ. ततः । 4) L. –मस्येह । 5) L. –कीर्तितम् ।

$74_1$ = Bḍ. I. 5.83; L. 70.191ᵃ = b.
$74_2$ = Bḍ. I. 5.84. 1) Bḍ.2 साधकान् ।
$74_3$ = Bḍ. I. 5.85.
$74_4$ = Bḍ. I. 5.86. 1) Bḍ.1 सुधायाश्च ।
$74_5$ = Bḍ. I. 5.87. 1) Bḍ.2 मनश्च मनुष्यांश्चापि ।
$74_6$ = Bḍ. I. 5.88.
$74_7$ = Bḍ. I. 5.89ᵃᵇᴵ.
$74_8$ = Bḍ. I. 5.89ᵇᴵᴵ, 90ᵃ.
$74_9$ = Bḍ. I. 5.90ᵇ, 91ᵃ.
$74_{10}$ = Bḍ. I. 5.71ᵇ, 92ᵃ. 1) T. ते ।
$74_{11}$ = Bḍ. I. 5.92ᵇ, 93ᵃ.

Ch. 6. 62b–65b

तेषामेव पृथक् सूतमविभक्तं त्रयं विदुः ।
एवदेवं च नैवं च न चोभे नानुभे तथा ॥ $74_{12}$ ॥
कर्म स्वविषयं प्राहुः सत्त्वस्थाः समदर्शिनः ।
नामात्मपञ्चभूतानां कृतानां च प्रपञ्चनाम् ॥ $74_{13}$ ॥
वेद[1]शब्देन पञ्चैते निर्ममे स महेश्वरः ।
आर्षाणि चैव नामानि याश्च देवेषु सृष्टयः ।
शर्वर्यन्ते[2]) प्रसूयन्वे, पुनस्तेभ्योऽदधात् प्रभुः ॥ $74_{14}$ ॥

Cp. Ch. 6. śl. 8213–8222

इत्येषः[1]) कारणाद्भूतो लोकसर्गः स्वयंभुवः ।
महदाद्या विशेषान्ता विकाराः प्राकृताः स्वयम् ॥ $74_{15}$ ॥
चन्द्रसूर्यप्रभो लोको ग्रहनक्षत्रमण्डितः ।
नदीभिश्च समुद्रैश्च पर्वतैश्च सहस्रशः ॥ $74_{16}$ ॥
पुरैश्च विविधै रम्यैः स्फीतैर्जनपदैस्तथा ।
अस्मिन्ब्रह्मवनेऽव्यक्तो ब्रह्मा चरति[1]) सर्ववित् ॥ $74_{17}$ ॥
अव्यक्तबीजप्रभवस्तस्यैवानुग्रहे स्थितः ।
बुद्धि[1]स्कन्धमयश्चैव इन्द्रियान्तरकोटरः[2]) ॥ $74_{18}$ ॥
महाभूतप्रशाख[1]श्च विशेषैः पत्रवांस्तु सः ।
धर्माधर्मसुपुष्पस्तु सुखदुःखफलोदयः ॥ $74_{19}$ ॥
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतद् ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य तत् ॥ $74_{20}$ ॥
अव्यक्तं कारणं यत्, तत्[1]) नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं चैव यमा[2]हुस्तत्त्वचिन्तकाः ॥ $74_{21}$ ॥
इत्येषोऽनुग्रहः सर्गो ब्रह्मनैमित्तिकः स्मृतः ।
अबुद्धिपूर्वकाः सर्गा ब्रह्मणः प्राकृतास्त्रयः ॥ $74_{22}$ ॥
मुख्यादयस्तु षट् सर्गा वैकृता बुद्धिपूर्वकाः, ।
वैकल्पात् संप्रवर्तन्ते ब्रह्मणस्तेऽभिमन्यवः ॥ $74_{23}$ ॥
इत्येते प्राकृताश्चैव वैकृताश्च नव स्मृताः ।
सर्गाः परस्परोत्पन्नाः, कारणं तु बुधैः स्मृतम् ॥ $74_{24}$ ॥

द्यौः प्रधानं[1]) यस्य वेदा वदन्ति,
वियन्नाभि चन्द्रसूर्यौ च नेत्रे, ।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च,
सो[3]ऽचिन्त्यात्मा सर्वभूतप्रणेता ॥ $74_{25}$ ॥

---

$74_{12}$ = Bd. I. 5.93b, 94a.
$74_{13}$ = Bd. I. 5.94b, 95a.
$74_{14}$ = Bd. I. 5.95b, 96. 1) Bd.1 दिव–; Bd.2 देव–। 2) Bd.1 –र्यां न ।
$74_{15}$ = Bd. I. 5.97. 1) Bd.1 इत्येवं ।
$74_{16}$ = Bd. I. 5.98.
$74_{17}$ = Bd. I. 5.99. 1) Bd.2 चरित–।
$74_{18}$ = Bd. I. 5.100. 1) Bd.2 –द्धिः । 2) Bd.2 –कोष्ठकः ।
$74_{19}$ = Bd. I. 5.101. 1) Bd.1 –प्रशाक–।
$74_{20}$ = Bd. I. 5.102.
$74_{21}$ = Bd. I. 5.103. 1) Bd.1 यत्र । 2) Bd.1 –तिं मायां चैवा–।
$74_{22}$ = Bd. I. 5.104.
$74_{23}$ = Bd. I. 5.105.
$74_{24}$ = Bd. I. 5.106.
$74_{25}$ = Bd. I. 5.107. 1) Bd.1 मूर्धानं वै । 2) Bd.1 –मिश्र–। 3) Bd.2 स–।

Cp. Ch. 6. Śl. 8228–8224

वक्त्राद्यस्य ब्राह्मणाः संप्रसूता
यद्वक्षस्तः[1]) क्षत्रियाः पूर्वभागे, ।
वैश्याश्चोर्वोर्यस्य[2]) पद्भ्यां च शूद्राः,
सर्वे वर्णा गात्रतः संप्रसूताः ॥ $74_{26}$ ॥
नारायणः[1]) परो[2]ऽव्यक्तादण्डमव्यक्तसंभवम्[3]) ।
अण्डाज्जज्ञे पुनर्ब्र[4]ह्मा, लोकास्तेन कृताः स्वयम् ॥ $74_{27}$ ॥

[ ब्रह्माण्डपु. I. 5.110–114[a] = 4. Chap. Śl. 33–64

एष वः कथितः पादः समासान्न तु विस्तरात् ।
अनेनाद्येन पादेन पुराणं परि[1]कीर्तितम् ॥ $74_{28}$ ॥

---

$74_{26}$ = Bḍ. I. 5.108; Vā. 6.77. 1) Bḍ. –वक्षसश्चैव; Vā. –तास्तद्वक्षस्तः । 2) Bḍ. –श्या ऊरुभ्यां यस्य ।
$74_{27}$ = Bḍ. I. 5.109; Vā. 6.78. 1) Bḍ. –णात् । 2) Bḍ.2 –णपरे– । 3) Bḍ. –ञ्चितम् । 4) Bḍ. अण्डजस्तु स्वयं ब्र– ।
$74_{28}$ = Bḍ. I. 5.141[b] = b; Vā. 6.79. 1) Vā. संप्र– ।

## चतुर्थोऽध्यायः

( Bḍ. I. 5.110–141[a]; 6.1–77; Vā. 7.1–80 ).

इत्येष प्रथमः पादः प्रक्रियार्थः प्रकीर्तितः[1]) ।
श्रुत्वा तु संहृष्टमनाः *कापेयः संशयायति*[2]) ॥ 1 ॥

*आराध्य*[1]) सूतं वचसा[2]) पप्रच्छाथोत्तरां[3]) कथाम् ।
*अतः*[4]) प्रभृति कल्पज्ञ[5]) प्रतिसंधिं[6]) प्रचक्ष्व नः[7]) ॥ 2 ॥

समतीतस्य कल्पस्य वर्तमानस्य चानयोः[1]) ।
कल्पयोरन्तरं यच्च[2]) प्रतिसंधिश्च य[3]स्तयोः ।
एतद्वेदितुमिच्छाम[4]) *यथावत्*[5]) कुशलो ह्यसि ॥ 3 ॥

[ कापेयेनैवमुक्तस्तु सूतः प्रवदतां वरः ।
त्रैलोक्यस्योद्भवं कृत्स्नमाख्यातुमुपचक्रमे, ] ॥ 4 ॥

सूत उवाच :

अत्र वो[1]) *वर्णयिष्यामि याथातथ्येन सुव्रताः ।*
*कल्पं भूतं भविष्यं च प्रतिसन्धिश्च यस्तयोः*[2]) ॥ 5 ॥

मन्वन्तराणि कल्पेषु येषु[1]) यानि च सुव्रताः ।
यश्चायं वर्तते कल्पो वाराहः सांप्रतः शुभः ॥ 6 ॥

अस्मात्कल्पात्तु[1]) यः कल्पः पूर्वो[2])ऽतीतः सनातनः ।
तस्य चास्य च कल्पस्य मध्ये[3])ऽवस्थां निबोधत ॥ 7 ॥

प्रत्याहृते[1]) पूर्वकल्पे प्रतिसंधिं *विनानघाः*[2]) ।
अन्यः प्रवर्तते कल्पो जनाल्लोकात्पुनः[3]) पुनः ॥ 8 ॥

व्युच्छिन्न[1]प्रतिसंधे[2]स्तु कल्पात्कल्पः परस्परम् ।
व्युच्छिद्यन्ते *प्रजाः*[3]) सर्वाः कल्पान्ते सर्वशस्तदा ॥ 9 ॥

---

1 = Bḍ. I. 6.1; Vā. 7.1. 1) Bḍ. इत्येवं प्रथमं पादं प्रकृत्यर्थं प्रकीर्तितम् । 2) Vā. काश्यपेयः सनातनः ।

2 = Bḍ. I. 6.2; Vā. 7.2. 1) Vā. संबोध्य; V. संरोध्य । 2) Bḍ. वचसा सुतं । 3) Bḍ.1 तस्यार्थं स्वपरां; Bḍ.2 यथस्याथोंत्तरां । 4) Bḍ. अथ । 5) Bḍ. Vā. V. –ज्ञः । 6) Bḍ.1 –न्धिः । 7) Bḍ. –चक्षते ।

3 = Bḍ. I. 6.3; Vā. 7.3. 1) Vā. चोभयोः । 2) Bḍ.1 यत्र । 3) Vā. –न्धियंत– । 4) Bḍ. –मि । 5) Vā. अ(मोक्ष)त्यन्त– ।

4 = Bḍ. I. 6.4.

5 = Bḍ. I. 6.5; Vā. 7.(4). 1) Bḍ.1 वै । 2) Vā. वोऽहं प्रवक्ष्यामि प्रतिसंधिश्च यस्तयोः । समतीतस्य कल्पस्य वर्तमानस्य चोभयोः ।

6 = Bḍ. I. 6.6; Vā. 7.5. 1) Bḍ. यानि ।

7 = Bḍ. I. 6.7; Vā. 7.6. 1) Vā. –पाच्च । 2) Bḍ. पूर्वः कल्पो । 3) Bḍ.1 Vā. T. मध्या– ।

8 = Bḍ. I. 6.8; Vā. 7.7. 1) Bḍ. –गते; Vā. V. –हृते । 2) Vā. –न्धि च तत्र वै । 3) Bḍ. –नलोकादयः ।

9 = Bḍ. I. 6.9; Vā. 7.8. 1) Bḍ.2 –न्नः; Vā. –न्नात् 2) Bḍ. Vā. V. –न्धि– । 3) Vā. क्रियाः ।

तस्मात्कल्पात्तु कल्पस्य प्रतिसंधिर्न विद्यते[1]) ।
मन्वन्तरे[2]) युगाख्यानामव्यु[3]च्छिन्नास्तु[4]) संधयः, ॥ 10 ॥

परस्पराः[1]) प्रवर्तन्ते मन्वन्तरयुगैः सह ।
उक्ता ये प्रक्रियार्थेन पूर्वकल्पाः समासतः ॥ 11 ॥

तेषां परार्धकल्पानां पूर्वो ह्यस्मात्तु[1]) यः परः ।
आसीत्कल्पो व्यतीतो[2]) वै परार्धं न परस्तु सः[3]) ॥ 12 ॥

कल्पास्त्वन्ये भविष्या ये ह्य[1]परार्ध[2]गुणीकृताः ।
प्रथमः सांप्रतस्तेषां कल्पोऽयं[3]) वर्तते द्विजाः ॥ 13 ॥

अ[1]स्मिन्पूर्वे[2]) परार्धे तु द्वितीयः[3]) पर उच्यते ।
एतावान्[4]) स्थितिकालस्तु[5]), प्रत्याहारस्ततः स्मृतः ॥ 14 ॥

अस्मात्कल्पात्तु यः[1]) पूर्वं कल्पोऽतीतः सना[2]तनः ।
चतुर्युगसहस्रान्ते सह[3]) मन्वन्तरैः पुरा ॥ 15 ॥

क्षीणे कल्पे तदा[1]) तस्मिन् दाहकाले ह्यु[2]पस्थिते ।
तस्मिन् कल्पे[3]) तदा देवा आसन् वैमानिकास्तु ये ॥ 16 ॥

नक्षत्रग्रहताराश्च[1]) चन्द्रसूर्यादय[2]श्च ये[3]) ।
अष्टाविंशतिरेवैताः कोट्यस्तु सुकृतात्मनाम् ॥ 17 ॥

मन्वन्तरे य[1]थैकस्मिंश्चतुर्दशसु वै तथा ।
त्रीणि कोटिशतान्यासन् कोट्यो द्विनवतिस्तथा ॥ 18 ॥

अष्टाधिका सप्ततिश्च[1]) सहस्राणां पुरा स्मृताः[2]) ।
[ वैमानिकानां देवानां कल्पेऽतीते तु येऽभवन् ] ॥ 19 ॥

एकैकस्मिंस्तु कल्पे वै देवा वैमानिकाः स्मृताः ।
अथ मन्वन्तरेष्वासंश्चतुर्दशसु वै[1]) दिवि ॥ 20 ॥

देवाश्च पितरश्चैव ऋषयो[1]) मनव[2]स्तथा ।
तेषामनुचरा ये च[3]) मनुपुत्रा[4]स्तथैव च ॥ 21 ॥

वर्णाश्रमिभि[1]रीड्याश्च[2]) तस्मिन् काले तु ये[3]) सुराः ।
[ मन्वन्तरेषु ये ह्यासन्देवलोके दिवौकसः ] ॥ 22 ॥

---

10 = Bḍ. I. 6.10; Vā. 7.9. 1) Vā. –र्निगद्यते । 2) Vā. –र– । 3) Bḍ.1 –वि– । 4) Vā. –न्नाश्च ।
11 = Bḍ. I. 6.11; Vā. 7.10. 1) Bḍ. –राद ।
12 = Bḍ. I. 6.12; Vā. 7.11. 1) Bḍ.1 यस्मात्तु । 2) Bḍ. –ल्पे व्यतीते । 3) Bḍ. –र्धात्परमस्तु यः ।
13 = Bḍ. I. 6.13; Vā. 7.12. 1) Vā. अन्या भविष्या ये कल्पा अ– । 2) Bḍ.2 –र्धा–; Vā. –र्धाद् । 3) Bḍ. यो ।
14 = Bḍ. I. 6.14; Vā. 7.13. 1) Vā. य– । 2) Vā. –र्वः । 3) Vā. –ये । 4) Bḍ. एष । 5) Bḍ. संस्थितकालस्तु; Vā. T. स्थितिकालस्य; V. –लश्च ।
15 = Bḍ. I. 6.15; Vā. 7.14. 1) Bḍ.1 ततः । 2) Bḍ. पुरा– । 3) Vā. अहो ।
16 = Bḍ. I. 6.16; Vā. 7.15. 1) Bḍ. ततस् । 2) Bḍ. –ल उ– । 3) Bḍ. काले ।
17 = Bḍ. I. 6.17; Vā. 7.16. 1) Vā. –रास्तु । 2) Vā. –यंग्रहा– । 3) Bḍ. –स्तु ते ।
18 = Bḍ. I. 6.18; Vā. 7.17. 1) Vā. त– ।
19 = Bḍ. I. 6.19$^{a}$ = a; Vā. 7.18. 1) Bḍ.1 अथाधिका सप्ततिश्च; Vā. अष्टाधिकाः सप्तशताः । 2) Vā. स्मृताः पुरा ।
20 = Bḍ. I. 6.19$^{b}$, 20$^{a}$; Vā. 7.19. 1) Bḍ. खे ।
21 = Bḍ. I. 6.20$^{b}$, 21$^{a}$; Vā. 7.20. 1) Vā. मुनयो । 2) Bḍ. –योऽमृतपा– । 3) Bḍ. –राश्चैव । 4) Bḍ. पत्न्यः पुत्रा– ।
22 = Bḍ. I. 6.21$^{b}$ = a; Vā. 7.21. 1) Bḍ. Vā. V. भमि– । 2) Bḍ. –मातिरिक्ताश्च । 3) Bḍ.1 खे ।

*तैस्तैः*[1]) *सायुज्यगैः*[2]) सार्धं प्राप्ते *संकालने*[3]) *तदा*[4]) ।
तुल्यनिष्ठास्तु[5]) ते सर्वे प्राप्ते ह्याभूतसंप्लवे ॥ 23 ॥
ततस्तेऽवश्यभावित्वाद् बुद्‌ध्वा[1]) पर्यायमात्मनः ।
त्रैलोक्यवासिनो देवा इहस्थाना[2]भिमानिनः ॥ 24 ॥
स्थितिकाले तदा पूर्णे ह्या[1]सन्ने पश्चिमेऽन्तरे[2]) ।
कल्पावसानिका देवास्तस्मिन् प्राप्ते ह्युपप्लवे ॥ 25 ॥
तेनौत्सुक्य[1]विषादेन त्यक्त्वा[2]) स्थानानि भावतः[3]) ।
महर्लोकाय संविग्नास्ततस्ते दधिरे *मनः*[4]) ॥ 26 ॥
ते युक्ता[1]) उपपद्यन्ते मह*सि*[2]*स्थैः*[3]) शरीरकैः[4]) ।
विशुद्धिबहुलाः सर्वे मानसीं सिद्धिमास्थिताः ॥ 27 ॥
तैः कल्पवासिभिः सार्धं महानासादितस्*तदा*[1]) ।
ब्राह्मणैः क्षत्रियैर्वैश्यैस्तद्भक्तै[2]श्चापरैर्जनैः ॥ 28 ॥
*ग*[1]त्वा तु ते महर्लोकं देवसंघाश्चतुर्दश ।
ततस्ते जनलोकाय सोद्वेगा दधिरे *मनः*[2]) ॥ 29 ॥
विशुद्धिबहुलाः सर्वे मानसीं सिद्धिमास्थिताः ।
तैः कल्पवासिभिः सार्धं *जन*[1]) आसादितस्तु *यैः*[2]) ॥ 30 ॥
[ दशकृत्व इवावृत्य तस्माद्गच्छन्ति स्वस्तपः ] ।
तत्र कल्पान् दश स्थित्वा सत्यं गच्छन्ति वै[1]) पुनः ॥ 31 ॥
एतेन क्रमयोगेन *ययुस्ते* कल्पवासिनः[1]) ।
एवं देवयुगानां तु सहस्राणि परस्परम्[2]) ॥ 32 ॥
*गत्वा* ते[1]) ब्रह्मलोकं वै अपरावर्तिनीं गतिम् ।
आधिपत्यं विना ते[2]) वै ऐश्वर्येण तु तत्समाः, ॥ 33 ॥
भवन्ति ब्रह्मणस्तु[1]ल्या रूपेण विषयेण च ।
तत्र ते ह्यवतिष्ठन्ते प्रीतियुक्ताश्च[2]) *संयमान्*[3]) ॥ 34 ॥
आनन्दं ब्रह्मणः प्राप्य मुच्यन्ते ब्रह्मणा सह ।
अवश्य[1]भाविनार्थेन प्राकृतेनैव ते[2]) स्वयम् ॥ 35 ॥
नानात्वेनाभिसंबद्धा[1]स्तदा तत्कालभाविताः[2]) ।

---

23 = Bḍ. I. 6.22; Vā. 7.22. 1) Vā. ते तैः । 2) Vā. संयोजकैस् । 3) Bḍ. वस्तु–( Bḍ.2 अस्त ) –मये । 4) Vā. तथा । 5) Bḍ. –ष्ठामवन् ।

24 = Bḍ. I. 6.23; Vā. 7.23. 1) Bḍ. –वुध्याः । 2) Bḍ. इह तान– ।

25 = Bḍ. I. 6.24; Vā. 7.24. 1) Bḍ. –र्णे आ– । 2) Bḍ. –मोत्तरे ।

26 = Bḍ. I. 6.25; Vā. 7.25. 1) Bḍ. ततोत्सुका– । 2) Bḍ. –क्त– । 3) Bḍ. भागशः । 4) Vā. मतिम् ।

27 = Bḍ. I. 6.26; Vā. 7.26. 1) Bḍ. –क्तान् । 2) Bḍ.1 –र्तीं; Bḍ.2 –तां । 3) Bḍ. च । 4) Bḍ.1–रिकैः; Bḍ.2 –रकै ।

28 = Bḍ. I. 6.27; Vā. 7.27. 1) Vā. तु यैः । 2) Vā. –भक्तै– ।

29 = Bḍ. I. 6.28; Vā. 7.28. 1) Vā. म– । 2) Vā. मतिम् ।

30 = Bḍ. I. 6.30; Vā. 7.29. 1) Vā. महान् । 2) Bḍ.1 वैः; Bḍ.2 ये ।

31 = Bḍ. I. 5.110$^{a}$ = a; 6.31$^{a}$ = a; Vā. 7.30. 1) Bḍ. I. 5.110 ते ।

32 = Bḍ. I. 6.29; Vā. 7.31. 1) Vā. यान्ति कल्पनिवासिनः । 2) Vā. –रात् ।

33 = Bḍ. I. 5.110$^{b}$, 111$^{a}$; 6.31$^{b}$, 32$^{a}$; Vā. 7.32. 1) Bḍ. I. 5.110 ते लोका; Vā. गतानि । 2) Bḍ. I. 6.32 विमाने ।

34 = Bḍ. I. 5.111$^{b}$. 112$^{a}$; 6.32$^{b}$, 33$^{a}$; Vā. 7.33. 1) Bḍ. –णा तु ; Bḍ.2 I.5.111 –णस्तु– । 2) Bḍ.2 I.5.112 तु । 3) Bḍ.1 I. 5.112 स्वसंयुताः ; Vā. प्रसङ्गमात् ।

35 = Bḍ. I.5.112$^{b}$ = b; 6.33$^{b}$, 34$^{a}$; Vā. 7.34. 1) Vā. –श्यं । 2) Bḍ.1 I.5.112 –तं तनुते; Bḍ.2 तं तेन ते ।

36 = Bḍ. I. 5.113; 6.34$^{b}$, 35$^{a}$; Vā. 7.35. 1) Bḍ.1 I.5.113 –त्वया– ; Bḍ. I. 6.34 नानात्वेनाभिः सम्बद्धा– । 2) Vā.

स्वपतो बुद्धिपूर्वं हि[3]) बोधो[4]) भवति वै यथा[5]), ॥ 36 ॥
तत्कालभावि तेषां तु[1]) तथा ज्ञानं[2]) प्रवर्तते ।
प्रत्याहारैस्तु[3]) भेदानां येषां[4]) भिन्नानि[5]) शुष्मिणाम्[6]) ॥ 37 ॥
तैः[1]) सार्धं प्रतिसृज्यन्ते[2]) का[3]र्याणि करणानि च ।
नानात्वदर्शिनां[4]) तेषां ब्रह्मलोकनिवासिनाम्, ॥ 38 ॥
विनिवृत्ताधि[1]काराणां स्वेन धर्मेण तिष्ठताम् ।
ते तुल्यलक्षणाः सिद्धाः[2]) शुद्धा[3]त्मानो निरञ्जनाः ॥ 39 ॥
प्राकृते[1]) करणोपेताः[2]) स्वात्मन्येव व्यवस्थिताः ।
प्राख्यापयित्वा चा[3]त्मानं प्रकृतिस्तेषु[4]) तत्त्वतः[5]) ॥ 40 ॥
पुरुषान्यबहुत्वेन[1]) प्रतीता न[2]) प्रवर्तते ।
प्रवर्तिते[3]) पुनः सर्गे[4]) तेषां साकारणात्मनाम्[5]) ॥ 41 ॥
संयोगे[1]) प्रकृति[2]र्ज्ञेया[3]) यु[4]क्तानां तत्त्वदर्शिनाम् ।
तत्रा[5]पवर्गिणां[6]) तेषाम[7]पुनर्मार्ग[8]गामिनाम् ॥ 42 ॥
अ[1]भावः पुनरुत्पत्तौ[2]) शान्तानामर्चिषामिव ।
ततस्तेषु गतेषूर्ध्वं त्रैलोक्यात् सु[3]महा[4]त्मसु ॥ 43 ॥
एतैः[1]) सार्धं म[2]हर्लोकस्त[3]दा नासादित[4]स्तु वै[5]) ।
तच्छिष्टा[6]स्त्वेह[7]) तिष्ठन्ति[8]) कल्पदाह उपस्थिते[9]) ॥ 44 ॥

---

–विनः । 3) Bḍ. I. 6.35 तु । 4) Vā. यथा । 5) Bḍ.1 I. 5.113 यदा ; Bḍ. I. 6.35 तदा ; Vā. –ति जाग्रतः ।

37 = Bḍ. I. 5.114; 6.35b,36a; Vā. 7.36. 1) Bḍ. I. 5.114 तभाविते तेषां; Bḍ.1 I. 6.35 तथा तु भाविते सेवां ( Bḍ.2 तेषां ) । 2) Bḍ.1 I. 6.35 तथानन्दः । 3) Vā. –रे तु । 4) Bḍ.1 I. 5.114 तेषां; Bḍ.2 –दामेषां । 5) Bḍ. I. 5.114 हि न तु; Vā. T. भिन्नाभि– । 6) Vā. T. सूक्ष्मणाम् ; V. शुष्मणाम् ।

38 = Bḍ. I. 5.115; 6.36b,37a; Vā. 7.37. 1) Bḍ.1 I. 5.115 तैश्च; Bḍ.2 एतैः । 2) Bḍ. I. 5.115 प्रवर्तन्ते; Bḍ. I. 6.36 वर्धते तेषां । 3) Bḍ.1 I. 5.115 Vā. V. क्रा– । 4) Vā. –दर्शनात् ।

39 = Bḍ. I. 5.116; 6 37b,38a; Vā. 7.38. 1) Bḍ. I. 5.116 –त्ता ( त्त ) वि–; Vā. विनष्टस्वाधि– । 2) Bḍ.1 I. 5.116 तुल्यलक्षण–सिद्धास्तु । 3) Bḍ. I. 5.116 शुभा– ।

40 = Bḍ. I. 5.117, 6.38b,39a; Vā. 7.39. 1) Vā. प्रकृतौ । 2) Vā. कारणातीताः । 3) Vā. ह्या– । 4) Bḍ.1 –स्त्वेष । 5) Vā. सर्वशः ।

41 = Bḍ. I. 5.118, 6.39b,40a; Vā. 7.40. 1) Vā. पाम्यवहुत्वेन ( त्वे ) । 2) Bḍ. I. 6.39 तत् । 3) Bḍ. I. 5.118 –वर्तते । 4) Bḍ.1 I. 5.118 –र्गस् । 5) Vā. पां वा कारणं पुनः ।

42 = Bḍ. I. 5.119, 6.40b,41a; Vā. 7.41. 1) Bḍ.1 I. 5.119 –गः । 2) Vā. प्राकृते । 3) Vā. तेषां । 4) Bḍ. I. 6.40 मु– । 5) Bḍ.1 –त्रो–; Vā. अत्रा– । 6) Bḍ.1 I. 5.119 –र्गिणी । 7) Bḍ. I. 6.41 –षां न । 8) Bḍ. I. 5.119 –मार्ग ।

43 = Bḍ. I. 5.120, 6.41b,42a; Vā. 7.42. 1) Bḍ.1 I. 6.41 भा– । 2) Bḍ. I. 6.41 उत्पन्नः; Bḍ. I. 5.120 अभावतः पुनः सत्यं । 3) Bḍ. I. 5.120 –क्यात्तु; Bḍ. I. 6.42 –क्येषु । 4) Bḍ.1 I. 5.120 सुदा– ।

44 = Bḍ. I. 5.121, 6.42b,43a; Vā. 7.43. 1) Bḍ.1 I. 5.121 तै; Bḍ.2 Vā. तैः । 2) Bḍ. I. 5.121 येमं–; Vā. ये म । 3) Vā. –कास । 4) Vā. –ता, V. –तो । 5) Vā. जनाः, V. –नः । 6) Bḍ. –च्छिष्या । 7) Bḍ. I. 5.121 येह; Bḍ.1 I. 6.44 वे; Bḍ.2 ये । 8) Bḍ. I. 6.43 भविष्यन्ति । 9) Vā. कल्पान्त वेद्युपासते ।

गन्धर्वाद्याः पिशाचान्ता[1]) मानुषा ब्राह्मणादयः ।
पशवः पक्षिणश्चैव स्थावराः स[2]सरीसृपाः ॥ 45 ॥

तिष्ठत्सु तेषु तत्कालं पृथिवीतलवासिषु ।
सहस्रं यत्तु रश्मीनां सूर्यस्येह विभासते[1]), ॥ 46 ॥

ते[1]) सप्तरश्मयो भूत्वा ह्येकैको जायते रविः ।
क्रमेणोत्तिष्ठ[2]मानास्ते त्रींल्लोकान् प्रदहन्त्युत ॥ 47 ॥

जङ्गमान्[1]) स्थावरांश्चै[2]व नदीः[3]) सर्वांश्च[4]) पर्वतान्[5]) ।
पूर्वं[6]) शुष्का[7]) ह्यनावृष्ट्या सूर्यै[8]स्तैश्च[9]) प्रधूपिताः[10]) ॥ 48 ॥

तदा ते[1]) विवशाः सर्वे निर्दग्धाः सूर्यरश्मिभिः ।
जङ्गमाः स्थावराश्चैव[2]) धर्माधर्मात्मकास्तु[3]) वै ॥ 49 ॥

दग्धदेहास्तदा ते[1]) तु[2]) धूतपापा युगात्यये[3]) ।
*ख्यात्या*[4]) *तया*[5]) ह्य[6]निर्मुक्ताः शुभपापानु[7]बन्धया ॥ 50 ॥

ततस्ते ह्युपपद्यन्ते तुल्यरूपैर्ज[1]ने ज[2]नाः ।
[ विशुद्धिबहुलाः सर्वे मानसीं सिद्धिमास्थिताः ] ॥ 51 ॥

उषित्वा रजनीं तत्र[1]) ब्रह्मणोऽव्यक्तजन्मनः ।
पुनः सर्गे भवन्तीह ब्रह्मणो मानसाः[2]) प्रजाः[3]) ॥ 52 ॥

ततस्तेषूपपन्नेषु[1]) जनै त्रैलोक्यवासिषु ।
निर्दग्धेषु च लोकेषु तदा[2]) सूर्यैस्तु[3]) सप्तिभिः ॥ 53 ॥

वृष्ट्या क्षितौ प्लावितायां विजले[1]ऽर्णवेषु[2]) च ।
स[3]मुद्राश्चैव मेघाश्च आपः सर्वाश्च[4]) पार्थिवाः ॥ 54 ॥

व्रजन्त्येकार्णवत्वं हि[1]) सलिलाख्यास्तदाश्रिताः[2]) ।

---

45 = Bḍ. I. 5.122, 6.43b,44a; Vā. 7.44. 1) Bḍ. –शाचाश्च । 2) Bḍ. I. 6.44 –राश्च ।

46 = Bḍ. I. 5.123, 6.44b,45a; Vā. 7.45. 1) Bḍ. I. 5.123 विनश्यति; Bḍ. I. 6.45 स्वयमेव विभाव्यते ।

47 = Bḍ, I. 5.124, 6.45b,46a; Vā. 7.46. 1) Bḍ. I. 6.45 तत् । 2) Bḍ. I. 5.124 –ण शत– ।

48 = Bḍ. I. 5.125, 6.46b,47a; Vā. 7.47. 1) Bḍ. I. 6.46 –मा:; Vā. T. –मं । 2) Bḍ. I. 6.46 –राश्चै–; Vā. T. –रं चै– । 3) Bḍ. I. 6.46 नद्यः । 4) Bḍ.1 I. 6.46 –वें च; Bḍ.2 Vā. –वांश्च । 5) Bḍ.1 I. 6.46 –ताः । 6) Bḍ. I. 5.125, Bḍ.2 I. 6.47 शुष्के; Bḍ.1 –ष्काः । 7) Bḍ. पूर्वम् । 8) Bḍ.1 I. 5.125 यैस्तैश् । 9) Bḍ. I. 6.47 –स्ते च; Bḍ.1 I. 5.125 चैव । 10) Bḍ. I. 5.125 प्रतापिताः ।

49 = Bḍ. I. 5.126, 6.47b,48a; Vā. 7.48. 1) Bḍ. I. 6.47 तु । 2) Vā. –राः सर्वे । 3) Bḍ. I. 5.126 –र्मिकास्तु ।

50 = Bḍ. I. 5.127, 6.48b,49a. Vā. 7.49. 1) Vā. स्ततस्ते । 2) Vā. वै । 3) Bḍ. I. 6.48 युगान्तरे; Vā. गताः पापयुगात्यये । 4) Bḍ.1 ख्याता; Vā. योन्या । 5) Bḍ. I. 5.127, Bḍ.1 I. 6.49 तपा । 6) Bḍ.1 वि–; Bḍ.2 स्व– । 7) Bḍ.1 I. 5.127, Bḍ. I. 6.49 शुभया चाति– ।

51 = Bḍ. I. 5.128a, 6.49b = a; Vā. 7.50. 1) Vā. –पा ज– । 2) Bḍ. I. 5.128; Bḍ.1 I. 6.49 –पैर्जनैर्ज– ।

52 = Bḍ. I. 5.128b,129a, 6.50; Vā. 7.51. 1) Bḍ. I. 5.128 ते च । 2) Bḍ. I. 5.129 मानस्यो ब्रह्मणः; Bḍ. I. 6.50 मानसा ब्रह्मणः; Vā. –सी । 3) Bḍ. I. 6.50 सुताः ।

53 = Bḍ. I. 5.129b,130a, 6.51; Vā. 7.52. 1) Bḍ. I. 5.129 –स्तेषु प्रपन्नेषु; Vā. T. –स्तेष्वप्रवृत्तेषु, V. तेषु प्र– । 2) Bḍ. जनैस् । 3) Vā. तेषुतु ।

54 = Bḍ. I. 5.130b,131a, 6.52; Vā. 7.53. 1) Bḍ.1 विजने–; Vā. विशीर्णे– । 2) Vā. –ष्वालयेषु । 3) Bḍ. I. 6.52 सा– । 4) Bḍ. I. 5.131 –पश्चैवाथ ।

55 = Bḍ. I. 5.131b,132a, 6.53; Vā. 7.54. 1) Bḍ. I. 6.53, Bḍ.1 I. 5.131 'शरमाणा व्रजन्त्येव ( Bḍ.2 I. 6.53 –न्त्येकं ); Bḍ.2 I. 5.131 शीर्यमाणा प्रजाः सप्त । 2) Bḍ. I. 6.53 –स्तथानुगाः; Bḍ.1 I. 5.131 –स्तथाचलाः; Bḍ.2 –स्तथाकृताः ।

आगतागतिकं चैव[3]) यदा तु[4]) सलिलं बहु, ॥ 55 ॥

संछाद्येमां स्थितां भूमिमर्णवाख्या[1]) *तदाभवत्*[2]) ।
आभाति[3]) यस्मात् *स्वाभासो*[4]), *भाशब्दो*[5]) व्याप्ति[6]दीप्तिषु ॥ 56 ॥

सर्वतः[1]) समनुप्लाव्य[2]) तासां[3]) चाम्भो[4]) विभाव्यते, ।
तदम्भ[5]स्तनुते यस्मात् सर्वां पृथ्वीं समन्ततः ॥ 57 ॥

धातुस्तनोति विस्तारे[1]), तेनाम्भस्त[2]नवः स्मृताः, ।

| | |
|---|---|
| क्षर[1]) इत्येष[2]) क्षीर्णे तु,<br>नानार्थो धातुरुच्यते ॥ 58 ॥ | अरमित्येष शीघ्रं तु,<br>निपातः कविभिः स्मृतः ॥ 58 ॥ |

एकार्णवे भवन्त्यापो, न शीघ्रा[1]स्तेन ते[2]) नराः ।
तस्मिन् युगसहस्रान्ते संस्थिते ब्रह्मणोऽह्नि ॥ 59 ॥

*तावत् कालं*[1]) रजन्यां च *वर्तन्त्यां*[2]) सलिलात्मनः[3]) ।
ततस्तु[4]) सलिले तस्मिन् नष्टे[5]ऽग्नौ पृथिवीतले ॥ 60 ॥

प्रशान्तवातेऽन्धकारे निरालोके समन्ततः, ।
येनैवा[1]धिष्ठितं हीदं, ब्रह्मा स[2]) पुरुषः प्रभुः ॥ 61 ॥

विभागमस्य लोकस्य प्रकर्तुं पुनरैच्छत[1]) ।

(Cp. Chap. 3. Śl. 2—5)
एकार्णवे तदा त[2]स्मिन् नष्टे स्थावरजङ्गमे ॥ 62 ॥
तदा भवति स[1]) ब्रह्मा सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः[2]) ॥ 63 ॥
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ।
सत्त्वोद्रेकात् प्रबुद्धस्तु[1]) शून्यं लोकमवैक्षत[2]) ॥ 64 ॥
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
आपो नराख्यास्त[1]नव इत्यपां नाम[2]) शुश्रुम, ।
आपूर्य नाभिं[3]) तत्रास्ते, तेन नारायणः स्मृतः ॥ 65 ॥

---

3) Vā. तद्वं । 4) Bḍ. I. 6.53 तत् ।

56 = Bḍ. I. 5.132[b],133[a], 6.54; Vā. 7.55. 1) Bḍ.1 –स्थं । 2) Vā. –दा च सा । 3) Vā. –भान्ति । 4) Bḍ. I. 5.133 –स्माच्चाभासाद् ( Bḍ.2 –सा ); Vā. नामान्ति । 5) Vā. भासन्तो । 6) Bḍ.1 I. 5.133 –ब्दः कान्ति– ।

57 = Bḍ. I. 5.133[b],134[a], 6.55; Vā. 7.56. 1) Bḍ. I. 5.133 स सर्वः । 2) Bḍ. I. 5.133 –प्रासा; Bḍ. I. 6.55 प्राप्त्या । 3) Bḍ.1 I. 5.133 भासां । 4) Bḍ.1 I. 5.134 भाम्भो । 5) Bḍ. I. 5.134; Bḍ.1 I. 6.55 –दन्त– ।

58[a] = Bḍ. I. 5.134[b], 6.56[a]; Vā. 7.57[a]. 1) Bḍ.1 I. 5.134 –रं । 2) Bḍ.1 I. 5.134 ततोऽप्त–; Bḍ.2 तेन तास्त– । Bḍ.1 I. 6.56 न चैतास्त; Bḍ.2 तेन ताः ।

| | |
|---|---|
| 58[b] = Bḍ. I. 5.135[a], 6.56[b]. 1) Bḍ. I. 5.135 क्षार । 2) Bḍ.1 I. 5.135 –त्येव । | 58[b] = Vā. 7.57[b]. |

59 = Bḍ. I. 5.135[b],136[a], 6.57; Vā. 7.58. 1) Bḍ. I. 5.135 क्षोर्णा– । 2) Bḍ. I. 5.135 ता ।

60 = Bḍ. I. 5.136[b],137[a], 6.58; Vā. 7.59. 1) Bḍ. I. 6.58 –के । 2) Vā. रजन्यां वर्तमानायां तावत् तत्– । 3) Bḍ.1 I. 6.58; Vā. –ना । 4) Bḍ. I. 5.137 –स्ते । 5) Bḍ. –ष्टा– ।

61 = Bḍ. I. 5.137[b],138[a], 6.59; Vā. 7.60. 1) Bḍ. I. 6.59 एतेना– । 2) Bḍ. I. 5.138 –क्षणः ।

62 = Bḍ. I. 5.138[b],139[a], 6.60; Vā. 7.61. 1) Vā. –स्य पुनर्वै कर्तुमिच्छति । 2) Bḍ. I. 5.139 ततस्त– ।

63 = Bḍ. I. 5.139[b],140[a], 6.61[ab]; Vā. 7.62. 1) Vā. स भवति । 2) Bḍ.1 I. 6.61 जितेन्द्रियः; Bḍ.2 ह्यतन्द्रितः ।

64 = Bḍ. I. 5.140[b],141[a]; Vā. 7.63. 1) Bḍ.2 स Bḍ.1 –स्तु स । 2) Bḍ.1; –मैक्षत; Vā. –मवेक्ष्य च ।

65 = Bḍ. I. 6.61[c],62; Vā. 7.64,65. 1) Bḍ. नारास्तत– । 2) Bḍ. –स्यर्थानु– । 3) Bḍ. –येमाणास् ।

सहस्रशीर्षा सुमनाः सहस्रपात् सहस्रचक्षुर्वदनः सहस्रभुक्[1]) ।
सहस्रबाहुः प्रथमः प्रजापतिस्त्रयीमयो[2]) *यः*[3]) पुरुषो निरुच्यते ॥ 66 ॥
आदित्यवर्णो भुवनस्य गोप्ता एको ह्यपूर्वः[1]) प्रथमं *तुराषाट्*[2]) ।
हिरण्यगर्भः पुरुषो महात्मा, *स पठ्यते*[3]) वै *तमसः*[4]) परस्तात् ॥ 67 ॥
कल्पादौ रजसोद्रिक्तो ब्रह्मा भूत्वाऽसृजत् प्रजाः, ।
कल्पान्ते तमसोद्रिक्तः कालो भूत्वाऽग्रसत् पुनः ॥ 68 ॥
स वै *नारायणाख्यस्तु*[1]) सत्त्वोद्रिक्तो*ऽर्णवे स्वपन्*[2]) ।
त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते[3]) ॥ 69 ॥
सृ*जति*[1]) ग्रसते चैव वीक्षते[2]) च त्रिभिः *स्वयम्*[3]) ।
एकार्णवे तदा *लोके*[4]) नष्टे स्थावरजङ्गमे ॥ 70 ॥
चतुर्युगसहस्रान्ते सर्वतः सलि[1]लावृते ।
ब्रह्मा नारायणाख्यस्तु *अप्रकाशार्णवे*[2]) स्वपन्[3]) ॥ 71 ॥
चतुर्विधाः प्रजा ग्रस्त्वा[1]) ब्रह्मराभ्यां[2]) *महार्णवे*[3]) ।
पश्यन्ति तं महर्लोकात्[4]) सुप्तं कालं[5]) महर्षयः ॥ 72 ॥
भृग्वादयो *यथोद्दिष्टास्तस्मिन्काले*[1]) महर्षयः ।
सत्यादयस्तथा त्वष्टौ कल्पे*ऽतीते*[2]) महर्षयः ।
तदा[3]) विवर्त[4]मानैस्तैर्महान्[5]) परिगतः परः[6]) ॥ 73 ॥
गत्यर्थादृषतेर्धा[1]तोर्नामनिर्वृत्ति[2]*रुच्यते*[3]) ।
य[4]स्मा*दृषति सत्त्वेन*[5]) महांस्त[6]स्मान्महर्षयः ॥ 74 ॥
महर्लोकस्थितैर्दृष्टः कालः सुप्तस्तदा च तैः, ।
सत्या[1]द्याः सप्त ये त्वा[2]सन् कल्पेऽतीते महर्षयः ॥ 75 ॥
एवं ब्राह्मीषु *रात्रीषु ह्यतीतासु*[1]) सहस्रशः ।
दृष्टवन्तस्तथा ह्यन्ये[2]) कालं सुप्तं[3]) महर्षयः ॥ 76 ॥

---

66 = Bḍ. I. 6.63; Vā. 7.66. 1) Bḍ. –कृत् । 2) Vā. –वीपथे । 3) Bḍ.1 ऽयं ।
67 = Bḍ. I. 6.64; Vā. 7.67. 1) Bḍ. ह्यमूर्तः । 2) Bḍ. –मस्त्वसौ विराट् । 3) Bḍ. संपचते । 4) Bḍ. मनसः ।
68 = Bḍ. I. 6.65; Vā. 7.68.
69 = Bḍ. I. 6.66; Vā. 7.69. 1) Bḍ. –णो भूत्वा । 2) Bḍ. जलाशये । 3) Vā. समवर्तत ।
70 = Bḍ. I. 6.67; Vā. 7.70. 1) Vā. सृज्यते । 2) Bḍ. Vā. V. वीक्ष्यते । 3) Bḍ.2 त्रयम् ; Vā. –भिस्तु तान् । 4) Bḍ. तस्मिन् ।
71 = Bḍ. I. 6.68; Vā. 7.71. 1) Bḍ.1 स ज– । 2) Bḍ.1 स चाकाशे भवे; Bḍ.2 स चाकाशेऽर्णवे । 3) Bḍ.1 स्वयम् ।
72 = Bḍ. I. 6.69; Vā. 7.72. 1) Bḍ.1 सर्वां; Bḍ.2 ग्रस्ता । 2) Bḍ.1 –ह्मशक्त्या; Vā. ब्राह्म्यां रात्र्यां । 3) Bḍ. तमोवृताः । 4) Bḍ.1 –के; Bḍ.2 –काः । 5) Bḍ. कालं प्रसुप्तं ।
73 = Bḍ. I. 6.70; Vā. 7.73 = ac. 1) Vā. –यो यथा सप्त कल्पे ह्यस्मिन् । 2) Bḍ.1 क्षीणे । 3) Vā. ततो । 4) Bḍ. –वर्त्य– । 5) Bḍ. –हत् । 6) Bḍ. –तं पराम् ।
74 = Bḍ. I. 6.71; Vā. 7.74. 1) Vā. –वृषयो धा– । 2) Bḍ.1 –निष्पत्ति– । 3) Vā. रादितः । 4) Vā. त– । 5) Bḍ.2 –वृषत्सरत्वेन; Vā. –वृषिपरत्वेन । 6) Bḍ. –हत्त– ।
75 = Bḍ. I. 6.72; Vā. 7.75. 1) Bḍ.1 सत्त्वा– । 2) Vā. ह्या ।
76 = Bḍ. I. 6.73; Vā. 7.76. 1) Bḍ.1 [illegible] रजनीषु; Bḍ.2 ब्राह्मस्वतीतासु रजनीषु । 2) Bḍ.1 –स्तदानीताः;

कल्पस्यादौ तु बहुशो[1]) यस्मात् संस्थाश्चतुर्दश ।
कल्पयामास वै ब्रह्मा, तस्मात् कल्पो निरुच्यते ॥ 77 ॥

स स्रष्टा सर्वभूतानां कल्पादिषु पुनः पुनः ।
व्यक्ताव्यक्तो महादेवस्तस्य सर्वमिदं जगत् ॥ 78 ॥

इत्येष प्रतिसंधिर्वः[1]) कीर्तितः कल्पयोर्द्वयोः, ।
सांप्रतातीतयो[2]र्मध्ये प्रागवस्था बभूव या[3]), ॥ 79 ॥

कीर्तिता तु[1]) समासेन पूर्वे[2]) कल्पे यथातथम्[3]), ।
सांप्रतं सं[4]प्रवक्ष्यामि कल्पमेतं निबोधत ! ॥ 80 ॥

---

Bd.2 स्तदातीताः । 3) Vā. सुप्तं कालं ।

77 = Bd. I. 6.74; Vā. 7.77. 1) Bd. सुबहुला ।

78 = Bd. I. 6.75; Vā. 7.78.

79 = Bd. I. 6.76; Vā. 7.79. 1) Bd. –सम्बन्धः । 2) Bd.1 –तां हि तयो– । 3) Bd.1 ह ।

80 = Bd. I. 6.77; Vā. 7.80. 1) Bd.1 तस्तु; Bd.2 –तास्तु । 2) Bd.1 –वै–; Vā. कल्पे । 3) Vā. तथा । 4) Vā. T. ते; V. तु ।

## पञ्चमोऽध्यायः

( Bd. I. 7.1—195; Mr. 49.1—80; Vā. 8.1—209. )

Cp. Chap. 3. Śl. 6—9a

तुल्यं युगसहस्रस्य¹) नैशं कालमुपास्य सः ।
शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं²) सर्गकारणात् ॥ 1 ॥
ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तदा चरन्¹) ।
अन्धकारार्णवे²) तस्मिन् नष्टे स्थावरजङ्गमे ॥ 2 ॥
जलेन समनुव्याप्ते¹) सर्वतः पृथिवीतले ।
अ²विभागेन भूतेषु सत्यमात्रे³) स्थितेषु च⁴) ॥ 3 ॥
निशायामिव खद्योतः प्रावृट्काले ततस्ततः ।
तदाकाशे चरन् सोऽथ¹) वीक्ष्यमाणः² स्वयंभुवः³) ॥ 4 ॥
प्रतिष्ठाया ह्युपायं तु¹) मार्गमाणस्तदा प्रभुः²) ।
ततस्तु सलिले तस्मिञ्ज्ञात्वा त्व³न्तर्गतं महीम् ॥ 5 ॥
अनुमानात्तु¹) संबुद्धो²) भूमेरुद्धरणं प्रति³) ।
चकारान्यां तनुं चैव⁴) पूर्वकल्पादिषु स्मृताम्⁵) ॥ 6 ॥

Cp. Chap. 3. Śl. 13—14

स तु¹) रूपं वराहस्य कृत्वाऽपः प्राविशत् प्रभुः²) ।
अद्भिः संछादितामुर्वीं समीक्ष्याथ³) प्रजापतिः ॥ 7 ॥
उद्धृत्योर्वीमथाद्भ्यस्तु¹) अपस्तास्तु स विन्यसन्²), ।
सामुद्रीस्तु³) समुद्रेषु नादेयीर्निम्नगास्वपि⁴) ॥ 8 ॥

Cp. Chap. 3. Śl. 19—22a

पृथिवीं तु¹) समीकृत्य²) पृथिव्यां सोऽचिनोद् गिरीन् ।
प्राक्सर्गे दह्यमाने तु तदा³) संवर्तकाग्निना, ॥ 9 ॥
तेनाग्निना वि¹लीनास्ते पर्वता भुवि सर्वशः ।
शैत्या²देकार्णवे तस्मिन् वायुनाऽपस्तु³) संहृ⁴ताः ॥ 10 ॥
निषिक्ता¹) यत्र यत्रासंस्तत्र तत्राचलोऽभवत्, ।
स्कन्ना²चलत्वादचलाः पर्वभिः पर्वताः स्मृताः ॥ 11 ॥
गिरयोऽद्भिर्नि¹गीर्णत्वाच् च²यनाच्च³ शीलोच्चयाः ।

---

1 = Bd. I. 7.1; Vā. 8.1. 1) Bd. -स्रं वै । 2) Bd.1 -ह्मा तूद- ।
2 = Bd. I. 7.2; Vā. 8.2. 1) Bd. -दाचरत् · 2) Vā. कारे तदा ।
3 = Bd. I. 7.3; Vā. 8.3. 1) Bd. -नुप्लाव्य । 2) Bd. प्र- । 3) Vā. समन्तात् सु- । 4) Vā. T. तु ।
4 = Bd. I. 7.4; Vā. 8.4. 1) Bd. तदा कामेन तरसा । 2) Bd. मन्य मानः । 3) Bd. स्वयं धिया ।
5 = Bd. I. 7 5; Vā. 8.5. 1) Bd. सोऽप्युपायं प्रतिष्ठायां । 2) Bd. भुवः । 3) Vā. ह्य- ।
6 = Bd. I. 7.6; Vā. 8.6. 1) Bd. अन्यमन्यतमं । 2) Bd.1 बुद्ध्वा; Bd.2 बुद्धो । 3) Bd.1 -णक्षमः; Bd.2 -णं क्षमं । 4) Bd. चकार तं तु देवोऽथ । 5) Bd.1 -तः ।
7 = Bd. I. 7.7; Vā. 8.7. 1) Bd. सत्यं । 2) Bd. -त्वाऽम्भोऽनुप्रविश्य च । 3) Bd. -तामिच्छन् पृथिवीं स ।
8 = Bd. I. 7.8; Vā. 8.8. 1) Bd.1 -मथ न्यस्ता; Bd.2 -मथात्यस्ताम् । 2) Bd.1 सापत्यातुमतिन्यसत् ; Bd.2 अपस्तासुमतिन्यसेत् । 3) Bd. Vā. V. सामुद्रास्तु; Bd. सामुद्राश्च । 4) Bd.1 -देयाश्च नदीषु च; Bd.2 -देया निम्नगादिषु ।
9 = Bd. I. 7.9; Vā. 8.9. 1) Bd. पृथक् तास्तु; Vā. -वीस्तु । 2) Vā. स विन्यस्य । 3) Bd. पुरा ।
10 = Bd. I. 7.10; Vā. 8.10. 1) Vā. प्र- । 2) Bd.1 शैत्या- । 3) Bd.1 -ना ये तु । 4) Bd.1 -हि-; Bd.2 -ह- ।
11 = Bd. I. 7.11; Vā. 8.11. 1) Vā. T. निषक्ता । 2) Bd. स्कन्ना- ।

ततस्तु तां[4]) समुद्धृत्य क्षितिमन्तर्जलात् प्रभुः ॥ 12 ॥

स्वस्थाने स्थापयित्वा च विभागमकरोत् पुनः ।
सप्त सप्त तु वर्षाणि तस्या द्वीपेषु सप्तसु ॥ 13 ॥

विषमाणि समीकृत्य शिलाभिरचिनोद्[1]) गिरीन् ।
द्वीपेषु तेषु वर्षाणि चत्वारिंशत् तथैव च[2]) ॥ 14 ॥

तावन्तः पर्वताश्चैव वर्षान्ते समवस्थिताः ।
सर्गादौ संनि[1]विष्टास्ते स्वभावेनैव नान्यथा ॥ 15 ॥

सप्त द्वीपाः[1]) समुद्राश्च अन्योन्यस्यानु[2]मण्डलम् ।
संनिविष्टाः[3]) स्वभावेन समावृत्य परस्परम् ॥ 16 ॥

भूराद्यां[1]श्चतुरो लोकांश्च[2]न्द्रादित्यौ ग्रहैः सह ।
पूर्ववन्नि[3]र्ममे ब्रह्मा स्थानानीमानि[4]) सर्वशः ॥ 17 ॥

कल्पस्य चास्य ब्रह्मा वै[1]) ह्यसृजत्[2]) स्थानिनः पुरा[3]) ।
आपोऽग्नि[4]) पृथिवीं[5]) वायुम[6]न्तरिक्षं दिवं तथा ॥ 18 ॥

Cp. Chap. 3. 29—31

स्वर्गं दिशः समुद्रांश्च नदीः सर्वांश्च पर्वतान् ।
ओषधीनां तथात्मानमा[1]त्मानं[2]) वृक्षवीरुधाम् ॥ 19 ॥
लवाः[1]) काष्ठाः कलाश्चैव मुहूर्ताः[2]) संधिरात्र्यहान्[3]) ।
अर्धमासांश्च मासांश्च अयनाब्द[4]युगानि च ॥ 20 ॥
स्थानाभिमानिनश्चैव स्थानानि च पृथक् पृथक् ।
स्थानात्मनः स[1]) सृष्ट्वा वै[2]) युगावस्था[3]) विनिर्ममे ॥ 21 ॥

कृतं त्रेता द्वापरं च कलिं[1]) चैव तथा युगम् ।
कल्पस्यादौ कृतयुगे प्रथमं[2]) सोऽसृजत् प्रजाः ॥ 22 ॥

प्रागुक्ता या[1]) मया तुभ्यं पूर्वे कल्पे[2]) प्रजास्तु ताः ।
तस्मिन् संवर्तमाने तु कल्पे दग्धास्तदाग्निना ॥ 23 ॥

अप्राप्ता यास्तपोलोकं जनलोकं समाश्रिताः[1]) ।
प्र[2]वर्तन्ते, पुनः सर्गे बीजार्थं ता भवन्ति हि ॥ 24 ॥

---

12 = Bḍ. I. 7.12; Vā. 8.12. 1) Bḍ. हि नि– । 2) Bḍ.1 त्वा त् , अ– । 3) Bḍ.1 –नात्तु । 4) Bḍ.1 –स्तावा ।
13 = Bḍ. I. 7.13a = b; Vā. 8.13.
14 = Bḍ. I. 7.13b,14a; Vā. 8.14. 1) Bḍ.1 –रभितो ; Bḍ.2 रचितान् । 2) Bḍ. तु ।
15 = Bḍ. I. 7.14b,15a; Vā. 8.15. 1) Bḍ. कान्ति– ।
16 = Bḍ. I. 7.15b,16a; Vā. 8.16. 1) Bḍ. सप्तद्वीपां । 2) Vā. T. स्य तु । 3) Vā. –कृष्टाः ।
17 = Bḍ. I. 7.16b,17a; Vā. 8.17. 1) Vā –राद्यां– । 2) Bḍ. –कांश्च– । 3) Vā. पूर्वं तु नि– । 4) Bḍ.1 स्थावराणीह ; Bḍ.2 स्थानानीह च ।
18 = Bḍ. I. 7.17b,18a; Vā. 8.18. 1) Bḍ.2 च । 2) Bḍ.1 चासृद् यः; Bḍ.2 सृजतः । 3) Bḍ. सुरान् । 4) Bḍ.2 Vā. ऽग्निः । 5) Vā. –वी । 6) Vā. –सुर– ।
19 = Bḍ. I. 7.18b,19a; Vā. 8.19. 1) Bḍ.1 –नामात्मनश्च आ–; Bḍ. तथात्मान आ– । 2) Bḍ. –त्मनो ।
20 = Bḍ. I. 7.19b,20a; Vā. 8.20. 1) Bḍ.1 –वा– । 2) Vā. –तं । 3) Vā. –हम् । 4) Bḍ.1 –ब्दान् ।
21 = Bḍ. I. 7.20b,21a; Vā. 8 21. 1) Bḍ. –नस्तु । 2) Bḍ च । 3) Vā. –स्थां ।
22 = Bḍ. I. 7.21b,22a; Vā. 8.22. 1) Bḍ. तिष्यं । 2) Vā. –मे ।
23 = Bḍ. I. 7.22b,23a; Vā. 8.23. 1) Bḍ.1 –ताश्च । 2) Vā. T. पूर्वकाले, V. –काले ।
24 = Bḍ. I. 7.23b,24a; Vā 8.24. 1) Bḍ. पृथिव्यां याः समासत । 2) Bḍ. आ– ।

बीज[1]*र्थं ताः*[2]) स्थितास्तत्र पुनः सर्गस्य कारणात् ।
ततस्ताः सृज्यमानास्तु संतानार्थं भवन्ति हि ॥ 25 ॥
धर्मार्थकाममोक्षाणामिह ताः *साधिताः*[1]) स्मृताः ।
देवाश्च पितरश्चैव ऋषयो[2]) मानव[3]स्तथा ॥ 26 ॥
ततस्ते तपसा युक्ताः स्थानान्यापूर*यन्ति हि*[1]), ।
ब्रह्मणो मानसा[2]स्ते वै सिद्धात्मानो भवन्ति हि ॥ 27 ॥
आ[1]सङ्गाद्वेषयुक्तेन कर्मणा ते दिवं गताः ।
आवर्तमाना इह ते[2]) संभवन्ति युगे युगे ॥ 28 ॥
स्वकर्मफलशेषेण ख्यातास्चैव तदा[1]त्मिकाः ।
संभवन्ति जनाल्लोकात्[2]) कर्मसंशयवन्धनात्[3]) ॥ 29 ॥
आशयः[1]) कारणं *तत्र*[2]) बोद्धव्यं[3]) कर्मणां[4]) तु सः ।
तैः कर्मभिस्तु[5]) जायन्ते जनलोकाच्छु[6]भाशुभैः ॥ 30 ॥
गृह्णन्ति ते शरीराणि नानारूपाणि योनिषु ।
देवाद्याः स्थावरान्ताश्च[1]) उत्प[2]द्यन्ते परस्परम् ॥ 31 ॥
Cp. Chap. 6 Sl. 58—59.
तेषां ये[1]) यानि कर्माणि प्राक् *सृष्टेः*[2]) प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ 32 ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे ऋतानृते ।
तद्भाविताः प्रपद्यन्ते, तस्मात् तत् तस्य रोचते ॥ 33 ॥
कल्पेष्वासन् व्यतीतेषु रूपनामानि यानि च, ।
तान्येवानागते काले प्रायशः प्रतिपेदिरे, ॥ 34 ॥
तस्मात्तु[1]) नामरूपाणि तान्येव प्रतिपेदिरे, ।
पुनः पुनस्ते कल्पेषु जायन्ते *नामरूपतः*[2]) ।
ततः सर्गे *ह्यवष्टब्धे*[3]) सिसृक्षोर्ब्रह्मणस्तु वै ॥ 35 ॥

क्रोष्टुकिरुवाच :
अर्वाक्स्रोतस्तु कथितो, भवता, यस्तु मानुषः ।
ब्रह्मन् विस्तरतो ब्रूहि, ब्रह्मा समसृजद् यथा, ॥ $35_1$ ॥
यथा च वर्णानसृजद् यद्गुणांश्च महामते ।
यच्च येषां स्मृतं कर्म विप्रादीनां, वदस्व तत् ! ॥ $35_2$ ॥

मार्कण्डेय उवाच :

| | |
|---|---|
| ब्रह्मणः सृजतः पूर्वं सत्याभिध्यायिनस्तथा । | प्रजास्ता[1]) ध्यायतस्तस्य सत्याभिधायिनस्तदा । |

25 = Bḍ. I. 7.24[b], 25[a]; Vā. 8.25. 1) Bḍ. वीक्ष्या– । 2) Vā. –थेंन ।
26 = Bḍ. I. 7.25[b], 26[a]; Vā. 8.26. 1) Vā. –ध( धि )काः । 2) Bḍ. क्रमशो । 3) Vā. मनव– ।
27 = Bḍ. I. 7.26[b], 27[a]; Vā. 8.27. 1) Bḍ. –रयन् पुरा । 2) Bḍ. मनव– ।
28 = Bḍ. I. 7.27[b], 28[a]; Vā. 8.28. 1) Vā. ये । 2) Bḍ. –नास्ते देहे ।
29 = Bḍ. I. 7.28[b], 29[a]; Vā. 8.29. 1) Vā. तथा– । 2) Bḍ.1 –ने लोकाः । 3) Bḍ. कल्पागमनिवन्धनाः ।
30 = Bḍ. I. 7.29[b], 30[a]; Vā. 8.30. 1) Bḍ.1 अप्सु यः । 2) Bḍ. तेषां । 3) Bḍ. बोधयन् । 4) Bḍ.1 –गा । 5) Bḍ. कर्मभिस्तैस्तु । 6) Vā. जनाल्लोकाः शु– ।
31 = Bḍ. I. 7.30[b], 31[a]; Vā. 8.31. 1) Vā. –श्स्थावरान्ते च । 2) Bḍ. –न्ता स्तु आप– ।
32 = Bḍ. I. 7.31[b] = a; Vā. 8.32. 1) Bḍ. मेध्यानि । 2) Bḍ. प्रायशः ।
33 = Vā. 8. 33. 34 = Vā. 8.34.
35 = Bḍ. I. 7.32, 33[a]; Vā. 8.35, 36[a]. 1) Bḍ. –स्माधन् –; Bḍ.2 –स्माच्च । 2) Bḍ. –रूपिणः । 3) Bḍ. –र्गो ह्युपसृष्टे

$35_1$ = Mr. 49.1 $35_2$ = Mr. 49.2.

तस्माद्रात्र्यहयोः संधिमुपासन्ते तथा[4]) द्विजाः ।
ततोऽन्यां स[5]) पुनर्ब्रह्मा तनुं वै[6]) प्रत्यपद्यत[7]), ॥ 17 ॥
राजोमात्रात्मिकायां[1]) तु मनसा सोऽसृजत् प्रभुः, ।
रजःप्रायात्[2]) ततः सोऽथ मानसानसृजत् सुतान् ॥ 18 ॥
मनसस्तु[1]) तत[2]स्तस्य मानवा[3]) जज्ञिरे प्रजाः[4]) ।
[ मनसाच्च मनुष्यास्ते प्रजनात् प्रथिताः प्रजाः ]
सृ[5]ष्ट्वा पुनः प्रजाश्चापि[6]) स्वां तनुं तामपोहत[7]) ॥ 19 ॥
सापविद्धा तनुस्तेन ज्योत्स्ना सद्यस्त्वजायत, ।
त[1]स्माद्भवन्ति संहृष्टा ज्योत्स्नाया उद्भवे प्रजाः ॥ 20 ॥
इत्येतास्तनवस्तेन ह्य[1]पविद्धा महात्मना ।
सद्यो रात्र्यहनी चैव संध्या ज्योत्स्ना च जज्ञिरे ॥ 21 ॥
ज्योत्स्ना संध्या तथैवाहः[1]) स[1]त्त्वमात्रात्मकं त्रयम्[2]), ।
तमोमात्रात्मिका रात्रिः, सा वै तस्मात् त्रियामिका[3]) ॥ 22 ॥
तस्माद्देवा दिवा[1]) तन्वा तुष्टया[2]) सृष्टा मुखात्तु वै; ।
यस्मात्तेषां दिवा जन्म, बलिनस्तेन ते[3]) दिवा ॥ 23 ॥
तन्वा यद[1]सुरान् रात्री[2]) जघनादसृजत् प्रभुः, ।
प्राणेभ्यो रात्रि[3]जन्मानो ह्यसह्या[4]) निशितेन ते ॥ 24 ॥
एतान्येव भविष्याणां देवानामसुरैः सह ।
पितॄणां मानवानां[1]) च अतीतानागतेषु वै ॥ 25 ॥
मन्वन्तरेषु सर्वेषु निमित्तानि भवन्ति हि ।
ज्योत्स्ना रात्र्यहनी संध्या चत्वार्यम्भांसि तानि[1]) वै[2]) ॥ 26 ॥
भान्ति यस्मात् , ततोऽम्भांसि[1]); भाशब्दोऽयं मनीषिभिः[2]) ।
व्याप्तिदीप्त्यां[3]) निगदितः, पुनश्चाथ[4]) प्रजापतिः ॥ 27 ॥
सोऽम्भां[1]स्येतानि सृ[2]ष्ट्वा तु[3]) देवदानव[4]मानवान्[5]) ।

---

2) L. रात्र्यह्नोर्म- । 3) Bd. उपान्युष्टयोर्यदन्तरम् । 4) Bd.2 सार्धं तामुपासन्ति वै । 5) Bd. -ऽन्यस्यां; L. ह्यन्यां ।
6) Bd. स्वतन्वाम् । 7) Bd. उपपद्यत; L. समगृह्णत ।

18 = Bd. I. 8.19a = a; L. 70.212b, 213a; Vā. 9.18. 1) Bd. -का या । 2) L. प्रियांस्त- ।
19 = Bd. I. 8.19b, 20; L. 70.213b, 214a = ac; Vā. 9.19 = ac. 1) Bd.1 मनसा तु; Bd.2 मनुस्तस्य; L. मनस्विनस् ।
2) Bd. सुता- । 3) Bd.1 प्रजनाद् ; Bd.2 प्रथता; Vā. मानसा( स्यो ) । 4) L. सुताः । 5) Vā. दृ- । 6) Bd. -जाः सोऽथ । 7) Bd. स व्यपोहत; Vā. -मपी( पौ )हत ।

20 = Bd. I. 8.21; L. 70.214b, 215a; Vā. 9.20. 1) L. य- ।
21 = Bd. I. 8.22; L. 70.215b, 216a; Vā. 9.21. 1) Vā. व्य- ।
22 = Bd. I. 8.23; L. 70.216b, 217a; Vā. 9.22. 1) Bd. -ध्याह्नी चैव ; L. -ध्या अहश्चैव; Vā. -ध्या तथाहश्च ।
2) Vā. स्वयम् । 3) Bd. -स्मान्नियामिका; L. -स्मान्निशात्मिका ।
23 = Bd. I. 8.24; L. 70.217b, 218a; Vā. 9.23. 1) Bd. Vā. T. दिव्य- । 2) Vā. ह्यष्टाः । 3) L. वै ।
24 = Bd. I. 8.25; L. 70.218b, 219a; Vā. 9.24. 1) L. यया- । 2) Bd. -त्र्या । 3) L. निशि- । 4) Bd. ह्यजेया; L. बलिनो ।
25 = Bd. I. 8.26; L. 70.219b, 220a; Vā. 9.25. 1) Bd. मानुषाणां ।
26 = Bd. I. 8.27; L. 70.220b, 221a; Vā. 9.26. 1) Bd. -र्येतानि तानि; Vā. -र्यांमासितानि । 2) Bd. वा ।
27 = Bd. I. 8.28a = a; L. 70.221b, 222a; Vā. 9.27. 1) Bd. माति । 2) Bd. -ब्दो व्याप्तिदीप्तिषु; L. शब्दोऽयं सुमनीषिभिः । 3) L. मातिर्दीप्तौ । 4) Vā. -श्चाह ।
28 = Bd. I. 8.28b, 29a; L. 70.222b, 223a; Vā. 9.28. 1) Bd. अम्भां- । 2) Vā. दृ- । 3) Bd.2 सृष्टानि ।

पितॄंश्चैवा[6]सृजत्[7]) सोऽन्या[8]नात्मनो[9]) विविधान्[10]) पुनः[11]) ॥ 28 ॥

तामुत्सृज्य[1]) तनुं[2]) ज्योत्स्नां[3]) ततोऽन्यां प्राप्य स[4]) प्रभुः ।
मूर्तिं रजस्तमःप्रायां[5]) पुनरे[6]वाभ्यपूपुजत्[7]) ॥ 29 ॥

अन्धकारे क्षुधाविष्टांस्त[1]तोऽन्यान्[2]) सोऽसृजत्[3]) प्रभुः[4]) ।
तेन सृष्टाः[5]) क्षुधात्मान[6]स्तेऽम्भां[7]स्यादातुमुद्यताः ॥ 30 ॥

अम्भांस्येतानि रक्षाम, उक्तवन्तस्तु[1]) तेषु ये[2]), ।
राक्षसास्ते स्मृता[3]स्तस्मात्[4]) क्षुधा[5]त्मानो[6]) निशाचराः ॥ 31 ॥

येऽब्रुवन् क्षिणुमो[1]ऽम्भांसि, तेषां हृष्टाः परस्परम् ।
तेन ते कर्मणा यक्षा[2]) गुह्यकाः क्रूरकर्मिणः[3]) ॥ 32 ॥

रक्षेति[1]) पालने चापि धातुरेष विभाव्यते[2]) ।
य एष क्षीति[3]) धातुर्वै, क्षपणे[4]) स[5]) निरुच्यते ।
[ रक्षणाद्रक्ष इत्युक्तं, क्षपणाद्यक्ष उच्यते ] ॥ 33 ॥

तान्[1]) दृष्ट्वा ह्य[2]प्रियेणास्य केशाः शीर्यन्त[3]) धीमतः ।
ते शीर्णा[4]श्चोत्थिता[5]) ह्यूर्ध्वं तदारोहन्त तं प्रभुम्[6]) ॥ 34 ॥

हीनास्तच्छिरसो[1]) वाला[2]) यस्माच्चै[3]वापसर्पिणः[4]), ।
व्यालात्मानः[5]) स्मृता व्याला[6]), हीनत्वादहयः स्मृताः ॥ 35 ॥

पन्नत्वात्[1]) पन्नगाश्चैव[2]) सर्पाश्चैवापसर्पणात्[3]) ।
तेषां पृथिव्यां निलयाः[4] सूर्याचन्द्रमसोरधः[5]) ॥ 36 ॥

---

4) L. –मानुष– । 5) Bd. –मानुधान् ; L. –दानवान् । 6) Bd. –श्चैव; Vā. श्च वा - । 7) Bd. तथा । 8) Bd. चान्या–; L. तन्वा आ– । 9) Bd. –न्यान् विविधान् । 10) Bd.1 व्यसृजत ; Bd.2 चासृजत् ; Vā. विबुधान् । 11) Bd. प्रजाः ।

29 = Bd. I. 8.29[b], 30[a]; L. 70.223[b], 224[a]; Vā. 9.29. 1) Vā. –मुत्क्रम्य । 2) Bd. ततो । 3) Vā. कृत्स्नां । 4) Vā. असृजत् । 5) Bd. –मोद्रिक्तां; L. तमोरजःप्रायां । 6) Bd. ततस्तां । 7) Bd. सोऽभ्ययुञ्जत; L. तत एवाभ्यपूजयत् ।

30 = Bd. I. 8.(30[b]), 31[a]; L. 70.224[b], 225[a]; Vā. 9.30. 1) Vā. –ष्टस्त– । 2) Vā. –ऽन्यां । 3) Vā. सृजते । 4) Vā. पुनः; Bd. ततोऽन्याः सोऽन्धकारे च ( Bd.2 तु ) क्षुधाविष्टाः प्रजाः सृजन् । 5) Bd. ताः सृष्टास्तु । 6) Bd. –धाविष्टा; L. –नो । 7) Bd. L. अम्भां ।

31 = Bd. I. 8.31[b], 32[a]; L. 70.225[b], 226[a]; Vā. 9.31. 1) Vā. –न्तश्च । 2) Vā. च । 3) L. –सा नाम ते । 4) L. यस्मात् ; Vā. –ता लोके । 5) Vā. क्रोधा– । 6) L. –धाविष्टा ।

32 = Bd. I. 8.32[b], 33[a]; L. 70.226[b], 227[a]; Vā. 9.32. 1) L. यक्षमो । 2) Vā. यक्षा । 3) L. –का गूढकर्मणा ।

33 = Bd. I. 8.33[b], 34; L. 70.227[b], 228[a] = ab; Vā. 9.33 = ab. 1) Vā. रक्षणे । 2) Bd.2 विविच्यते; L. विभाव्यते । 3) Vā. क्षिति । 4) Vā. क्षयणे; L. एवं च यक्षतिर्धातु( र् )भक्षणे । 5) Vā. सं– ।

34 = Bd. I. 8.35; L. 70.228[b], 229[a]; Vā. 9.34. 1) L. तं । 2) Bd. त्व– । 3) Bd.1 शीर्णाश्च; L. शीर्णास्तु । 4) Vā. शीतोष्णा– । 5) Bd. –र्णा व्युत्थिता; Vā. –र्णाश्चोच्छ्रिता । 6) Bd. –र्ध्वमारोहन्त पुनः पुनः; L. –र्ध्वं ते चैवारुरुहुः प्रभुम् ।

35 = Bd. I. 8.36; L. 70.229[b], 230[a]; Vā. 9.35. 1) Bd. –ना ये शिरसो; Vā. –ना मच्छिरसो । 2) Vā. व्याला । 3) Bd. –पन्नाश्चै– । 4) Vā. –र्पिताः । 5) Bd. वालात्मना । 6) Bd.2 L. वाला ।

36 = Bd. I. 8.37; L. 70.230[b] = a; Vā. 9.36. 1) L. पतत्वात् । 2) Bd. –श्चापि । 3) Bd. व्यपसर्पा सर्पता; Vā. –र्पिणः । 4) Bd. –षां क्षयः पृथिव्यां वः ( Bd.2 वै ) । 5) Bd. सौ घनाः ।

तस्य क्रोधोद्भवो योऽसावग्निगर्भः[1]) सुदारुणः, ।
स तु[2]) सर्पान्[3]) सहोत्पन्नानाविवेश विषात्मकः[4]) ॥ 37 ॥

सर्पान् सृष्ट्वा ततः क्रोधात्[1]) क्रोधात्मानो विनिर्ममे[2]), ।
वर्णेन कपिशेनोग्रास्ते भूताः पिशिताशनाः, ॥ 38 ॥

भूतत्वात् ते स्मृता भूताः, पिशाचाः पिशिताशनात् ।
ध[1]यतो[2]) गां तत[3]स्तस्य गन्धर्वा जज्ञिरे सुताः[4]) ॥ 39 ॥

धयतीत्येष वै धातुः[1]) पानार्थे[2]) परिपठ्यते ।
पिबन्तो[3]) जज्ञिरे वाचं[4]), गन्धर्वास्तेन ते स्मृताः ॥ 40 ॥

अष्टास्वेतासु सृष्टासु देवयोनिषु स प्रभुः ।
ततः स्वच्छन्दतोऽन्यानि[1]) वयांसि वयसो[2])ऽसृजत्, ॥ 41 ॥

स्वच्छन्दतः स्वच्छन्दांसि[1]), वयसोऽपि[2]) वयांस्यपि[3]) ।
पशून् सृष्ट्वा स देवेशो[4])ऽसृजत् पक्षिगणानपि[5]) ॥ 42 ॥

मुखतोऽजाः[1]) ससर्जाथ[2]), वक्षसश्चावयो[3])ऽसृजत्[4]) ।
गाश्चैवाथो[5]दराद् ब्रह्मा पार्श्वाभ्यां च विनिर्ममे ॥ 43 ॥

पद्भ्यां चाश्वान्[1]) समातङ्गान् रासभान्[2]) गवयान् मृगान् ।
उष्ट्रानश्वतरांश्चैव[3]) तथान्या[4]श्चैव जातयः ॥ 44 ॥

ओषध्यः फलमूलिन्यो[1]) रोमभ्य[2]स्तस्य जज्ञिरे ।
एवं पश्वो[3]षधीः सृष्ट्वा न्ययुञ्जत्[4]) सोऽध्वरे प्रभुः[5]), ॥ 45 ॥

तस्मादा[1]दौ तु कल्पस्य त्रेतायुगमुखे तदा[2]) ।
गौरजः पुरुषो मेषो ह्यश्वा[3]श्वतरगर्दभाः[4]); ॥ 46 ॥

एतान्[1]) ग्राम्यान्[2]) पशू[3]नाहु[4]रारण्यांश्च[5]) निबोधत[6]) ।

---

37 = Bḍ. I. 8.38; L. 70.231; Vā. 9.37. 1) Vā. –र्भं– । 2) Bḍ. तान् । 3) Bḍ.2 –र्पां–; Vā. –र्पे– । 4) Vā. –कान् ।

38 = Bḍ. I. 8.39; L. 70.232; Vā. 9.38. 1) L. क्रुद्धः । 2) Bḍ. –र्मिताः ।

39 = Bḍ. I. 8.40; L. 70.233; Vā. 9.39. 1) Bḍ.1 गा– । 2) Vā. –यन्तो । 3) Bḍ.2 गस्त–; L. प्रसन्नं गायत–; Vā. गास्तत– । 4) L. यदा; Vā. तदा ।

40 = Bḍ. I. 8.41; L. 70.234; Vā. 9.40. 1) Bḍ. धयेति धातुः कविभिः; Vā. –त्येष धातुर्वै : 2) L. पानत्वे । 3) Bḍ. पिबतो; L. धयन्तो । 4) Bḍ.2 वाचा; Vā. गास्तु ।

41 = Bḍ. I. 8.42; L. 70.235; Vā. 9.41. 1) Bḍ. छन्दतश्चैव छन्दांसि । 2) Bḍ. I. –सा– ।

42 = Bḍ. I. 8.(43ᵃ) = b; L. 70.236; Vā. 9.42. 1) Vā. छायतस्तानि छदांसि । 2) L. –सः च । 3) L. –यांसि च । 4) Vā. शून्यान् दृष्ट्वा तु देवो वै । 5) Bḍ. पक्षिणस्तु स सृष्ट्वा वै ततः पशुगणान् सृजन् ।

43 = Bḍ. I. 8.43ᵇ, 44ᵃ; L. 70.237; Vā. 9.43. 1) Vā. –ऽजान् । 2) Bḍ. सृजन्सोऽथ । 3) Bḍ.1 –श्चाप्यवीः; Bḍ.2 –श्चाथावीन् ; Vā. –श्च वयो । 4) Bḍ. सृजन् । 5) Bḍ. गावश्चैवो– ।

44 = Bḍ. I. 8.44ᵇ, 45ᵃ; L. 70.238; Vā. 9.44. 1) Bḍ. पादतोऽश्वान् । 2) Bḍ.2 वृषभान् ; Vā. –शरभान् । 3) Bḍ. उष्ट्रांश्चैव वराहांश्च । 4) Bḍ. शुनोऽन्यां–; Vā. ताश्चान्या– ।

45 = Bḍ. I. 8.45ᵇ, 46ᵃ; L. 70.239; Vā. 9.45. 1) Vā. –कानि । 2) Vā. मत– । 3) Bḍ.1 पश्वौ–; Bḍ.2 पशौ– । 4) Bḍ. न्ययुञ्जत ; L. –श्चायूयुजत । 5) Bḍ. –रेषु वै ।

46 = Bḍ. I. 8.46ᵇ, 47ᵃ; L. 70.240ᵃ = b; Vā. 9.46. 1) Bḍ. अस्य त्वा– । 2) Bḍ. पुरा । 3) Bḍ. –रुपोऽश्वाविरश्वा–; L. Vā. अश्वोऽ– । 4) L. Vā. –भौ ।

47 = Bḍ. I. 8.47ᵇ, 48ᵃ; L. 70.240ᵇ, 241ᵃ; Vā. 9.47. 1) Bḍ. एते । 2) Bḍ. –म्याः । 3) Bḍ.1 स्मृताः; Bḍ.2 मृगाः । 4) Bḍ. सप्त । 5) L. –ण्यान्वै । 6) Bḍ. आरण्याः सप्त चापरे ।

श्वापदो[7]) द्विखुरो[8]) हस्ती वानरः[9]) पक्षिपञ्चमाः[10]), ॥ 47 ॥

औद[1]काः पशवः षष्ठाः[2]), सप्तमास्तु सरीसृपाः ।
महिषा गवयोष्ट्रा[3]श्च प्लवङ्गाः[4]) शरभा[5]) वृकाः[6]), ॥ 48 ॥

सिंहस्तु[1]) सप्तमस्तेषामा[2]रण्याः पशवः स्मृताः[3]) ।
गायत्रं[4]) च ऋचं[5]) चैव त्रिवृत्स्तोमं[6]) रथन्तरम्[7]) ॥ 49 ॥

अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ।
यजूंषि[1]) त्रैष्टुभं छन्दः[2]) स्तोमं पञ्चदशं तथा ॥ 50 ॥

बृहत्साम तथोक्थं[1]) च दक्षिणात् सोऽ[2]सृजन्मुखात् ।
सामानि जगतीछन्दः[3]) स्तोमं सप्त[4]दशं तथा ॥ 51 ॥

वैरूप्य[1]मतिरात्रं च पश्चिमादसृ[2]जन्मुखात् ।
एकविंशमथर्वाणमाप्तोर्यामाणमेव[3]) च ॥ 52 ॥

अनुष्टुभं सवैराजमुत्तरा[1]दसृजन्मुखात् ।
Cp. Chap. 8. Śl. 7 46-7 48.
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ 53 ॥
वयां[1]सि च ससर्जादौ कल्पस्य भगवान् प्रभुः[2]) ।
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ।
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ 54 ॥
ब्रह्मणस्तु प्रजासर्गं सृजतो हि प्रजापतेः ।
सृष्ट्वा चतुष्टयं पूर्वं देवासुरपितॄन् प्रजाः[1]), ॥ 55 ॥
ततोऽसृजत् स[1]) भूतानि स्थावराणि चराणि[2]) च, ।

Cp. Chap. 8. Śl. 74 9-11.
यक्षान् पिशाचान् गन्धर्वांस्तथैवाप्सरसां गणान्[3]), ॥ 56 ॥
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ।
अव्ययं च व्ययं चैव[1]) यदिदं स्थाणु[2]जङ्गमम् ॥ 57 ॥

---

7) Bḍ.2 Vā. –दा । 8) Bḍ. द्वीपिनो । 9) L. –राः । 10) Bḍ. –मः ।

48 = Bḍ. I. 8.48[b], 49[a]; L. 70.241[b], 242[a]; Vā. 9.48[a] = a. 1) Vā. शुन्द– । 2) Vā. सष्टाः । 3) L. –याख्या– । 4) Bḍ.1 द्विखुराः; Bḍ.2 –शुरः । 5) Bḍ. –मो । 6) Bḍ.1 द्विषः; Bḍ.2 द्विपः ।

49 = Bḍ. I. 8.49[b], 50[a]; L. 70.242[b], 243[a]; Vā. 9.48[b] = b. 1) Bḍ. मर्कटः । 2) Bḍ.1 –मो ह्येषां चा– । 3) Bḍ. –वस्तु ते । 4) Bḍ. –त्रीं । 5) Vā. वरुणं । 6) Bḍ. –म–; L. –वृत्साम; Vā. –वृत्सौम्यं । 7) Bḍ. –रे ।

50 = Bḍ. I. 8.50[b], 51[a]; L. 70.243[b], 244[a]; Vā. 9.49. 1) Vā. छन्दांसि । 2) L. –न्द–; Vā. कर्म ।

51 = Bḍ. I. 8.51[b], 52[a]; L. 70.244[b], 245[a]; Vā. 9.50. 1) Bḍ. –क्थं; Vā. –ममथोक्थं– । 2) L. –णाद– । 3) Bḍ. –ती (तीं) चैव; L. न्दा– । 4) Vā. पञ्च ।

52 = Bḍ. I. 8.52[b], 53[a]; L. 70.245[b], 246[a]; Vā. 9.51. 1) L. –प– । 2) Bḍ. –मात्सोऽसृ– । 3) Bḍ. –र्यामं तथैव ।

53 = Bḍ. I. 8.53[b], 54[a]. L. 70.246[b], 247[a]; Vā. 9.52. 1) Bḍ. –थं चतुर्थां– ।

54 = Bḍ. I. 8.(54[b]), 55; L. 70.247[b], 248[a] = ac; Vā. 9.53 = ac. 1) L. तेषां– । 2) Bḍ. सृष्टासौ ( Bḍ.1 दृष्ट्वा ) भगवान् देवः पर्जन्यमिति विश्रुतम् ।

55 = Bḍ. I. 8.56; L. 70.248[b], 249[a]; Vā. 9.54. 1) Bḍ. –र्षिपितृमानवान् ; L. –वासुरनरान्पितॄन् ।

56 = Bḍ. I. 8.57[a](b); L. 70.249[b], 250[a]; Vā. 9.55. 1) Bḍ.1 –जत; Bḍ.2 –जति; Vā. –तः सृजति । 2) Bḍ. चराणि स्थावराणि । 3) Bḍ. सृष्ट्वा यक्षपिशाचांश्च गन्धर्वाप्सरसस्तदा ।

57 = Bḍ. I. 8.58; L. 70.250[b], 251[a]; Vā. 9.56. 1) L. चापि । 2) Bḍ. –च द्वयं स्थावर– ।

तेषां ये[1]) यानि कर्माणि प्राक्सृष्ट्यां प्रति[2]पेदिरे, ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ 58 ॥
हिंस्राहिंस्रे मृदु[1]क्रूरे धर्माधर्मावृ[2]तानृते ।
तद्भाविताः प्रपद्यन्ते, तस्मात् तत् तस्य रोचते ॥ 59 ॥ (Ch. 5. Sl. 32–33.)

महाभूतेषु नानात्वमि[1]न्द्रियार्थे[2]षु मूर्तिषु ।
विनियोगं च भूतानां धातैव व्यदधात् स्वयम् ॥ 60 ॥

केचित् पुरुषकारं तु प्राहुः कर्मसु[1]) मानवाः ।
दैवमित्यपरे विप्राः स्वभावं भूत[3]चिन्तकाः ॥ 61 ॥

पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
न चैकं न[1]) पृथग्भावमधिकं न[2]) ततो वि[3]दुः ॥ 62 ॥
(Ch. 3. Sl. 7412–7414.) एतदेवं[1]) च नैकं[2]) च न चोभे न च वाप्युभे[3]) ।
कर्मस्थात्[4]) विषयात्[5]) ब्रूयुः सत्त्वस्थाः समदर्शिनः[6]) ॥ 63 ॥
नाम[1]रूपं च भूतानां कृतानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ 64 ॥
ऋषीणां नामधेयानि[1]) याश्च वेदेषु[2]) दृष्टयः[3]) ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो[4]) ददाति सः[5]) ॥ 65 ॥
यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते, तानि तान्येव तथा भावा युगादिषु ॥ $65_1$ ॥
एवं विधाः सृष्टयस्तु[1]) ब्रह्मणो[2])ऽव्यक्तजन्मनः[3]) ।
शर्वर्यन्ते प्रदृश्यन्ते सिद्धिमाश्रित्य मानसीम् ॥ $65_2$ ॥

एवं भूतानि सृष्टानि स्थावराणि चराणि[1]) च ।
यदास्य ताः प्रजाः सृष्टा न व्यवर्धन्त धीमतः[2]), ॥ 66 ॥
(Ch. 3. Sl. 62–64.) (Ch. 7. Sl. 64–66.) अथान्यान् मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ।
भृगुं पुलस्त्यं पुलहं क्रतुमाङ्गिरसं तथा ॥ $66_1$ ॥
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसम् ।
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ $66_2$ ॥

---

58 = Bd. I. 8.59; L. 70.251[b], 252[a]; Vā. 9.57. 1) L. वै । 2) Bd. प्राक्सृष्टानि प्र– ।
59 = Bd. I. 8.60; L. 70.252[b], 253[a]; Vā. 9.58. 1) Bd.1 मृजन् । 2) Bd.2 L. –र्मे ऋ– ।
60 = Bd. I. 8.61; Kū. 7.64; L. 70.253[b], 254[a]; Vā. 9.59. 1) L. सृष्टेषु इ– । 2) Bd. –यार्ते– ।
61 = Bd. I. 8.62; L. 70.254[b], 255[a]; Vā. 9.60. 1) Bd.1 Vā. कर्म च । 2) Vā. दैव– ।
62 = Bd. I. 8.63; L. 70.255[b], 256[a]; Vā. 9.61. 1) Bd. चैव तु । 2) Bd.1 –केन । 3) Vā. तयोर्वि– ।
63 = Bd. I. 8.64; L. 70.256[b], 257[a]; Vā. 9.62. 1) Vā. –देवं( कं ) । 2) Bd. –वं । 3) Bd. नानुभे न च; L. नामभेदेन नाप्युभे । 4) Bd. स्वकर्म–; L. –स्था । 5) Bd. –यं; L. –मं । 6) L. –र्शना: ।
64 = Bd. I. 8.65; L. 70.257[b], 258[a]; Vā. 9.63. 1) Bd. नाना– ।
65 = Bd. I. 8.66; L. 70.258[b], 259[a]; Vā. 9.64. 1) Bd. आर्षाणि चैव नामानि । 2) Bd. देवेषु । 3) Bd.2 L. दृष्टयः । 4) Bd. पुनस्तेभ्यो; Vā. –न्येवास्य । 5) Bd.1 –ऽसात्यजः; Bd.2 –ऽदधात( द ? )जः; L. ददात्यजः ।
| $65_1$ = Vā. 9.65.
$65_2$ = L. 259[b], 260[a]; Vā. 9.66. 1) Vā. –धासु सृष्टासु । 2) Vā. –णा । 3) Vā. –न्मा ।
66 = L. 70.260[b], 261[a]; Vā. 9.67. 1) Vā. चराणि स्थावराणि । 2) L. सत्तमाः ।
| $66_1$ = Vā. 9.68.
| $66_2$ = Vā. 9.69.

तेषां ब्रह्मात्मकानां वै सर्वेषां ब्रह्मवादिनाम् ॥ $66_3$ ॥
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् ।
संकल्पं चैव धर्मं च पूर्वेषामपि पूर्वजम्[1]) ।
अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् ॥ $66_4$ ॥
सनन्दनं ससनकं विद्वांसं च सनातनम् ।
सनत्कुमारं च विभुं सनकं च सनन्दनम् ॥ $66_5$ ॥
न ते लोकेषु सज्जन्ते निरपेक्षाः सनातनाः ।
सर्वे ते ह्यागतज्ञाना वीतरागा विमत्सराः ॥ $66_6$ ॥
तेष्वेवं निरपेक्षेषु लोकवृत्तानुकारणात् ।
हिरण्यगर्भो भगवान् परमेष्ठी ह्यचिन्तयत् ॥ $66_7$ ॥

तस्य रोषात् समुत्पन्नः[1]) पुरुषोऽर्कसमद्युतिः ।
अर्धनारीनरवपुस्तेजसा ज्वलनोपमः ॥ 67 ॥

सर्वं तेजोमयं जातमादित्यसमतेजसम् ।
विभजात्मानमित्युक्त्वा तत्रैवान्तरधीयत ॥ $67_1$ ॥

एवमुक्त्वा[1]) द्विधा भूतः पृथक् स्त्री, पुरुषः पृथक् ।
स एवैकादशार्धेन
स्थितोऽसौ परमेश्वरः ॥ 68 ॥

स चैकादशधा जज्ञे
अर्धमात्मानमीश्वरः ॥ 68 ॥

तेनोक्तास्ते महात्मानः सर्वं एव महात्मना ।
जगतो बहुलीभावमधिकृत्य हितैषिणः ॥ $68_1$ ॥
लोकवृत्तान्तहेतोर्हि प्रयतध्वमतन्द्रिताः ।
विश्वं विश्वस्य लोकस्य स्थापनाय हिताय च ॥ $68_2$ ॥
एवमुक्तास्तु रुरुदुर्दुद्रुवुश्च समन्ततः ।
रोदनाद् द्रवणाच्चैव रुद्रा नाम्नेति विश्रुताः ॥ $68_3$ ॥
यैर्हि व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ।
तेषामनुत्तरा लोके सर्वलोकपरायणाः ।
नैकनागायुतबला विक्रान्ताश्च गणेश्वराः ॥ $68_4$ ॥

तत्र या सा महाभागा शंकरस्यार्धकायिनी ।
प्रागुक्ता तु महादेवी,
स्त्री सैवेह सती ह्यभूत् ।
हिताय जगतां देवी
दक्षेणाराधिता पुरा ॥ 69 ॥

प्रागुक्ता तु[1]) मया तुभ्यं
स्त्री स्वयंभोर्मुखोद्गता ॥ 69 ॥

---

$66_3$ = Vā. 9.70.
$66_4$ = Vā. 9.71. 1) Vā. T. –जः ।
$66_5$ = Vā. 9.72.
$66_6$ = Vā. 9.73.
$66_7$ = Vā. 9.74.
67 = L. $70.324^b$, $325^a$; Vā. 9.75. 1) L. एष देवो महादेवः ।
$67_1$ = Vā. 9.76.
$68^a$ = L. $70.325^b$; Vā. $9.77^a$. 1) L. स्वेच्छयासौ ।
$68^b$ = L. $70.326^a$.
$68^b$ = Vā. $9.77^b$.
$68_1$ = Vā. 9.78.
$68_2$ = Vā. 9.79.
$68_3$ = Vā. 9.80.
$68_4$ = Vā. 9.81, $82^a$.
$69^a$ = L. $70.326^b$; Vā. $9.82^b$.
$69^{bc}$ = L. 70.327.
$69^b$ = Vā. $9.83^a$. 1) Vā. T. न ।

कायार्धं[1]) दक्षिणं तस्याः शुक्लं, वामं तथासितम् ।
आत्मानं विभजस्वेति प्रो[2]क्ता देवी स्वयंभुवा[3]) ॥ 70 ॥

सा तु प्रो[1]क्ता द्विधा भूता शुक्ला कृष्णा च वै द्विजाः ।
तस्या नामानि वक्ष्यामि शृणुध्वं सु[2]समाहिताः ॥ 71 ॥

स्वाहा स्वधा महाविद्या मेधा लक्ष्मीः सरस्वती ।
| सती दाक्षायणी विद्या इच्छा शक्तिः क्रियात्मिका ।
अपर्णा चैकपर्णा च तथा स्यादेक[1]पाटला ॥ 72 ॥

उमा हैमवती षष्ठी[1]) कल्याणी चैकमातृका[2]) ।
ख्यातिः प्रज्ञा महाभागा लोके गौरीति विश्रुता ॥ 73 ॥
गणाम्बिका महादेवी नन्दिनी जातवेदसी ।
सावित्री वरदा पुण्या पावनी लोकविश्रुता ।
आज्ञा आवेशनी कृष्णा तामसी सात्त्विकी शिवा ॥ $73_1$ ॥

विश्व[1]रूपमथार्यायाः[2]) पृथग् देहविभावनात् ।
| शृणु संक्षेपतस्तस्या यथावदनुपूर्वशः ।
प्रकृतिर्विकृ[3]ता रौद्री दुर्गा भद्रा प्रमाथिनी ॥ 74 ॥

कालरात्रिर्महामाया रेवती भूतनायिका ।
द्वापरान्तविकारेषु देव्या नामानि सुव्रताः[1]) ।
गौतमी कौशिकी आ[2]र्या चण्डी कात्यायनी सती ॥ 75 ॥

कुमारी यादवी देवी वरदा कृष्णपिङ्गला ।
बर्हिर्ध्वजा शूलधरा परमा[1]) ब्रह्मचारिणी ।
माहेन्द्रोपेन्द्रभगिनी | माहेन्द्री चेन्द्रभगिनी
दृषद्वत्येकशूलधृक् ॥ 76 ॥ | वृषकन्यैकवाससी ॥ 76 ॥
अपराजिता बहुभुजा प्रगल्भा सिंहवाहिनी ।
शुम्भादिदैत्यहन्त्री च | एकानंसा दैत्यहनी
महामहिषमर्दिनी । | माया महिषमर्दिनी ।
अमोघा विन्ध्यनिलया विक्रान्ता गणनायिका ॥ 77 ॥
देवी[1]नामविकाराणि इत्येतानि यथाक्रमम् ।
भद्रकाल्या मयो[2]क्तानि देव्या नामानि तत्त्वतः[3]) ॥ 78 ॥

---

70 = L. 70.328; Vā. 9.83b, 84a. 1) L. –र्थं । 2) Vā. सो– । 3) L. देवेन शम्भुना ।
71 = L. 70.329; Vā. 9.84b, 85a. 1) L. सा तयो– । 2) L. शृण्वन्तु च ।
72 = L. 70.330, 331a; Vā. 9.85b, 86a = ac. 1) L. –था चैवैक–; Vā. –देव ।
73 = L. 70.331b, 332a; Vā. 9.86b, 87a. 1) L. चैव । 2) Vā. चैव नामतः ।
| $73_1$ = L.332b, 333b, 334a.
74 = L. 70.333a, 334b = ac; Vā. 9.87b, 88. 1) L. एक– । 2) L. –मथैतस्याः । 3) Vā. –र्निय– ।
75 = L. 70.335, 336a; Vā. 9.89, 90a. 1) L. –न्तविभागे च नामानीमानि सुव्रताः; Vā. –नि मे शृणु । 2) L. चा– ।
76ab = L. 79.336b, 337a; Vā. 9.90b, 91a. 1) Vā. –म– ।
76c = L. 70.337b. | 76c = Vā. 9.91b.
77a = L. 70.338a; Vā. 9.92a.
77b = L. 70.338b. | 77b = Vā. 9.92b.
77c = L. 70.339a; Vā. 9.93a.
78 = L. 70.339b, 340a; Vā. 9.93b, 94a. 1) L. –व्या । 2) Vā. –स्यात्तवो– । 3) L. सम्यक्फलप्रदानि च ।

ये पठन्ति नरास्तेषां विद्यते न पराभवः[1]) ।
अरण्ये पर्वते[2]) वापि पुरे वापि गृहेऽपि वा[3]); ॥ 79 ॥
रक्षामेतां प्रयुञ्जीत जले वापि[1]) स्थलेऽपि वा ।
व्याघ्रकुम्भीर[2]चौरेभ्यो भूत[3]स्थाने विशेषतः ॥ 80 ॥
आधिष्व[1]पि च सर्वासु देव्या नामानि कीर्तयेत्, ।
अर्भ[2]कग्रहभूतैश्च पूतनामातृभिः सदा[3]) ॥ 81 ॥
अभ्यर्दितानां बालानां रक्षामेतां प्रयोजयेत् ।
महादेवी कुले[1]) द्वे तु प्रज्ञा श्रीश्च प्रकीर्तिते[2]), ।
आभ्यां देवीसहस्राणि, यैर्व्याप्तमखिलं जगत् ॥ 82 ॥

Ch. 8. Śl. 65–741. | Ch. 7. Śl. 67–614a.

सो[1]ऽसृजद् व्यवसायं तु धर्मं भूतसुखावहम् ।
संकल्पं चैव कल्पादौ जज्ञिरेऽव्यक्तयोनितः ॥ $82_1$ ॥
मानसश्च रुचिर्नाम विज्ञेयो ब्रह्मणः सुतः, ।
प्राणात् स्वादसृजद्दक्षं चक्षुर्भ्यां च मरीचिनम् ॥ $82_2$ ॥
भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः ।
शिरसोऽङ्गिरसं चैव श्रोत्रादत्रिं त[1]थैव च ॥ $83_3$ ॥
पुलस्त्यं च तथोदानाद् व्यानाच्च पुलहं पुनः ।
समानजं वशिष्ठं तु, अपानान्निर्ममे क्रतुम्, ॥ $82_4$ ॥
अभिमानात्मकं भद्रं निर्ममे नीललोहितम्, ।
इत्येते ब्रह्मणः पुत्राः प्राणजा द्वादश स्मृताः ॥ $82_5$ ॥
इत्येते मानसाः पुत्रा विज्ञेया ब्रह्मणः सुताः ।
भृग्वादयस्तु ये सृष्टा नवैते ब्रह्मवादिनः ॥ $82_6$ ॥
गृहमेधि[1]पुराणास्ते, धर्मस्तैः प्राक् प्रवर्तितः ।
द्वादशैते प्रवर्तन्ते सह रुद्रेण वै प्रजाः ॥ $82_7$ ॥
ऋभुः सनत्कुमारस्तु द्वावेतावूर्ध्वरेतसौ ।
पूर्वोत्पन्नौ पुरा तेभ्यः सर्वेषामपि पूर्वजौ ॥ $82_8$ ॥
व्यतीते प्रथमे कल्पे पुराणे लोकसाधकौ ।
वैराजे तावुभौ लोके तेजः संक्षिप्य चास्थितौ ॥ $82_9$ ॥
तावुभौ योगधर्माणावारोप्यात्मानमात्मनि ।
प्रजाधर्मं च कामं च वर्तयेतां महौजसौ ॥ $82_{10}$ ॥

79 = L. 70.340[b], 341[a]; Vs. 9.94[b], 95[a]. 1) L. न च पातकम् । 2) Vs. प्रान्तरे । 3) L. वाप्यथवा गृहे ।
80 = L. 70.341[b], 342[a]; Vs. 9.95[b], 96[a]. 1) L. वाथ । 2) L. –क्मीन– । 3) L. भय– ।
81 = L. 70.342[b], 343[a]; Vs. 9.96[b], 97[a]. 1) L. आपत्स्व– । 2) L. आर्य– । 3) L. –भिस्तथा ।
82 = L. 70.343[b], 344; Vs. 9.97[b], 98[a]. 1) L. कले । 2) Vs. –कीर्त्यते ।

$82_1$ = Vs. 9.99. 1) Vs. T. सा ।
$82_2$ = Vs. 9.100.
$82_3$ = Vs. 9.101. 1) Vs. T. –त्रिस्त– ।
$82_4$ = Vs. 9.102.
$82_5$ = Vs. 9.103.
$82_6$ = Vs. 9.104.
$82_7$ = Vs. 9.105. 1) Vs. T. –धिनः ।
$82_8$ = Vs. 9.106.
$82_9$ = Vs. 9.107.
$82_{10}$ = Vs. 9.108.

Ch. 3. Śl. 74 15–74 27.

यथोत्पन्नस्तथैवेह कुमार इति चोच्यते, ।
तस्मात् सनत्कुमारोऽयमिति नामास्य कीर्तितम् ॥ $82_{11}$ ॥
तेषां द्वादश ते वंशा दिव्या देवगुणान्विताः ।
क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः ॥ $82_{12}$ ॥
इत्येष करणोद्भूतो लोकान् स्रष्टुः[1]) स्वयंभुवः ।
महदादिविशेषान्तो विकारः प्रकृतेः स्वयम् ॥ $82_{13}$ ॥
चन्द्रसूर्यप्रभालोको ग्रहनक्षत्रमण्डितः ।
नदीभिश्च समुद्रैश्च पर्वतैश्च समावृतः ॥ $82_{14}$ ॥
पुरैश्च विविधाकारैः प्रीतैर्जनपदैस्तथा ।
तस्मिन् ब्रह्मवनेऽव्यक्ते ब्रह्मा चरति शर्वरीम् ॥ $82_{15}$ ॥
अव्यक्तबीजप्रभवस्तस्यैवानुग्रहोत्थितः ।
बुद्धिस्कन्धमयश्चैव इन्द्रियाङ्कुरकोटरः ॥ $82_{16}$ ॥
महाभूतप्रशाखश्च विशेषैः पत्रवांस्तथा ।
धर्माधर्मसुपुष्पस्तु सुखदुःखफलोदयः ॥ $82_{17}$ ॥
आजीवः सर्वभूतानामयं वृक्षः सनातनः ।
एतद् ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य ह ॥ $82_{18}$ ॥
अव्यक्तं कारणं यत्तु, नित्यं सदसदात्मकम् ।
इत्येषोऽनुग्रहः सर्गो ब्रह्मणः प्राकृतस्तु यः ॥ $82_{19}$ ॥
मुख्यादयस्तु षट् सर्गा वैकृता बुद्धिपूर्वकाः ।
त्रैकाले समवर्तन्त ब्रह्मणस्तेऽभिमानिनः ॥ $82_{20}$ ॥
सर्गाः परस्परस्याथ कारणं ते बुधैः स्मृताः ।
दिव्यौ सुपर्णौ सयुज्यौ सशाखौ पटविद्रुमौ, ।
एकस्तु यो द्रुमं वेत्ति नान्यः सर्वात्मनस्ततः ॥ $82_{21}$ ॥
द्यौर्मूर्धानं यस्य विप्राः स्तुवन्ति, खं नाभिर्वै चन्द्रसूर्यौ च नेत्रे, ।
दिशः श्रोत्रे चरणौ चास्य भूमिः सोऽचिन्त्यात्मा सर्वभूतप्रसूतिः, ॥ $82_{22}$ ॥
वक्त्राद् यस्य ब्राह्मणाः संप्रसूता यद्वक्षस्तः क्षत्रियाः पूर्वभागे, ।
वैश्याश्चोर्वो[1]र्यस्य पद्भ्यां च शूद्राः, सर्वे वर्णा गात्रतः संप्रसूताः ॥ $82_{23}$ ॥
महेश्वरः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डाज्जज्ञे पुनर्ब्रह्मा, येन लोकाः कृतास्त्विमे ॥ $82_{24}$ ॥

---

$82_{11}$ = Vā. 9.109.
$82_{12}$ = Vā. 9.110.
$82_{13}$ = Vā. 9.111. 1) Vā. T. –स्रष्टुं ।
$82_{14}$ = Vā. 9.112.
$82_{15}$ = Vā. 9.113.
$82_{16}$ = Vā. 9.114.
$82_{17}$ = Vā. 9.115.
$82_{18}$ = Vā. 9.116.
$82_{19}$ = Vā. 9.117.
$82_{20}$ = Vā. 9.118.
$82_{21}$ = Vā. 9.119.
$82_{22}$ = Vā. 9.120.
$82_{23}$ = Vā. 9.121. 1) Vā. T. –श्रोरो– ।
$82_{24}$ = Vā. 9.122.

## सप्तमोऽध्यायः

( Bḍ. I. 9.1—92; Kū. 8.1—28; L. 70.260b—324; Vā. 10.1—67. )

सूत उवाच :

[ रुद्रं धर्मं मनश्चै[1]व रुचिं चैवाकूतिं तथा, ।
पञ्च कर्तॄन् हि स तदा मनसा व्यसृजत् प्रभुः, ॥ $1_1$ ॥
एते महाभुजाः सर्वे प्रजानां स्थितिहेतवः ।
ओषधीः प्रतिसंधत्ते रुद्रः क्षीणायुषः[1]) पुनः, ॥ $1_2$ ॥
प्राप्तौषधिफलैर्देवः सम्यगिष्टः फलार्थिभिः ।
त्रिभिरेव कपालैस्तु त्र्यम्बकैरोषधी[1]क्षये ॥ $1_3$ ॥
इ[1]ज्यते मुनिभिर्य[2]स्मात् तस्मात् त्र्यम्बक उच्यते ।
गायत्री चैव त्रिष्टुप् च जगती चैव ताः स्मृताः ॥ $1_4$ ॥
अम्बिका नाम या प्रोक्ता योनयः सवनस्पतेः, ।
ताभिरेकत्वभूताभिस्त्रिविधाभिः स्ववीर्यतः ॥ $1_5$ ॥
त्रिसाधनः पुरोडाशस्त्रिकपालस्ततः स्मृतः, ।
त्र्यम्बकः स पुरोडाशस्तेनेह त्र्यम्बकः स्मृतः ॥ $1_6$ ॥
धत्ते धर्मं प्रजाः सर्वा, मनोज्ञानकरं स्मृतम्[1]) ।
आकूतिः परमं[2]) रूपं, रुचिः श्रद्धाकरः स्मृतः ॥ $1_7$ ॥
एवमेते प्रजापालाः प्रजानां स्थितिहेतवः ।
अथास्य सृजतः सर्गं प्रजानां परिवृद्धये ॥ $1_8$ ॥

एवं भूतानि सृष्टानि
स्थावराणि चराणि च ।
यदास्य ताः प्रजाः सृष्टा
न व्यवर्धन्त धीमतः[1]), ॥ 1 ॥

एवं भूतेषु लोकेषु
ब्रह्मणा लोककर्तृणा ।
यदा ता न व्यवर्धन्त[1])
प्रजाः केनापि हेतुना, ॥ 1 ॥

तमोमात्रावृतो ब्रह्मा तदा शोकेन[1]) दुःखितः ।
ततः स विदधे बुद्धिमर्थनिश्चयगामिनीम् ॥ 2 ॥
अथात्मनि समद्रा[1]क्षीत् तमोमात्रां नियामिकाम्[2]) ।
रजः[3]) सत्त्वं परित्यज्य[4]) वर्तमानं स्व[5]धर्मतः[6]) ॥ 3 ॥

---

$1_1$ = Bḍ. I. 9.1. 1) Bḍ.2 मनुं चै– ।
$1_2$ = Bḍ. I. 9.2. 1) Bḍ.1 –णः पुनः ।
$1_3$ = Bḍ. I. 9.3. 1) Bḍ.2 –कैः शेषवि– ।
$1_4$ = Bḍ. I. 9.4. 1) Bḍ.2 पू– । 2) Bḍ.2 भगवान् य– ।
$1_5$ = Bḍ. I. 9.5.
$1_6$ = Bḍ. I. 9.6.
$1_7$ = Bḍ. I. 9.7. 1) Bḍ.2 सतो ज्ञानकरः स्मृतः । 2) Bḍ.1 सुरुचे ।
$1_8$ = Bḍ. I. 9.8.

1 = Kū. 8.1, 2a. cfr. L. 70.260b, 261a. 1) L. सत्तमाः ।

1 = Bḍ. I. 9.9a = b; Vā. 10.1. 1) Bḍ. न व्यवर्धन्त ( Bḍ.2 विवर्धन्ति ) ताः सृष्टाः; Vā. प्रवर्तन्ते ।

2 = Bḍ. I. 9.b = b; Kū. 8.2b, 3; L. 70.261b, 262a; Vā. 10.2. 1) Kū. तदाऽशोचत; Vā. प्रभृति ।

3 = Bḍ. I. 9.10; Kū. 8.4; L. 70.262b, 263a; Vā. 10.3. 1) Vā. –द्रा– । 2) Bḍ.1 –त्रां तु चारिणीम् ; Bḍ.2 –त्रानु-चारिणम् । 3) Vā. राज– । 4) Kū. च संवृत्तं; Vā. पराजित्य । 5) Vā. स– । 6) Bḍ. –कर्मतः ।

तत: स[1]) तेन दु:खेन शोकं[2]) चक्रे जगत्पति: ।
तमश्च[3]) व्यनुदत् पश्चा[4]द्रजस्तमस[5]मावृणोत्[6]) ॥ 4 ॥
तत्तमः प्रतिनुत्तं[1]) वै मिथुनं समजायत[2]) ।
अधर्मस्त[3]मसो[4]) जज्ञे[5]), हिंसा शोकाद[6]जायत[7]) ॥ 5 ॥
ततस्तस्मिन् समुद्भूते मिथुने दारुणा[1]त्मके[2]) ।
तत: स[3]) भगवानासीत् प्रीति[4]श्चैन[5]मशिश्रियत्[6]) ॥ 6 ॥

---

[ एवं प्रीतात्मनस्तस्य स्वदेहार्धाद् वि[1]नि:सृता ।
नारी परमकल्याणी सर्वभूतमनोहरा ॥ $6_1$ ॥
सा हि कामात्मना सृष्टा प्रकृतेः सोम[1]रूपिणी ।
शतरूपेति सा प्रोक्ता, सा प्रोक्तैव पुनः पुनः ॥ $6_2$ ॥
ततः प्रजाः समुद्भूता यथा प्रोक्ता मया पुरा ।
प्रक्रियायां यथा तुभ्यं त्रेतामध्ये महात्मनः ॥ $6_3$ ॥
यदा प्रजास्तु ताः सृष्टा न व्यवर्धन्त धीमतः, ।
ततोऽन्यान् मानसान् पुत्रानात्मनः सदृशोऽसृजत् ॥ $6_4$ ॥
भृग्वङ्गिरोमरीचींश्च पुलस्त्यं पुलहं क्रतुम् ।
दक्षमत्रिं वसिष्ठं च निर्ममे मानसान् सुतान्[1]) ॥ $6_5$ ॥
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः. ।
ब्रह्मा यतात्मकानां तु सर्वेषामात्मयोनिनाम् ॥ $6_6$ ॥
ततोऽसृजत् पुनर्ब्रह्मा धर्मं भूतसुखावहम् ।
प्रजापतिं रुचिं चैव पूर्वेषामेव पूर्वजो ॥ $6_7$ ॥
बुद्धितः ससृजे धर्मं सर्वभूतसुखावहम्, ।
मनसस्तु रुचिर्नाम जज्ञे योऽव्यक्तजन्मनः, ॥ $6_8$ ॥
भृगुस्तु[1]) हृदयाज्जज्ञे ऋषिः सलिलयोनिनः ।
प्राणाद् दक्षं सृजन् ब्रह्मा, चक्षुर्भ्यां तु मरीचिनम्, ॥ $6_9$ ॥

Cp. Cū. Śl. $66^b$—$66.3^a$.

---

4 = Bḍ. I. 9.11; Kū. $8.5^a = b$; L. $70.263^b$, $264^a$; Vā. 10.4. 1) Vā. तप्यते । 2) Bḍ.1 शुचं; Bḍ.2 स्तुवं; L. दुःखं । 3) Kū. –मस्तु । 4) Vā. तस्मा– । 5) Bḍ. –द्रजसा तु स–; Kū. –द्रजः सत्त्वेन; L. –द्रजः सत्त्वं त– । 6) Kū. संयुतः; V. –वृतः ।

5 = Bḍ. I. 9.12; Kū. $8.5^b$, $6^a$; L. $70.264^b$, $265^a$; Vā. 10.5. 1) Kū. L. –नुन्नं । 2) Bḍ. संप्रसूयत; Vā. स व्यजायत । 3) Bḍ. Kū. –र्मा–; Vā. –र्मांच् । 4) Bḍ. चरणाद ; Kū. –चरणो; Vā. चरनाज् । 5) Bḍ. तस्य; Kū. विप्रा । 6) Bḍ. –को व्य– । 7) Kū. –सा चाशुभलक्षणा ।

6 = Bḍ. I. 9.13; L. $70.265^b$, $266^a$; Vā. 10.6. 1) Bḍ. वरणा–; Vā. चरणा– । 2) Vā. –त्मनि । 3) Bḍ.2 शतधुर् ; L. गतासुर् ; Vā. –तश्च । 4) Bḍ. Vā. –त– । 5) Bḍ.1 –श्चैत–; Vā. –श्चैव– । 6) Bḍ. –नं हि शिश्रिये ।

---

$6_1$ = Bḍ. I. 9.14. 1) Bḍ.2 –हाद् बुद्धि– ।
$6_2$ = Bḍ. I. 9.15. 1) Bḍ.1 सा सु– ।
$6_3$ = Bḍ. I. 9.16.
$6_4$ = Bḍ. I. 9.17.
$6_5$ = Bḍ. I. 9.18. 1) Bḍ.2 नव ।
$6_6$ = Bḍ. I. 9.19.
$6_7$ = Bḍ. I. 9.20.
$6_8$ = Bḍ. I. 9.21.
$6_9$ = Bḍ. I. 9.22. 1) Bḍ.2 –गुः स ।

Cp. Chap. 6. Śl. 821–827.

[अभिमानात्मकं रुद्रं निर्ममे नीललोहितम् ।
शिरसोऽङ्गिरसं चैव श्रोत्रादत्रिं तथैव च ॥ $6_{10}$ ॥
पुलस्त्यं च तथोदानाद् व्यानाच्च पुलहं पुनः ।
समानजो वसिष्ठश्च ह्यपानान्निर्ममे क्रतुम् ॥ $6_{11}$ ॥
इत्येते ब्रह्मणः पुत्राः प्रजादौ द्वादश स्मृताः ।
धर्मस्तेषां प्रथमजो देवतानां स्मृतस्तु वै[1]) ॥ $6_{12}$ ॥
भृग्वादयस्तु ये सृष्टा[1]स्ते वै ब्रह्मर्षयः स्मृताः, ।
गृहमेधि[2]पुराणास्ते, धर्मस्तैः प्राक्प्रवर्तितः ॥ $6_{13}$ ॥
द्वादशैते प्रसूयन्ते प्रजाः कल्पे पुनः पुनः ।
तेषां द्वादश ते वंशा दिव्या देवग[1]णान्विताः ॥ $6_{14}$ ॥
क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः ।
यदा तैरिह सृष्टैस्तु धर्माद्यैश्च महर्षिभिः ॥ $6_{15}$ ॥
सृज्यमानाः प्रजाश्चैव न व्यवर्धन्त धीमतः, ।
तमोमात्रावृतः सोऽभूच्छोकप्रतिहतश्च वै ॥ $6_{16}$ ॥
यथावृतः स वै ब्रह्मा तमोमात्रा तु सा पुनः ।
पुत्राणां च तमोमात्रा अपरा निःसृताभवत्[1]) ॥ $6_{17}$ ॥
प्रतिस्रोतात्मकोऽधर्मो हिंसा चैवाशुभात्मिका ।
ततः प्रतिहते तस्य प्रतीते वरणात्मके ॥ $6_{18}$ ॥]

---

स्वां तनुं स ततो[1]) ब्रह्मा ता[2]मपोहत[3]) भास्वराम् ।
द्विधा कृत्वा[4]) स्वकं[5]) देहमर्धेन पुरुषोऽभवत्, ॥ 7 ॥
अर्धेन नारी, सा तस्य शतरूपा व्यजायत[1]) ।
प्रकृतिं[2]) भूतधात्रीं[3]) तां[4]) कामाद्[5]) वै सृष्टवान्[6]) प्रभुः[7]) ॥ 8 ॥
सा दिवं पृथिवीं चैव महिम्ना व्याप्य धिष्ठिता[1]) ।
ब्रह्मणः सा तनुः पूर्वा दिवमावृत्य तिष्ठति[2]), ॥ 9 ॥
या त्वर्धा[1]) सृज्यते[2]) नारी शतरूपा व्यजायत ।

---

$6_{10}$ = Bd. I. 9.23.
$6_{11}$ = Bd. I. 9.24.
$6_{12}$ = Bd. I. 9.25. 1) Bd.2 सः ।
$6_{13}$ = Bd. I. 9.26. 1) Bd.2 द्विष्टा– । 2) Bd.2 –मेधिनः ।
$6_{14}$ = Bd. I. 9.27. 1) Bd. T. –गु– ।
$6_{15}$ = Bd. I. 9.28.
$6_{16}$ = Bd. I. 9.29.
$6_{17}$ = Bd. I. 9.30.
$6_{18}$ = Bd. I. 9.31.

---

7 = Bd. I. 9.32; Kū. 8.6[b], 7[a]; L. 70.266[b], 267[a]; Vā. 10.7. 1) Bd. तदा । 2) Bd. स– । 3) Vā. –पो( पौ )हद– । 4) Kū. Vā. –धाकरोत् । 5) Kū. पुनर् ; Vā. स तं ।
8 = Bd. I. 9.33; Kū. 8.(7[b], 8[a]); L. 70.267[b], 268[a]; Vā. 10.8. 1) Kū. –री पुरुषो विराजमसृजत्प्रभुः । 2) Bd. –तिर् ; Vā. प्राकृतां । 3) Bd. –त्री । 4) Bd. सा । 5) Vā. –मान् । 6) Bd.1 सृजतः; Bd.2 सृज्यतं । 7) Bd. –मोः; Vā. विभुः; Kū. नारीं च शतरूपाख्यां योगिनीं ससृजे शुभाम् ।
9 = Bd. I. 9.34; Kū. 8.8[b] = a; L. 70.268[b], 269[a]; Vā. 10.9. 1) Bd.1 ह्युस्थिता; Kū. संस्थिता । 2) Bd. –तः ।
10 = Bd. I. 9.35; Kū. 8.10[a] = b; L. 70.269[b], 270[a]; Vā. 10.10. 1) L. –र्धाद् । 2) L. सृजतो; Vā. सृजते ।

Cp. PartII. Ch. I. Textgr. I. Śl. 11b—15.

सा देवी नियुतं तप्त्वा[3]) तपः परम[4]दुश्चरम् ॥ 10 ॥
भर्तारं दीप्तयशसं पुरुषं प्रत्य[1]पद्यत ।
स वै स्वायंभुवः पूर्वं पुरुषो मनुरुच्यते, ॥ 11 ॥
तस्यैक[1]सप्ततियुगं मन्वन्तरमिहोच्यते ।
लब्ध्वा तु[2]) पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ 12 ॥
तया स रमते सार्धं[1]), तस्मात् सा रतिरुच्यते ।
प्रथमः संप्रयोगः स[2]) कल्पादौ समवर्तत[3]) ॥ 13 ॥
विराजमसृजद् ब्रह्मा, सोऽभवत् पुरुषो विराट् ।
सम्राट् स[1]शतरूपस्तु[2]) वैराजस्तु[3]) मनुः स्मृतः ॥ 14 ॥
स वैराजः प्रजासर्गं ससर्ज[1]) पुरुषो मनुः ।
वैराजात् पुरुषाद्वीराच्छ[2]तरूपा व्यजायत[3]) ॥ 15 ॥
प्रियव्रतोत्तानपादौ पुत्रौ पुत्रवतां वरौ[1]) ।
कन्ये द्वे च[2]) महाभागे[3]), याभ्यां जाता इमाः प्रजाः[4]), ॥ 16 ॥
देवी नाम्ना[1]) तथाकूतिः प्रसूतिश्चैव ते शुभे[2]) ।
स्वायंभुवः प्रसूतिं तु दक्षाय व्यसृजत्[3]) प्रभुः[4]) ॥ 17 ॥
प्राणो दक्षस्तु वि[1]ज्ञेयः, संकल्पो मनुरुच्यते ।
रुचेः प्रजापतेश्चैव[2]) आकूतिं प्रत्यपादयत्[3]) ॥ 18 ॥
आकूत्यां[1]) मिथुनं जज्ञे मानसस्य रुचेः शुभम् ।
यज्ञश्च दक्षिणा चैव यमलौ[2]) सं[3]बभूवतुः[4]) ॥ 19 ॥
यज्ञस्य दक्षिणायां तु[1]) पुत्रा द्वादश जज्ञिरे ।

---

3) Kū. –वी शतरूपाख्या । 4) Kū. कृत्वा सु– ।

11 = Bḍ. I. 9.36; Kū. 8.10b = a; L. 70.270b, 271a; Vā. 10.11. 1) Kū. –सं मनुमेवान्व– ।

12 = Bḍ. I. 9.37; L. 70.271b, 272a; Vā. 10.12. 1) L. –स्यैव । 2) L. क्षेमे स ।

13 = Bḍ. I. 9.38; L. 70.272b, 273a; Vā. 10.13. 1) L. –या सार्धं स रमते । 2) L. –योगात्मा । 3) L. –मपश्यत ।

14 = Bḍ. I. 9.39; L. 70.273b, 274a; Vā. 10.14. 1) L. च । 2) L. –पा वै; Vā. स सम्राट् सा सरूपात्तु । 3) L. –जः स ।

15 = Bḍ. I. 9.40; Kū. 8.(11a) = b; L. 70.274b, 275a; Vā. 10.15. 1) Vā. –र्गः स सर्गे । 2) Bḍ. –रौ श– । 3) Kū. तस्माच्च शतरूपा सा पुत्रद्वयमसूयत ।

16 = Bḍ. I. 9.41; Kū. 8.11b = a[Ib1]; L. 70.275b, 276a; Vā. 10.16. 1) L. –श्रौ द्वौ लोकसंमतौ । 2) Bḍ. सु– । 3) Kū. कन्याद्वयमनुत्तमन् । 4) Vā. –ताः प्रजास्त्विमाः ।

17 = Bḍ. I. 9.42; Kū. 8.(12) = b; L. 70.276b, 277a; Vā. 10.17. 1) L. नाम । 2) L. उभे । 3) L. प्रददौ । 4) Kū. तयोः प्रसूतिं दक्षाय मनुः कन्यां ददे पुनः ।

18 = Bḍ. I. 9.43a = b; Kū. 8.13a = b; L. 70.277b, 278a; Vā. 10.18. 1) L. –ज्ञ इति । 2) L. –तेः सोऽथ । 3) Kū. प्रजापतिरथाकूतिं मानसो जगृहे रुचिः ।

19 = Bḍ. I. 9.43b, 44a; Kū. 8.13bc; L. 70.278b, 279a; Vā. 10.19. 1) Kū. –त्या । 2) Kū. याम्यां–; Vā. –कौ । 3) Bḍ. तौ । 4) Kū. संवर्धितं जगत् ।

20 = Bḍ. I. 9.44b, 45a; Kū. 8.14; L. 70.279b, 280a; Vā. 10.20. 1) Bḍ. Kū. Vā. च ।

यामा इति समाख्याता देवाः स्वायंभुवेऽन्तरे ॥ 20 ॥

यमस्य[1]) पुत्रा यज्ञस्य, तस्माद् यामास्तु[2]) ते स्मृताः ।
अजिता[3]श्चैव शुक्रा[4]श्च गणौ द्वौ[5]) ब्रह्मणः स्मृतौ[6]) ॥ 21 ॥

यामाः पूर्वं परिक्रान्ता येषां[1]) संज्ञा[2]) दिवौकसः ।
स्वायम्भुवसुतायां तु प्रसूत्यां लोकमातरः ॥ 22 ॥

प्रसूत्यां च तथा दक्ष-
श्चतस्रो विंशतिं तथा ।
ससर्ज कन्या नामानि
तासां सम्यङ् निबोधत ॥ 23 ॥

तस्यां कन्याश्चतुर्विंशद्
दक्षस्त्वजनयत् प्रभुः ।
सर्वास्ताश्च महाभागाः
सर्वाः कमललोचनाः, ॥ 23 ॥
योगपत्न्य[1]श्च ताः सर्वाः,
सर्वास्ता योगमातरः, ।
सर्वाश्च ब्रह्मवादिन्यः,
सर्वा विश्वस्य मातरः ॥ $23_1$ ॥

श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा[1]) ।
बुद्धिर्लज्जा वपुः[2]) शान्तिः सिद्धिः कीर्तिस्त्रयोदशी[3]) ॥ 24 ॥

पत्न्यर्थं[1]) प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः[2]) ।
| द्वा[1]राण्येतानि चैवास्य[2]) विहितानि स्वयंभुवा ॥ 25 ॥

ताभ्यः[1]) शिष्टा यवीयस्य एकादश सुलोचनाः ।
ख्यातिः सत्यथ[2]) संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ 26 ॥

संनति[1]श्चान[2]सूया च ऊर्जा स्वाहा स्वधा तथा, ।

भृगुर्भवो मरीचिश्च
तथा चैवाङ्गिरा मुनिः ॥ 27 ॥
पुलस्त्यः पुलहश्चैव

तास्तदा[1]) प्रत्यपद्यन्त[2])
पुलस्त्ये महर्षयः ॥ 27 ॥
रुद्रो भृगुर्मरीचिश्च
अङ्गिराः पुलहः क्रतुः ।
पुलस्त्योऽत्रिर्वसिष्ठश्च

---

21 = Bḍ. I. $9.45^b$, $46^a$; L. $70.280^b$, $281^a$; Vā. 10.21. 1) L. पतस्य । 2) L. –माश्च । 3) L. –त– । 4) Bḍ.2 L. –क– । 5) Bḍ. द्वौ गणौ । 6) L. –णा कृतौ ।

22 = Bḍ. I. $9.46^b$, $47^a$; L. $70.281^b$, $282^a$; Vā. 10.22. 1) Vā. यतः । 2) L. –वँ प्रजाता ये तेऽभवंस्तु ।

23 = Kū. $8.15^{ab}$.

23 = Bḍ. I. $9.47^b$, $48^a$; L. $70.282^b$, $283^a$; Vā. 10.23.
$23_1$ = Bḍ. I. $9.48^b$, $49^a$; L. $70.283^b$, $284^a$; Vā. 10.24. 1) L. भोगवत्य– ।

24 = Bḍ. I. $9.49^b$, $50^a$; Kū. $8.15^c$, $16^a$; L. $70.284^b$, $285^a$; Vā. 10.25. 1) Bḍ. तथा क्रिया । 2) Bḍ. –सुः । 3) Bḍ. –श ।

$25^a$ = Bḍ. I. $9.50^b$; Kū. $8.16^b$; L. $70.285^b$; Vā. $10.26^a$. 1) Vā. –र्थे । 2) Kū. शुभाः ।
| $25^b$ = Bḍ. I. $9.51^a$; L. $70.286^a$; Vā. $10.26^b$. 1) L. दा– । 2) L. वै तस्य ।

26 = Bḍ. I. $9.51^b$, $52^a$; Kū. $8.17^{ab}$; L. $70.286^b$, $287^a$; Vā. 10.27. 1) Bḍ. यान्याः । 2) Bḍ. सती ख्यातिश्च; L. सती ख्यात्यथ ।

$27^a$ = Bḍ. I. $9.52^b$; Kū. $8.17^c$; L. $70.287^b$; Vā. $10.28^a$. 1) Kū. L. –तति– । 2) L. –नु– ।

$27^b$ = Kū. $8.18^a$.

$27^b$ = Bḍ. I. $9.53^a$; L. $70.288^a$; Vā. $10.28^b$. 1) L. –थाः; Vā. –ताः । 2) Bḍ. –गृह्णन्त ।

28 = Kū. $8.18^{bc}$.

28 = Bḍ. I. $9.53^b$, $54^a$; L. $70.288^b$, $289^a$; Vā. 10.29.

क्रतुः परमधर्मवित् ।
अत्रिर्वसिष्ठो वह्निश्च
पितरश्च यथाक्रमम् ॥ 28 ॥
ख्यात्याद्या जगृहुः कन्या
मुनयो ज्ञानसत्तमाः ॥ 29 ॥

पितरोऽग्निस्तथैव च ॥ 28 ॥

सतीं भवाय प्रायच्छत्
ख्यातिं च भृगवे तथा[1]) ।
मरीचये च[2]) संभूतिं
स्मृतिमङ्गिरसे ददौ ॥ 29 ॥

प्रीतिं चैव पुलस्त्याय क्षमां वै पुलहाय च ।
क्रतवे संन[1]तिं नाम अन[2]सूयां तथाऽत्रये ॥ 30 ॥
ऊर्जां ददौ वसिष्ठाय स्वाहां चैवा[1]ग्नये ददौ ।
स्वधां चैव पितृभ्यस्तु; तास्वपत्यानि बोधत[2]) ॥ 31 ॥
एताः सर्वा[1]) महाभागाः प्रजास्त्व[2]नुसृताः[3]) स्थिताः ।
मन्वन्तरेषु सर्वेषु यावदाभूतसंप्लवम् ॥ 32 ॥
श्रद्धा कामं विजज्ञे वै[1]), दर्पो लक्ष्मीसुतः स्मृतः ।
धृत्यास्तु नियमः पुत्रस्तुष्ट्याः संतोष उच्यते[2]) ॥ 33 ॥
पुष्ट्या लोभः[1]) सुतश्चापि, मेधापुत्रः श्रुत[2]स्तथा, ।
क्रियायामभवत् पुत्रो[3]) दण्डः समय[4]) एव च ॥ 34 ॥
बुद्धेर्बो[1]धः सुतश्चापि[2]) अप्रमादश्च तावुभौ[3]), ।
लज्जाया[4]) विनयः पुत्रो, व्यवसायो वपोः[5]) सुतः[6]) ॥ 35 ॥
क्षेमः शान्ति[1]सुतश्चापि, सुखं[2]) सिद्धेर्व्य[3]जायत ।
यशः कीर्तेः[4]) सुतश्चापि[5]) इत्येते धर्मसूनवः ॥ 36 ॥
कामस्य हर्षः पुत्रो वै[1]) देव्यां *प्रीत्यां*[2]) व्य[3]जायत ।
इत्येष वै सुखो[4]दर्कः सर्गो धर्मस्य कीर्तितः[5]) ॥ 37 ॥
जज्ञे हिंसा त्वधर्माद्वै निकृतिं[1]) चानृतं[2]) सुतम्[3]) ।
निकृत्यनृतयोर्ज[4]ज्ञे भयं नरक[5]) एव च ॥ 38 ॥

---

29 = Kū. 8.18$^{d}$.

29 = Bḍ. I. 9.54$^{b}$, 55$^{a}$; L. 70.289$^{b}$, 290$^{a}$; Vā. 10.30. 1) L. –तः । 2) Bḍ.1 तु ।

30 = Bḍ. I. 9.55$^{b}$, 56$^{a}$; L. 70.290$^{b}$, 291$^{a}$; Vā. 10.31. 1) Bḍ.1 –त– । 2) L. –नु– ।

31 = Bḍ. I. 9.56$^{b}$, 57$^{a}$; L. 70.291$^{b}$, 292$^{a}$; Vā. 10.32. 1) L. अप्य–; Vā. वै ह्य– । 2) Bḍ. मे शृणु; Vā. वक्ष्यते ।

32 = Bḍ. I. 9.57$^{b}$, 58$^{a}$; L. 70.292$^{b}$, 293$^{a}$; Vā. 10.33. 1) Vā. –ते सर्वे । 2) L. –जास्व– । 3) Vā. प्राज्ञाः स्वानुष्ठिताः ।

33 = Bḍ. I. 9.58$^{b}$, 59$^{a}$; Kū. 8.19; L. 70.293$^{b}$, 294$^{a}$; Vā. 10.34. 1) Bḍ. प्रजज्ञेऽथ; Kū. –द्धाया आत्मजः कामो । 2) L. एव च ।

34 = Bḍ. I. 9.59$^{b}$, 60$^{a}$; Kū. 8.20; L. 70.294$^{b}$, 295$^{a}$; Vā. 10.35. 1) Bḍ. Kū. T. Vā. लाभः । 2) Kū. श्रम– । 3) Bḍ. –यास्तनयौ प्रोक्तौ; Kū. T. –याश्चाभवत् पुत्रो; Vā. –यास्तु नयः प्रोक्तो । 4) Bḍ. दमश्च शम; Kū. –ण्डश्च नय ।

35 = Bḍ. I. 9.60$^{b}$, 61$^{a}$; Kū. 8.21; L. 70.295$^{b}$, 296$^{a}$; Vā. 10.36. 1) Kū. –द्ध्या बो–; L. द्ध्यां बो– । 2) Kū. L. –स्तत्वद्वत् । 3) Kū. L. प्रमादोऽप्युपजायत । 4) L. –यां । 5) Bḍ.1 L. वसोः; Vā. वयोः । 6) Kū. वपुषो व्यवसायकः ।

36 = Bḍ. I. 9.61$^{b}$, 62$^{a}$; Kū. 8.22; L. 70.296$^{b}$, 297$^{a}$; Vā. 10.37. 1) Bḍ. –न्तेः । 2) Kū. T. सिद्धः । 3) Kū. –द्धेर– । 4) Kū. L. –र्ति– । 5) Kū. –स्तत्वद्वद् ।

37 = Bḍ. I. 9.62$^{b}$, 63$^{a}$; Kū. 8.23; L. 70.297$^{b}$, 298$^{a}$; Vā. 10.38. 1) Bḍ. –स्य तु सुतो हर्षो; Kū. T. –त्रोऽभूद् । 2) Bḍ. सिद्धयां; Vā. रत्यां । 3) Kū. T. देवानन्दोऽप्य–; V. वेदानन्दी ह्य– । 4) L. सुतो– । 5) Bḍ. सात्त्विकः ।

38 = Bḍ. I. 9.63$^{b}$, 64$^{a}$; Kū. 8.24; L. 70.298b, 299$^{a}$; Vā. 10.39. 1) Vā. –तिश् ।

माया च वेदना चापि[1]) मिथुनद्वय[2]मेतयोः ।
भयाज्ज[3]ज्ञेऽथ वै[4]) माया मृत्युं भूतापहारिणम् ॥ 39 ॥

वेदनायाः[1]) सुतश्चा[2]पि दुःखं जज्ञे[3])ऽथ[4]) रौरवात्[5]) ।
मृत्योर्व्याधि-जरा-शोक-क्रोधासूयाश्च[6]) . जज्ञिरे ॥ 40 ॥

दुःखोत्तराः[1]) स्मृ[2]ता ह्येते सर्वे चाधर्मलक्षणाः ।
नैषां[3]) भार्यास्ति[4]) पुत्रो वा[5]), सर्वे ह्यनिधनाः स्मृताः[6]) ॥ 41 ॥

इत्येष तामसः सर्गो जज्ञे धर्मनियामकः ।
संक्षेपेण मया प्रोक्ता,
विसृष्टिर्मुनिपुंगवाः ॥ 4: ॥

| प्रजाः सृजेति व्यादिष्टो
| ब्रह्मणा नीललोहितः ॥ 42 ॥

सोऽभिध्याय सतीं भार्यां निर्ममे ह्या[1]त्मसंभवान् ।
नाधिकांश्च च हीनांस्तान् मानसानात्मनः[2]) समान् ॥ 43 ॥

सहस्रं हि[1]) सहस्राणामसृ[2]जत् कृत्तिवाससाम्[3]), ।
तुल्यानेवा[4]त्मनः[5]) सर्वान्[6]) रूपतेजोबलश्रुतैः ॥ 44 ॥

पिङ्गलान् स[1]निषङ्गांश्च सकपर्दान् वि[1]लोहितान् ।
विशिखान्[3]) हरि[4]केशांश्च दृष्टिघ्नांश्च[5]) कपालिनः ॥ 45 ॥

महा[1]रूपान् विरूपांश्च विश्वरूपांश्च[2]) रूपिणः ।
रथिनो व[3]र्मिणश्चैव चर्मिणश्च[4]) वरूथिनः ॥ 46 ॥

सहस्रशतबाहूंश्च दिव्यान्[1]) भौमान्तरीक्षगान् ।
स्थूलशीर्षानष्टदंष्ट्रान् द्विजिह्वांस्तु त्रि[2]लोचनान् ॥ 47 ॥

अन्नादान् पिशितादां[1]श्च आज्यपान् सोमपांस्तथा[2]) ।

---

2) Vā. –त्वान् । 3) Bḍ. च ते; Vā. उभौ । 4) Kū. T. –ज्ञतेस्तनयो ज–; L. –त्यां तु द्वयं ज– । 5) Kū. –कम् ।

39 = Bḍ. I. 9.64[b], 65[a]; Kū. 8.25; L. 70.299[b], 300[a]; Vā. 10.40. 1) Kū. चैव । 2) Kū. –नं स्विद– । 3) L. भूयो ज– । 4) Vā. सा ।

40 = Bḍ. I. 9.65[b], 66[a]; Kū. 8.26; L. 70.300[b], 301[a]; Vā. 10.41. 1) Bḍ. –यां; Kū. ना च । 2) Bḍ. Vā. ततश्चा–; Kū. सुतं चा– । 3) Bḍ. जज्ञे दुःखं । 4) Bḍ. तु; L. च । 5) L. –वः । 6) Kū. T. –धिर्जरा-शोकौ तृष्णा क्रोधश्च ; V. तृष्णा क्रोधाश्च ; Vā. –धिर्जरा शोकः क्रोधोऽसूया ; Bḍ. –या वि– ।

41 = Bḍ. I. 9.66[b], 67[a]; Kū. 8.27; L. 70.301[b], 302[a]; Vā. 10.42. 1) Bḍ.2 Vā. –खान्तराः । 2) L. सु– । 3) Bḍ.1 L. तेषां । 4) L. –र्यास्तु । 5) L. –त्राश्च । 6) Kū. –र्वे ते ह्यूर्ध्वरेतसः; L. ह्येतेऽपरिग्रहाः ।

42[a] = Bḍ. I. 9.67[b]; Kū. 8.28[a]; L. 70.302[b]; Vā. 10.43[a].

42[b] = Kū. 8.28[b]. | 42[b] = Bḍ. I. 9.68[a]; L. 70.303[a]; Vā. 10.43[b].

43 = Bḍ. I. 9.68[b], 69[a]; L. 70.303[b], 304[a]; Vā. 10.44. 1) Bḍ.1 चा–; Bḍ.2 त्वा– । 2) Bḍ. –ना ।

44 = Bḍ. I. 9.69[b], 70[a]; L. 70.304[b], 305[a]; Vā. 10.45. 1) Bḍ. च । 2) L. –णां सोऽसृ– । 3) Bḍ. L. –सः । 4) Vā. –त्याश्चैवा– । 5) Bḍ. –ना । 6) Vā. –र्वें ।

45 = Bḍ. I. 9.70[b], 71[a]; L. 70.305[b], 306[a]; Vā. 10.46. 1) Vā. सं– । 2) Bḍ. कपर्दी नील–; L. –र्दान्स– । 3) L. विशिष्टान् ; Vā. विवासान् । 4) Bḍ. हीन– । 5) Bḍ. –घ्नांस्तान् ।

46 = Bḍ. I. 9.71[b], 72[a]; L. 70.306[b], 307[a]; Vā. 10.47. 1) Vā. बहु– । 2) L. –पान्स्व– । 3) Bḍ.2 L. –नश्च– । 4) Bḍ. धन्विनोऽथ; L. वर्मिणश्च ।

47 = Bḍ. I. 9.72[b], 73[a]; L. 70.307[b], 308[a]; Vā. 10.48. 1) Bḍ. –व्य– । 2) L. –स्त्रांक्षि–; Vā. उद्वृत्तजिह्वांक्षि– ।

48[a] = Bḍ. I. 9.73[b]; L. 70.308[b]; Vā. 10.49[a]. 1) L. –नाशां– । 2) L. –पानापि ।

मीढुषोऽतिकपालांश्च
शितिकण्ठोर्ध्वरेतसः ॥ 48 ॥
हव्यादान् श्रुतधर्मांश्च
धर्मिणो ह्यथ वर्हिणः ।
आसीनान् धावतश्चैव
पञ्चभूतान् सहस्रशः ॥ 49 ॥
अध्यापिनोऽध्यायिनश्च
जपतो युञ्जतस्तथा ।
धूमवन्तो ज्वलन्तश्च
नदीमन्तोऽतिदीप्तिनः ॥ 50 ॥

मेढ्रोपांश्चातिकाया[1]श्च
शितिकण्ठोग्रमन्यवः[2]) ॥ 48 ॥
सोपासङ्गतलत्रां[1]श्च
धन्विनो ह्युपव[2]र्मिणः ।
आसीनान् धावत[3]श्चैव[4])
जृम्भतश्चाप्य[5]धिष्ठितान् ॥ 49 ॥
अध्यापिनोऽथ[1]) जपतो
युञ्जतो ध्यायतस्तथा ।
ज्वलतो वर्षतश्चैव
द्योतमानान् प्रधूपितान् ॥ 50 ॥

बु[1]द्धान् बुद्धतमां[2]श्चैव ब्रह्मिष्ठान्[3]) शुभदर्शनान्[4]) ।
नीलग्रीवान् सहस्राक्षान् सर्वांश्चाथ[5]) क्षपा[6]चरान्[7]) ॥ 51 ॥

अदृश्यान् सर्वभूतानां महायोगान् महौजसः ।
रुदतो द्रवतश्चैव एवं युक्तान्[1]) सहस्रशः ॥ 52 ॥

अयातयामानसृजद्[1]) रुद्रानेतान्[2]) सुरोत्तमान् ।
ब्रह्मा दृष्ट्वा[3]ब्रवीदेनं[4]) मा स्राक्षीरीदृशीः प्रजाः, ॥ 53 ॥

स्रष्टव्या ना[1]त्मनस्तुल्याः प्रजा नैवाधिकास्त्वया[2]) ! ।
अन्याः सृज त्वं[3]), भद्रं ते, प्रजा वै[4]) मृत्युसंयुताः, ॥ 54 ॥

नारप्स्यन्ते[1]) हि कर्माणि प्रजा निगतमृत्यवः ।
एवमुक्तोऽब्रवीदेनं नाहं मृत्युजरा[2]न्विताः ॥ 55 ॥

प्रजाः स्रक्ष्यामि, भद्रं ते, स्थितोऽहं, त्वं सृज प्रजाः[1]) ! ।
एते ये वै मया सृष्टा विरूपा नीललोहिताः ॥ 56 ॥

---

48[b] = L. 70.309[a].

49 = L. 70.309[b], 310[a].

50 = L. 70.310[b], 311[a].

48[b] = Bd. I. 9.74[a]; Vā. 10.49[b]. 1) Bd.1 अतिमेढ्रोग्रकायां–; Bd.2 प्रतिमेदोष्टकायां– । 2) Bd. –मन्युकान् ।

49 = Bd. I. 9.74[b], 75[a]; Vā. 10.50. 1) Bd.1 सनिषङ्ग-तनुत्रां– । 2) Bd.1 असिच–; Bd.2 असिव– । 3) Bd.2 पिलत– । 4) Bd. –श्चापि । 5) Bd.2 –म्मन्तश्चाथा–; Vā. –म्भिनश्चैव ।

50 = Bd. I. 9.75[b], 76[a]; Vā. 10.51. 1) Bd. अधीयाना–(नां)श्च ।

51 = Bd. I. 9.76[b], 77[a]; L. 70.311[b], 312[a]; Vā. 10.52. 1) L. वृ– । 2) L. बुद्धिमत– । 3) Bd.1 –ह्रस्वान् । 4) Bd.1 ब्रह्मदर्शिनः; Bd.2 Vā. V. ऋतदर्शनान् । 5) Bd. –श्चैव । 6) Bd.1 –मा– । 7) Bd. L. –करान् ।

52 = Bd. I. 9.77[b], 78[a]; L. 70.312[b], 313[a]; Vā. 10.53. 1) L. भ्रमन्तोऽभिद्रवन्तश्च प्लवन्तश्च ।

53 = Bd. I. 9.78[b], 79[a]; L. 70.313[b], 314[a]; Vā. 10.54. 1) Bd.1 –मान् सृजतं; Bd.2 –ता । 2) Bd.1 –द्रमेतान् ; Bd.2 –द्रेण तान् ; Vā. –द्ररूपान् । 3) Bd. दृष्ट्वा ब्रह्मा– । 4) Vā. –देतान् ।

54 = Bd. I. 9.79[b], 80[a]; L. 70.314[b], 315[a]; Vā. 10.55. 1) Bd. न स्रष्टव्या– । 2) Bd. –का तथा; L. –जा देव नमोऽस्तु ते । 3) Bd. –जस्व । 4) Bd. –वास्त्वं ।

55 = Bd. I. 9.80[b], 81[a]; L. 70.315[b], 316[a]; Vā. 10.56. 1) Bd. –रमन्ते । 2) Vā. –सम– ।

56 = Bd. I. 9.81[b], 82[a]; L. 70.316[b], 317[a]; Vā. 10.57. 1) Bd. प्रभो ।

सहस्राणां सहस्रं तु[1]), आत्मनो निःसृताः प्रजाः[2]), ।
एते देवा भविष्यन्ति रुद्रा नाम महाबलाः, ॥ 57 ।

पृथिव्यामन्तरिक्षे च रुद्रनाम्ना[1]) परि[2]श्रुताः[3]), ।
शत-रुद्रे[4]) समाम्नाता[5]) भविष्यन्तीह[6]) यज्ञियाः[7]), ॥ 58 ॥

यज्ञभाजो भविष्यन्ति सर्वे[1]) देवगणैः[2]) सह ।
मन्वन्तरेषु ये देवा भविष्यन्तीह छन्दजाः[3]), ॥ 59 ॥

तैः सार्धमि[1]ज्यमानास्ते स्यास्यन्तीह युगक्षयात् ।
एवमुक्तस्तदा[2]) ब्रह्मा महादेवेन धीमता[3]) ॥ 60 ॥

प्रत्युवाच तदा[1]) भीमं[2]) हृष्यमाणः प्रजापतिः ।
एवं भवतु, भद्रं ते, यथा ते व्याहृतं प्र[3]भो ! ॥ 61 ॥

ब्रह्मणा समनुज्ञाते तथा[1]) सर्वमभूत् किल, ।
ततः प्रभृति देवेशो[3]) न प्रा[3]सूयत वै प्रजाः ॥ 62 ॥

ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् ।
यस्माच्चोक्त[1]) स्थितोऽस्मीति, तस्मात्[2]) स्थाणुरिति[3]) स्मृतः ॥ 63 ॥

ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः[1]) ।
स्रष्टृत्व[2]मात्मसंबोधस्त्वधिष्ठातृत्वमेव च[3]) ॥ $63_1$ ॥
अथ यानि दशैतानि नित्यं तिष्ठन्ति शंकरे ।
सर्वान् देवानृषींश्चैव समेतानसुरैः सह ॥ $63_2$ ॥
अत्येति तेजसा देवो, महादेवस्ततः स्मृतः ।
अत्येति देवानैश्वर्याद् बलेन च महासुरान् ।
ज्ञानेन च मुनीन् सर्वान् योगाद् भूतानि सर्वशः ॥ $63_3$ ॥

एष देव महादेवः
पुरुषोऽर्कसमद्युतिः ॥ 64 ॥

एवमेव महादेवः
सर्वदेवनमस्कृतः ।
प्रजामनुत्तमां[1]) सृष्ट्वा
सर्गादुपरराम ह ॥ 64 ॥

[ Vā. 10.68—26.50. ]

---

57 = Bḍ. I. 9.82b, 83a; L. 70.317b, 318a; Vā. 10.58. 1) Bḍ. –स्रं हि सहस्राणाम् । 2) Bḍ. मम निःसृताः; Vā. –नोपमनिश्चिताः ।
58 = Bḍ. I. 9.83b, 84a; L. 70.318b, 319a; Vā. 10.59. 1) Bḍ. –द्राण्यस्ताः; L. दिक्षु चैव । 2) Vā. प्रति– । 3) L. –श्रिताः । 4) L. –द्राः; Vā. –द्र– । 5) L. समात्मानो । 6) L. –न्तीति । 7) L. याज्ञिकाः ।
59 = Bḍ. I. 9.84b, 85a; L. 70.319b, 320a; Vā. 10,60. 1) L. –वै– । 2) Vā. –युगैः । 3) L. भेदतः ।
60 = Bḍ. I. 9.85b, 86a; L. 70.320b, 321a; Vā. 10.61. 1) L. सार्धं तैर– । 2) Bḍ. –स्ततो । 3) Bḍ. स प्रभुः ।
61 = Bḍ. I. 9.86b, 87a; L. 70.321b, 322a; Vā. 10.62. 1) Bḍ. तथा । 2) L. –च नमस्कृत्य । 3) L. वि– ।
62 = Bḍ. I. 9.87b, 88a; L. 70.322a, 323b; Vā. 10.63. 1) Bḍ. ततः; Vā. सदा । 2) Bḍ. –वः स । 3) L. चा– ।
63 = Bḍ. I. 9.88b, 89a; L. 70.323b, 324a; Vā. 10.64. 1) Bḍ. –स्मात्प्रोक्तं; L. –स्मादुक्तः । 2) Vā. ततः । 3) Bḍ.1 –णुर्बुधैः; Bḍ.2 –णुः स वै ।
$63_1$ = Bḍ. I. 9.89b, 90a; Vā. 10.65. 1) Bḍ. –नं तपश्च सत्यं चै(ऐ)श्वर्यं धर्म एव च । 2) Bḍ. वैराग्य– । 3) Bḍ. –षः कृत्स्नान्येतानि शंकरे ।
$63_2$ = Bḍ. I. 9.90b = b; Vā. 10.66.
$63_3$ = Bḍ. I. 9.91; Vā. 10.67.
64 = L. 70.324b.
| 64 = Bḍ. I. 9.92. 1) Bḍ.2 –मनियमां ।

## अष्टमोऽध्यायः

( Bḍ. I. 10.1—88; Vā. 27.1—60. )

ऋषय ऊचुः ( ऋषिरुवाच ) :

अस्मिन् कल्पे त्वया नो[1]क्तः प्रादुर्भावो महात्मनः ।
महादेवस्य रुद्रस्य साधकैर्ऋषिभिः सह ॥ 1 ॥

सूत उवाच :

उत्पत्तिरादिसर्गस्य मया प्रोक्ता समासतः, ।
विस्तरेणास्य[1]) वक्ष्यामि नामानि तनुभिः सह ॥ 2 ॥
पत्नीषु जनयामास महादेवः सुतान् बहून् ।
कल्पेष्वन्येष्वतीतेषु[1]) ह्य[2]स्मिन् कल्पे तु तान्शृ[3]णु ! ॥ 3 ॥
कल्पादावा[1]त्मनस्तुल्यं सुतं प्रध्यायतः प्रभोः[2]) ।
प्रादुरासीत् ततोऽङ्केऽस्य कुमारो नीललोहितः ॥ 4 ॥
रुरोद[1]) सुस्वरं घोरं निर्दहन्निव तेजसा ।
दृष्ट्वा रुदन्तं सहसा कुमारं नीललोहितम् ॥ 5 ॥
किं रोदिषि कुमारेति ब्रह्मा तं प्रत्यभाषत ।
सोऽब्रवीद् देहि मे नाम प्रथमं त्वं[1]) पितामह ॥ 6 ॥
रुद्रस्त्वं देव नाम्ना[1]सि ! इत्युक्तः सो[2])ऽरुदत् पुनः ।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्[3]) ॥ 7 ॥
नाम देहि द्वितीयं मे ! इत्युवाच स्वयंभुवम् ।
भवस्त्वं देव नाम्नासि ! इत्युक्तः सोऽरुदत् पुनः ॥ 8 ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं प्रत्युवाच ह[1]) ।
तृतीयं देहि मे नाम ! इत्युक्तः प्रत्युवाच तम्[2]) ॥ 9 ॥
शर्व[1]स्त्वं देव नाम्नासि ! इत्युक्तः सोऽरुदत् पुनः ।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ 10 ॥
चतुर्थं देहि मे नाम ! इत्युक्तः सोऽब्रवीत् पुनः[1]) ।
ईशानो[2]) देव नाम्नासि ! इत्युक्तः सोऽरुदत् पुनः ॥ 11 ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
पञ्चमं देहि मे नाम[1]) ! इत्यु[2]वाच स्वयम्भुवम्[3]) ॥ 12 ॥

---

1 = Bḍ. I. 10.1; Vā. 27.1. 1) Vā. चो– ।
2 = Bḍ. I. 10.2; Vā. 27.2. 1) Bḍ. ण प्र– ।
3 = Bḍ. I. 10.3; Vā. 27.3. 1) Vā. T. कल्पेऽष्टमे व्यतीते तु । 2) Bḍ.2 Vā. य– । 3) Vā. तच्छृ– ।
4 = Bḍ. I. 10.4; Vā. 27.4ab. 1) Vā. –दौ चा– । 2) Bḍ. –तगध्यायत प्रभुः ।
5 = Bḍ. I. 10.5; Vā. 27.4c, 5a. 1) Vā. तं दध्ये ।
6 = Bḍ. I. 10.6; Vā. 27.5b, 6a. 1) Vā. वै ।
7 = Bḍ. I. 10.7; Vā. 27.6b, 7a. 1) Bḍ.1 –मा– । 2) Bḍ. स इत्युक्तो । 3) Bḍ. –षि कुमारेति ब्रह्मा तं प्रत्यभाषत ।
8 = Bḍ. I. 10.8; Vā. 27.7b, 8a.
9 = Bḍ. I. 10.9; Vā. 27.8b, 9a. 1) Vā. प्रत्युवाचाथ शंकरम् । 2) Bḍ.1 सोऽब्रवीत् पुनः ।
10 = Bḍ. I. 10.10; Vā. 27.9b, 10a. 1) Vā. शिव– ।
11 = Bḍ. I. 10.11; Vā. 27.10b, 12b. 1) Vā. इत्युवाच स्वयंभुवम् । 2) Vā. ईशस्त्वं ।
12 = Bḍ. I. 10.12; Vā. 27.11b, 12a. 1) Bḍ.1 –मं नाम देहीति । 2) Bḍ.1 प्रत्यु– । 3) Vā. इत्युक्तः प्रत्युवाच तम् ।

पशूनां त्वं पतिर्देव ! इत्युक्तः सोऽरुदत् पुनः ।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ 13 ॥
षष्ठं मे नाम देहीति[1]) प्रत्युवाच स्वयंभुवम्[2]) ।
भीमस्त्वं देव नाम्नासि ! इत्युक्तः सोऽरुदत् पुनः ॥ 14 ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
सप्तमं देहि मे नाम ! इत्युक्तः प्रत्युवाच तम्[1]) ॥ 15 ॥
उग्रस्त्वं देव नाम्नासि ! इत्युक्तः सोऽरुदत् पुनः ।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनर[1]ब्रवीत् ॥ 16 ॥
अष्टमं देहि मे[1]) नाम त्वं विभो ! पुनरब्रवीत्[2]) ।
महादेवस्तु नाम्ना[3]सि ! इत्युक्तो विरराम ह ॥ 17 ॥
लब्ध्वा नामानि चैतानि ब्रह्मणो[1]) नीललोहितः ।
प्रोवाच नाम्नामेतेषां स्थानानि प्रदिशेति ह ! ॥ 18 ॥
ततो वि[1]सृष्टास्तनव एषां नाम्नां स्वयंभुवा ।
सूर्यो जलं मही[2]) वह्निर्वायु[3]राकाशमेव च ॥ 19 ॥
दीक्षितो ब्राह्मणश्चन्द्र, इत्येवं तेऽष्टधा तनुः[1]) ।
तेषु पूज्यश्च वन्द्यश्च[2]) [ नमस्कार्यश्च यत्नतः ॥ 20 ॥
प्रोवाच तं पुनर्ब्रह्मा कुमारं नीललोहितम् ।
यदुक्तं ते मया पूर्वं नाम रुद्रेति वै विभो, ॥ 21 ॥
तस्यादित्यस्तनुर्नाम्नः प्रथमा प्रथमस्य ते ।
इत्युक्ते तस्य यत्तेजस्तच्चक्षुस्त्वासीत् प्रकाशकम्, ॥ 22 ॥
विवेश तत् तदादित्यं, तस्माद्रुद्रो ह्यसौ स्मृतः ।
उद्यन्तमस्तंयन्तं च वर्जयेद्दर्शने रविम् ॥ 23 ॥
शश्वच्च जायते यस्माच्छश्वत् संतिष्ठते तु यत् ।
तस्मात् सूर्यं न वीक्षेत आयुष्कामः शुचिः सदा, ॥ 24 ॥
अतीतानागतं रुद्रं विप्रा ह्याप्याययन्ति यत्, ।
उभे संध्ये ह्युपासीना गृणन्तः सामऋग्यजुः ॥ 25 ॥
उद्यन् स तिष्ठते ऋक्षु मध्याह्ने च यजुःष्वथ ।
सामस्वथापराह्णे तु रुद्रः संविशति क्रमात् ॥ 26 ॥
तस्माद् भवेन्नाभ्युदितो वा ह्यस्तमित एव च, ।

---

13 = Bḍ. I. 10.13; Vā. 27.11ᵃ, 13ᵃ.
14 = Bḍ. I. 10.14; Vā. 27.13ᵇ, 14ᵃ. 1) Bḍ. –ष्ठं वै देहि मे नाम । 2) Bḍ.1 इत्युक्तः प्रत्युवाच तम् ; Vā. उवाचाथ तं प्रभुम् ।
15 = Bḍ. I. 10.15; Vā. 27.14ᵇ, 15ᵃ. 1) Bḍ. ह ।
16 = Bḍ. I. 10.16; Vā. 27.15ᵇ, 16ᵃ. 1) Bḍ. तं रुदन्तं कुमारं तु मा रोदीरिति सोऽ– ।
17 = Bḍ. I. 10.17; Vā. 27.16ᵇᶜ. 1) Bḍ. सोऽब्रवीदष्टमं । 2) Bḍ. देहि मे त्वं विभो पुनः । 3) Bḍ. त्वं महादेवनामा– ।
18 = Bḍ. I. 10.18; Vā. 27.17. 1) Bḍ. –ह्मणं ।
19 = Bḍ. I. 10.19; Vā. 27.18. 1) Vā. T. –ऽभि– । 2) Vā. मही जलं । 3) Bḍ. वायुर्वह्नि– ।
20 = Bḍ. I. 10.20; Vā. 27.19ᴵ = ᵃᵇᴵ. 1) Vā. इत्येते महाधातवः । 2) Vā. –न्द्यः स्याद् ।
21 = Bḍ. I. 10.21.
22 = Bḍ. I. 10.22.
23 = Bḍ. I. 10.23.
24 = Bḍ. I. 10.24.
25 = Bḍ. I. 10.25.
26 = Bḍ. I. 10.26.
27 = Bḍ. I. 10.27.

न रुद्रं प्रति मेहेतं सर्वावस्थं कथंचन ॥ 27 ॥
एवं युक्तान् द्विजान् देवो ] रुद्रस्तान्न हिनस्ति वै ।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं नीललोहितम् ॥ 28 ॥
द्वितीयं नामधेयं ते मया प्रोक्तं भवेति यत्, ।
एतस्यापो द्वितीया ते तनुर्नाम्ना भवत्विति[1]) ॥ 29 ॥
इत्युक्ते त्वथ तस्यासीच्छ[1]रीरस्थं रसात्मकम्, ।
विवेश तत् तदापस्तु[2]); तस्मादापो भवः स्मृतः ॥ 30 ॥
यस्माद् भवन्ति भूतानि ताभ्यस्ता भावयन्ति च ।
भवनाद् भावनाच्चैव भूतानामुच्यते भवः[1]) ॥ 31 ॥
तस्मान्मूत्रं पुरीषं च नाप्सु कुर्वीत सर्वदा[1]) ।

| | |
|---|---|
| न निष्ठीवेन् नावगाहेन्<br>नैव गच्छेच्च मैथुनम्, ॥ 32 ॥ | न स्नायेदप्सु नग्नश्च<br>न निष्ठीवेत् कदाचन, ॥ 32 ॥<br>मैथुनं नैव सेवेत<br>शिरःस्नानं च वर्जयेत्, । |

न चैताः[1]) परिचक्षीत वहन्त्यो वा स्थिता अपि[2]) ॥ 33 ॥

| | |
|---|---|
| मेध्यामेध्यास्त्वपामेता–<br>स्तनवो मुनिभिः स्मृताः, | मेध्यामेध्यशरीरत्वान्–<br>नैव दुष्यन्त्यपः क्वचित् , । |

विवर्णंरसगन्धाश्च अल्पाश्च परिवर्जयेत्[1]) ॥ 34 ॥
अपां योनिः समुद्रस्तु[1]), तस्मात्तं कामयन्ति ताः, ।
मेध्याश्चैवामृता ह्यापो[2]) भवन्ति प्राप्य सागरम् ॥ 35 ॥
तस्मादपो न रुन्धीत, समुद्रं कामयन्ति ताः, ।
न हिनस्ति भवो देवः, सदैवं यो[1]ऽप्सु वर्तते ॥ 36 ॥
ततोऽब्रवीत् पुनर्ब्रह्मा कुमारं[1]) नील[2]लोहितम् ।
शर्वेति यत् तृतीयं ते[3]) नाम प्रोक्तं मया विभो[4]), ॥ 37 ॥
तस्य भूमिस्तृतीयस्य[1]) तनुर्नाम्ना भवत्वियम् ।
इत्युक्ते यत् स्थिरं तस्य शरीरे ह्यस्थि[2]संज्ञितम् ॥ 38 ॥
विवेश तत् तदा भूमिं, यस्माद् भूः[1]) शर्वं उच्यते ।

---

28 = Bḍ. I. 10.28; Vā. 27.19$^{bII}$, 20$^{a}$ = a$^{IIb}$.
29 = Bḍ. I. 10.29; Vā. 27.20$^{bc}$. 1) Vā. –विष्यति ।
30 = Bḍ. I. 10.30; Vā. 27.21. 1) Vā. –क्ते यत् स्थिरं तस्य श– । 2) Vā. तद्विवेश ततस्तोयं ।
31 = Bḍ. I. 10.31; Vā. 27.22. 1) Vā. –नां संभवः स्मृतः ।
32$^{a}$ = Bḍ. I. 10.32$^{a}$; Vā. 27.23$^{a}$. 1) Bḍ. कर्हिचित् ।
32$^{b}$ = Bḍ. I. 10.32$^{b}$. | 32$^{b}$ = Vā. 27.23$^{b}$.
33$^{a}$ = Vā. 27.24$^{a}$.
33$^{b}$ = Bḍ. I. 10.33$^{a}$; Vā. 27.24$^{b}$. 1) Vā. प्रीतः । 2) Vā. वहन्न संस्थितोऽपि वा ।
34$^{a}$ = Bḍ. I. 10.33$^{b}$. | 34$^{a}$ = Vā. 27.25$^{a}$.
34$^{b}$ = Bḍ. I. 10.34$^{a}$; Vā. 27.25$^{b}$. 1) Bḍ. वर्ज्या अल्पाश्च सर्वशः ।
35 = Bḍ. I. 10.34$^{b}$, 35$^{a}$; Vā. 27.26. 1) Vā. –द्रश्च । 2) Vā.–ताश्चैव ।
36 = Bḍ. I. 10.35$^{b}$, 36$^{a}$; Vā. 27.27. 1) Bḍ. –वो य एवं ह्य– ।
37 = Bḍ. I. 10.36$^{b}$, 37$^{a}$; Vā. 27.28$^{ab}$. 1) Vā. तं देवं । 2) Vā. कृष्ण– । 3) Vā. शर्वस्त्वमिति यन् । 4) Vā. तृतीयं समुदाहृतम् ।
38 = Bḍ. I. 10.37$^{b}$, 38$^{a}$; Vā. 27.28$^{c}$, 29$^{a}$. 1) Vā. –या तु । 2) Vā. –रस्यास्थि– ।

तस्मात् कृष्टे न कुर्वीत[2]) पुरीषं मूत्रमेव च[3]), ॥ 39 ॥
न छायायां तथा मार्गे[1]) स्वच्छायायां न[2]) मेहयेत्, ।
शिरः प्रावृत्य कुर्वीत अन्तर्धाय तृणैर्महीम् ॥ 40 ॥
य एवं[1]) वर्तते भूमौ, तं शर्वो[2]) न हिनस्ति वै ।
ततोऽब्रवीत् पुनर्ब्रह्मा कुमारं[3]) नीललोहितम् ॥ 41 ॥
ईशान इति यत् प्रोक्तं चतुर्थं नाम ते मया[1]) ।
चतुर्थस्य चतुर्थी स्याद्[2]) वायुर्नाम्ना तनुस्तव ॥ 42 ॥
इत्युक्ते यच्छरीरस्थं पञ्चधा प्राणसंज्ञितम्, ।
विवेश तस्य तद्[1]) वायुमीशानस्तेन मारुतः[2]) ॥ 43 ॥
तस्मान्नै[1]नं परिवदेत् प्रवान्तं वायुमीश्वरम्, ।
यज्ञैर्व्यवहरन्त्येनं ये वै परिचरन्ति च ॥ 44 ॥
एवं युक्तं महे[1]शानो नैव देवो हिनस्ति तम् ।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं धूम्रलोहितम् ॥ 45 ॥
नाम यद्वै पशुपतिरित्युक्तं पञ्चमं मया[1]), ।
पञ्चमी पञ्चमस्यैष तनुर्नाम्नाग्निरस्तु ते ॥ 46 ॥
इत्युक्ते यच्छरीरस्थं तेजस्तस्योष्णसंज्ञितम्, ।
विवेश तत्तदा ह्यग्नि[1]), तस्मात् पशुपतिस्तु सः[2]) ॥ 47 ॥
[ यस्मादग्निः पशुश्चासीद् यस्मात् पाति पशूंश्च सः ।
तस्मात् पशुपतेस्तस्य तनुरग्निर्निरुच्यते ॥ 48 ।
तस्मादमेध्यं न दहेन्न च पादौ प्रतापयेत् ।
अधस्तान्नोपदध्याच्च न चैनमतिलङ्घयेत् ॥ 49 ॥
नैनं पशुपतिर्देव एवं युक्तं हिनस्ति वै ।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं श्वेतपिङ्गलम् ॥ 50 ॥
षष्ठं नाम मया प्रोक्तं तव भीमेति यत् प्रभो ।
आकाशं तस्य नाम्नास्तु तनुः षष्ठी भवत्विति ॥ 51 ॥
इत्युक्ते सुषिरं तस्य शरीरस्थमभूच्च यत्, ।
विवेश तत्तदाकाशं, तस्माद्भीमस्य सा तनुः ॥ 52 ॥
यदाकाशे स्मृतो देवस्तस्मान्नासंवृतः क्वचित् ।

---

39 = Bḍ. I. 10.38[b], 39[a]; Vā. 27.29[b], 30[a]. 1) Bḍ.1 सा; Vā. तद्विवेश ततो भूमिस्तस्माद् । 2) Vā. T. कुर्वीत नो विद्वान् । 3) Vā. वा ।
40 = Bḍ. I. 10.39[b], 40[a]; Vā. 27.30[b], 31[a]. 1) Vā. न सोपाने । 2) Vā. –च्छायां नापि ।
41 = Bḍ. I. 10.40[b], 41[a]; Vā. 27.31[b], 32[a]. 1) Bḍ. एवं यो । 2) Bḍ. शर्वस्तं । 3) Vā. तं देवं ।
42 = Bḍ. I. 10.(41[b]), 42[a]; Vā. 27.32[b], 33[a]. 1) Bḍ. –नेति चतुर्थं ते नाम प्रोक्तं मयेह यत् । 2) Bḍ. तु ।
43 = Bḍ. I. 10.42[b], 43[a]; Vā. 27.33[b], 34[a]. 1) Vā. तं तदा । 2) Vā. –नो वायुरुच्यते ।
44 = Bḍ. I. 10.43[b], 44[a]; Vā. 27.34[b] = a. 1) Vā. –स्मादे– । 2) Vā. –वदेदायतं ।
45 = Bḍ. I. 10.44[b], 45[a]; Vā. 27.34[c], 35[a]. 1) Vā. –कामथे– ।
46 = Bḍ. I. 10.45[b], 46[a]; Vā. 27.35([b],[c]. 1) Vā. यत्ते पशुपतीत्युक्तं मया नामेह पञ्चमम् ।
47 = Bḍ. I. 10.46[b], 47[a]; Vā. 27.36. 1) Vā. –भिस् । 2) Vā. पतिः ।
48 = Bḍ. I. 10.47[b], 48[a].
49 = Bḍ. I. 10.48[b], 49[a].
50 = Bḍ. I. 10.49[b], 50[a].
51 = Bḍ. I. 10.50[b], 51[a].
52 = Bḍ. I. 10.51[b], 52[a].

कुर्यात् मूत्रं पुरीषं वा न भुञ्जीत पिबेन्न च ॥ 53 ॥
मैथुनं वापि न चरेदुच्छिष्टानि च नोत्क्षिपेत् ।
न हिनस्ति च तं देवो, यो भीमे ह्येवमाचरेत् ॥ 54 ॥
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं सबलं प्रभुम् ।
सप्तमं यन्मया प्रोक्तं नामोग्रेति तव प्रभो ॥ 55 ॥
तस्य नाम्नस्तनुस्तुभ्यं द्विजो भवति दीक्षितः ।
एवमुक्ते तु यत्तस्य चैतन्यं वै शरीरगम्, ॥ 56 ॥
विवेश दीक्षितं तद्वै ब्राह्मणं सोमयाजिनम्, ।
तावत्कालं स्मृतो विप्र उग्रो देवस्तु दीक्षितः ॥ 57 ॥
तस्मान्नेमं परिवदेन्नाश्लीलं चास्य कीर्तयेत् ।
ते हरन्त्यस्य पाप्मानं, ये वै परिवदन्ति तम् ॥ 58 ॥
एवं युक्तान् द्विजानुग्रो देवस्तान् न हिनस्ति वै ।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं भास्करद्युतिम् ॥ 59 ॥
अष्टमं नाम यत् प्रोक्तं महादेवेति ते मया, ।
तस्य नाम्नोऽष्टमस्यास्तु तनुस्तुभ्यं तु चन्द्रमाः ॥ 60 ॥
इत्युक्ते यन्मनस्तस्य संकल्पकमभूत् प्रभोः, ।
विवेश तच्चन्द्रमसं, महादेवस्ततः शची ॥ 61 ॥
तस्माद्विभाव्यते ह्येष महादेवस्तु चन्द्रमाः ।
अमावास्यां न वै छिन्द्याद्वृक्षगुल्मौषधीर्द्विजः ॥ 62 ॥
महादेवः[1]) स्मृतः सोमस्तस्यात्मा ह्योषधीगणः ।
एवं यो वर्तते विद्वान्[2]) सदा पर्वणि पर्वणि ॥ 63 ॥
न हन्ति तं महादेवो, य एवं वेद[1]) तं प्रभुम् ।
गोपायति दिवादित्यः प्रजा, नक्तं तु चन्द्रमाः, ॥ 64 ॥
एकरात्रे[1]) समेयातां सूर्याचन्द्रमसावुभौ, ।
अमावास्यानिशायां तु तस्यां युक्तः सदा वसेत्[2]) ॥ 65 ॥
रुद्रा[1]विष्टं सर्वमिदं तनुभिर्नामभिश्च[2]) ह, ।
एकाकी यश्चरत्येष सूर्योऽसौ रुद्र[3]) उच्यते ॥ 66 ॥
सूर्यस्य यत् प्रकाशेन वीक्ष[1]न्ते चक्षुषा प्रजाः, ।
शुक्ला[2]त्मा संस्थितो रुद्रः पिबत्यम्भो गभस्तिभिः ॥ 67 ॥

---

53 = Bḍ. I. 10.52ᵇ, 53ᵃ.
54 = Bḍ. I. 10.53ᵇ, 54ᵃ.
55 = Bḍ. I. 10.54ᵇ, 55ᵃ.
56 = Bḍ. I. 10.55ᵇ, 56ᵃ.
57 = Bḍ. I. 10.56ᵇ, 57ᵃ.
58 = Bḍ. I. 10.57ᵇ, 58ᵃ.
59 = Bḍ. I. 10.58ᵇ, 59ᵃ.
60 = Bḍ. I. 10.59ᵇ, 60ᵃ.
61 = Bḍ. I. 10.60ᵇ, 61ᵃ.
62 = Bḍ. I. 10.61ᵇ, 62ᵃ.
63 = Bḍ. I. 10.62ᵇ, 63ᵃ; Va. 27.37ᵃᵇ. 1) Va. चन्द्रमास्तु । 2) Bḍ. चेह ।
64 = Bḍ. I. 10.63ᵇ, 64ᵃ; Va. 27.37ᶜ, 38ᵃ. 1) Va. –व एवं वन्देत ।
65 = Bḍ. I. 10.64ᵇ, 65ᵃ; Va. 27.38ᵇᶜ. 1) Bḍ.1 –त्रौ । 2) Bḍ. भवेत् ।
66 = Bḍ. I. 10.65ᵇ, 66ᵃ; Va. 27.39. 1) Va. तत्रा– । 2) Va. –भिः स । 3) Va. चन्द्र ।
67 = Bḍ. I. 10.66ᵇ, 67ᵃ; Va. 27.40. 1) Va. –क्ष्य– । 2) Bḍ.1 शुक्ला– ।

अद्यते पीयते चैवाप्य[1]न्नपानादिकाम्यया[2]) ।
तनुरम्बून्म[3]वा सा वै देहेष्वेवोपचीयते ॥ 68 ॥
यया धत्ते प्रजाः सर्वाः स्थिरीभूतेन तेजसा[1]) ।
पार्थिवी सा तनुस्तस्य शार्वी[2]) धारयति[3]) प्रजाः ॥ 69 ॥
या च[1]) स्थिता शरीरेषु भूतानां प्राणवृत्तिभिः ।
वाय्वा[2]त्मिका तु ऐ[3]शानी, सा प्राणः प्राणिनामिह[4]) ॥ 70 ॥
पीताशितानि पचति भूतानां जठरेषु या[1]) ।
तनुः[2]) पाशुपती तस्य ; पाचकः सोऽग्नि[3]रुच्यते ॥ 71 ॥
यानीह सुषिराणि स्युर्देहेष्वन्तर्गतानि वै ।
वायोः संचरणार्थाय[1]), भीमा सा प्रो[2]च्यते तनुः ॥ 72 ॥
वैतान[1]दीक्षितानां तु या स्थितिर्ब्रह्मवादिनाम् ।
तनुरुग्रात्मिका सा तु, तेनोग्रो दीक्षितः स्मृतः ॥ 73 ॥
यत्तु संकल्पकं तस्य प्रजास्विह समा[1]स्थितम्, ।
सा तनुर्मानसी तस्य चन्द्रमाः प्राणिषु स्थितः ॥ 74 ॥
नवो नवो भवति हि[1]), जायमानः पुनः पुनः, ।
पी[2]यतेऽसौ[3]) यथाकालं विबुधैः पितृभिः सह, ॥ 75 ॥
महादेवोऽमृतात्मासौ[1]) चन्द्रमा अम्मयः[2]) स्मृतः ।
तस्य या प्रथमा नाम्ना तनू रौद्री प्रकीर्तिता ॥ 76 ॥
पत्नी सुवर्चला तस्य[1]) पुत्रस्तस्याः[2]) शनैश्चरः ।
भवस्य या द्वितीया तु आपो नाम्ना तनुः स्मृता[3]) ॥ 77 ॥
तस्योषात्र[1]) स्मृता पत्नी पुत्रस्त्वाप्यु[2]शना स्मृतः ।
सर्वस्य या तृतीया तु नाम[3]) भूमिस्तनुः स्मृता, ॥ 78 ॥
पत्नी तस्य[1]) विकेशीति[2]), पुत्रश्चाङ्गा[3]रकः स्मृतः ।
ईशानस्य चतुर्थस्य नाम्ना वातस्तनुस्तु या[4]); ॥ 79 ॥
तस्य[1]) पत्नी शिवा नाम, पुत्रश्चास्य मनोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रौ चानिलस्य तु ॥ 80 ॥
नाम्ना पशुपतेर्या तु तनुरग्निर्द्विजैः स्मृता, ।
तस्य[1]) पत्नी स्मृता स्वाहा, स्कन्दस्तस्याः[2]) सुतः स्मृतः ॥ 81 ॥

---

68 = Bḍ. I. 10.67[b], 68[a]; Vā. 27.41. 1) Bḍ. –व श– । 2) Vā. T. –नात्मकानि या । 3) Vā. –रात्मभ– ।
69 = Bḍ. I. 10.68[b], 69[a]; Vā. 27.42. 1) Vā. T. चेतसा । 2) Bḍ. साध्वी । 3) Bḍ. –ते ।
70 = Bḍ. I. 10.69[b], 70[a]; Vā. 27.43. 1) Vā. यावत् । 2) Bḍ. वाता– । 3) Bḍ. चै– । 4) Vā. –णाः प्राणिना सह ।
71 = Bḍ. I. 10.70[b], 71[a]; Vā. 27.44. 1) Bḍ. –ष्विह । 2) Vā. ततः । 3) Vā. पाचिका शक्ति–; V. –कः साभि– ।
72 = Bḍ. I. 10.71[b], 72[a]; Vā. 27.45. 1) Bḍ. –णार्थानि । 2) Vā. स भीमा चो– ।
73 = Bḍ. I. 10.72[b], 73[a]; Vā. 27.46. 1) Bḍ. वैतान्या– ।
74 = Bḍ. I. 10.73[b], 74[a]; Vā. 27.47. 1) Vā. समं ।
75 = Bḍ. I. 10.74[b], 75[a]; Vā. 27.48[ab]. 1) Bḍ. –वो यो भवति । 2) Vā. नी– । 3) Vā. ऽयो ।
76 = Bḍ. I. 10.75[b], 76[a]; Vā. 27.48[c], 49[a]. 1) Bḍ. –त्मा स । 2) Vā. ह्यम्मयश्चन्द्रमाः ।
77 = Bḍ. I. 10.76[b], 77[a]; Vā. 27.49[b], 50[a]. 1) Bḍ.1 –स्याः । 2) Bḍ. –श्चास्य । 3) Vā. तनुरापः स्मृता तु वै ।
78 = Bḍ. I. 10.77[b], 78[a]; Vā. 27.50[b], 51[a]. 1) Bḍ.1 –स्य धात्री; Bḍ.2 स्य या तु । 2) Bḍ. –श्च उ– । 3) Bḍ. –यस्य नाम्नो ।
79 = Bḍ. I. 10.78[b], 79[a]; Vā. 27.51[b], 52[a]. 1) Bḍ. तस्याः पत्नी । 2) Bḍ. –शी तु । 3) Bḍ. –श्रोऽस्याङ्गा– । 4) Vā. स्वर्गतस्य च या तनुः ।
80 = Bḍ. I. 10.79[b], 80[a]; Vā. 27.52[b] = a. 1) Bḍ. –स्याः ।
81 = Bḍ. I. 10.80[b], 81[a]; Vā. 27.53. 1) Bḍ. –स्याः । 2) Vā. –न्दश्चापि ।

नाम्ना षष्ठस्य या भीमा तनुराकाश उ[1]च्यते, ।
दिशः पत्न्यः स्मृतास्तस्य स्वर्गश्चास्याः[2]) सुतः स्मृतः ॥ 82 ॥

उग्रा तनुः सप्तमी या दीक्षितो ब्राह्मणः स्मृतः[1]), ।
दीक्षा पत्नी स्मृता, तस्याः[2]) संतानः पुत्र उच्यते ॥ 83 ॥

नाम्नाष्टमस्य महतस्तनुर्या चन्द्रमाः स्मृतः, ।
तस्य वै रोहिणी पत्नी[1]), पुत्रस्तस्या[2]) बुधः स्मृतः ॥ 84 ॥

इत्येतास्तनवस्तस्य नामभिः सह[1]) कीर्तिताः, ।
तासु[2]) वन्द्यो[3]) नमस्यश्च[4]) प्रतिनाम तनूषु वै ॥ 85 ॥

सूर्येऽप्सूर्व्यां तथा वायावग्नौ व्योम्न्यथ दीक्षिते[1]) ।
भक्तैस्तथा[2]) चन्द्रमसि, [भक्त्या वन्द्यस्तु नामभिः ॥ 86 ॥

एवं यो वेत्ति तं देवं ] तनुभिर्नामभिश्च[1]) ह, ।
प्रजावानेति सायुज्यमीश्वरस्य नरो हि[2]) सः ॥ 87 ॥

इत्येतद्वो मया प्रोक्तं[1]) गुह्यं भीमस्य यद्[2]) यशः ।
शं नोऽस्तु द्विपदे नित्यं[3]) शं नोऽस्तु च चतुष्पदे ॥ 88 ॥

एतत् प्रोक्तं निदानं वस्त[1]नूनां नामभिः सह ।
महादेवस्य देवस्य, भृगोस्तु शृणुत प्रजाः ! ॥ 89 ॥

---

82 = Bḍ. I. 10.81$^{b}$, 82$^{a}$; Vā. 27.54. 1) Bḍ. –प( श )मु– । 2) Bḍ. –श्चापि; Vā. –श्चास्य ।

83 = Bḍ. I. 10.82$^{b}$, 83$^{a}$; Vā. 27.55. 1) Vā. –तैर्ब्राह्मणैः स्मृता । 2) Vā. –स्य ।

84 = Bḍ. I. 10.83$^{b}$, 84$^{a}$; Vā. 27.56. 1) Vā. पत्नी तु रोहिणी तस्य । 2) Vā. –त्रश्चास्य ।

85 = Bḍ. I. 10.84$^{b}$, 85$^{a}$; Vā. 27.57. 1) Vā. परि– । 2) Vā. T. तास्तु । 3) Vā. –चा । 4) Vā. –स्याश्च ।

86 = Bḍ. I. 10.85$^{b}$, 86$^{a}$; Vā. 27.58$^{(a)bI}$ = $a^{bI}$. 1) Vā. भक्तैः सूर्येऽप्सु पृथिव्यां वाय्वग्निव्योमदीक्षितैः । 2) Vā. तथा च वै ।

87 = Bḍ. I. 10.86$^{b}$, 87$^{a}$; Vā. 27.58$^{bIIc}$ = $a^{IIb}$. 1) Vā. –भिः स । 2) Bḍ. भवस्य ।

88 = Bḍ. I. 10.87$^{b}$, 88$^{a}$; Vā. 27.59. 1) Vā. –याख्यातं । 2) Vā. तद् । 3) Bḍ. विप्रः ।

89 = Bḍ. I. 10.88$^{bc}$; Vā. 27.60. 1) Bḍ. च त– ।

## नवमोऽध्यायः

( Bḍ. I. 11.1—44, 12.1—53; Vā. 28.1—39, 29.1—49. )

भृगोः ख्यातिर्विजज्ञेऽथ[1]) ईश्वरो सुखदुःखयोः ।
शुभाशुभप्रदातारौ सर्वप्राणभृतामिह ॥ 1 ॥
देवौ धाता[1]विधातारौ मन्वन्तरविचारिणौ ।
तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभाविनी ॥ 2 ॥
सा तु नारायणं देवं पतिमासाद्य शोभना[1]), ।
नारायणात्मजौ तस्यां[2]) बलोन्मादौ[3]) व्यजायताम्[4]) ।
[ बलस्य तेजः पुत्रस्तु, उन्मादस्य तु संशयः ] ॥ 3 ॥
तस्यान्ये[1]) मानसाः पुत्रा आसन् व्योमवि[2]चारिणः, ।
ये वहन्ति विमानानि देवानां पुण्यकर्मणाम् ॥ 4 ॥
मेरु[1]कन्ये[2]) स्मृते भार्ये विधातुर्धातुरेव च ।
अयातिर्नियतिश्चैव, तयोः पुत्रौ दृढव्रतौ ॥ 5 ॥
प्राण[1]श्चैव मृकण्डु[2]श्च ब्रह्मकोशौ सनातनौ ।
मनस्विन्यां मृकण्डोश्च[3]) मार्कण्डेयो बभूव ह, ॥ 6 ॥
सुतो वेदशिरास्तस्य धूम्रपत्या[1]मजायत ।
पीवर्यां वेदशिरसः पुत्रा वंशकराः स्मृताः, ।
मार्कण्डेया इति[2]) ख्याता ऋषयो वेदपारगाः ॥ 7 ॥
प्राणस्य[1]) पुण्डरीकायां द्युतिमानात्मजोऽभवत्, ।
उन्नतश्च द्युतिमतः स्वनवात[2]श्च तावुभौ, ॥ 8 ॥
तयोः पुत्राश्च पौत्राश्च भार्गवाणां परस्परम्[1]) ।
स्वायम्भुवेऽन्तरेऽतीते[2]) मरीचेः शृणुत प्रजाः ॥ 9 ॥
पत्नी मरीचेः संभूतिर्विजज्ञे सा[1]त्मसंभवम् ।
प्रजापतेः पूर्णमासं कन्याश्चेमा निबोधत ॥ 10 ॥
कृ[1]ष्टिः पृ[2]ष्टिस्त्विषा चैव तथा चा[3]पचितिः शुभा[4]) ।
पूर्णमासः सरस्वत्यां पुत्रौ द्वा[5]वुदपादयत् ॥ 11 ॥
विरजं चैव धर्मिष्ठं पर्वसं[1]) चैव तावुभौ ।
विरजस्यात्मजो विद्वान् सुधामा नाम विश्रुतः ॥ 12 ॥

---

1 = Bḍ. I. 11.1; Vā. 28.1[ab]. 1) Bḍ. वै ।
2 = Bḍ. I. 11.2; Vā. 28.1[c], 2[a]. 1) Bḍ. –तृ– ।
3 = Bḍ. I. 11.3, 4[a]; Vā. 28.2[bc] = ab. 1) Vā. –नम् । 2) Bḍ. साध्वी । 3) Vā. –लोत्सादौ । 4) Vā. –त ।
4 = Bḍ. I. 11.4[b], 5[a]; Vā. 28.3. 1) Vā. –स्या तु( –स्यास्तु ) । 2) Vā. ये चान्ये दिव्य– ।
5 = Bḍ. I. 11.5[b], 6[a]; Vā. 28.4. 1) Vā. द्वे तु । 2) Bḍ. कल्पे ।
6 = Bḍ. I. 11.6[b], 7[a]; Vā. 28.5. 1) Vā. पाण्ड– । 2) Bḍ. –ण्डु– । 3) Bḍ. –ण्डस्य ।
7 = Bḍ. I. 11.7[b], 8; Vā. 28.6. 1) Vā. मूर्धन्यायां– । 2) Bḍ. समा– ।
8 = Bḍ. I. 11.9; Vā. 28.7. 1) Vā. पाण्डोश्च । 2) Vā. उत्पन्नौ द्युतिमन्तश्च सृजवान– ।
9 = Bḍ. I. 11.10; Vā. 28.8. 1) Bḍ. –रात् । 2) Bḍ. –ता ।
10 = Bḍ. I. 11.11; Vā. 28.9[ab]. 1) Bḍ. खा– ।
11 = Bḍ. I. 11.12; Vā. 28.9[c], 10[a]. 1) Vā. कु– । 2) Bḍ. –हिर्दं– । 3) Bḍ. चो– । 4) Bḍ.1 स्मृता । 5) Vā. द्वौ पुत्रा– ।
12 = Bḍ. I. 11.13; Vā. 28.10[b], 11[a]. 1) Bḍ. –शं ।

सुधामा स तु[1]) वैराजः प्राच्यां दिशि समा[2]श्रितः ।
लोकपालः सु[3]धर्मात्मा गौरीपुत्रः प्रतापवान् ॥ 13 ॥

पर्वसः सर्व[1]गणानां प्रविष्टः स महायशाः, ।
पर्वसः[2]) पर्वसा[3]यां तु जनयामास वै सुतौ ॥ 14 ॥

*यज्ञवा*[1]मं च धी[2]मन्तं *सुतं*[3]) काश्यपमेव च, ।
तयोर्गोत्रकरौ पुत्रौ जातौ *संन्यास*[4]*नि*श्चितौ ॥ 15 ॥

स्मृतिश्चा[1]ङ्गिरसः पत्नी जज्ञे तावा[2]त्मसंभवौ[3]) ।
पुत्री कन्याश्चतस्रश्च पुण्यास्ता लोकविश्रुताः ॥ 16 ॥

सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ।
तथैव भरताग्निं च कीर्तिमन्तं च तावुभौ ॥ 17 ॥

अग्नेः पुत्रं तु पर्जन्यं सद्वती[1]) सुषुवे प्रभुम्[2]) ।
हिरण्यरोमा पर्जन्यो मारीच्यामुदपद्यत[3]), ।
आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः ॥ 18 ॥

जज्ञे कीर्तिमतश्चापि धेनुका *ताव*[1]कल्मषौ ।
चरिष्णुं[2]) धृतिमन्तं च, उ[3]भावङ्गिरसां वरौ ॥ 19 ॥

तयोः पुत्राश्च पौत्राश्च अ[1]तीता वै सहस्रशः ।
अनसूया विजज्ञे वै[2]) पञ्चात्रेयानकल्मषान् ॥ 20 ॥

कन्यां चैव श्रुतिं नाम माता शङ्खपदस्य या[1]), ।
कर्दमस्य तु पत्नी सा[2]) पौ[3]लहस्य प्रजापतेः ॥ 21 ॥

सत्यनेत्रश्च हव्यश्च आपोमूर्तिः शनैश्चरः[1]) ।
सोमश्च पञ्चमस्तेषामासीत् स्वायंभुवेऽन्तरे ॥ 22 ॥

यामदेवैः[1]) सहातीताः पञ्चात्रेयाः प्रकीर्तिताः ।
तेषां पुत्राश्च पौत्राश्च आत्रेयाणां महात्मनाम्[2]) ॥ 23 ॥

स्वायंभुवेऽन्तरेऽतीताः[1]) शतशोऽथ सहस्रशः ।
प्रीत्यां पुलस्त्यभार्यायां दत्तोलि[2]स्तत्सुतोऽभवत्, ॥ 24 ॥

पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायंभुवेऽन्तरे, ।
मध्यमो देवबाहुश्च विनीतो नाम[1]) ते त्रयः ॥ 25 ॥

---

13 = Bḍ. I. 11.14; Vā. 28.11b, 12a. 1) Vā. –मस्तुत( तो ) । 2) Bḍ. प्राच्यां दिशमुपा– । 3) Bḍ. स ।
14 = Bḍ. I. 11.15; Vā. 28.12b, 13b. 1) Bḍ. –शः पर्वे । 2) Bḍ. –शः । 3) Bḍ. –श– ।
15 = Bḍ. I. 11.16; Vā. 28.13bc. 1) Bḍ. यजुर्धा– । 2) Vā. श्री– । 3) Bḍ. स्तम्भ– । 4) Vā. तौ जातौ धर्म– ।
16 = Bḍ. I. 11.17; Vā. 28.14. 1) Bḍ. –स्त्व– । 2) Bḍ. सा क्षा– । 3) Bḍ. –वान् ।
17 = Bḍ. I. 11.18; Vā. 28.15.
18 = Bḍ. I. 11.19, 20a; Vā. 28.16. 1) Vā. T. संहूती । 2) Bḍ. तथा । 3) Vā. T. –मुदपादयत् ।
19 = Bḍ. I. 11.20b, 21a; Vā. 28.17. 1) Bḍ. वीत– । 2) Vā. T. वरिष्ठं । 3) Vā. चाप्यु– ।
20 = Bḍ. I. 11.21b, 22a; Vā. 28.18. 1) Vā. येऽ– । 2) Vā. –यापि जज्ञे तान् ।
21 = Bḍ. I. 11.22b, 23a; Vā. 28.19. 1) Bḍ. सा । 2) Vā. तु या पत्नी । 3) Vā. पु– ।
22 = Bḍ. I. 11.23b, 24a; Vā. 28.20ab. 1) Vā. T. शनीश्वरः ।
23 = Bḍ. I. 11.24b, 25a; Vā. 28.20c, 21a. 1) Vā. यामेऽतीते । 2) Vā. ह्यत्रिणा वै महात्मना ।
24 = Bḍ. I. 11.25b, 26a; Vā. 28.21b, 22a. 1) Vā. यामे । 2) Bḍ. दानाग्नि–; Vā. दत्तोलि– ।
25 = Bḍ. I. 11.26b, 27a; Vā. 28.22bc. 1) Bḍ. अत्रिनामा च ।

स्वसा यवीयसी तेषां सद्वती नाम विश्रुता ।
पर्जन्यजननी शुभ्रा, पत्नी त्व[1]ग्नेः स्मृता शुभा ॥ 26 ॥

पौलस्त्यस्य ऋषेश्चापि[1]) प्रीतिपुत्रस्य धीमतः ।
दत्तोलेः[2]) सुषुवे पत्नी सुजङ्घी च[3]) बहून् सुतान् ॥ 27 ॥

पौलस्त्या इति विख्याताः, स्मृताः स्वायंभुवेऽन्तरे ।
क्षमा तु सुषुवे पुत्रान् पुलह[1]स्य प्रजापतेः ॥ 28 ॥

त्रेता[1]ग्निवर्चसः सर्वे, येषां कीर्तिः प्रतिष्ठिता, ।
कर्दमश्चोर्वरीवांश्च[2]) सहिष्णुश्चेति ते त्रयः ॥ 29 ॥

ऋषिर्वनकपीवां[1]श्च शुभा कन्या च पीवरी ।
कर्दमस्य श्रुतिः पत्नी आत्रेय्यजनयत् स्वयम्[2]) ॥ 30 ॥

पुत्रं शङ्खपदं चैव[1]) कन्यां काम्यां तथैव च ।
स वै शङ्खपदः श्रीमाँल्लोकपालः प्रजापतिः ॥ 31 ॥

दक्षिणस्यां दिशि रतः, काम्या दत्ता[1]) प्रियव्रते ।
काम्या प्रियव्रताल्लेभे स्वायंभुवसमान् सुतान् ॥ 32 ॥

दश कन्याद्वयं चैव, यैः क्षत्रं संप्रवर्तितम् ।
पुत्रो धनकपीवांश्च[1]) सहिष्णुर्ना[2]म विश्रुतः[3]) ॥ 33 ॥

यशोधरा[1]) विजज्ञे वै कामदेवं[2]) सुमध्यमा ।
क्रतोः क्रतुसमान्[3]) पुत्रान्[4]) विजज्ञे संन[5]तिः शुभा ॥ 34 ॥

तेषां न भार्या[1]) पुत्रो वा, सर्वे ते ह्यू[2]र्ध्वरेतसः ।
षष्टयेतानि[3]) सहस्राणि वालखिल्या इति श्रुताः ॥ 35 ॥

अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ।
आ भूतसंप्लवात् सर्वे पतंगसहचारिणः ॥ 36 ॥

स्वसारौ तु[1]) यवीयस्यौ पुण्या सत्यवती[2]) च ते ।
पर्वसस्य[3]) स्नुषे ते वै पूर्णमाससुतस्य तु[4]) ॥ 37 ॥

ऊर्जायां तु वसिष्ठस्य पुत्रा वै[1]) सप्त जज्ञिरे ।
ज्यायसी च स्वसा[2]) तेषां पुण्डरीका सुमध्यमा ॥ 38 ॥

---

26 = Bḍ. I. 11.27$^{b}$, 28$^{a}$; Vā. 28.23. 1) चा– ।

27 = Bḍ. I. 11.28$^{b}$, 29$^{a}$; Vā. 28.24$^{ab}$. 1) Bḍ. च महर्षेः । 2) Bḍ. दानाश्च; Vā. दत्तालेः । 3) Vā. –ह्वादीन् ।

28 = Bḍ. I. 11.29$^{b}$, 30$^{a}$; Vā. 28.24$^{c}$, 25$^{a}$. 1) Bḍ. –लस्त्य– ।

29 = Bḍ. I. 11.30$^{b}$, 31$^{a}$; Vā. 28.25$^{b}$, 26$^{a}$. 1) Vā. T. ते चा– । 2) Vā. चाम्बरीपश्च ।

30 = Bḍ. I. 11.31$^{b}$, 32$^{a}$; Vā. 28.26$^{b}$, 27$^{a}$. 1) Bḍ. –षिः कनकपीठ–; Vā. T. –र्धनकपीवां– । 2) Vā. सुतान् ।

31 = Bḍ. I. 11.32$^{b}$, 33$^{a}$; Vā. 28.27$^{b}$, 28$^{a}$. 1) Bḍ. नाम ।

32 = Bḍ. I. 11.33$^{b}$, 34$^{a}$; Vā. 28.28$^{b}$, 29$^{a}$. 1) Vā. –म्यां दत्वा ।

33 = Bḍ. I. 11.34$^{b}$, 35$^{a}$; Vā. 28.29$^{b}$, 30$^{a}$. 1) Bḍ. –त्रं कनकपीठस्य । 2) Bḍ. –ष्णुं ना– । 3) Bḍ. –तम् ।

34 = Bḍ. I. 11.35$^{b}$, 36$^{a}$; Vā. 28.30$^{b}$; 31$^{a}$. 1) Vā. T. –धारी । 2) Vā. –वः । 3) Vā. ऋतोः क्रतुसमः ।
4) Vā. –त्रो । 5) Vā. T. संत– ।

35 = Bḍ. I. 11.36$^{b}$, 37$^{a}$; Vā. 28.31$^{bc}$. 1) Vā. नैषां भार्यास्ति । 2) Bḍ. ते ऊ– । 3) Bḍ.1 तानि षष्टि ।

36 = Bḍ. I. 11.37$^{b}$, 38$^{a}$; Vā. 28.32.

37 = Bḍ. I. 11.38$^{b}$, 39$^{a}$; Vā. 28.33. 1) Bḍ. तद् । 2) Vā. पुण्यात्मस्रुमती । 3) Bḍ. –शस्य । 4) Vā. वै ।

38 = Bḍ. I. 11.39$^{b}$, 40$^{a}$; Vā. 28.34. 1) Bḍ. वासिष्ठाः । 2) Bḍ. सुता ।

जननी सा द्युतिमतः प्राणस्य[1]) महिषी प्रिया, ।
तस्यास्तु ये[2]) यवीयांसो वासिष्ठाः सप्त विश्रुताः ॥ 39 ॥

रजो[1]) गर्तोर्ध्व[2]बाहुश्च सवनः पवनश्च[3]) यः ।
सुतपाः शुक्ल इ[4]त्येते सर्वे सप्तर्षयः स्मृताः ॥ 40 ॥

रजसो वाप्य[1]जनयत् मार्कण्डेयी यशस्विनी ।
प्रतीच्यां दिशि राजानं[2]) केतुमन्तं प्रजापतिम् ॥ 41 ॥

गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम् ।
स्वायंभुवेऽन्तरेऽतीतान्य[1]ग्नेस्तु शृणुत प्रजाः ! ॥ 42 ॥

इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्तितः ।
विस्तरेणानुपूर्व्या च अ[1]ग्नेर्वक्ष्याम्यतः परम्[2]) ॥ 43 ॥

योऽसावग्निर[1]भिमानी स्मृतः[2]) स्वायंभुवेऽन्तरे ।
ब्रह्मणो मानसः पुत्रस्तस्मात् स्वाहा व्यजायत ॥ 44 ॥

पावकं[1]) पवमानं च[2]), शुचिरग्निश्च[3]) यः स्मृतः ।
निर्मथ्यः पवमानस्तु, वैद्युतः पावकः स्मृतः, ॥ 45 ॥

शुचिः सौ[1]रस्तु विज्ञेयः, स्वाहापुत्रास्तु ते त्रयः[2]) ।
निर्मथ्यः[3]) पवमानस्तु, शुचिः सौरस्तु यः स्मृतः, ॥ 46 ॥

अब्योनिर्वै[1]द्युतश्चैव[2]), तेषां स्थानानि ता[3]नि वै ।
पवमानात्मजश्चैव कव्यवाहन उच्यते, ॥ 47 ॥

पावकिः[1]) सहरक्षस्तु, हव्यवाहः शुचेः सुतः ।
देवानां हव्यवाहोऽग्निः, पितॄणां कव्यवाहनः, ॥ 48 ॥

सहरक्षोऽसुराणां तु, त्रयाणां ते[1]) त्रयोऽग्नयः ।
एतेषां पुत्रपौत्रास्तु चत्वारिंशन्नवैव तु, ॥ 49 ॥
वक्ष्यामि नामभि[1]स्तेषां प्रविभागं पृथक् पृथक् ।
विश्रुतो[2]) लौकिका[3]ग्निस्तु प्रथमो ब्रह्मणः सुतः, ॥ 50 ॥

ब्रह्मोदना[1]ग्निस्तत्पुत्रो भरतो नाम विश्रुतः ।
वैश्वानरः सुतस्तस्य वहन् हव्यं समाः शतम्[2]) ॥ 51 ॥

अमृतो[1])ऽथर्वणा[2]) पूर्वं मथितः[3]) पुष्करोदधौ, ।

---

39 = Bd. I. 11.40b, 41a; Vā. 28.35. 1) Vā. पाण्डोस्तु । 2) Vā. अस्यां (V. –स्यास्)तिस्रे ।
40 = Bd. I. 11.41b, 42a; Vā. 28.36. 1) Bd. रक्षो । 2) Vā. रजःपुत्रोऽर्ध– । 3) Vā. चाधनश्च । 4) Bd. शङ्कुरि– ।
41 = Bd. I. 11.42b, 43a; Vā. 28.37. 1) Bd. रत्नो वराङ्ग्य– । 2) Vā. –जन्यं ।
42 = Bd. I. 11.43b, 44a; Vā. 28.38. 1) Vā. –ऽतीतास्त्व– ।
43 = Bd. I. 11.44b, 45; Vā. 28.39. 1) Bd.1–र्व्यांच्च अ–; Vā. चाप्य– । 2) Vā. –प्यग्नेस्तु शृणुत प्रजाः ।
44 = Bd. I. 12.1; Vā. 29.1. 1) Bd. –ग्नेर– । 2) Vā. ह्यासीत् ।
45 = Bd. I. 12.2; Vā. 29.2a = a. 1) Vā. –कः । 2) Vā. –नश्च । 3) Vā. पावमानश्च ।
46 = Bd. I. 12.3; Vā. 29.2b, 3a. 1) Vā. T. शौ– । 2) Vā. –स्त्रयस्तु ते । 3) Vā. –थ्य– ।
47 = Bd. I. 12.4; Vā. 29.3b, 4a. 1) Vā. पावका वै– । 2) Vā. –ताश्चैव । 3) Vā. या– ।
48 = Bd. I. 12.5; Vā. 29.4b, 5a. 1) Vā. –कात् ।
49 = Bd. I. 12.6; Vā. 29.5b, 6a. 1) Bd. Vā. T. तु ।
50 = Bd. I. 12.7; Vā. 29.6b, 7a. 1) Vā. –त– । 2) Vā. वैद्युतो । 3) Bd. –कोऽ– ।
51 = Bd. I. 12.8; Vā. 29.7b,(8a). 1) Bd.1 –ह्मो दत्ता–; Vā. औद–(?) । 2) Vā. सुतस्तस्य महः काव्यो ह्यपां रसः ।
52 = Bd. I. 12.9; Vā. 29.8bc. 1) Bd. संभृतो– । 2) Vā. –णात् । 3) Bd.1 –र्वंमेथितिः; Bd.2 –र्वंमथीतः ।

सोऽथर्वा लौकिका[4]ग्निस्तु दध्यङ्ङो[5]ऽथर्वणः सुतः[6]) ॥ 52 ॥
अथर्वा तु भृगुर्ज्ञेयो[1]) ह्य[2]ङ्गिराथर्वणः स्मृ[3]तः ।
तस्मात् स लौकिका[4]ग्निस्तु दध्यङ्ङो[5]ऽथर्वणो मतः ॥ 53 ॥
अथ यः[1]) पवमानस्तु[2]) निर्मथ्यः कविभिः स्मृतः, ।
स ज्ञेयो गार्हपत्योऽग्निस्तस्य[3]) पुत्रद्वयं स्मृतम् ॥ 54 ॥
शंस्यस्त्वाहवनीयोऽग्निः, स्मृतो यो[1]) हव्यवाहनः, ।
द्वितीयस्तु सुतः प्रोक्तः, शुक्रोऽग्निर्यः प्रणीयते ॥ 55 ॥
तथा सव्यापसव्यौ[1]) च शंस्यस्याग्नेः सुतावुभौ ।
शंस्यस्तु[2]) षोडश नदीश्चकमे हव्यवाहनः, ॥ 56 ॥
योऽसावाहवनीयोऽग्निरभिमानी द्विजैः स्मृतः ।
कावेरीं कृष्णवेणां[1]) च नर्मदां यमुनां तथा ॥ 57 ॥
गोदावरीं वितस्तां च चन्द्रभागामिरावतीम् ।
विपाशां कौशिकीं चैव शतद्रुं सरयूं तथा ॥ 58 ॥
सीतां सरस्वतीं चैव ह्लादिनीं पावनीं तथा ।
तासु षोडशधात्मानं प्रविभज्य पृथक् पृथक् ॥ 59 ॥
आत्मानं व्यदधात्, तासु धिष्णीस्वथ बभूव सः ।

| | |
|---|---|
| कृत्तिकाचारिणी धिष्णी जज्ञिरे ताश्च धिष्णयः ॥ 60 ॥ | धिष्ण्यादव्यभिचारिण्य- स्तासूत्पन्नास्तु धिष्णयः ॥ 60 ॥ |

धिष्णीषु जज्ञिरे यस्माद्धिष्णयस्तेन कीर्तिताः ।
इत्येते वै नदीपुत्रा धिष्णीष्वेव[1]) विजज्ञिरे ॥ 61 ॥
तेषां विहरणीया ये उपस्थेयाश्च येऽग्नयः, ।
cp. Śl. 70b, 71a. तान् शृणुध्वं समासेन कीर्त्यमानान् यथातथम्[1]) ॥ 62 ॥
विभुः[1]) प्रवाहणोऽग्नीध्रस्तत्रस्था[2]) धिष्णयोऽपरे ।
विधीयन्ते यथास्थानं सौत्येऽह्नि[3]) सवने[4]) क्रमात् ॥ 63 ॥
अनिर्देश्यान्यवाच्याना[1]मग्नीनां शृणुत क्रमम् ।
सम्राडग्निः कृशानुर्यो द्वितीयोऽन्त[2]र्वेदिकः ॥ 64 ॥
सम्राडग्निमुखान[1]ष्टौ उपतिष्ठन्ति तान् द्विजान्[2]) ।
परिषत्पत्रमान[3]स्तु द्वितीयः सोऽनुदिश्य[4]ते ॥ 65 ॥

---

4) Bḍ. –कोऽ– । 5) Bḍ. दर्पहा– । 6) Bḍ. Vā. V. स्मृतः ।
53 = Bḍ. I. 12.10; Vā. 29.9. 1) Bḍ. –र्ज्ञेशे । 2) Vā. –ऽप्य– । 3) Vā. T. सु– । 4) Bḍ. –कोऽ– । 5) Bḍ. –ङ्गा ।
54 = Bḍ. I. 12.11; Vā. 29.10. 1) Bḍ. आथर्वः । 2) Vā. –नोऽग्निर् । 3) Vā. –स्ततः ।
55 = Bḍ. I. 12.12; Vā. 29.11. 1) Vā. यः स्मृतो ।
56 = Bḍ. I. 12.13; Vā. 29.12[ab]. 1) Vā. सव्यावसव्यौ वै । 2) Vā. –स्यास्तु ।
57 = Bḍ. I. 12.14; Vā. 29.12[c], 13[a]. 1) Vā. –णीं ।
58 = Bḍ. I. 12.15; Vā. 29.13[b], 14[a].
59 – Bḍ. I. 12.16; Vā. 29.14[b], 15[a].
60[a] = Bḍ. I. 12.17[a]; Vā. 29.15[b].
60[b] = Bḍ. I. 12.17[b]. | 60[b] = Vā. 29.16[a].
61 = Bḍ. I. 12.18; Vā. 29.16[b], 17[a]. 1) Bḍ. –वं ।
62 = Bḍ. I. 12.19; Vā. 29.17[bc]. 1) Vā. –था ।
63 = Bḍ. I. 12.20; Vā. 29.18. 1) Vā. ऋतुः । 2) Vā. –न्नः पुरस्ताद् । 3) Bḍ. सूत्याहे । 4) Vā. –न– ।
64 = Bḍ. I. 12.21; Vā. 29.19. 1) Bḍ. अनुद्देश्य निवाच्याना– । 2) Vā. –योत्त– ।
65 = Bḍ. I. 12.22; Vā. 29.20. 1) Vā. –भिः स्मृता च– । 2) Vā. –जाः । 3) Vā. अधस्तात् पर्यन्दन्य– । 4) Vā. –ऽत्र दृश्य– ।

प्रतक्कान् यो[1]) नभो नाम, चत्वरेऽसौ[2]) विभाव्यते ।
हव्यस्ततो ह्यसंमृष्टः[3]) शामित्रेऽग्नौ[4]) विभाव्यते ॥ 66 ॥
ऋतुधामा च सुज्योतिरौदुम्बर्यः[1]) प्रकीर्त्यते ।
विश्वव्यचाः[2]) समुद्रोऽग्निर्ब्रह्मस्थाने स कीर्त्यते, ॥ 67 ॥
ब्रह्मज्योतिर्वसुर्ना[1]म ब्रह्मस्थाने स उच्यते, ।
अजैकपादुपस्थेयः[2]) स वै शालामुखीयकः ॥ 68 ॥
अनुद्देश्यो ह्य[1]हिर्बुध्न्यः[2]) सोऽग्निर्गृहपतिः स्मृतः ।
शंस्यस्यैते[3]) सुताः सर्वे उपस्थेया द्विजैः स्मृताः ॥ 69 ॥
ततो विहरणीयांश्च वक्ष्याम्यष्टौ च[1]) तत्सुतान् ।
Cp. Śl. 88. { विभुः[2]) प्रवाहणोऽग्नीध्रस्तत्रस्था धिष्णयो[3]ऽपरे ॥ 70 ॥
विधी[1]यन्ते यथास्थानं सौत्येऽह्नि सवने[2]) क्रमात् ।
होत्री[3]यस्तु[4]) स्मृ[5]तो ह्यग्निर्वर्हिर्यो[6]) हव्यवाहनः, ॥ 71 ॥
प्रशान्तोऽग्निः[1]) प्रचेतास्तु द्वितीयश्चात्र नामकः[2]), ।
ततो[3]ऽग्निर्वैश्व[4]देवस्तु ब्रह्मणाच्छंसिरु[5]च्यते ॥ 72 ॥

| | |
|---|---|
| उशिगग्निः कवियंस्तु<br>पोता[1]ग्निः स विभाव्यते, ।<br>आवारिरग्निर्वाभारि-<br>वैंष्ठीयः स विभाव्यते ॥ 73 ॥ | उशिगग्निः कवि[1]यंस्तु<br>नेष्ठीयः संविभाव्यते, ॥ 73 ॥ |
| अवस्फूर्जो विवस्वांस्तु,<br>आस्थां(?)श्चैव स उच्यते, ।<br>अष्टमः सुष्युरग्निर्यो<br>मार्जालीयः स उच्यते ॥ 74 ॥ | अवसुरच्छावाकस्तु<br>ध्रुवः स्थाने विभाव्यते, ।<br>अष्टमस्तु व्यरत्निस्तु<br>मार्जालीयः प्रकीर्तितः ॥ 74 ॥ |
| धिष्ण्यावाहरणा ह्येते<br>सौत्येऽह्नीज्यन्त वै द्विजैः ।<br>अपां योनिः स्मृतोऽसौ, स<br>ह्यप्सुनामा विभाव्यते ॥ 75 ॥ | धिष्ण्या विहरणीया ये<br>सौम्येनाज्येन चैव हि ॥ 75 ॥ |

ततो यः[1]) पावको नाम्ना[2]), स चापां[3]) गर्भ उच्यते, ।
अग्निः सोऽवभृथो[4]) ज्ञेयो, वारुणेन सहेज्यते[5]) ॥ 76 ॥

---

66 = Bḍ. I. 12.23; Vā. 29.21[a], 22[a]. 1) Bḍ.1 –तत्कान् यो; Vā. प्रतक्षोचे । 2) Vā. –त्वारि स । 3) –व्यः Vā. सूर्यांचसंस– । 4) Vā. स ।
67 = Bḍ. I. 12.24; Vā. 29.23[a], 22[b]. 1) Vā. –र्यां । 2) Vā. –स्वाय– ।
68 = Bḍ. I. 12.25; Vā. 29.23[b], 24[a]. 1) Bḍ. –र्थां– । 2) Bḍ.1 –स्थो यः ।
69 = Bḍ. I. 12.26; Vā. 29.24[b], 25[a]. 1) Vā. –ऽप्य– । 2) Bḍ.1 –ध्न्यो; Vā. T. –ध्नः । 3) Vā. –स्यैव ।
70 = Bḍ. I. 12.27; Vā. 29.25[b], 26[a]. 1) Bḍ. तु । 2) Vā. ऋतु– । 3) Bḍ. –स्तेषां धिष्ण्यस्तथा– ।
71 = Bḍ. I. 12.28; Vā. 29.26[b], 27[a]. 1) Vā. विह– । 2) Vā. –न– । 3) Vā. पौत्रे– । 4) Vā. –स्तत । 5) Vā. ह्य । 6) Vā. –ग्निः स्मृतो यो ।
72 = Bḍ. I. 12.29; Vā. 29.27[b], 28[a]. 1) शान्तिश्चाग्निः । 2) Vā. –यः सत्य उच्यते । 3) Vā. –था । 4) Vā. –विश्व– । 5) Vā. –ह्मस्थाने स उ– ।

| | |
|---|---|
| 73 = Bḍ. I. 12.30. 1) Bḍ. T. –तोऽ– । | 73 = Vā. 29.29[a]. 1) Vā. T. उशीराग्निः सवी– । |
| 74 = Bḍ. I. 12.31. | 74 = Vā. 29.28[b], 29[b]. |
| 75 = Bḍ. I. 12.32. | 75 = Vā. 29.30[a]. |

76 = Bḍ. I. 12.33; Vā. 29.30[b], 31[a]. 1) Vā. तयोर्यः । 2) Vā. नाम । 3) Bḍ.1 अब्जो यो; Bḍ.2 अब्जोपां । 4) Bḍ.1 –थे । 5) Vā. –यः सम्यक्प्राप्याप्सु हूयते ।

हृच्छयस्तत्सुतो ह्यग्निर्जठरे यो नृणां पचन्[1]) ।
मन्यु[2]मान्जाठरस्याग्नेर्विद्वानग्निः सुतः स्मृतः ॥ 77 ॥
परस्परोच्छ्रितः[1]) सोऽग्निर्भूतानीह विनिर्दहेत्[2]), ।
पुत्रस्त्व[3]ग्नेर्मन्युमतो घोरः संवर्तकः स्मृतः ॥ 78 ॥
पिबन्नपः स वसति समुद्रे वडवामुखः ।
समुद्रवासिनः पुत्रः सहरक्षो विभाव्यते ॥ 79 ॥
सहरक्षसुतः क्षामो गृहाणि[1]) दहते[2]) नृणाम्, ।
क्रव्याद[3]ग्निः सुतस्तस्य, पुरुषानत्ति यो मृतान् ॥ 80 ॥
इत्येते पावकस्याग्नेः पुत्रा एव[1]) प्रकीर्तिताः ।
ततः शुचि[2]स्तु वै[3]) सौरो ग[4]न्धर्वैरासुराहृतः[5]), ॥ 81 ॥
मथितो यस्त्वरण्यां वै[1]) सोऽग्निरग्निः समिध्यते[2]) ।
आयुर्नाम[3]) तु[4]) भगवानसौ[5]), यस्तु प्रणीयते ॥ 82 ॥
आयुषो महिषः[1]) पुत्रः, सवनो[2]) नाम तत्सु[3]तः, ।
पाकयज्ञेष्वभी[4]मानी सोऽग्निस्तु सवनः[5]) स्मृतः ॥ 83 ॥
पुत्रश्च सवन[1]स्याग्नेरद्भुतः स महायशाः, ।
विविचिश्चा[2]द्भुतस्यापि पुत्रोऽग्नेस्तु[3]) महान् स्मृतः, ॥ 84 ॥
प्रायश्चित्तेष्वभीमानी[1]) हुतं भुङ्क्ते हविः सदा ।
विविचे[2]स्तु सुतो ह्यर्कस्तस्य चाग्नेः सुता इ[3]मे ॥ 85 ॥
अनीकवान् वाजसृक् च[1]) रक्षोहा पथि[2]कृत् तथा ।
सुरभिर्वसुरन्नादो[3]) प्रविष्टो यः स रुक्मराट्[4]) ॥ 86 ॥
शुचेरग्नेः प्रजा ह्येष वह्नयश्च[1]) चतुर्दश, ।
इत्येते वह्नयः[2]) प्रोक्ताः प्रणीयन्तेऽध्वरेषु ये[3]) ॥ 87 ॥
आदिसर्गे व्य[1]तीता वै यामैः सह सुरोत्तमैः ।
स्वायंभुवेऽन्तरे पूर्वमग्नयस्तेऽभिमानिनः ॥ 88 ॥
एते विहरणीयेषु[1]) चेतनाचेतनेष्विह[2]) ।
स्थानाभिमानिनो लोके प्रागासन् हव्यवाहनाः ॥ 89 ॥

---

77 = Bḍ. I. 12.34; Vā. 29.31b, 32a. 1) Vā. स्थितः । 2) Bḍ.1 मृत्यु- ।
78 = Bḍ. I. 12.35; Vā. 29.32b, 33a. 1) Bḍ.1 –रोत्थितः । 2) Bḍ.2 –हन् ; Vā. विसुर्महान् । 3) Vā. –त्रः सोऽ- ।
79 = Bḍ. I. 12.36; Vā. 29.33b, 34a.
80 = Bḍ. I. 12.37; Vā. 29.34b, 35a. 1) Bḍ. –णां । 2) Vā. स दहेन् । 3) Vā. –दोऽ– ।
81 = Bḍ. I. 12.38; Vā. 29.35b, 36a. 1) Vā. ह्येवं । 2) Vā. –चे– । 3) Vā. यैः । 4) Vā. –रेर्गं– । 5) Vā. –रसुरावृतैः ।
82 = Bḍ. I. 12.39; Vā. 29.36b, 37a. 1) Bḍ. च । 2) Bḍ. –ग्निं समिन्धति । 3) Bḍ. –म्ना । 4) Vā. –माथ । 5) Vā. –वान् पश्चौ ।
83 = Bḍ. I. 12.40; Vā. 29.37b, 38a. 1) Vā. –मान् । 2) Bḍ. सहसो । 3) Vā. स शावाश्नामतः सु– । 4) Vā. –भि– । 5) Bḍ. –हसः ।
84 = Bḍ. I. 12.41; Vā. 29.38b, 39a. 1) Bḍ. –हस– । 2) Bḍ. –विश्वा–; Vā. –चिस्त्व– । 3) Vā. –ग्नेः स । सुतास्त्रि– ।
85 = Bḍ. I. 12.42; Vā. 29.39b, 40a. 1) Vā. T. –चोऽप मीमानां । 2) Bḍ. विविधे– । 3) Vā. –र्कों योऽग्निस्तस्य पश्च रुक्मवान् ।
86 = Bḍ. I. 12.43; Vā. 29.40bc. 1) Vā. वासवश्चाग्र । 2) Bḍ. यष्टि–; Vā. पितृ– । 3) Vā. –सु रत्नादौ । 4) Vā.
87 = Bḍ. I. 12.44; Vā. 29.41. 1) Vā. –यस्तु । 2) Bḍ. चाग्नयः । 3) Bḍ. वै ।
88 = Bḍ. I. 12.45; Vā. 29.42. 1) Vā. ह्य– ।
89 = Bḍ. I. 12.46; Vā. 29.43. 1) Vā. –णीयास्तु । 2) Vā. –नेषु वै ।

काम्यनैमित्तिका यज्ञेष्वे[1]ते कर्मस्ववस्थिताः, ।
पूर्वमन्वन्तरेऽतीताः[2]) शुक्रै[3]र्यामैः सुतैः[4]) सह ॥ 90 ॥

देवैर्महात्मभिः पुण्यैः प्रथमस्यान्तरे मनोः ।
इत्येतानि मयोक्तानि स्थानानि स्थानिनश्च ह ॥ 91 ॥

तैरेव तु प्रसंख्यातमतीतानागतेष्वपि[1]) ।
मन्वन्तरेषु सर्वेषु लक्षणं जातवेदसाम् ॥ 92 ॥

सर्वे तपस्विनो ह्येते, सर्वे महाभुत[1]स्तथा, ।
प्रजानां पतयः सर्वे ज्योतिष्मन्तश्च ते स्मृताः ॥ 93 ॥

स्वारोचिषादिषु ज्ञेयाः सावर्ण्यन्तेषु सप्तसु ।
मन्वन्तरेषु सर्वेषु नाना[1]रूपप्रयोजनैः ॥ 94 ॥

वर्तन्ते वर्तमानैश्च यामैर्देवैः[1]) सहाग्नयः, ।
अनागतैः सुरैः सार्धं वत्स्यन्ते[2])ऽनागताग्नयः ॥ 95 ॥

इत्येष निच[1]योऽग्नीनामनुक्रान्तो[2]) यथाक्रमम्[3]) ।
विस्तरेणानुपूर्व्या च पितॄणां वक्ष्यते पुनः[4]) ॥ 96 ॥

[ Bḍ. I. 13.1—I. 36.82; Vā. 30.1—62.70. ]

---

90 = Bḍ. I. 12.47; Vā. 29.44ab. 1) Vā. –का जज्ञे–। 2) Vā. T. –ऽतीते। 3) Vā. –क्लै–। 4) Bḍ. –र्यामैश्च तैः।

91 = Bḍ. I. 12.48; Vā. 29.44c, 45a.

92 = Bḍ. I. 12.49; Vā. 29.45b, 46a. 1) Bḍ. –ष्विह।

93 = Bḍ. I. 12.50; Vā. 29.46bc. 1) Vā. ह्यवभृथा–।

94 = Bḍ. I. 12.51; Vā. 29.47. 1) Bḍ. नाम–।

95 = Bḍ. I. 12.52; Vā. 29.48. 1) Vā. देवैरिह। 2) Vā. वर्तन्ते।

96 = Bḍ. I. 12.53; Vā. 29.49. 1) Vā. विन–। 2) Vā. –नां मया प्रोक्तो। 3) Vā. –तथम्। 4) Vā. ततः।

## सन्दर्भस्तवकः III

( Mt. 2.22—4.32. )

### द्वितीयोऽध्यायः

मनुरुवाच :

उत्पत्तिं प्रलयं चैव वंशान् मन्वन्तराणि च ।
वंश्यानुचरितं चैव भुवनस्य च विस्तरम् ॥ 22 ॥
दानधर्मविधिं चैव श्राद्धकल्पं च शाश्वतम् ।
वर्णाश्रमविभागं च तथेष्टापूर्तसंज्ञितम् ॥ 23 ॥
देवतानां प्रतिष्ठादि यच्चान्यद्विद्यते भुवि, ।
तत्सर्वं विस्तरेण त्वं धर्मं व्याख्यातुमर्हसि ! ॥ 24 ॥

मत्स्य उवाच :

महाप्रलयकालान्त एतदासीत् तमोमयम् ।
प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम्, ॥ 25 ॥
अविज्ञेयमविज्ञातं जगत् स्थास्नु चरिष्णु च ।
ततः स्वयंभूरव्यक्तः प्रभवः पुण्यकर्मणाम् ॥ 26 ॥
व्यञ्जयन्नेतदखिलं प्रादुरासीत् तमोनुदः ।
योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान् सनातनः ।
नारायण इति ख्यातः स एकः स्वयमुद्बभौ ॥ 27 ॥
यः शरीरादभिध्याय सिसृक्षुर्विविधं जगत् ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ 28 ॥
तदेवाण्डं समभवद्धेमरूप्यमयं महत् ।
संवत्सरसहस्रेण सूर्यायुतसमप्रभम् ॥ 29 ॥
प्रविश्यान्तर्महातेजाः स्वयमेवात्मसंभवः ।
प्रभावादपि तद्व्याप्त्या विष्णुत्वमगमत् पुनः ॥ 30 ॥
तदन्तर्भगवानेष सूर्यः समभवत् पुरा ।
आदित्यश्चादिभूतत्वाद् ब्रह्मा ब्रह्म पठन्नभूत् ॥ 31 ॥
दिवं भूमिं समकरोत् तदण्डशकलद्वयम् ।
स चाकरोद्दिशः सर्वा मध्ये व्योम च शाश्वतम् ॥ 32 ॥
जरायुर्मेरुमुख्याश्च, शैलास्तस्याभवंस्तदा, ।
यदुल्बं तदभून्मेघस्तडित्संघातमण्डलम् ॥ 33 ॥
नद्योऽण्डनाम्न्यः[1]) संभूताः पितरो मनवस्तथा, ।
सप्ता येऽमी समुद्राश्च तेऽपि चान्तर्जलोद्भवाः ।
लवणेक्षुसुराद्याश्च नानारत्नसमन्विताः ॥ 34 ॥
स सिसृक्षुरभूद् देवः प्रजापतिररिंदम ।
तत्तेजसश्च तत्रैष मार्तण्डः समजायत ॥ 35 ॥
मृतेऽण्डे जायते यस्मान्मार्तण्डस्तेन संस्मृतः ।
रजोगुणमयं यत्तद्रूपं तस्य महात्मनः ।
चतुर्मुखः स भगवानभूल्लोकपितामहः, ॥ 36 ॥

---

34 = 1) T. –नाम्नः ।

येन सृष्टं जगत् सर्वं सदेवासुरमानुषम् ।
तमवेहि रजोरूपं; महत् सत्त्वमुदाहृतम् ॥ 36 ॥

( तृतीयोऽध्यायः )

मनुरुवाच :
चतुर्मुखत्वमगमत् कस्माल्लोकपितामहः, ।
कथं तु लोकानसृजद् ब्रह्मा ब्रह्मविदां वरः ? ॥ 1 ॥
मत्स्य उवाच :
तपश्चचार प्रथममपराणां पितामहः, ।
आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः ॥ 2 ॥
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥ 3 ॥
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।
मीमांसान्यायविद्याश्च प्रमाणाष्टकसंयुताः ॥ 4 ॥
वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः ।
मनसः पूर्वसृष्टा वै जाता यत्, तेन मानसाः ॥ 5 ॥
मरीचिरभवत् पूर्वं, ततोऽत्रिर्भगवान् ऋषिः, ।
अङ्गिराश्चाभवत् पश्चात्, पुलस्त्यस्तदनन्तरम्, ॥ 6 ॥
ततः पुलहनामा वै, ततः क्रतुरजायत, ।
प्रचेताश्च ततः पुत्रो, वसिष्ठश्चाभवत् पुनः, ॥ 7 ॥
पुत्रो भृगुरभूत् तद्वन्नारदोऽप्यचिरादभूत् ।
दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् ॥ 8 ॥
शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः ।
अङ्गुष्ठाद् दक्षिणाद् दक्षः प्रजापतिरजायत, ॥ 9 ॥
धर्मः स्तनान्तादभवद्धृदयात् कुसुमायुधः, ।
भ्रूमध्यादभवत् क्रोधो, लोभश्चाधरसंभवः, ।
बुद्धेर्मोहः समभवदहंकारादभून् मदः, ।
प्रमोदश्चाभवत् कण्ठान्, मृत्युर्लोचनतो नृप, ।
भरतः करमध्यात् तु ब्रह्मसूनुरभूत् ततः ॥ 11 ॥
एते नव सुता राजन् कन्या च दशमी पुनः ।
अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता ॥ 12 ॥
मनुरुवाच :
बुद्धेर्मोहः समभवदिति यत् परिकीर्तितम् ।
अहंकारः स्मृतः क्रोधो, बुद्धिर्नाम किमुच्यते ? ॥ 13 ॥
मत्स्य उवाच :
सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्, ।
साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता ॥ 14 ॥
केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः, ।
एतदेव प्रजासृष्टिं करोति विकरोति च ॥ 15 ॥
गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे, ।
एका मूर्तिस्त्रयो भागा, ब्रह्मा-विष्णु-महेश्वराः ॥ 16 ॥
सविकारात् प्रधानात् तु महत्तत्त्वं प्रजायते, ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ 17 ॥
अहंकारश्च महतो जायते मानवर्धनः, ।
इन्द्रियाणि ततः पञ्च वक्ष्ये बुद्धिवशानि तु, ।
प्रादुर्भवन्ति चान्यानि तथा कर्मवशानि तु ॥ 18 ॥

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका च यथाक्रमम् ।
पायूपस्थं हस्तपादं वाक् चेतीन्द्रियसंग्रहः ॥ 19 ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः ॥ 20 ॥
मन एकादशं तेषां कर्मबुद्धिगुणान्वितम् ।
इन्द्रियावयवाः सूक्ष्मास्तस्य मूर्तिं मनीषिणः ॥ 21 ॥
श्रयन्ति यस्मात्, तन्मात्राः शरीरं तेन संस्मृतम् ।
शरीरयोगाज् जीवोऽपि शरीरी गद्यते बुधैः ॥ 22 ॥
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं शब्दतन्मात्रादभूच्छब्दगुणात्मकम् ॥ 23 ॥
आकाशविकृतेर्वायुः शब्दस्पर्शगुणोऽभवत् ।
वायोश्च स्पर्शतन्मात्रात् तेजश्चाविरभूत् ततः, ॥ 24 ॥
त्रिगुणं तद्विकारेण तच्छब्दस्पर्शरूपवत् ।
तेजोविकारादभवद्वारि राजंश्चातुर्गुणम्, ॥ 25 ॥
रसतन्मात्रसंभूतं, प्रायो रसगुणात्मकम् ।
भूमिस्तु गन्धतन्मात्रादभूत् पञ्चगुणान्विता, ॥ 26 ॥
प्रायो गन्धगुणा सा तु, बुद्धिरेषा गरीयसी ।
एभिः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः ॥ 27 ॥
ईश्वरेच्छावशः सोऽपि, जीवात्मा कथ्यते बुधैः ।
एवं षड्विंशकं प्रोक्तं शरीरमिह मानवैः, ॥ 28 ॥
सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते ।
एतत् तत्त्वात्मकं कृत्वा जगद् वेधा अजीजनत्, ॥ 29 ॥
सावित्रीं[1]) लोकसृष्ट्यर्थं हृदि कृत्वा समास्थितः ।
ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् ॥ 30 ॥
स्त्रीरूपमर्धमकरोदर्धं पुरुषरूपवत् ।
शतरूपा च सा ख्याता सावित्री च निगद्यते, ॥ 31 ॥
सरस्वत्यथ गायत्री ब्रह्माणी च परंतप ।
ततः स्वदेहसंभूतामात्मजामित्यकल्पयत् ॥ 32 ॥
दृष्ट्वा तां व्यथितस्तावत् कामबाणार्दितो विभुः ।
अहो रूपमहो रूपमिति चाह प्रजापतिः ॥ 33 ॥
ततो वसिष्ठप्रमुखा भगिनीमिति चुक्रुशुः; ।
ब्रह्मा न किंचिद् ददृशे तन्मुखालोकनादृते ॥ 34 ॥
अहो रूपमहो रूपमिति प्राह पुनः पुनः, ।
ततः प्रणामनम्रां तां पुनरेवाभ्यलोकयत् ॥ 35 ॥
अथ प्रदक्षिणं चक्रे सा पितुर्वरवर्णिनी ।
पुत्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया ॥ 36 ॥
आविर्भूतं ततो वक्त्रं दक्षिणं पाण्डुगण्डवत्, ।
विस्मयस्फुरदोष्ठं च पाश्चात्यमुदगात् ततः ॥ 37 ॥
चतुर्थमभवत् पश्चाद् वामं कामशरातुरम् ।
ततोऽन्यदभवत् तस्य कामातुरतया तथा ॥ 38 ॥
उत्पतन्त्यास्तदाकाश आलोकनकुतूहलात् ।
सृष्ट्यर्थं यत् कृतं तेन तपः परमदारुणम्, ॥ 39 ॥
तत् सर्वं नाशमगमत् स्वसुतोपगमेच्छया ।
तेनोर्ध्वं वक्त्रमभवत् पञ्चमं तस्य धीमतः; ।

30 = 1) T. -त्री ।

आविर्भवज्जटाभिश्च तद्वक्त्रं चावृणोत् प्रभुः ॥ 40 ॥
ततस्तानब्रवीद् ब्रह्मा पुत्रान् आत्मसमुद्भवान् ।
प्रजाः सृजध्वमभितः सदेवासुरमानुषीः ! ॥ 41 ॥
एवमुक्तास्ततः सर्वे ससृजुर्विविधाः प्रजाः ।
गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् ॥ 42 ॥
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् ।
स बभूव तया सार्धमतिकामातुरो विभुः, ।
सलज्जां चकमे देवः कमलोदरमन्दिरे ॥ 43 ॥
यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः ।
ततः कालेन महता तस्याः पुत्रोऽभवन् मनुः ॥ 44 ॥
स्वायंभुव इति ख्यातः, स विराडिति नः श्रुतम्, ।
तद्रूपगुणसामान्यादधिपुरुष उच्यते, ॥ 45 ॥
वैराजा यत्र ते जाता बहवः संशितव्रताः, ।
स्वायंभुवा महाभागाः सप्त सप्त तथा परे ॥ 46 ॥
स्वारोचिषाद्याः सर्वे ते ब्रह्मतुल्यस्वरूपिणः, ।
औत्तमिप्रमुखास्तद्वद्, येषां त्वं सप्तमोऽधुना ॥ 47 ॥

## ( चतुर्थोऽध्यायः )

मनुरुवाच :
अहो कष्टतरं चैतदङ्गजागमनं विभो ! ।
कथं न दोषमगमत् कर्मणाऽनेन पद्मभूः, ॥ 1 ॥
परस्परं च सम्बन्धः सगोत्राणामभूत् कथम् ।
वैवाहिकस्तत् सुतानां, छिन्धि मे संशयं विभो ! ॥ 2 ॥
मत्स्य उवाच :
दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा ।
अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरिका ॥ 3 ॥
दिव्यतेजोमयी भूप दिव्यज्ञानसमुद्भवा, ।
न मर्त्यैरभितः शक्या वक्तुं वै मांसचक्षुभिः ॥ 4 ॥
यथा भुजंगाः सर्पाणामाकाशं विश्वपक्षिणाम् ।
विदन्ति मार्गं, दिव्यानां दिव्या एव न मानवाः ॥ 5 ॥
कार्याकार्ये न देवानां शुभाशुभफलप्रदे ।
यस्मात्, तस्मान्न राजेन्द्र तद्विचारो नृणां शुभः ॥ 6 ॥
अन्यच्च, सर्ववेदानामधिष्ठाता चतुर्मुखः, ।
गायत्री ब्रह्मणस्तद्वदङ्गभूता निगद्यते ॥ 7 ॥
अमूर्तं मूर्तिमद्वापि मिथुनं तत् प्रचक्षते ।
विरिञ्चिर्यत्र भगवांस्तत्र देवी सरस्वती; ।
भारती यत्र यत्रैव, तत्र तत्र प्रजापतिः ॥ 8 ॥
यथाऽऽतपो न रहितश्छायया दृश्यते क्वचित्, ।
गायत्री ब्रह्मणः पार्श्वं तथैव न विमुञ्चति ॥ 9 ॥
वेदराशिः स्मृतो ब्रह्मा, सावित्री तदधिष्ठिता, ।
तस्मान्न कश्चिद्दोषः स्यात् सावित्रीगमने विभोः ॥ 10 ॥
तथापि लज्जावनतः प्रजापतिरभूत् पुरा, ।
स्वसुतोपगमाद् ब्रह्मा शशाप कुसुमायुधम् ॥ 11 ॥
यस्मान् ममाभिभवता मनः संक्षोभितं शरैः, ।
तस्मात् त्वद्देहमचिराद् रुद्रो भस्मीकरिष्यति ॥ 12 ॥

ततः प्रसादयामास कामदेवश्चतुर्मुखम् ।
न मामकारणे शप्तुं त्वमिहार्हसि मानद ! ॥ 13 ॥
अहमेवंविधः सृष्टस्त्वयैव चतुरानन ।
इन्द्रियक्षोभजनकः सर्वेषामेव देहिनाम् ॥ 14 ॥
स्त्रीपुंसोरविचारेण मया सर्वत्र सर्वदा ।
क्षोभ्यं मनः प्रयत्नेन, त्वयैवोक्तं पुरा विभो ॥ 15 ॥
तस्मादनपराधोऽहं त्वया शप्तस्तथा विभो; ।
कुरु प्रसादं भगवन् स्वशरीराप्तये पुनः ! ॥ 16 ॥

ब्रह्मोवाच :

वैवस्वतेऽन्तरे प्राप्ते यादवान्वयसंभवः ।
रामो नाम यदा मर्त्यो मत्सत्त्वबलमाश्रितः ॥ 17 ॥
अवतीर्यासुरध्वंसी द्वारकामधिवत्स्यति, ।
तद्भ्रातुस्तत्समस्य त्वं तदा पुत्रत्वमेष्यसि ॥ 18 ॥
एवं शरीरमासाद्य भुक्त्वा भोगानशेषतः ।
ततो भरतवंशान्ते भूत्वा वत्सनृपात्मजः ॥ 19 ॥
विद्याधराधिपत्यं च यावदाभूतसंप्लवम् ।
सुखानि धर्मतः प्राप्य मत्समीपं गमिष्यसि ॥ 20 ॥
एवं शापप्रसादाभ्यामुपेतः कुसुमायुधः ।
शोकप्रमोदाभियुतो जगाम स यथागतम् ॥ 21 ॥

मनुरुवाच :

कोऽसौ यदुरिति प्रोक्तो यद्वंशे कामसंभवः ।
कथं च दग्धो रुद्रेण किमर्थं कुसुमायुधः ॥ 22 ॥
भरतस्यान्वये कस्य का च सृष्टिः पुराभवत् ? ।
एतत् सर्वं समाचक्ष्व मूलतः, संशयो हि मे ! ॥ 23 ॥

मत्स्य उवाच :

या सा देहार्धसंभूता गायत्री ब्रह्मवादिनी, ।
जननी या मनोर्देवी शतरूपा शतेन्द्रिया, ॥ 24 ॥
रात्रिर्मनस्तपो बुद्धिर्महान् दिक् संभ्रमस्तथा, ।
ततः स शतरूपायां सप्तापत्यान्यजीजनत् ॥ 25 ॥
ये मरीच्यादयः पुत्रा मानसास्तस्य धीमतः, ।
तेषामयमभूल्लोकः सर्वज्ञानात्मकः पुरा ॥ 26 ॥
ततोऽसृजद्वामदेवं त्रिशूलवरधारिणम् ।
सनत्कुमारं च विभुं पूर्वेषामपि पूर्वजम् ॥ 27 ॥
वामदेवस्तु भगवानसृजन् मुखतो द्विजान्, ।
राजन्यानसृजद् बाह्वोर्विट्शूद्रावूरुपादयोः ॥ 28 ॥
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
छन्दांसि च ससर्जादौ पर्जन्यं च ततः परम् ॥ 29 ॥
ततः साध्यगणानीशस्त्रिनेत्रानसृजत् पुनः, ।
कोटीश्च चतुरशीतिं जरामरणवर्जिताः ॥ 30 ॥
वामोऽसृजद[1]मर्त्यांस्तान् ब्रह्मणा विनिवारितः ।
नैवंविधा भवेत् सृष्टिर्जरामरणवर्जिता ! ॥ 31 ॥
शुभाशुभात्मिका या तु, सैव सृष्टिः प्रशस्यते ।
एवं स्थितः स तेनादौ सृष्टेः स्थाणुरतोऽभवत् ॥ 32 ॥

31 = 1) T. -र्जं न- ।

# द्वितीयोंऽशः

## वंशः

### प्रथमोऽध्यायः

### सन्दर्भस्तवकः I

( A. 18.1-31[a]; Bd. I. 36.83-116[b], 37.22[b]-60; Br. 2.1-57; H. 54–114; Śidh. 52.1-53.21; Vā. 62.71-98; 63.22-36; Vi. I. 13.1-9[a]; 14.1-7; 15.1-10, 72-84; cp. Ga. 6.1-13; Kū. 14.1-65. )

Cp. Part 1, Text-Gr. II B. Ch. 7.: Śl. 9[b]–16[a].

संसृष्टासु प्रजास्वे[1]वमा[2]पवो वै[3]) प्रजापतिः।
लेभे वै पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ $1_1$ ॥
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः।
धर्मेणैव *मुनिश्रेष्ठाः*[1]) शतरूपा व्यजायत ॥ $1_2$ ॥
सा तु वर्षशतं[1]) तप्त्वा तपः परमदुश्चरम्।
भर्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ॥ $1_3$ ॥
स वै स्वायंभुवो *विप्रा*[1]) पुरुषो मनुरुच्यते।
तस्यै[2]कसप्ततियुगं मन्वन्तरमिहोच्यते ॥ $1_4$ ॥
वैराजात्[1]) पुरुषाद् वीरं[2])
शतरूपा व्यजायत,।
प्रियव्रतोत्तानपादौ
वीरात् काम्या व्यजायत[3]) ॥ $1_5$ ॥
काम्या नाम सुता श्रेष्ठा[1])
कर्दमस्य प्रजापतेः,।

सूत उवाच :
चाक्षुषस्य निसर्गं तु
समासाच्छ्रोतुमर्हथ[1])।
य[2]स्यान्ववाये संभूतः
पृथुर्वैन्यः प्रतापवान्।
प्रजानां पतयश्चान्ये
दक्षः प्राचेतसस्तथा ॥ 1 ॥

---

$1_1$ = Br. 2.1; H. 54; Śidh. 52.1. 1) Br. H. स सृष्टा तु प्रजास्त्वे–। 2) Śidh. –व आ–। 3) Śidh. –ऽथ।
$1_2$ = Br. 2.2; H. 55; Śidh. 52.2. 1) H. महाराज; Śidh. महात्मा सा।
$1_3$ = Br. 2.3; H. 56; Śidh. 52.3. 1) Br. H. –र्षायुतं।
$1_4$ = Br. 2.4; H. 57; Śidh. 52.4. 1) H. –वस्तात; Śidh. स्वयंभुवं जज्ञे। 2) Śidh. यस्यै–।
$1_5$ = A. 18.(1); Br. 2.5; H. 58; Śidh. 52.5. Cfr. Vi. I. 7.16, P.1 I. 3.178[b], 179[a], P.2 V. 3.170[b], 171[a]. 1) Śidh. वैराजः। 2) Śidh. वीरां। 3) Śidh. वीरकायामजायतां; A. प्रियव्रतोत्तनपादौ मनोः स्वायंभुवात् सुतौ। अजीजनत् सुतां रम्यां [ V. कन्यां ] शतरूपा तपोन्विता।

1 = Bd. I. 36.83, 84[a]; Vā. 62.71, 72[a]. 1) Bd. –साच्छृणुत द्विजाः। 2) Vā. त–।

काम्यापुत्राश्च[2]) चत्वारः
सम्राट् कुक्षि[3]र्विराट् प्रभुः[4]) ॥ $1_6$ ॥

उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ।

दत्तकः स[1]) तु पुत्रोऽस्य
राजा ह्यासीत् प्रजापतिः[2]) ॥ $2_1$ ॥
स्वायंभुवेन मनुना
दत्तोऽत्रेः कारणं प्रति ।
मन्वन्तरमथासाद्य
भविष्यञ्चा[1]क्षुषस्य ह ॥ $2_2$ ॥
षष्ठं तदनुवक्ष्यामि
उपोद्घातेन वै द्विजाः ।

उत्तानपादाच्चतुरः[1]) सूनृता सुषुवे सुतान्[2]) ॥ 2 ॥

धर्मस्य कन्या सुश्रोणी[1]) सूनृता ना[2]म विश्रुता ।
उत्पन्ना वाजिमेधेन[3]), ध्रुवस्य जननी शुभा[4]) ॥ 3 ॥

धर्मस्य पत्न्यां लक्ष्यां[1]) वै
उत्पन्ना सा शुचिस्मिता ।

ध्रुवं च कीर्तिमन्तं च आ[1]युष्म[2]न्तं वसुं तथा[3]) ।
उत्तानपादोऽजनयत्
सूनृतायां प्रजापतिः ॥ 4 ॥

उत्तानमादोऽजनयत्
कन्ये द्वे च शुचिस्मिते ॥ 4 ॥

---

$1_6$ = A. 18.(2); Br. 2.6; H. 59; Śidh. 52.6. 1) H. नाम महाबाहो; Śidh. नाम महाभागा । 2) Br. –श्चास्तु; Śidh. –श्चांश्च । 3) Śidh. साम्राक्षाक्षि– । 4) A. काम्या कर्दमकन्यातः सम्राट् कुक्षिर्विराट् प्रभुः । सुरुच्यामुत्तमो जज्ञे पुत्र उत्तानपादतः ॥

$2^a$ = Bḍ. I. 36.84$^b$; Br. 2.7$^a$; H. 60$^b$; Vā. 62.72$^b$.

$2_1$ = Bḍ. I. 36.85$^a$; Vā. 62.73$^a$. 1) Vā. T. दक्षकस्य; V. दत्तकस्य । 2) Vā. –तेः ।

$2_2$ = Bḍ. I. 36.85$^b$, 86$^a$; Vā. 62.73$^b$, 74$^a$. 1) Vā. –विष्यं चा– ।

$2^a$ = Bḍ. I. 36.86$^b$; Vā. 62.74$^b$.

$2^b$ = Bḍ. I. 36.87$^a$; Br. 2.7$^b$; H. 61$^a$; Śidh. 52.(7$^a$); Vā. 62.75$^a$. 1) Vā. T. –श्चतुरा । 2) Bḍ. सूनृतासूत भामिनी; Vā. सूनृता वित्तभाविनी; Śidh. उत्तानपादोऽजनयत् पुत्रान्छक्रसमान् प्रभुः ।

3 = Bḍ. I. 36.87$^b$, 88$^a$; Br. 2.8; H. 61$^b$, 62$^a$; Śidh. 52.7$^b$, 8$^a$; Vā. 62.75$^b$, 76$^a$. 1) Vā. धर्मेशा । 2) Śidh. सुनीतिर्ना– । 3) Bḍ. Śidh. चापि धर्मेण; Vā. चाधिधर्मेण । 4) Śidh. तथा ।

$4^a$ = Bḍ. I. 36.88$^b$; Vā. 62.76$^b$. 1) Vā. लक्ष्यां ।

$4^a$(b) = A. 18.(3$^{a1}$); Bḍ. I. 36.89$^a$; Br. 2.9$^a$; H. 62$^b$; Vā. 62.77$^a$. 1) Bḍ. च ख्या– । 2) Vā. अयस्म– । 3) A. सुनीत्यां च ध्रुवः पुत्रस् ।

$4^b$ = Br. 2.9$^b$; H. 63$^a$.

$4^c$ = Bḍ. I. 36.89$^b$; Vā. 62.77$^b$.

स्वरां मनस्विनीं[1]) चैव,
तयोः पुत्राः प्रकीर्तिताः ।

ध्रुवो वर्षसहस्राणि त्रीणि[1]) दिव्यानि वीर्यवान्[2]) ।
तपस्तेपे निराहारः[3]), प्रार्थयन् सुमहद्[4]) यशः[5]) ॥ 5 ॥

त्रेतायुगे तु प्रथमे
पौत्रः स्वायंभुवस्य सः[1]) ।
आत्मानं धारयन् योगात्
प्रार्थयन् सुमहद् यशः ॥ $5_1$ ॥

तस्मै ब्रह्मा ददौ प्रीतः
स्थानमात्मसमं प्रभुः[1]), ।
अचलं चैव पुरतः
सप्तर्षीणां प्रजापतिः ॥ 6 ॥

तस्मै ब्रह्मा ददौ प्रीतो
ज्योतिषां स्थानमुत्तमम् ।
आभूतसंप्लवं द्व्यम्[1])
अस्तोदयविवर्जितम् ॥ 6 ॥

तस्याभिमान[1]मृद्धिं च महिमानं निरीक्ष्य च[2]) ।
देवा[3]सुराणामाचार्यः श्लोकमप्यु[4]शना जगौ[5]) ॥ 7 ॥
अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम्[1]), ।
यमद्य पुरतः कृत्वा[2]) ध्रुवं सप्तर्षयः स्थिताः[3]) ! ॥ 8 ॥

[ ध्रुवे दिवं समासक्त-
मीश्वरः स दिवस्पतिः ।]

तस्मा[1]च्छिष्टिं च[2]) भव्यं च[3])
ध्रुवा[4]च्छम्भुर्व्य[5]जायत ।

ध्रुवात् सृ[1]ष्टिं च भव्यं च
भूमिस्तौ[2]) सुषुवे नृपौ ।

---

$5^a$ = Bḍ. I. 36.90[a]; Vā. 62.77[c]. 1) Bḍ. स्वरा मनस्विनी; Vā. मनस्विनीं स्वरां ।

$5^{ab(bc)}$ = A. 18.($3^{aII}$)b = (b)a; Bḍ. I. 36.90[b], 91[a]; Br. 2.10; H. 63[b], 64[a]; Śidh. 52.8[b], 9[a]; Vā. 62.77[de]. 1) Bḍ. Vā. दश । 2) A. हे मुने; Br. भो द्विजाः; H. भारत; Śidh. कानने । 3) A. सुकीर्तये; Br. महाभागः; H. महाराज; Śidh. स बालस्तु । 4) Bḍ. Vā. विपुलं । 5) Śidh. स्थानमव्ययम् ।

$5_1$ = Bḍ. I. 36.91[b], 92[a]; Vā. 62.78. 1) Bḍ. तु ।

6 = A. 18.($4^a$); Br. 2.11; H. 64[b], 65[a]; Śidh. 52.9[b], 10[a]. 1) A. तस्मै प्रीतो हरिः प्रादात् मुन्यग्रे स्थानकं स्थिरम् ।

6 = Bḍ. I. 36.92[b], 93[a]; Vā. 62.79. 1) Bḍ. आ भूतसंप्लवाद् दिव्यम् ।

7 = A. 18.($4^b$) = b; Bḍ. I. 36.93[b], 94[a]; Br. 2.12; H. 65[b], 66[a]; Vā. 62.80; cf. Vi. I. 12.97. 1) Bḍ. Vā. तस्यातिमात्रा– । 2) Bḍ. तु; Vā. T. ह; V. ते । 3) Bḍ. Vā. दैत्या– । 4) Br. –कं प्राशु– । 5) A. श्लोकं पपाठ सुशना वृद्धिं दृष्ट्वा स तस्य च ।

8 = A. 18.5; Bḍ. I. 36.94[b], 95[a]; Br. 2.13; H. 66[b], 67[a]; Vā. 62.81[a(b)]; cfr. Vi. I. 12.98. 1) Bḍ. व्रतम् ; Vā. हुतम् । 2) Bḍ. कृत्वा यदेनमुपरि । 3) Vā. स्थिताः सप्तर्षयः कृत्वा यदेनमुपरि ध्रुवम् ।

[ ] = Bḍ. I. 36.95[b]; Vā. 62.81[c].

$9^a$ = A. 18.6[a]; Br. 2.14[a]; H. 67[b]; Kū. 14.3[a]; Śidh. 52,10[b]; Vi. I. 13.1[a].

9 = Bḍ. I. 36.96; Vā. 62.82. 1) Vā. पु– । 2) Vā. T. –मिः सा । 3) Vā. –री तु तां वि– ।

स्वां छायामाह वै सृष्टि-
र्भव नारीति तां प्र[3]भुः ॥ 9 ॥
सत्याभिव्याहृतेस्त[1]स्य
सद्यः स्त्री साभवत् तदा।
दिव्यसंहनना छाया
दिव्याभरणभूषिता ॥ $9_1$ ॥

शिष्टे[1]राधत्त[2]) सुच्छाया[3])
पञ्च पुत्रानकल्मषान् ॥ 9 ॥

छायायां सृष्टि[1]राधत्त
पञ्च पुत्रानकल्मषान्।
प्राचीनगर्भं वृषभं[2])
वृकं च वृकलं धृतिम् ॥ $9_2$ ॥
पत्नी प्राचीनगर्भस्य
सुवर्चा सुषुवे नृपम्।
नाम्नोदारधियं पुत्र-
मिन्द्रो यः पूर्वजन्मनि ॥ $9_3$ ॥
संवत्सरसहस्रान्ते
सकृदाहारमाहरत्[1]),।
एवं मन्वन्तरं युक्त[2])
इन्द्रत्वं प्राप्तवान् वि[3]भुः ॥ $9_4$ ॥
उदारधेः सुतं भद्रा-
जनयत् सा दिवंजयम् ॥ $9_5$ ॥

रिपुं रिपुंजयं *विप्र*[1])
वृकलं[2]) वृक[3]तेजसम्।
रिपोराधत्त[1]) बृहती[2]) चाक्षुषं[3]) सर्वतेजसम् ॥ 10 ॥

रिपुं रिपुंजयं[1]) जज्ञे
वराङ्गी सा[2]) दिवंजयात्।

तस्य पुत्रो मनुर्विद्वान्
ब्रह्मक्षत्रप्रवर्तकः ॥ $10_1$ ॥

---

1) Kū. Vi. भुवा-। 2) A. T. -वादृष्टिश्च; Br. T. H. Vi.2 -च्छ्ष्टिं च; Br. V. Kū. V. सृष्टिं च; Śidh. पुष्टिं च। 3) A. -व्यश्च; Kū. मान्यं च; Śidh. धान्यं च। 4) Kū. T. मान्या-; V. मार्या; Vi. भव्या-;। 5) Śidh. -वात् पुत्री व्य-।

$9^b$ = A. $18.6^b$; Br. $2.14^b$; H. $68^a$; Kū. $14.3^b$; Śidh. $52.11^a$; Vi. I. $13.1^b$. 1) A. वृद्धे-; Br. H. Vi.2 श्लिष्टे-; Śidh. पुष्टे-। 2) Śidh. -राव(?)न्तम्। 3) Śidh. उच्छायाः।

$10^a$ = A. $18.7^a$; Br. $2.15^a$; H. $68^b$; Kū. $14.5^a$; Śidh. $52.11^b$; Vi. I. $13.2^a$. 1) A. T. पुण्यं; A. V. H. रिप्रं; Br. T. वीरं। 2) A. T. वृकसं; Kū. कपिलं। 3) Kū. T. वृष-।

$9_1$ = Bd. I. 36.97; Vā. 62.83. 1) Vā. -हृते त-।

$9_2$ = Bd. I. 36.98; Vā. 62.84. 1) Vā. पुष्टि-। 2) Vā. T. वृषकम्।

$9_3$ = Bd. I. 36.99; Vā. 62.85.

$9_4$ = Bd. I. 36.100; Vā. 62.86. 1) Bd. -रन्। 2) Vā. शुक्रम्। 3) Bd. प्र-।

$9_5$ = Bd. I. $36.101^b$; Vā. $62.87^a$.

$10^a$ = Bd. I. $36.101^b$; Vā. $62.87^b$. 1) Bd. -जयाज्। 2) Bd. तु।

$10^b$ = A. $18.7^b$; Bd. I. $36.102^a$; Br. $2.15^b$; H. $69^a$; Kū. 14.5; Śidh. $52.12^a$; Vā. $62.88^a$; Vi. I. $13.2^b$. 1) Śidh. -वन्त। 2) Kū. Śidh. महिषी। 3) Bd. Br. T. चक्षुषं।

$10_1$ = Bd. I. $36.102^b$; Vā. $62.88^b$.

अजी[1]जनत् पुष्करिण्यां[2]) वैरण्यां[3]) चाक्षुषो[4]) मनुम्[5]) ।
प्रजापतेरात्मजायां वीरणस्य[6]) महात्मनः[7]) ॥ 11 ॥

मनोरजायन्त दश नड्वलायां[1]) महौजसः[2]) ।
कन्यायां सुमहावीर्या[3]) वैराजस्य[4]) प्रजापतेः ॥ 12 ॥

ऊरुः[1]) पूरुः[2]) शतद्युम्नस्तपस्वी सत्यवाक्[3]) कविः[4]) ।
अग्निष्टुदति[5]रात्रश्च सुद्युम्नश्चेति ते[6]) नव[7]) ॥ 13 ॥

अभिमन्युश्च दशमो नड्वलायां[1]) महौजसः[2]) ।
कु[3]रोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान्[4]) ॥ 14 ॥

अङ्गं सुमनसं स्वातिं[1]) क्रतुमा[2]ङ्गिरसं *गयम्*[3]) ।
अङ्गात् सुनीथापत्यं[4]) वै[5]) वेन[6]मेकं व्यजायत[7]) ॥ 15 ॥

अपचारेण[1]) वेनस्य प्रकोपः[2]) सुमहानभूत्[3]), ।
प्रजार्थमृषयोऽथास्य[4]) ममन्थुर्दक्षिणं करम् ॥ 16 ॥

---

11 = A. 18.8$^{a}$ = a; Bd. I. 36.102$^{c}$ = a; Br. 2.16; H. 69$^{b}$, 70$^{a}$; Kū. 14.6$^{b}$, 7$^{a}$; Śidh. 52.12$^{b}$ = a; Vā. 62.89; Vi. I. 13.3. Bd. 1) Vā. व्यजी– ; Kū. सोऽजी– । 2) Bd. Vā. V. –रिणी । 3) A. T. वीरिण्यां; Bd. वारुणी; Br. वैरिण्यां; H. वीरण्यां; Kū. T. सुरूपं; Śidh. वरुणं; Vā. T. Vi. वारुण्यां; V. वीरणी । 4) Bd. Br. Kū. Vā. चाक्षुषं । 5) Śidh. मनुः । 6) H. Kū. V. Vā. Vi. अरण्यस्य । 7) Vi.2 अनरण्यस्य धीमतः ।

12 = A. 18.8$^{b}$ = a; Bd. I. 36.105; Br. 2.17; H. 70$^{b}$, 71$^{a}$; Kū. 14.7$^{b}$, 8$^{a}$; Śidh. 52.13: Vā. 62.90$^{bc}$; Vi. I. 13.4. 1) Kū. सुतास्ते; Vā. T. लड्वलायां । 2) A. सुतोत्तमाः; Kū. T. सुमहौजसः; Bd. सुताः शुभाः; Vā. शुभाः सुताः । 3) Br. मुनिशार्दूला; H. भरतश्रेष्ठ; Kū. –र्यौ; Śidh. हि मुनिश्रेष्ठ; Vā. वै महाभाग; Vi.1 जगतां श्रेष्ठ; Vi.2 द्विजशार्दूल । 4) Bd. विरजस्य ।

13 = A. 18.9; Bd. I. 36.106; Br. 2.18; H. 71$^{b}$, 72$^{a}$; Kū. 14.8$^{b}$, 9$^{a}$; Śidh. 52.14; Vā. 62.91$^{ab}$; Vi. I. 13.5. 1) Br. T. कुत्स; Śidh. रुरुः । 2) Bd. Br. Vā. Vi.1 पुरुः । 3) Śidh. –स्यजित् । 4) Bd. Vā. V. कृतिः; Kū. Vi.2 शुचिः । 5) H. –ष्टुवति–; Śidh. Vi. अग्निष्टोमोऽति– । 6) Bd. वै; H. –इत्येत्यमी । 7) A. T. –श्चातिमन्युकः; A. Kū. –श्चाभिमन्युकः; Śidh. –श्चातिमन्युः सुयशा दश ।

14 = A. 18.10$^{a}$ = b; Bd. I. 36.107; Br. 2.19; H. 72$^{b}$, 73$^{a}$; Kū. 14.9$^{b}$ = b; Śidh. 52.15$^{a}$ = b; Vā. 62.91$^{c}$, 92$^{a}$; Vi. I. 13.6. 1) H. –लायाः; Vā. नड्वलायां । 2) Bd. Vā. मनोः सुताः; H. महाजसः । 3) Br. पु–; Śidh. रु– । 4) Kū. –बलान् ; Śidh. –प्रभा ।

15 = A. 18.10$^{b}$, 11$^{a}$; Bd. I. 36.108; Br. 2.20; H. 73$^{b}$, 74$^{a}$; Kū. 14.10$^{a}$(b); Śidh. 52.15$^{b}$, 16$^{a}$; Vā. 62.92$^{b}$, 93$^{a}$; Vi. I. 13.7. 1) Bd. Kū. Śidh. Vi.2 ख्यातिं । 2) A. Br. H. Vā. Vi. –म– । 3) Bd. गयं शुक्रं व्रजाजितौ; Br. T. मयस् ; Kū. Vā. Vi.1 शिवम् ; Vi.2 –सोषिजौ; Śidh. –सम्भृजिम् । 4) Śidh. –नीथा भार्या । 5) H. सुनीथ-कन्यायां । 6) A. Br. Ga. Kū. Śidh. Vi. वेण– । 7) Śidh. –कमसूयत; Vi. –कमजायत; Kū. अङ्गाद्वेणोऽभवत् पश्चाद्वैण्यो वेणादजायत ।

16 = A. 18.(11$^{b}$) 12$^{a}$; Bd. I. 36.109; Br. 2.21; H. 74b, 75$^{a}$; Śidh. 52.16$^{b}$, 17$^{a}$; Vā. 62.93$^{b}$, 94$^{a}$; Vi. I. 13.8$^{a}$=b. 1) Bd. तस्यापराधाद् । 2) Śidh. कोपस्तु । 3) A. अरक्षकः पापरतः स हतो मुनिभिः कुशैः । 4) Bd. Br. Vi.2 –यो यस्य; Śidh. Vā. Vi.1 –यस्तस्य !

वेनस्य मथिते पाणौ[1]) संबभूव महान्[2]) नृपः[3]) ।

तं दृष्ट्वा मुनयः प्राहु-
रेष वै मुदिताः प्रजाः ॥ 17 ॥
करिष्यति महातेजा
यशश्च प्राप्स्यते महत् ।

वैन्यो नाम महीपालो,
यः पृथुः परिकीर्तितः[1]) ॥ 17 ॥

स धन्वी कवची जातस्ते[1]जसा निर्दहन्निव[2]) ॥ 18 ॥
पृथुर्वैन्यस्तदा[1]) चेमां[2]) ररक्ष[3]) क्षत्रपूर्वजः, ।
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः[4]) ॥ 19 ॥
तस्माच्चैव समु[1]त्पन्नौ निपुणौ[2]) सूत-मागधौ ।
तेनेयं गौर्महाराज्ञा[3]) दुग्धा स[4]स्यानि धीमता[5]) ॥ 20 ॥
प्रजानां वृत्तिकामेन[1]) देवैः सर्षि[2]गणैः सह[3]) ।
पितृभिर्दानवैश्चैव गन्धर्वैः सा[4]प्सरोगणैः ॥ 21 ॥
सर्पैः[1]) पुण्यजनैश्चैव[2]) वीरुद्भिः पर्वतैस्तथा[3]); ।
तेषु तेषु च[4]) पात्रेषु दुह्यमाना वसुंधरा[5]) ॥ 22 ॥
प्रादाद् यथेप्सितं क्षीरं, तेन प्राणानधारयन्[1]) ।
पृथोस्तु पुत्रौ[2]) धर्मज्ञौ[3]) जज्ञाते[4]ऽन्तर्धिपालिनौ[5]) ॥ 23 ॥

---

17[a] = A. 18.12[b]; Bḍ. I. 36.(110[a]); Br. 2.22[a]; H. 75[b]; Śidh. 52.17[b]; Vā. 62.94[b]; Vi. I. 13.8[b]. 1) H. Śidh. Vā. Vi.1 पाणौ मथिते । 2) A. पृथुर् ; Śidh. ततः । 3) Br. V. H. ऋषिः; Śidh. पृथुः; Vi.1 महामुने; Vi.2 –हामतिः; Bḍ. जनितस्तस्य पाणौ तु मथिते रूपवान् पृथुः ।

17[b] = A. 18.13[a]; Br. 2.22[b]; H. 76[a].
18[a] = A. 18.13[b]; Br. 2.23[a]; H. 76[b].

17[b] = Bḍ. I. 36.(110[b]); Vā. 62.94[c]. Vi. I. 13.9[a].
1) Vi.2 –कीर्त्यते; Bḍ. जनयित्वा सुतं तस्य पृथुं प्रथितपौरुषम् ।

18[b] = A. 18.14[a]; Bḍ. I. 36.111[b]; Br. 2.23[b]; H. 77[a]; Śidh. 52.18[a]; Vā. 62.94[d]. 1) Bḍ. जज्ञे ते– । 2) Br. –तो ज्वलज्ज्वलनसंनिभः; H. –तः कराज्ज्वलनसंनिभः; Śidh. –स्तेजसादित्यसंनिभः; Vā. –स्तेजसा प्रज्वलन्निव ।

19 = A. 18.14[b], 15[a]; Bḍ. I. 36.112[b], 113[a]; Br. 2.24; H. 77[b], 78[a]; Śidh. 52.18[b], 19[a]; Vā. 62.94[c], 95[a]. 1) A. –न्यः प्रजाः; Br. –स्तथा । 2) A. सर्वां; Bḍ. लोकान् ; Śidh. पृथ्वीम् ; Vā. –न्यः सर्वलोकान् । 3) Śidh. अरक्षत् । 4) A. पृथिवीपतिः ।

20 = A. 18.15[b],(16[b]); Bḍ. I. 36.113[b], 114[a]; Br. 2.25; H. 78[b], 79[a]; Śidh. 52.19[b], 20[a]; Vā. 62.95[b], 96[a]. 1) Bḍ. Vā. तस्य स्तवार्थमु– । 2) H. विपुलौ । 3) Br. –र्मुनिश्रेष्ठाः; H. –र्महाराज; Śidh. –र्मुनिश्रेष्ठ । 4) H. श– । 5) Br. भूभृता; H. भारत; Śidh. –ग्धा सर्वहिताय वै; A. दुग्धा गौस्तेन सस्यार्थं ( V. सस्यानि ) प्रजानां जीवनाय च ।

21 = A. 18.17[a] = a[II]b[II]; Bḍ. I. 36.114[b], 115[a]; Br. 2.26; H. 79[b], 80[a]; Śidh. 52.20[b], 21[a]; Vā. 62.96[b], 97[a]. 1) Bḍ. Vā. वृत्तिकामानां; Śidh. हितकामेन । 2) Bḍ. चर्षि–; Vā. –वेश्चर्षि– । 3) A. सह देवैर्मुनिगणैर् ; Br. सहः; । 4) A. Bḍ. चा–; Br. Vā. –वैर– ।

22 = A. 18.17[b], 18[a]; Bḍ. I. 36.115[b], 116[a]; Br. 2.27; H. 80[b], 81[a]; Śidh. 52.21[b],(22); Vā. 62.97[b], 98[a]. 1) Vā. T. सर्वैः । 2) A. पितृभिर्दानवैः सर्पैः । 3) A. –तैर्जनैः; Bḍ. पर्वतैर्वृक्षवीरुधैः । 4) Bḍ. Vā. तु । 5) Śidh. तेन दत्तेन जीवन्ति सर्वदेवगणाः सदा ।

शिखण्डिनी[1]) हविर्धानमन्तर्धानाद् व्यजायत, ।
हविर्धानात् षडाग्नेयी धिषणाजनयत् सुतान्[2]) ॥ 24 ॥

प्राचीनबर्हिषं शुक्रं[1]) गयं कृष्णं प्रजाजिनौ[2]) ।
प्राचीनबर्हिर्भगवान् महानासीत् प्रजापतिः[3]) ॥ 25 ॥

हविर्धानान् महाराजो[1]),
येन संवर्धिताः प्रजाः ।
प्राचीनाग्राः कुशा[2]स्तस्य
पृथिव्यां द्विजसत्तमाः[3]) ॥ 26 ॥
प्राचीनबर्हिर्भगवान्[1])
पृथिवीतलचारिणः[2]) ।

बलश्रुततपोवीर्यैः
पृथिव्यामेकराडसौ ।
प्राचीनाग्राः कुशास्तस्य
तस्मात् प्राचीनबर्ह्यसौ ॥ 26 ॥

समुद्रतनयायां तु कृतदारोऽभवत् प्रभुः[1]) ॥ 27 ॥
महतस्तपसः[1]) पारे सवर्णायां प्रजापतिः[2]) ।
सवर्णाधत्त सामुद्री[3]) दश प्राचीनबर्हिषः[4]), ॥ 28 ॥

---

23 = A. 18.18b, 19a; Bḍ. I. 36.116b, 37.22b; Br. 2.28; H. 81b, 82a; Śidh, 53.1a = b; Vā. 62.98b, 63.22a; Vi. I. 14.1a = b. 1) Vā. लोकांस्त्वधारयत् । 2) A. Śidh. पृथोः पुत्रौ तु; H. पृथुपुत्रौ तु; Vi.1 पृथोः पुत्रौ; Vi.2 –त्रौ तु । 3) Bḍ. Vā. विक्रान्तौ; Vi.1 महावीर्यौ । 4) Br. यज्ञान्ते । 5) A. Vi.2 –पालितौ; Bḍ. –पावनौ; Br. –पातिनौ; Śidh, भुवि पार्थिवौ; cp. 1b; हविर्धानी–हविर्धाम–नामानौ तौ बभूवतुः ।

24 = A. 18.19b, 20a; Bḍ. I. 37.23; Br. 2.29; H. 82b, 83a; Kū. 14.22b,(51a); Śidh. 53.(2a); Vā. 63.22b, 23a; Vi. I. 14.1b, 2a. 1) Kū. शिखण्डिनं । 2) Kū. हविर्धानस्तथाग्नेय्यां जनयामास वै सुतम् ; Śidh. शिखण्डिनी हविर्धामाद् पुत्रं प्राचीनबर्हिषम् ।

25 = A. 18.20b, 21b; Bḍ. I. 37.24; Br. 2.30; H. 83b, 84a; Kū. 15.(51b),52a; Vā. 63.23b, 24a; Vi. I. 14.2b,3a. 1) Bḍ. H. शुक्लं । 2) Bḍ. प्रजाजिनौ; Kū. प्राचीनबर्हिषं नाम्ना धनुर्वेदस्य पारगम् । 3) Kū. सर्वशास्त्रभृतां वरः ।

26 = A. 18.21a = b; Br. 2.31a( ); H. 84b, 85a; Śidh. 53.2bI = bI; Vi. I. 14.3b,4a. 1) Br. मुनिश्रेष्ठा; H. महाराज । 2) Br. प्रचीनाग्रकुशा– । 3) A. यजतो यतः; H. जनमेजय; Vi. –व्याममभवन् मुने ।

27a = Br. 2.31b; H. 85b; Śidh, 53.2bII = II; Vi. I. 14.4b. 1) Vi.2 –र्हिरभवत् । 2) Br. –णां:; Vi. ख्यातो भुवि महाबलः ।

26 = Bḍ. I. 37.25; Vā. 63.24bc.

27(b) = Bḍ. I. 37.26a; Br. 2.32a; H. 86a; Śidh. 53.3a; Vā. 63.25a; Vi. I. 14.5a. 1) Bḍ. Vā. –रः स वै प्रभुः; Vi. –रो महीपतिः ।

28 = A. 18.22a = b; Bḍ. I. 37.26b, 27a; Br. 2.32b, 33a; H. 86b, 87a; Kū. 14.(52b) = b; Śidh. 53.3b = b; Vā. 63.25bc; Vi. I. 14.5b,6a. 1) H. Vā. –स्तमसः । 2) H. महीपतिः; Vi. –पत्नेः । 3) Kū. Śidh. समुद्रतनयायां वै (Śidh. तु) । 4) Kū. दश पुत्रानजीजनत् ।

सर्वान्[1]) प्रचेतसो नाम धनुर्वेदस्य पारगान्[2]) ।
अपृथग्धर्मचरणांस्तेऽतप्यन्त महत् तपः[3]) ॥ 29 ॥

दश वर्षसहस्राणि समुद्रसलिलेशयाः ।
तपश्चरत्सु पृथिवीं प्रचेतःसु[1]) महीरुहाः[2]) ॥ 30 ॥

अरक्ष्य[1]माणामावव्रुर्व[2]भूवाथ प्रजाक्षयः ।
प्रत्याहृते[3]) तदा तस्मिन् चा[4]क्षुषस्यान्तरे मनोः ॥ 31 ॥

नाशकन् मारुतो वातुं, वृतं[1]) ख[2]मभवद् द्रुमैः[3]); ।
दश वर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ 32 ॥

तदुपश्रुत्य तपसा[1]) युक्ताः सर्वे[2]) प्रचेतसः ।
मुखेभ्यो वायुमग्निं च ससृजुर्जा[3]तमन्यवः[4]) ॥ 33 ॥

उन्मूलानथ तान् वृक्षान्[1]) कृत्वा[2]) वायुरशोषयत्, ।
तानग्निरदहद् घोर, एवमासीद् द्रुमक्षयः[3]) ॥ 34 ॥

द्रुम[1]क्षयमथो बुद्ध्वा[2]) किंचिच्छिष्टेषु[3]) शाखिषु[4]) ।
उपगम्याब्रवीदेतान् राजा[5]) सोमः प्रजापतीन्[6]) ॥ 35 ॥

---

29 = A. 18.22$^{b}$, 23$^{a}$; Bḍ. I. 37.27$^{b}$, 28$^{a}$; Br. 2.33$^{b}$, 34$^{a}$; Ga. 6.11; H. 87$^{b}$, 88$^{a}$; Kū. 14.(53$^{a}$); Śidh. 53.4; Vā. 63.26$^{ab}$; Vi. I. 14.6$^{b}$, 7$^{a}$. 1) A. Ga. Śidh. Vā. T. Vi. सर्वे । 2) A. Ga. Śidh. Vā. T. Vi. –गाः । 3) Vi. महातपः; Kū. प्रचेतसस्ते विख्याता राजानः प्रथितौजसः ।

30 = A. 18.23$^{b}$ = a; Bḍ. I. 37.28$^{b}$, 29$^{a}$; Br. 2.34$^{b}$, 35$^{a}$; Ga. 6.12$^{a}$ = a; H. 88$^{b}$, 89$^{a}$; Śidh. 53.5; Vā. 63.26$^{c}$, 27$^{a}$; Vi. I. 14.7$^{b}$, 15.1$^{a}$. 1) Bḍ. तपश्च तेषु पृथिवीं तप्यत्स्वथ । 2) Śidh. पृथिव्यामभवन् सुमहीरुहाः ।

31 = Bḍ. I. 37.29$^{b}$, 30$^{a}$; Br. 2.35$^{b}$ = a; H. 89$^{b}$, 90$^{a}$; Śidh. 53.6$^{a}$ = a; Vā. 63.27$^{b}$, 28$^{a}$; Vi. I. 15.1$^{b}$ = a. 1) Br. H. अरक्ष– । 2) Śidh. अरक्ष्यमाणायां .क्ष्यां व–; Vā. T. अरक्ष्यमाणाः खं वव्रुर्व– 3) H. –हृताः; Vā. –हृते । 4) H. प्रजाः सर्वाश्चा– ।

32 = A. 18.(24$^{bI}$) = a; Bḍ. I. 37.30$^{b}$, 31$^{a}$; Br. 2.36; H. 90$^{b}$, 91$^{a}$; Vā. 63.28$^{bc}$; Vi. I. 15.2. 1) Bḍ. Vi.2 वृत्तं । 2) Vi.2 स्व– । 3) A. मुः खं व्याप्तं हि तरुभिः ।

33 = A. 18.(24$^{bII}$); Bḍ. I. 37.31$^{b}$, 32$^{a}$; Br. 2.37; H. 91$^{b}$, 92$^{a}$; Śidh. 53.(6$^{b}$); Vā. 63.29; Vi. I. 15.3. 1) Vi. तद् दृष्ट्वा जलनिष्क्रान्ताः । 2) Bḍ. Vā. सर्वे युक्ताः; Vi. सर्वे क्रुद्धाः । 3) Vi. तेऽसृजन् जा– । 4) A. तांस्तरून्-दहंश्च ते; Śidh. तं दृष्ट्वा तु द्रुमेभ्यस्ते प्रासृजनग्निमारुतौ ।

34 = Bḍ. I. 37.32$^{b}$, 33$^{a}$; Br. 2.38; H. 92$^{b}$, 93$^{a}$; Śidh. 53.(7$^{a}$); Vā. 63.30; Vi. I. 15.4. 1) Bḍ. H. वृक्षांस्तान् ; Br. वृक्षांस्तु; H. तान् कृत्वा । 2) H. वृक्षान् । 3) Vi. –रस्तत्राभूद् द्रुमसंक्षयः; Śidh. वृक्षानुन्मूल्य वायुस्तानदहद्धव्यवाहनः ।

35 = A. 18.25(a)$^{b}$; Bḍ. I. 37.33$^{b}$, 34$^{a}$; Br. 2.39; H. 93$^{b}$, 94$^{a}$; Śidh. 53.7$^{b}$, 8$^{a}$; Vā. 63.31; Vi. I. 15.5. 1) Śidh. वृक्ष– । 2) Śidh. –यं ततो दृष्ट्वा; Vi. दृष्ट्वा । 3) Vā. –च्छेषेषु । 4) A. मुखजाग्निमरुद्भ्यां च दृष्ट्वा चाथ द्रुमक्षयम् । 5) Br. –देतांस्तदा; H. –तानथ । 6) Bḍ. Vā. प्रचेतसः; Śidh. प्रतापवान् ।

दृष्ट्वा प्रयोजनं सत्यं[1])
लोकसन्तानकारणात् ।

कोपं यच्छत[1]) राजानः सर्वे[2]) प्राचीनबर्हिषः[3]), ।

वृक्षशून्या कृता पृथ्वी,
शाम्येतामग्निमारुतौ[1]) ! ॥ 36 ॥

वृक्षाः क्षित्यां जनिष्यन्ति,
शाम्येतामग्निमारुतौ ! ॥ 36 ॥

रत्नभूता च[1]) कन्येयं वृक्षाणां[2]) वरवर्णिनी[3]) ।
भविष्यं[4]) जानता ह्येषा[5]) धृता गर्भेण वै मया[6]), ॥ 37 ॥

मारिषा नाम नाम्नैषा[1]) वृक्षाणामिति निर्मिता[2]), ।

भार्या वोऽस्तु महाभागा[1])
सोम[2]वंशविवर्धिनी ॥ 38 ॥

भार्या भवतु वो ह्येषा
सोमगर्भ[1]विवर्धिता ॥ 38 ॥

युष्माकं तेजसोऽर्धेन मम चार्धेन[1]) तेजसः[2]) ।
अस्यामुत्पत्स्यते विद्वान्[3]) दक्षो नाम प्रजापतिः ॥ 39 ॥

स इमां दग्धभूयिष्ठां[1]) युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो[2]) भूयः[3]) प्रजाः संवर्धयिष्यति[4]) ॥ 40 ॥

ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः[1]) ।
संहृत्य[2]) कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम्[3]) ॥ 41 ॥
मारिषायां ततस्ते वै[1]) मनसा गर्भमादधुः ।

---

36a(b) = A. 18.(26a); Bd. I. 37.33a; Br. 2.40a; H. 94b; Śidh. 53.8b; Vā. 63.32b; Vi. I. 15.6a. 1) Bd. Vā. त्यजत । 2) Vā. सर्वे । 3) A. –त दास्यन्ति कन्यां वो मारिषां वराम् ; Vi. शृणुध्वं च वचो मम ।

36a = Bd. I. 37.34b; Vā. 63.32a. 1) Vā. सर्वे ।

36b = Br. 2.40b; H. 95a; Vi. I. 15.(6b). 1) Vi. संधानं वः करिष्यामि सह क्षितिरुहैरहम् ।

36c = Bd. I. 37.35b; Vā. 63.33a.

37 = A. 18.(26b) 27aI = bI; Bd. I. 37.36; Br. 2.41; H. 95b, 96a; Śidh. 53.9; Vā. 63.33b, 34a; Vi. I. 15.7. 1) Śidh. अनुभूतानु; Vā. –भूता तु । 2) Vi. वार्क्षेयी । 3) A. तपस्विनो मुनेः कण्डोः प्रम्लोचायां मयैव च । 4) Bd. –ष्यज् । 5) A. सृष्टा; Br. तात; H. तत्वं; Śidh. सा तु; Vi. पूर्वं । 6) Vā. Vi. मया गोभिर्विवर्धिता ।

38a = Bd. I. 37.37a; Br. 2.42a; H. 96b; Vā. 63.34b; Vi. I. 15.8a. 1) H. कन्येयं । 2) Bd. Vā. वृक्षैरेव विनिर्मिता ।

38b = A. 18.27aII = I; Br. 2.42b; H. 97a; Śidh. 53.10a; Vi. I. 15.8b. 1) A. कुलंकरी; Br. T. H. –भागाः । 2) Vi. ध्रुवं ।

38b = Bd. I. 37.37b; Vā. 63.34c. 1) Bd. –गर्भा ।

39 = A. 18.27bI = bI; Bd. I. 37.38; Br. 2.43; H. 97b, 98a; Śidh. 53.11a = a; Vā. 63.35; Vi. I. 15.9. 1) Śidh. चांशेन । 2) Bd. –जसा । 3) A. दक्षः; H. पुत्रो ।

40 = A. 18.27bII = bII; Bd. I. 37.39; Br. 2.44; H. 98b, 99a; Śidh. 53.11b = b; Vā. 63.36; Vi. 15.10. 1) Vi. मम चांशेन संयुक्तो । 2) Śidh, ब्रह्मतेजोमयो । 3) H. भूत्वा । 4) Vā. T. –सि ।

41 = A. 18.(28aI); Bd. I. 37.40; Br. 2.45; H. 99b, 100a; Śidh. 53.12abI = abII; Vā. 63.37; Vi. I. 15.72. 1) A. प्रचेतसस्तां जगृहुर् ; Vi.2 –हुस्तां प्रचेतसः । 2) Vā. –हृत्य; Vi.2 संहृत्य । 3) Śidh. भार्यां धर्मेणतस्यास्तु ।

दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः[2]) ॥ 42 ॥
दक्षो[1]) जज्ञे महातेजाः[2]) सोमस्यांशेन वीर्यवान्[3]) ।

| | |
|---|---|
| पुत्रानुत्पादयामास सोमवंशविवर्धनान्[1]) ॥ 43 ॥ | असृजन्मनसा त्वा[1]दौ प्रजा दक्षो न[2]) मैथुनात् ॥ 43 ॥ |

अचरांश्च चरांश्चैव[1]) द्विपदोऽथ चतुष्पदः[2]) ।
स सृष्ट्वा[3]) मनसा दक्षः पश्चादसृजत[4]) स्त्रियः ॥ 44 ॥
ददौ स दश[1]) धर्माय, कश्यपाय त्रयोदश, ।

| | |
|---|---|
| शिष्टाः सोमाय राज्ञे च[1]) नक्षत्राख्या ददौ प्रभुः ॥ 45 ॥ | कालस्य नयने युक्ताः सप्त विंशतिमिन्दवे[1]) ॥ 45 ॥ |

एभ्यो दत्त्वा ततोऽन्या वै चतस्रोऽरिष्टनेमिने, ।
द्वे चैव बहु[1]पुत्राय द्वे चैवाङ्गिरसे तथा[2]), ।
कन्यामेकां कृशाश्वाय, तेभ्योऽपत्यं निबोधत[3]) ! ॥ $45_1$ ॥
अन्तरं चाक्षुषस्यात्र[1]) मनोः षष्ठं तु गीयते[2]) ।
मनोर्वैवस्वतस्यापि सप्तमस्य प्रजापतेः ॥ $45_2$ ॥

तासु देवाः[1]) खगा[2]) गावो[3]) नागा दितिज-दानवाः[4]) ।
गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः[5]) ॥ 46 ॥
ततः प्रभृति लोकेऽस्मिन्[1]) प्रजा मैथुनसंभवाः, ।
संकल्पाद् दर्शनात् स्पर्शात् पूर्वेषां[2]) सृष्टिरुच्यते[3]) ॥ 47 ॥

---

42 = A. 18.($28^{aII}$); Bd. I. 37.41; Br. 2.46ª = b; H. 100ᵇ, 101ª; Śidh. 53($12^{bII}$) = $b^{II}$; Vā. 63,38; Vi. I, 15.73ª = b. 1) H. तु । 2) A. दक्षोऽस्यां च ततोऽभवत् ; Śidh. दक्षो जज्ञे प्रजापतिः ।

$43^a$ = Bd. I. 37.42ª; Br. 2.46ᵇ; H. 101ᵇ; Śidh. 53.13ª; Vā. 63.39ª; Vi. I. 15.(73ᵇ,74ª). 1) Śidh. सोऽपि । 2) Śidh. जज्ञे दक्षो महाभागः; Vi. जज्ञे दक्षो महायोगो ( Vi.2 –भागो ), यः पूर्वं ब्रह्मणोऽभवत् , स , तु दक्षो महाभागः । 3) Br. भो द्विजाः; H. भारत; Śidh. वै मुने; Vi. सृष्ट्यर्थं सुमहामते ।

| | |
|---|---|
| $43^b$ = H. 102ª; Vi. I. 15.74ᵇ. 1) Vi. प्रजासृष्ट्यर्थ-मात्मनः । | $43^b$ = Bd. I. 37.42ᵇ; Vā. 63.39ᵇ. 1) Vā. चा– । 2) Bd. –ऽथ । |

44 = A. 18.28ᵇ, 29ª; Bd. I. 37.43; Br. 2.47; H. 102ᵇ, 103ª; Śidh. 53.13ᵇ, 14ª; Vā. 63.40; Vi. I. 15.75ª, 76ª. 1) Vi.2 अचरांश्च चरांश्चैव । 2) Vi. –दान् । 3) Bd. Vā. विसृज्य । 4) Br. –दसृजत् ; H. Vi. –दप्यसृजत् ।

$45^a$ = A. 18.29ᵇ; Bd. I. 37.44ª; Br. 2.48ª; H. 103ᵇ; Śidh. 53.14ᵇ; Vā. 63.41ª; Vi. I. 15.76ᵇ. 1) Br. T. दश स ।

| | |
|---|---|
| $45^b$ = Br. 2.48ᵇ; H. 104ª; Śidh. 53.15ª. 1) H. –सोऽथ; Śidh. दक्षोऽपि । | $45^b$ = A. 18.30$^{aI}$ = II. Bd. I. 47.44ᵇ; Vā. 63.41ᵇ; Vi. I. 15.77ª. 1) A. –ति सोमाय । |

$45_1$ = A. 18.30$^{aIIb}$ = $a^{IIb}$; Bd. I. 37.45, 46ª; Vā. 63.42. 1) Vā. बाहु– । 2) A. ह्यदात् । 3) Bd. –त्यं बभूव ह ।

$45_2$ = Bd. I. 47.46ᵇ, 47ª; Vā. 63.43. 1) Bd. –स्याथ । 2) Vā. तु होयते ।

46 = A. 18.($31^a$) = a; Bd. I. 37.47ᵇ, 48ª; Br. 2.49; H. 104ᵇ, 105ª; Śidh. 53.($15^b$) = a; Vā. 63.44; Vi. I. 15.($77^b$),78ª. 1) Bd. वसुदेवाः; Śidh. देवासुराः । 2) Vi. तथा । 3) A. च नागाद्या; Śidh. नागा; Vi. दैत्या । 4) A. मैथुनान् मनसा पुरा; Śidh. दितिश्चाश्चान्यदेवताः; Vi. नागा गावस्तथा-खगाः । 5) Vi. दानवाद्याश्च जज्ञिरे ।

मुनय ( ऋषय ) ऊचु :

देवानां दानवानां च गन्धर्वोरगरक्षसाम्[1]) ।
संभवः कथितः पूर्वं[2]) दक्षस्य च महात्मनः ॥ 48 ॥

अङ्गुष्ठाद् ब्रह्मणो[1]) जातो[2])
दक्षः[3]) प्रोक्त[4]स्त्वयानघ[5]) ।
वामाङ्गुष्ठात् तथा चैव[6])
तस्य पत्नी व्यजायत ॥ 49 ॥

प्राणात् प्रजापतेर्जन्म
दक्षस्य कथितं त्वया ॥ 49 ॥

कथं प्राचेतसत्वं स[1]) पुनर्लेभे महातपाः[2]), ।
एतं[3]) नः[4]) संशयं[5]) सूत[6]) व्याख्यातुं त्वमिहार्हसि[7]), ।
दौहित्रश्चैव[8]) सोमस्य कथं[9]) श्वशुरतां गतः ? ॥ 50 ॥

( लोमहर्षण ) सूत उवाच :

उत्पत्तिश्च निरोधश्च नित्यं[1]) भूतेषु वर्तते[2]), ।
ऋषयोऽत्र न मुह्यन्ति विद्यावन्त[3]श्च ये जनाः[4]) ॥ 51 ॥
युगे युगे[1]) भवन्त्येते सर्वे[2]) दक्षादयो नृपाः[3]) ।
पुनश्चैव निरुध्यन्ते, विद्वां[4]स्तत्र न मुह्यति ॥ 52 ॥
ज्यैष्ठ्यं[1]) कानिष्ठ्य[2]मप्येषां[3]) पूर्वं नासीद्[4]) द्विजोत्तमाः[5]) ।
तप एव गरीयोऽभूत् प्रभावश्चैव कारणम् ॥ 53 ॥

---

47 = Bḍ. I. 37.48bc; Br. 2.50; H. 105b, 106a; Śidh. 53.16; Vā. 63.45; Vi. I. 15.78b, 79a. 1) Br. विप्रेन्द्राः; H. राजेन्द्र; Śidh. विप्रेन्द्र; Vi. मैत्रेय । 2) Bḍ. –र्वांसां । 3) Br. H. प्रोच्यते प्रजाः; Vi. –पामभवन् प्रजाः ।

48 = Bḍ. I. 37.49; Br. 2.51; H. 107; Vā. 63.46. 1) Bḍ. Vā. देवर्षीणां च ते शुभः । 2) Br. –वस्तु श्रुतोऽस्माभिर् ।

49 = Br. 2.52; H. 108; Śidh. 53.17a = a; Vi. I. 15.(80a) = a. 1) Vi. दक्षिणाद् । 2) Br. T. जज्ञे; Vi. दक्षः । 3) Vi. पूर्वं । 4) Br. किल; Śidh. चोक्तः; Vi. जातः । 5) Br. शुभव्रतः; Śidh. पुरा त्वया; Vi. श्रुतं मया । 6) Br. H. चैवं ।

49 = Bḍ. I. 37.50a; Vā. 63.47a.

50 = Bḍ. I. 37.50b, 51; Br. 2.53; H. 109, 110; Śidh. 53.17b, 18; Vā. 63.47b, 48; Vi. I. 15.(80b), 81. 1) Bḍ. Vā. च; Śidh. हि; Vi. –चेतसो भूयः । 2) Vi. स संभूतो महामुने । 3) Vi. एष । 4) H. Śidh. –तन्मे; Vi. मे । 5) Vi. –शयो । 6) H. विप्र; Vi. ब्रह्मन् । 7) H. सम्यगाख्यातुमर्हसि; Śidh. आख्यातुं वै त्वमर्हसि; Vi. सुमहान् हृदि वर्तते । 8) Vā. स दौहित्रश्च; Vi.1 यद् दौहित्रः स; Vi.2 –त्रश्च । 9) Vi. पुनः ।

51 = Bḍ. I. 37.52; Br. 2.54; H. 111; Śidh. 53.19a = a; Vā. 63.49; Vi. I. 15.82. 1) H. Vi. नित्यौ । 2) Bḍ. Vā. सत्तमाः; Br. भो द्विजाः; H. पार्थिव; Vi.1 सत्तम; Vi.2 वै मुने । 3) H. विद्वांस–; Vi.1 ये चात्र; Vi.2 ये चान्ये । 4) H. चैव ये जनाः; Śidh. Vi. दिव्यचक्षुषः; Vā. नराः ।

52 = Bḍ. I. 37.53; Br. 2.55; H. 112; Śidh. 53.19b, 20a; Vā. 63.50; Vi. I. 15.83. 1) Śidh. कल्पे कल्पे । 2) Br. पुनर् । 3) Bḍ. Vā. द्विजाः; Śidh. मुने; Vi. दक्षाद्या मुनिसत्तमाः । 4) Śidh. मुह्यसु ।

53 = Bḍ. I. 37.54; Br. 2.56; H. 113; Śidh. 53.20b = a; Vā. 63.51; Vi. I. 15.84. 1) Bḍ. ज्यैष्ठ्य–; Śidh. ज्येष्ठ; Vi. कनिष्ठ्यं । 2) Br. कनिष्ठ– ;

| | |
|---|---|
| इमां विसृष्टिं दक्षस्य<br>यो विद्यात् सचराचरम् ,। | इमां विसृष्टिं यो वेद<br>चाक्षुषस्य चराचरम् ,। |

प्रजावाना[1]युरुत्तीर्णः[2]) स्वर्गलोके महीयते ॥ 54 ॥

एवं[1]) सर्गः समाख्यातश्चाक्षुषस्य समासतः ।
इत्येते षड्विसर्गा हि[2]) क्रान्ता मन्वन्तरात्मकाः ॥ $54_1$ ॥

स्वायंभुवाद्याः संक्षेपाच्चाक्षुषान्ता यथाक्रमम् ।
एते सर्गा यथा प्राज्ञैः[1]) प्रोक्ता वै[2]) द्विजसत्तमाः ॥ $54_2$ ॥

वैवस्वतविसर्गेण[1]) तेषां ज्ञेयस्तु विस्तरः ।
अन्यूना नातिरिक्तास्ते[2]) सर्वे सर्गा विवस्वतः ॥ $54_3$ ॥
आरोग्यायुः प्रमाणेन[1]) धर्मतः कामतोऽर्थतः ।
एतानेव गुणानेति, यः पठत्य[2]नसूयकः ॥ $54_4$ ॥
वैवस्वतस्य वक्ष्यामि सांप्रतस्य महात्मनः ।
समास[1]व्यासतः सर्गं ब्रुवतो मे निबोधत ! ॥ $54_5$ ॥

---

Śidh. कनिष्ठो; Vi. ज्यैष्ठ्यं । 3) Śidh. मध्यस्थः । 4) Vi. नाभूद् । 5) H. जनाधिप; Śidh. –वंमासीन् महामुने; Vi. द्विजोत्तम ।

$54^a$ = Bḍ. 2.57[a]; H. 114[a]; Śidh. 53.21[a]. | $54^a$ = Bḍ. I. 37.55[a]; Vā. 63.52[a].

$54^b$ = Bḍ. I. 37.55[b]; Br. 2.57[b]; H. 114[b]; Śidh. 53.21[b]; Vā. 63.52[b]. 1) Vā. प्रजानामा– । 2) Bḍ. –नायुपस्तीर्णः; Śidh. –नायुषा पूर्णः ।

$54_1$ = Bḍ. I. 37.56; Vā. 63.53[ab]. 1) Vā. एव । 2) Bḍ. निसर्गाश्च ।
$54_2$ = Bḍ. I. 37.57; Vā. 63.53[c], 54[a]. 1) Vā. यथाप्रज्ञं । 2) Bḍ. ये ।
$54_3$ = Bḍ. I. 37.58; Vā. 63.54[b], 55[a]. 1) Bḍ. Vā. V. –निसर्गेण । 2) Vā. अनन्ता नातिरिक्ताश्च ।
$54_4$ = Bḍ. I. 37.59; Vā. 63.55[bc]. 1) Bḍ. –णेभ्यो । 2) Bḍ. पठन्न– ।
$54_5$ = Bḍ. I. 37.60; Vā. 63.56. 1) Vā. समासाद् ।

## सन्दर्भस्तवकः II

( Mt. 4.33—55. )

स्वायंभुवो मनुर्धीमांस्तपस्तप्त्वा सुदुश्चरम् ।
पत्नीमेवाप रूपाढ्यामनन्तां[1]) नाम नामतः ॥ 33 ॥
प्रियव्रतोत्तानपादौ मनुस्तस्यामजीजनत् ।
धर्मस्य कन्या चतुरा सूनृता नाम भामिनी ॥ 34 ॥
उत्तानपादात् तनयान् प्राप मन्थरगामिनी ।
अपस्यतिमपस्यन्तं कीर्तिमन्तं ध्रुवं तथा ॥ 35 ॥
उत्तानपादोऽजनयत् सूनृतायां प्रजापतिः ।
ध्रुवो वर्षसहस्राणि त्रीणि कृत्वा तपः पुरा ॥ 36 ॥
दिव्यमाप ततः स्थानमचलं ब्रह्मणो वराद्, ।
तमेव पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ 37 ॥
धन्या नाम मनोः कन्या ध्रुवाच्छिष्टमजीजनत् ।
अग्निकन्या तु सुच्छाया शिष्टात्सा सुषुवे सुतान् ॥ 38 ॥
कृपं रिपुंजयं वृत्तं वृकं च वृकतेजसम् ।
चक्षुषं ब्रह्मदौहित्र्यां वीरिण्यां स रिपुंजयः ॥ 39 ॥
वीरणस्यात्मजायां तु चक्षुर्मनुमजीजनत् ।
मनुर्वै राजकन्यायां नड्वलायां स चाक्षुषः ॥ 40 ॥
जनयामास तनयान् दश सुरानकल्मषान् ।
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः[2]) ॥ 41 ॥
अग्निष्टुदत्रिरात्रश्च सुद्युम्नश्चापराजितः ।
अभिमन्युस्तु दशमो नड्वलायामजायत ॥ 42 ॥
ऊरोरजनयत्पुत्रान् षडाग्नेयी तु सुप्रभान् ।
अङ्गं[3]) सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥ 43 ॥
पितृकन्या सुनीथा तु वेनमङ्गादजीजनत् ।
वेनमन्यायिनं विप्रा ममन्थुस्तत्करादभूत् ।
पृथुर्नाम महातेजाः, स पुत्रौ द्वावजीजनत् ॥ 44 ॥
अन्तर्धानस्तु मारीचं शिखण्डिन्यामजीजनत् ।
हविर्धानात् षडाग्नेयी धिषणाजनयत्सुतान् ।
प्राचीनबर्हिषं साङ्गं यमं शुक्रं बलं शुभम् ॥ 45 ॥
प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः, ।
हविर्धानात्[4]) प्रजास्तेन बहवः संप्रवर्तिताः ॥ 46 ॥
सवर्णायां तु सामुद्र्यां दशाधत्त सुतान् प्रभुः, ।
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ 47 ॥
तत्तपोरक्षिता वृक्षा बहुर्लोके समन्ततः, ।
देवादेशाच्च तानग्निरदहद्रविनन्दन ॥ 48 ॥
सोमकन्याभवत् पत्नी मारीषा नाम विश्रुता, ।

1) T. —न्ता ; V. —न्तीं । 2) T. —वाग्घविः । 3) T. अग्निं । 4) T. —नाः ।

तेभ्यस्तु दक्षमेकं सा पुत्रमग्र्यमजीजनत् ॥ 49 ॥
दक्षादनन्तरं वृक्षानौषधानि च सर्वशः ।
अजीजनत् सोमकन्या नदीं चन्द्रवतीं तथा ॥ 50 ॥
सोमांशस्य च तस्यापि दक्षस्याशीतिकोटयः ।
वक्ष्ये तासां तु विस्तारं, लोके यः सुप्रतिष्ठितः ॥ 51 ॥
द्विपदश्चाभवन् केचित् केचिद्बहुपदा नराः, ।
वलीमुखाः शङ्कुकर्णाः कर्णप्रावरणास्तथा ॥ 52 ॥
अश्वऋक्षमुखाः केचित् केचित्सिंहाननास्तथा, ।
श्वसूकरमुखाः केचित् केचिदुष्ट्रमुखास्तथा ॥ 53 ॥
जनयामास धर्मात्मा म्लेच्छान् सर्वाननेकशः, ।
स सृष्ट्वा मनसा दक्षः स्त्रियः पश्चादजीजनत् ॥ 54 ॥
ददौ स दश धर्माय, कश्यपाय त्रयोदश, ।
सप्तविंशतिं सोमाय ददौ नक्षत्रसंज्ञिताः; ।
देवासुरमनुष्यादि ताभ्यः सर्वमसृज्जगत् ॥ 55 ॥

---

# द्वितीयोऽध्यायः

## सन्दर्भस्तवकः I

( A. 18.29[b]-19.21; Bḍ. II. 2.1-32; Br. 3.1-126; Ga. 6.14-62; H. 115-256; Kū. 15.1, 16.1-46; 18.1-18; Śidh. 54.1-94[b]; Vā. 65.121-159; Vi. I. 15.85-142; 21.1-40. )

मुनय ( ऋषय ) ऊचुः

देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं[1]) विस्तरेणैव[2]) *मम ब्रह्मन्* प्रकीर्तय[3]) ! ॥ 1 ॥

लोमहर्षण ( सूत ) उवाच :

प्रजा सृजेति व्यादिष्टः[1]) पूर्वं[2]) दक्षः स्वयंभुवा ।

| | |
|---|---|
| यथा ससर्ज भूतानि | ससर्ज सर्व[1]भूतानि |
| तथा शृणुत *भो द्विजाः*[1]) ॥ 2 ॥ | गतिमन्ति ध्रुवाणि च ॥ 2 ॥ |

मानसान्येव[1]) भूतानि[2]) पूर्वमेवासृजत्[3]) प्रभुः[4]) ।
ऋषीन् देवान्[5]) स[6]गन्धर्वानसुरा*नथ राक्षसान्*[7]) ॥ 3 ॥

यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा[1]) ।
यदास्य *मनसा*[2]) *सृष्टा*[3]) न व्यवर्धन्त[4]) ताः[5]) प्रजाः[6]), ॥ 4 ॥

---

1 = Br. 3.1; H. 115; Kū. 15.1; Śidh. 54.1; Vi. I. 15.85. 1) Śidh. सृष्टिं तु । 2) Kū. विस्तराद् ब्रूहि; Śidh. विस्तरेणेमां; Vi. –णेह । 3) Br. लोमहर्षण कीर्तय; H. वैशम्पायन कीर्तय; Kū. सूत वैवस्वतेऽन्तरे; Śidh. सूतपुत्र ब्रवीहि मे ।

2[a] = Bḍ. II. 2.1[b]; Br. 3.2[a]; H. 116[a]; Kū. 16.1[a]; Vā. 65.121[a]; Vi. I. 15.86[a]. 1) Kū. संदिष्टः । 2) Bḍ. Vā. स्वयं ।

2[b] = Br. 3.2[b]; H. 116[b]. Vi. I. 15.86[b]. 1) H. शृणु महीपते; Vi. शृणु महामते ( Vi.2 –मुने ) ।

2[b] = Bḍ. II. 2.2[a]; Kū. 16.(1[b]); Vā. 65.121[b]. 1) Vā. दक्षो; Kū. ससर्ज देवान् गन्धर्वान् ऋषींश्चैवासुरोरगान् ।

3 = Bḍ. II. 2.2[b], 3[a]; Br. 3.3; H. 117; Śidh. 54.(2[a]); Vā. 65.125[b], 126[a]; Vi. I. 15.87. 1) Bḍ. मानसानि च; H. मनसा चैव; Vi.1 मानसानि तु । 2) Bḍ. तानि स । 3) Bḍ. असृजत् प्र–; Vā. –र्वं सिसृक्षुर्विविधाः; Vi. –र्वं दक्षोऽसृजत् । 4) Vā. प्रजाः; Vi. तदा; Śidh. पूर्वं हि मनसा दक्षः सृष्टिं चक्रे प्रजापतिः । 5) Vi. देवान् ऋषीन् । 6) Bḍ. च । 7) Bḍ. Vā. –र्वान् मनुष्योरगराक्षसान् ; Br. –नसुरान् यक्षराक्षसान् ; Vi. –नसुरान् पन्नगांस्तथा ।

4 = Bḍ. II. 2.3[b], 4[a]; Br. 3.4[a] = b; H. 118; Kū. 16.2[a] = b; Śidh. 54.(2[b1]); Vā. 65.126[b], 127[a]; Vi. I. 15.88[a]–[b]. 1) H. –पाशुसरीसृपान् । 2) Br. मानसी; H. तास्तु; Kū. सृजतः; Vi.1 द्विज; Vi.2 विप्र । 3) Br. विप्राः; H. Vi. मानस्यो; Kū. पूर्वं । 4) Br. –र्धत; Vi. नाम्यवर्धन्त । 5) Br. H. वै; Śidh. यदा न वर्धते सा तु । 6) Br. –जा ।

तदा[1]) संचिन्त्य धर्मात्मा[2])
प्रजा[3]हेतोः प्रजापतिः ।

अपध्याता भगवता
महादेवेन धीमता[1]) ।

स मैथुनेन[1]) धर्मेण[2]) सिसृक्षुर्वि[3]विधाः प्रजाः[4]), ॥ 5 ॥
असिक्नीमावहत्[1]) पत्नीं[2]) वीरणस्य प्रजापतेः ।
सुतां, सुतपसा[3]) युक्तां महतीं[4]) लोकधारिणीम्[5]) ॥ 6 ॥

यया धृतमिदं सर्वं जगत् स्थावरजङ्गमम् ।
अत्राप्युदाहरन्तीमौ श्लोकौ प्राचेतसं[1]) प्रति ॥ $6_1$ ॥
दक्षस्योद्वहतो भार्यामसिक्नीं वैरणीं[1]) पुरा[2]); ।
कृपानां नियुतं दक्षं[3]) सर्पिणां साभिमानिनाम् ॥ $6_2$ ॥
नदीगिरिष्वसज्जन्त[1]) पृष्ठतोऽनुययौ प्रभुम्[2]) ।
तं दृष्ट्वा ऋषिभिः प्रोक्तं प्रतिष्ठास्यति वै प्रजाः ॥ $6_3$ ॥
प्रथमोऽत्र[1]) द्वितीयस्तु[2]) दक्षः स हि प्रजापतिः[3]) ।
अथागच्छद्यथाकालं प्रहीणां[4]) नियुतं तु यत्[5]), ॥ $6_4$ ॥
असिक्नीं वैरणीं[1]) तत्र[2]) दक्षः प्राचेतसोऽवहत् ॥ $6_5$ ॥

अथ[1]) पुत्रसहस्राणि[2])
वैरण्यां[3]) पञ्च वीर्यवान्[4]) ।

अथ पुत्रसहस्रं स
वैरण्या[1]ममितौजसम्[2]) ।

असिक्न्यां[1]) जनयामास दक्ष एव प्रजापतिः[2]) ॥ 7 ॥

---

5$^a$ = Bd. 3.4$^b$; H. 119$^a$; Vi. I. 15.88$^b$. 1) Vi. ततः । 2) Vi. स पुनः । 3) Vi. सृष्टि– ।

5$^a$ = Bd. II. 2.4$^b$; Ga. 6.(14$^a$); Vā. 65.127$^b$. 1) Ga. नावर्धन्त च तास्तस्य अपध्याता हरेण तु ।

5$^b$ = Bd. II. 2.5$^a$; Br. 3.5$^a$; H. 119$^b$; Ga. 6.(14$^b$); Kū. 16.(2$^b$); Śidh, 54.3$^b$; Vā. 65.128$^a$; Vi. I. 15.89$^a$. 1) Vā. मैथुनेन च; Vi. मैथुनेनैव । 2) Bd. Vā. भावेन । 3) Śidh. ससर्ज वि– । 4) Ga. मैथुनेन ततः सृष्टिं कर्तुमैच्छत् प्रजापतिः; Kū. T. तदा ससर्ज भूतानि मैथुनेनैव सर्वतः ।

6 = Bd. II. 2.5$^b$, 6$^a$; Br. 3.5$^b$, 6$^a$; Ga. 6.15$^a$ = a; H. 120; Kū. 16.(3); Śidh. 54.2$^{bII}$, 3$^a$ = a$^{II}$b; Vā. 65.128$^b$, 129$^a$; Vi. I. 15.89$^b$, 90$^a$. 1) Vā. –क्नीं चावहत् । 2) Bd. Ga. भार्यां; Kū. अशिक्न्यां जनयामास; Vi. कन्यां । 3) Bd. Vā. सुमहता । 4) Bd. Vā. तपसा । 5) Śidh. युक्तामाहयत् सर्गकारणात्; Kū. सुतायां धर्मयुक्तायां पुत्राणां तु सहस्रकम् ।

$6_1$ = Bd. II. 2.6$^b$, 7$^a$; Vā. 65.129$^b$, 130$^a$. 1) Bd. –तसां ।
$6_2$ = Bd. II. 2.7$^b$, 8$^a$; Vā. 65.130$^b$, 131$^a$. 1) Vā. वीरणीं । 2) Vā. T. परां । 3) Vā. दक्षः ।
$6_3$ = Bd. II. 2.8$^b$, 9$^a$; Vā. 65.131$^b$, 132$^a$. 1) Vā. –गिरिषु सर्वंस्ताः; V. –रिषसज्जंस्ताः । 2) Vā. –भुः ।
$6_4$ = Bd, II. 2.9$^b$, 10$^a$; Vā. 65.132$^b$, 133$^a$. 1) Vā. प्रथमात्र । 2) Vā. –तीया तु । 3) Vā. दक्षस्येह प्रजापतेः । 4) Vā. कृपानां । 5) Vā. नियुते तु सः ।
$6_5$ = Bd. II. 2.10$^b$; Vā. 65.133$^b$. 1) Vā. वैरिणीं । 2) Vā. यत्र ।

7$^a$ = Br. 3.6$^b$; Ga. 6.(15$^b$); H. 121$^a$; Śidh. 54.4$^a$; Vi. I. 15.90$^b$. 1) Ga. तस्य; Śidh. तस्यां । 2) Ga. –स्रं तु । 3) Śidh, वीरण्यां; Vi.1 वैरिण्यां । 4) Ga. –ण्यां समपद्यत ।

7$^a$ = Bd. II. 2.11$^a$; Vā. 65.134$^a$. 1) Vā. वैरिण्यां– । 2) Vā. T. –जसा ।

7$^b$ = Bd. II. 2.11$^b$; Br. 3.7$^a$; H. 121$^b$; Śidh. 54.4$^b$; Vā. 65.134$^b$; Vi. I. 15.91$^a$. 1) Śidh. आश्रित्य । 2) Bd. Vā. –क्षः प्राचेतसः प्रभुः; Vi. सर्गहेतोः प्रजापतिः ।

तांस्तु दृष्ट्वा महाभागान्[1]) सं[2]विवर्धयिषून्[3]) प्रजाः ।
देवर्षिः[4]) प्रियसंवादो नारदः[5]) प्राब्रवीदिदम्[6]) ॥ 8 ॥

नाशाय वचनं तेषां शापायैवात्मनस्तथा[1]), ।
यं[2]) कश्यपः सुतवरं[3]) परमेष्ठी व्यजीजनत्[4]) ॥ 9 ॥

दक्षस्य वै दुहितरि
दक्षशापभयान्मुनिः ।

मानसः कश्यपस्यासीद्[1])
दक्षशापवशात्[2]) पुनः ।
तस्मात् स कश्यपस्याथ
द्वितीयो[3]) मानसोऽभवत् ।

पूर्वं स हि[1]) समुत्पन्नो नारदः परमेष्ठिनः[2]) ॥ 10 ॥

असिक्न्यामथ वैरण्यां
भूयो देवर्षिसत्तमः ।
तं भूयो जनयामास
पितेव मुनिपुंगवम् ॥ $10_1$ ॥

तेन[1]) दक्षस्य[2]) वै पुत्रा[3]) हर्यश्वा इति विश्रुताः ।
धर्मार्थं[4]) नाशिताः सर्वे विधिना च[5]) न संशयः ॥ 11 ॥

तस्योद्यतस्तदा दक्षो
नाशायामितविक्रमः ।

तस्योद्यतस्तदा दक्षः
क्रुद्धो नाशाय[1]) वै प्रभुः ।

ब्रह्मर्षीन् पुरतः कृत्वा[1]) याचितः परमेष्ठिना ॥ 12 ॥

ततोऽभिसंधिं च[1]क्रे वै[2]) दक्षस्तु[3]) परमेष्ठिना ।
कन्यायां नारदो मह्यं तव पुत्रो भवेदि[4]ति ॥ 13 ॥

---

8 = Bḍ. II. 2.12; Br. 3.7[b], 8[a]; H. 122; Śidh. 54.(5[a]); Vā. 65.135[ab]; Vi. I. 15.91[bc]. 1) Bḍ. Vā. महातेजाः; Vi. तान् दृष्ट्वा नारदो विप्र । 2) Bḍ. Vā. Vi.1 स । 3) Bḍ. –यिषुः । 4) Vi. संगम्य । 5) Vi. देवर्षिर् । 6) Bḍ. Vā. –दो ब्रह्मणः सुतः; Vi. इदमब्रवीत् ; Śidh. तान् सिसृक्षूंस्ततो दृष्ट्वा नारदः प्राह वै मुने ।

9 = Bḍ. II. 2.13; Br. 3.8[b], 9[a]; H. 123; Vā. 65.135[c], 137[a]. 1) Bḍ. Vā. –त्मनोऽब्रवीत् । 2) Bḍ. Vā. यः । 3) Bḍ. Vā. –पसुतस्याथ; H. –पः सुतं वीरं । 4) Bḍ. Vā. व्यजायत ।

10[a] = Br. 3.9[b]; H. 124[a]; Śidh. 54.6[bI] = I.

10[ab] = Bḍ. II. 2.14; Vā. 65.137[b], 138[a]. 1) Vā. –पस्येह । 2) Vā. –पमयात् । 3) Vā. –तीयं ।

10[b(c)] = Bḍ. II. 2.15[a]; Br. 3.10[a]; H. 124[b]; Śidh. 54.5[b]; Vā. 65.138[b]. 1) Bḍ. Vā. V. स हि पूर्वं; Śidh. तु । 2) H. –मेष्ठिना ।

$10_1$ = Br. 3.10[b], 11[a]; H. 125.

11 = Bḍ. II. 2.15[b], 16[a]; Br. 3.11[b], 12[a]; H. 126; Vā. 65.139. 1) Vā. T. येन । 2) Bḍ. वृक्षस्य । 3) Bḍ. H. पुत्रा वै; Vā. पुत्रास्ते । 4) Br. निर्मथ्य; Vā. निन्दार्थं । 5) Vā. विनष्टाश्च ।

12[a] = Br. 3.12[b]; H. 127[a].

12[a] = Bḍ. II. 2.16[b]; Vā. 65.140[a]. 1) Bḍ. –द्धः शापाय ।

12[b] = Bḍ. II. 2.17[a]; Br. 3.13[a]; H. 127[b]; Vā. 65.140[b]. 1) Bḍ. Vā. वै पुरस्कृत्य ।

13 = Bḍ. II. 2.17[b], 18[a]; Br. 3.13[b], 14[a]; H. 128; Vā. 65.141. 1) Br. T. संधिश्च– । 2) Vā. –संधितं चक्रे । 3) Bḍ. –श्चश्च; Br. दक्षस्य । 4) Vā. भवत्वि– ।

ततो दक्षः सुतां प्रादात् प्रियं वै परमेष्ठिने, ।
तस्मात् स[1]) नारदो जज्ञे भूयः[2]) शाप[3]भयादृषिः ॥ 14 ॥

मुनय ( ऋषय ) ऊचुः

कथं वि[1]नाशिताः पुत्रा[2]) नारदेन महर्षिणा[3]) ।
प्रजापति[4]सुतास्ते वै[5]) श्रोतु[6]मिच्छाम[7]) तत्त्वतः[8]) ॥ 15 ॥

लोमहर्षण ( सूत ) उवाच :

दक्षस्य पुत्रा[1]) हर्यश्वा विवर्धयिषवः प्रजाः ।
समागता महावीर्या, नारदस्तानुवाच ह[2]) ॥ 16 ॥

| | |
|---|---|
| बालिशा बत यूयं वै,<br>नास्या जानीथ वै भुवः ।<br>प्रमाणं स्रष्टुकामा वै<br>प्रजाः प्राचेतसात्मजाः[1]), ॥ 17 ॥ | बालिशा बत यूयं वै<br>न प्रजानीथ भूतलम् , ॥ 17 ॥ |

अन्तरूर्ध्वमधश्चैव कथं स्रक्ष्यथ[1]) वै प्रजाः[2]) ? ।
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतो दिशम्[3]); ॥ 18 ॥

अद्यापि न निवर्तन्ते समुद्रेभ्य[1]) इवापगाः[2]) ।
हर्यश्वेष्वथ नष्टेषु[3]) दक्षः प्राचेतसः पुनः ॥ 19 ॥

वैरण्या[1]मथ[2]) पुत्राणां सहस्रमसृजत् प्रभुः[3]) ।

| | |
|---|---|
| विवर्धयिषवस्ते तु<br>शबलाश्वास्तथा प्रजाः[1]) ॥ 20 ॥ | प्रजाः विवर्धयिषवः<br>शबलाख्याः पुनस्तु ते ॥ 20 ॥ |

---

14 = Bḍ. II. 2.18[bc]; Br. 3.14[bc]; H. 129; Vā. 65.142. 1) Br. H. स तस्यां । 2) H. दक्ष– । 3) Vā. शान्तो ।

15 = Bḍ. II. 2.19; Br. 3.15; H. 130; Vā. 65.144. 1) Bḍ. वै; Br. प्र– । 2) Bḍ. पूर्वं । 3) Bḍ. सुरर्षिणा; Vā. महात्मना । 4) Br. H. –पतेः । 5) Br. –तेः सूतवर्य; H. –तेर्द्विजश्रेष्ठ । 6) Vā. प्रजाः । 7) Bḍ. H. –मिच्छामि । 8) Vā. प्राचेतसात्मजाः ।

16 = Bḍ. II. 2.20; Br. 3.16; H. 131; Śidh. 54.(6[bII]); Vā. 65.146. 1) Bḍ. Vā. दक्षपुत्राश्च । 2) Śidh. तस्माद तानब्रवीत्तु सः ।

17 = Br. 3.17; H. 132; Śidh. 54.(7); Vi. I. 15.93[a] = a. 1) Śidh. अजानन्तः कथं सृष्टिं बालिशा वै करिष्यथ, दिशं कांचिदजानन्तस्तस्माद् विज्ञायता भुवम् ।

17 = Bḍ. II. 2.21[a]; Vā. 65.147[a].

18 = Bḍ. II. 2.21[b], 22[a]; Br. 3.18; H. 133; Śidh, 54.(8[a]) = b; Vā. 65.147[b], 149[a]; Vi. I. 15.93[b], 95[a]. 1) Br. T. स्रक्ष्य । 2) Śidh. इत्युक्ता वव्रजुः सर्वे आशां विज्ञातुमोजसा । 3) Br. T. H. –शः ।

19 = Bḍ. II. 2.22[b], 23[a]; Br. 3.19; H. 134; Vā. 65.150[a], 151[a]; Vi. I. 15.95[b], 96[a]. 1) Bḍ. समुद्रस्था । 2) Vā. भ्रमन्तो वायुमिश्रिताः । 3) Bḍ. अथ तेषु प्रणष्टेषु; Vā. स्वेषु पुत्रेषु नष्टेषु ।

20[a] = Bḍ. II. 2.23[b]; Br. 3.20[a]; H. 135[a]; Śidh. 54.(8[b]); Vā. 65.151[b]; Vi. I. 15.96[b]. 1) Vā. Vi. वैरिण्यां– । 2) Bḍ. H. Vā. –मेव । 3) Śidh. गतैस्तैर्जनयामास पुनः पञ्चशतं सुतान् ।

| | |
|---|---|
| पूर्वोक्तं वचनं ते तु[1]) नारदेन प्र[2]चोदिताः[3]) । | पूर्वमुक्तं वचस्तत्र[1]) श्राविता नारदेन ह । |

अन्योन्यमूचुस्ते सर्वे सम्यगाह महानृषिः[1]); ॥ 21 ॥

भ्रातॄणां पदवी[1]) चैव[2]) गन्तव्या[3]) नात्र संशयः ! ।
ज्ञात्वा प्रमाणं पृथ्व्याश्च[4]) सुखं स्रक्ष्यामहे प्रजाः[5]) ॥ 22 ॥

| [ एकाग्राः[1]) स्वस्थमनसा यथावदनुशासिताः[2]) ] ।

तेऽपि तेनैव मार्गेण प्रया[1]ताः सर्वतोदिशम् , ।
अद्यापि न निवर्तन्ते समुद्रेभ्य इवापगाः[2]) ॥ 23 ॥

ततः[1]) प्रभृति वै भ्राता भ्रातुरन्वेषणे रतः[2]) ।
प्रयातो नश्यति क्षिप्रं[3]), तन्न कार्यं विपश्चिता[4]) ॥ 24 ॥

नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽशपद्[1]) विभुः[2]) ।
नारदं नाशमेहीति गर्भवासं वसेति च ॥ 25 ॥

| | |
|---|---|
| तांश्चैव[1]) नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः । | तथा[1]) तेष्वपि नष्टेषु महात्मसु पुरा[2]) किल[3]) । |

षष्टिं[1]) दक्षोऽ[2]सृजत् कन्या[3]) वैरण्या[4]मिति नः श्रुतम्[5]) ॥ 26 ॥

---

| | |
|---|---|
| 20b = Br. 3.20b; H. 135b; Śidh. 54. (9a); Vi. I. 15.97a. 1) H. –श्वाः प्रजास्तदा; Vi. –श्वाः प्रजाः पुनः; Śidh. दक्षस्य पुत्रा हर्यश्वा विवर्धयिषवः प्रजाः । | 20b = Bḍ. II. 2.24a; Vā. 65.152a. |
| 21a = Br. 3.21a; H. 136a; Śidh. 54.(9b); Vi. I. 15.97b. 1) H. तात; Vi. भद्रान् । 2) H. –देनैव । 3) Śidh. तानुवाच पुनः सोऽपि नारदः किं हि बालिशाः । | 21a = Bḍ. II. 2.24b; Vā. 65.152b. 1) Bḍ. –तद् वै । |

21b = Bḍ. II. 2.25a; Br. 3.21b; H. 136b; Śidh. 54.(10a); Vā. 65.153a; Vi. I. 15.98a. 1) Bḍ. ऋषिः स्वयम् ; H. Vi. महामुनिः; Śidh. भुवो मानमजानन्तः कथं सृष्टिर्भविष्यति ।

22 = Bḍ. II. 2.25b; 26a; Br. 3.22; H. 137; Vā. 65.153b, 154a; Vi. I. 15.98b, 99a. 1) Bḍ. Br. H. –दवीं । 2) Br. H. ज्ञातुं । 3) Br. H. –न्तव्यं । 4) Bḍ. –व्या वै । 5) Vi. –श्च प्रजाः स्रक्ष्यामहे ततः ।

[ ] = Bḍ. II. 2.26b; H. 138a. 1) Bḍ. प्रकाशाः । 2) H. –दनुपूर्वशः ।

23 = Bḍ. II. 2.27; Br. 3.23; H. 138b; 139a; Śidh. 54.(10b), 11b; Vā. 65.154bc; Vi. I. 15.99bc. 1) Śidh. ते तु तद्वचनं श्रुत्वा निर्या– । 2) Bḍ. विस्तारायामलिप्सवः ।

24 = Bḍ. II. 2.28; Br. 3.24; H. 140b, 141a; Śidh. 54.12; Vā. 65.155; Vi. I. 15.100. 1) Br. H. Śidh. तदा । 2) Br. द्विजाः; H. नृप; Vi. द्विज । 3) Śidh. मुने; Vā. Vi. तथा । 4) Bḍ. Vā. Vi. विजानता ।

25 = Bḍ. II. 2.29; H. 139b, 140a; Vā. 65.156. 1) H. –ऽब्रवीद्; Vā. ऽभवद् । 2) H. वचः ।

| | |
|---|---|
| 26a = Br. 3.25a; H. 141b; Śidh. 54.13a; Vi. I. 15.101a. 1) Śidh. Vi. –श्चापि । | 26a = Bḍ. II. 2.30a; Kū. 16.(4a); Vā. 65.157a. 1) Bḍ. –दा । 2) Bḍ. महात्मा स प्रभुः । 3) Kū. तेषु पुत्रेषु नष्टेषु मायया नारदस्य तु । |

तास्तदा प्रतिजग्राह *भार्यार्थे*[1]) कश्यपः प्रभुः[2]) ।
धर्मः सोम[3]श्च[4]) *भगवां*[5]स्तथैवान्ये[6]) महर्षयः ॥ 27 ॥

ददौ स दश धर्माय, कश्यपाय त्रयोदश, ।
सप्तविंशति[1]) सोमाय, चतस्रोऽरिष्टनेमिने[2]), ॥ 28 ॥

द्वे चैव बहुपुत्राय, द्वे चैवाङ्गिरसे तथा[2]), ।
द्वे कृशाश्वाय विदुषे, तासां नामानि मे शृणु[3]) ॥ 29 ॥

| इमां विसृष्टिं दक्षस्य कृत्स्नां यो वेद तत्त्वतः, ।
| आयुष्मान् कीर्तिमान् धन्यः प्रजावांश्च भवत्युत ॥ $29_1$ ॥

---

अरुन्धती वसुर्यामी ल[1]म्बाभानुर्मरुत्वती[2]) ।
संकल्पा च मुहूर्ता च साध्या विश्वा तथैव च[3]), ॥ 30 ॥

धर्मपत्न्यो दशत्वेतास्तास्व[1]पत्यानि बोधत[2]) ।
विश्वेदेवास्तु विश्वायाः, साध्या साध्यान्[3]) व्यजायत[4]), ॥ 31 ॥

मरुत्वत्या[1]) मरुत्वन्तो, वसोस्तु वसवः सुताः[2]), ।
भानोस्तु भानवः पुत्रा[3]), मुहूर्तास्तु[4]) मुहूर्तजाः, ॥ 32 ॥

लम्बायाश्चैव घोषोऽथ[1]), नागवीथी च[2]) यामिजा[3]), ।
पृथिवीविषयं[4]) सर्व[5]मरुन्धत्यां[6]) व्य[7]जायत ॥ 33 ॥

---

$26^b$ = Bḍ. II. $2.30^b$; Br. $3.25^b$; H. $142^a$; Kū. $16.4^b$; Śidh, $54.13^b$; Vā. $65.157^b$; Vi. I. $15.102^b$. 1) Śidh, Vā. षष्टि– । 2) Br. H. ततो; Śidh. Vā. कन्या । 3) H. कन्यां; Śidh. पश्चाद्; Vā. दक्षो । 4) Kū. T. Vā. Vi.1 वैरिण्याम्–; Śidh.वीरण्याम् । 5) Bḍ. Vā. –मेव विश्रुताः; Kū. –ण्यां वै प्रजापतिः ।

27 = Bḍ. II. 2.31; Br. 3.26; H. $142^b$, $143^a$; Vā. 65.158. 1) Bḍ. पत्न्यर्थं; Vā. पत्न्यर्थे । 2) Bḍ. सुताः । 3) Br. H. सोमो धर्म– । 4) Vā. –स्तु । 5) Br. भो विप्रा–; H. कौरव्य । 6) Bḍ. –स्तथा चान्ये ।

28 = A. $18.29^b$, $30^a$; [Bḍ. I. $37.44^{(ab)}$, $43^{aII}$]; Br. 3.27; H. $143^b$, $144^a$; Śidh. 54.14; [Vā. $63.41^a$(b), $42^{aII}$]; Vi. I. 15.103; Cp. Ga. 6.21. 1) Śidh. –शतिं । 2) Bḍ. Vā. कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ।

29 = A. $18.30^b$ = b; [Bḍ. I. $37.45^b$,($46^a$)]; Br. 3.28; H. $144^b$, $145^a$; Śidh. 54.15; [Vā. $63.42^b$(c) ]; Vi.1 I. 15.104 Cp. Ga. 6.22, 23, $24^a$. 1) Śidh. ब्रह्म–; Vā. बाहु– । 2) A. सदात्; Śidh. ॅतदा । 3) Bḍ. Vā. कन्यामेकां कृशाश्वाय तेभ्योऽपत्यं बभूव ह [ Vā. निबोधत ] ।

| $29_1$ = Bḍ. II. 2.32; Vā. 65.159.
| [ Bḍ. and Vā. from here upto Sandarbhastavaka $I^a$. ]

30 = Br. 3.29; Ga. $6.24^b$, $25^a$; H. $145^b$, $146^a$; Śidh. 54.16; Vi. I. 15.105. 1) Śidh. –जामिलं– । 2) Ga. –मेरुद्वती । 3) Br. च भो द्विजाः; Ga. Vi. च ता दश; H. च भारत; Śidh. च वै मुने ।

31 = A. $18.32^a$ = b; Br. 3.30; Ga. $6.25^b$, $27^a$; H. $146^b$, $147^a$; Śidh. 54.17; Vi. I. 15.106. 1) Vi. –स्तद– । 2) Ga. –त्न्यः समाख्याताः कश्यपस्य वदाम्यहम् ; H. Śidh. Vi. –पत्यानि मे शृणु । 3) Śidh, साध्यान् साध्या ।

32 = A. $18.32^b$, $33^a$; Br. 3.31; Ga. $6.27^b$, $28^a$; H. $147^b$, $148^a$; Śidh. 54.18; Vi. I. 15.107, $108^a$. 1) Br. Ga. Vi.2 –स्वत्यां । 2) A. –वोऽभवन् ; H. Ga. Śidh. –वस्तथा; Vi. –वः स्मृताः । 3) Ga. रुद्र; H. –वस्तात; Śidh. सर्वे । 4) Ga. -तांश्च; Śidh. –तांया; Vi. –तांयां ।

33 = A. $18.33^b$, $34^a$; Br. 3.32; Ga. $6.28^b$, $29^a$; H. $148^b$, $149^a$; Kū. 16.10; Śidh. 54.19; Vi. I. $15.108^b$, $109^a$, 1) A. –या धर्मतो घोषो; Kū. –श्चाथ घोषो वै ।

संकल्पायास्तु[1]) सर्वात्मा[2]) जज्ञे संकल्प एव हि[3]) ।
नागवीथ्यां च[4]) यामिन्यां[5]) वृषलश्च व्यजायत ॥ 34 ॥
*परा याः*[1]) सोमपत्नीश्च[2]) दक्षः प्राचेतसो ददौ, ।
सर्वा नक्षत्रनाम्न्यस्ता ज्योतिषे परिकीर्तिताः ॥ $34_1$ ॥

ये त्वन्ये *ख्यातिमन्तो* वै[1]) देवा ज्योतिःपुरोगमाः, ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥ 35 ॥

आपो[1]) ध्रुवश्च सोमश्च धर[2]श्चैवानिलोऽनलः[3]) ।
प्रत्यूषश्च प्रभासश्च[4]) वसवो *नामभिः स्मृताः*[5]) ॥ 36 ॥

अपस्य[1]) पुत्रो वैतण्ड्यः[2]) श्रमः शा[3]न्तो मुनि[4]स्तथा ।
ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः[5]) ॥ 37 ॥

सोमस्य भगवान् वर्चा, वर्चस्वी येन जायते[1]); ।
धरस्य[2]) पुत्रो द्रविणो[3]) हुतहव्यवहस्तथा ॥ 38 ॥

मनोहरायाः[1]) शिशिरः प्राणोऽथ रमण[2]स्तथा ।
अनिलस्य शिवा भार्या, तस्याः[3]) पुत्रो मनोजवः[4]) ॥ 39 ॥

अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य च[1]) ।
अग्निपुत्रः कुमारस्तु[2]) शरस्तम्बे *व्यजायत*[3]), ॥ 40 ॥

---

2) Ga. Kū. Vi. –वीथी तु । 3) Ga. जामितः; Śidh. जामिजा । 4) Śidh. –षयः– । 5) Śidh. –स्तस्या । 6) A. T. मरुत्वत्यां । 7) Kū. –त्याम– ।

34$^{a}$ = A. 18.(34$^{b}$) = a; Br. 3.33$^{a}$; Ga. 6.29; H. 149$^{b}$; Kū. 16.(11$^{a}$); Śidh, 54.20$^{a}$; Vi. I. 15.109$^{b}$. 1) Vi. –रूपायां तु । 2) A. Kū. संकल्पो; Br. T. H. विश्वात्मा; Śidh. सत्यात्मा । 3) A. इन्दोर्नक्षत्रतः सुताः; Kū. धर्मपुत्रा दक्ष स्मृताः; Vi. एव तु । 4) H. –थ्यश्च । 5) H. –न्या ।

34$^{b}$ = Br. 3.33$^{b}$; H. 150$^{a}$.

$34_1$ = Br. 3.34; H. 150$^{b}$, 151$^{a}$. 1) H. या राजन् । 2) H. –पत्न्यस्तु ।

35 = Br. 3.35; H. 151$^{b}$, 152$^{a}$; Kū. 16.11$^{b}$, 12$^{a}$; Vi. I. 15.110. 1) Kū. Vi. त्वनेकवसुप्राणा ।

36 = A. 18.35; Br. 3.36; Ga. 6.30; H. 152$^{b}$, 153$^{a}$; Kū. 16.12$^{b}$, 13$^{a}$; Śidh. 54.20$^{b}$, 21$^{a}$; Vi. I. 15.111. 1) Śidh. अयो । 2) Br. T. Ga. धव– । 3) H. –श्चैवानलानलौ; Kū. –वानलोऽनिलः । 4) Vi. प्रभाव– । 5) A. –वोऽष्टौ च नामतः; Kū. –वोऽष्टौ प्रकीर्तिताः; Śidh. नामतः स्मृताः ।

37 = A. 18.36$^{a}$(b$^{I}$); Br. 3.37; Ga. 6.31; H. 153$^{b}$, 154$^{a}$; Kū. 16.13$^{b}$, 14$^{a}$; Śidh, 54.21$^{b}$, 22$^{a}$; Vi. I. 15.112. 1) Śidh. अयस्य । 2) Ga. –तुण्ड्यः; Śidh. वेतण्डः । 3) Br. T. Ga. Vi. मा– । 4) Ga. Kū. Vi. ध्वनि– । 5) Ga. लोकस्य कालनः; Śidh. लोकप्रभावनः; A. ध्रुवस्य कालो लोकान्तो ।

38 = A. 18.36(b$^{II}$), 37$^{a}$; Br. 3.38$^{ab}$; Ga. 6.32; H. 154$^{b}$, 155$^{a}$; Kū. 16.14$^{b}$ = a$^{I}$b$^{I}$; Śidh. 54.22$^{b}$, 23$^{a}$; Vi. I. 15.113. 1) A. वर्चाः सोमस्य वै सुतः । 2) Br. T. Ga. धवस्य । 3) Ga. द्रुहिणो; Kū. द्रविणः सुतः ।

39 = A. 18.37$^{b}$, (38$^{aI}$); Br. 3.38$^{c}$, 39$^{a}$; Ga. 6.33; H. 155$^{b}$, 156$^{a}$; Kū. 16.(15$^{aI}$) = b; Śidh. 54.23$^{b}$, 24$^{a}$; Vi. I. 15.114. 1) Ga. Vi.2 –हरायां । 2) Vi. वरुण– । 3) Śidh. यस्याः । 4) Ga. पुलोमनः; Śidh. –वः पुरोजवः; A. पुरोजवोऽनिलस्यासीद् ; Kū. मनोजवोऽनलस्यासीद् ।

40 – A. 18.38(a$^{II}$)b; Br. 3.39$^{b}$, 40$^{a}$; Ga. 6.34; H. 156$^{b}$, 157$^{a}$; Kū. 16.(15$^{aII}$b); Śidh. 54.24$^{b}$, 25$^{a}$; Vi. I. 15.115. 1) Ga. H. Śidh. तु; A. अविज्ञातोऽनलस्य च; Kū. अविज्ञातगतिस्तथा । 2) A. –रश्च । 3) Br. H. श्रिया वृतः;

तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः[1]) ।
अपत्यं कृत्तिकानां तु कार्तिकेय इति स्मृतः[2]) ॥ 41 ॥

स्कन्दः सनत्कुमारश्च सृष्टः[1]) पादेन तेजसः[2]) ।
प्रत्यूषस्य विदुः[1]) पुत्रमृ[2]षिं[3]) नाम्नाथ[4]) देवलम्[5]) ॥ 42 ॥

द्वौ पुत्रौ देवलस्यापि[1]) क्षमावन्तौ[2]) मनीषिणौ[3]), ।
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी[4]) ॥ 43 ॥

योगसिद्धा जगत् कृत्स्नमसक्ता[1]) विचचार ह[2]); ।
प्रभासस्य तु[3]) सा भार्या वसूनामष्टमस्य च[4]), ॥ 44 ॥

विश्वकर्मा महाभागो[1]) यस्यां[2]) जज्ञे प्रजापतिः[3]), ।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः, ॥ 45 ॥

भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः, ।
यः सर्वेषां[1]) विमानानि दैव[2]तानां चकार ह, ॥ 46 ॥

मनुष्या[1]श्चोपजीवन्ति यस्य शिल्पं महात्मनः[2]) ।
सुरभी कश्यपाद्रुद्रानेकादश विनिर्ममे[3]) ॥ 47 ॥

| महादेवप्रसादेन, तपसा भाविता सती ।
अजैकपादहिर्बुध्न्य[1]स्त्वष्टा रुद्रश्च वीर्यवान्[2]) ॥ 48 ॥

---

Śidh. श्रिया वृते; Kū. कुमारो ह्यनिलस्यासीत् सेनापतिरिति स्मृतः ।

41 = A. 18.39[a](b); Br. 3.40[b], 41[a]; Ga. 6.35; H. 157[b], 158[a]; Śidh. 54.25[b], 26[a]; Vi. I. 15.116. 1) Br. T. Ga. H. पृष्ठजः; Vi. पृष्ठजाः । 2) A. कृत्तिकातः कार्त्तिकेयो यतिः सनत्कुमारकः ।

42[a] = H. 158[b]; cfr. Bḍ. II. 3.24[b]; Vā. 66.24[a]. 1) Bḍ. Vā. जज्ञे । 2) H. –सा ।

42[b] = A. 18.(40[aI]); Br. 3.41[b]; Ga. 6.36[a]; H. 159[a]; Kū. 16.(16[a]); Śidh. 54.26[b]; Vi. I. 15.117[a]. 1) Śidh. त्वभूत् । 2) Śidh. –श्च ऋ– । 3) Śidh. –पिर्– । 4) Ga. Śidh. –म्ना तु । 5) Śidh, –लः; A. प्रत्यूषाद् देवलो जज्ञे; Kū. देवलो भगवान् योगी प्रत्यूषस्याभवत् सुतः ।

43 = Br. 3.42; H. 159[b], 160[a]; Śidh, 54.27; Vi. I. 15.117[b], 118[a]. 1) Śidh. देवस्यापि । 2) Śidh. प्रजावन्तौ । 3) H. तपस्विनौ; Śidh. मनीषिणः । 4) Br. T. H. ब्रह्मवादिनी; Vi.2 –वैरिणी ।

44 = Br. 3.43; H. 160[b], 161[a]; Śidh. 54.28; Vi. I. 15.118[b], 119[a]. 1) Śidh. –स्त्नं समन्ताद् । 2) Śidh. Vi. विचरत्युत । 3) H. च । 4) Br. तु ।

45 = A. 18.40(aII)b; Br. 3.44; Ga. 6.(36[b]) = a; H. 161[b], 162[a]; Kū. 16.(16[b]) = a; Śidh. 54.29; Vi. I. 15.119[b], 120[a]. 1) Śidh. Vi. भागस् ; A. Ga. Kū. विश्वकर्मा प्रभासस्य ( A. तः ) । 2) Śidh. Vi. तस्यां । 3) Ga. विख्यातो देववर्धकिः; Kū. शिल्पकर्ता प्रजापतिः ।

46 = Br. 3.45; H. 162[b], 163[a]; Śidh. 54.30; Vi. I. 15.120[b], 121[a]. 1) Śidh, H. सर्वासां । 2) H. Śidh, Vi.1 देव– ।

47 = A. 18.51; Br. 3.46; H. 163[b], 164[a]; Śidh. 54.31[a] = a; Vi. I. 15.121[b] = a. 1) Br. मानुषा– । 2) A. –न्ति शिल्पं वै भूषणादिकम् । 3) A. विजज्ञुषी ।

48 = A. 18.42; Br. 3.47; Ga. 6.37[a] = b; H. 164[b], 165[a]; Śidh. 54.31[b] = b; Vi. I. 15.122[b] = b. 1) Ga. Śidh, Vi.1 –ब्रध्न– । 2) A. सत्तम; H. –द्राश्च भारत; Vi. बुद्धिमान् ।

त्वष्टुश्चैवा[1]त्मजः *श्रीमान्*[2]) विश्वरूपो महायशाः[3]) ।
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥ 49 ॥

वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।
मृगव्याधश्च शर्व[1]श्च कपाली च *द्विजोत्तमाः*[2]) ॥ 50 ॥

एकादशैते *कथिता*[1]) रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेवं समा[2]ख्यातं रुद्राणाममितौजसाम्[3]) ॥ 51 ॥

| पुराणे मुनिशार्दूल[1]) यैर्व्याप्तं सचराचरम्[2]) ।
| *दारान् शृणुध्वं विप्रेन्द्राः कश्यपस्य प्रजापतेः*[3]) ॥ 51a ॥

अदितिर्दितिर्दनुश्चैव[1]) अरिष्टा सुरसा *खशा*[2]) ।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा[3]) ॥ 52 ॥

कद्रू[1]र्मुनिश्च[2]) *मो विप्रास्ता*[3]*स्व*[4]पत्यानि बोधत[5]) ! ।
पूर्वमन्वन्तरे श्रेष्ठा[6]) द्वादशासन् सुरोत्तमाः ॥ 53 ॥

तुषिता नाम, तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ।
उपस्थितेऽतियशस[1]श्चाक्षुषस्यान्तरे[2]) मनोः ॥ 54 ॥

हितार्थं सर्वलोकानां[1]) समागम्य परस्परम् ।
आगच्छत द्रुतं देवा[2]), अदितिं सम्प्रविश्य वै[3]) ॥ 55 ॥

मन्वन्तरे प्रसूयामस्तन्नः[1]) श्रेयो भविष्यति[2]) ।
एवमुक्त्वा तु[3]) ते सर्वे चाक्षुषस्यान्तरे मनोः ॥ 56 ॥

---

49 = A. 18.43; Br. 3.48$^{a}$ = b; Ga. 6.37$^{b}$, 38$^{a}$; H. 165$^{b}$, 166$^{a}$; Śidh. 54.32; Vi. I. 15.122$^{c}$, 123$^{a}$. 1) Ga. Śidh. Vi. –श्चाप्या– । 2) Ga. Vi. पुत्रो । 3) Ga. Vi.2 महातपाः ।

50 = A. 18.44; Br. 3.48$^{b}$, 49$^{a}$; Ga. 6.38$^{b}$, 39$^{a}$; H. 166$^{b}$, 167$^{a}$; Śidh. 54.33$^{a}$ = a; Vi. I. 15.123$^{b}$, 124$^{a}$. 1) A. H. सर्प– । 2) A. दश चैककः; Ga. Vi. महामुने; H. विशांपते ।

51 = A. 18.(45); Br. 3.49$^{b}$, 50$^{a}$; Ga. 6.39$^{b}$ = a; H. 167$^{b}$, 168$^{a}$; Śidh. 54.33$^{b}$, 34$^{a}$; Vi. I. 15.124$^{b}$, 125$^{a}$. 1) Br. विख्याता; Vi. प्रथिता । 2) Śidh. एवं ते वंशमा– । 3) A. रुद्राणां च शतं लक्षं यैर्व्याप्तं सचराचरम् ।

| 51$^{a}$ = Br. 3.50$^{b}$, 51$^{a}$; H. 168$^{b}$, (169$^{a}$). 1) H. भरतश्रेष्ठ । 2) H. ताः सचराचराः । 3) H. लोका भरत-शार्दूल कश्यपस्य निबोध मे ।

52 = Br. 3.51$^{b}$, 52$^{a}$; H. 169$^{b}$, 170$^{a}$; Śidh. 54.34$^{b}$, 35$^{a}$; Vi. I. 15.125$^{b}$, 126$^{a}$; cfr. Ga. 6.26. 1) Śidh. –विश्व दनुर्–; Vi. दनुः काला । 2) Śidh. इला; Vi. तथा । 3) Śidh. क्रोधा सामा इला ।

53 = Br. 3.52$^{b}$, 53$^{a}$; H. 170$^{b}$, 171$^{a}$; Śidh. 54.35$^{b}$, 36$^{a}$; Vi. I. 15.126$^{b}$, 127$^{a}$. 1) Śidh. –द्रूः । 2) Śidh. ऋनिश्च । 3) H. राजेन्द्र ता–; Śidh. विप्रेन्द्र ता–; Vi. धर्मज्ञ । 4) Vi. तद– । 5) H. Śidh, Vi. मे शृणु । 6) H. तात ।

54 = Br. 3.53$^{b}$, 54$^{a}$; H. 171$^{b}$, 172$^{a}$; Śidh. 54.36$^{b}$, 37$^{a}$; Vi. I. 15.127$^{b}$, 128$^{a}$. 1) Śidh. चान्वयश– । 2) Śidh. –न्तरं

55 = Br. 3.54$^{b}$, 55$^{a}$; H. 172$^{b}$, 173$^{a}$; Śidh. 54.37$^{b}$, 38$^{a}$; Vi. I. 15.128$^{b}$, 129$^{a}$. 1) Vi. समवायीकृताः सर्वे । 2) Śidh. आगच्छंस्तांस्तु तानूचुर् । 3) Śidh. विश्यथ ।

56 = Br. 3.55$^{b}$, 56$^{a}$; H. 173$^{b}$, 174$^{a}$; Śidh. 54.38$^{b}$, 39$^{a}$; Vi. I. 15.129$^{b}$, 130$^{a}$. 1) Śidh. –मः सतां । 2) Vi.2 भवे-दिति । 3) Śidh. –मुक्तास्तस्तु ।

मारीचात्[1]) कश्यपाज्जातास्त्व[2]दित्या दक्षकन्यया[3]) ।
तत्र[4]) विष्णुश्च शक्रश्च[5]) जज्ञाते पुनरेव हि[6]), ॥ 57 ॥

अर्यमा चैव धाता च त्वष्टा पूषा तथैव च[1]) ।
विवस्वान् सविता चैव मित्रो[2]) वरुण एव च[3]) ॥ 58 ॥

अंशो भगश्चातितेजा[1]) आदित्या द्वादश स्मृताः ।
चाक्षुषस्यान्तरे पूर्वमासन् ये[2]) तुषिताः सुराः, ॥ 59 ॥

वैवस्वते[1]ऽन्तरे ते वै[2]) आदित्या द्वादश स्मृताः[3]) ।
सप्तविंशति याः[4]) प्रोक्ताः सोमपत्न्यो महाव्रताः[5]), ॥ 60 ॥

तासामपत्यान्यभवन् दीप्तान्य[1]मिततेजसः[2]) ।
अरिष्टनेमि[3]पत्नीनामपत्यानीह षोडश[4]) ॥ 61 ॥

बहुपुत्रस्य विदुषश्चतस्रो विद्युतः[1]) स्मृताः ।
प्रात्यङ्गिरसजाः श्रेष्ठा[2]) ऋचो ब्रह्मर्षिसत्कृताः[3]) ॥ 62 ॥

कृशाश्वस्य तु[1]) देवर्षेर्देवप्रहरणाः स्मृताः[2]), ।
एते युगसहस्रान्ते जायन्ते पुनरेव हि[3]) ॥ 63 ॥

सर्वे देवगणाश्चात्र[1]) त्रयस्त्रिंशत्तु कामजाः[2]), ।
तेषामपि च[3]) भो विप्रा[4]) निरोधोत्पत्तिरुच्यते ॥ 64 ॥

---

57 = A. 19.($1^b$), $2^{aI}$ = $a^{bI}$; Br. 3.$56^b$, $57^a$; H. $174^b$, $175^a$; Śidh, 54.$39^b$, $40^a$; Vi. I. 15.$130^b$, $131^a$. 1) Śidh. मारीचेः । 2) H. Vi. –स्तेऽ– । 3) A. चाक्षुषे तुषिता देवास्तेऽदित्यां कश्यपात् पुनः । 4) A. आसान् । 5) H. शक्रश्च विष्णुश्च । 6) H. ह; Vi. च ।

58 = A. 19.($2^{aIIb}$); Br. 3.$57^b$, $58^a$; Ga. 6.$42^a$ = b; H. $175^b$, $176^a$; Śidh. 54.$40^b$, $41^a$; Vi. I. 15.$131^b$, $132^a$. 1) H. च भारत; A. धाता तथार्यमा । 2) Śidh. –त्रा– । 3) A. पुषा विवस्वान् सविता मित्रोऽथ वरुणो भगः ।

59 = A. 19.($3^{aI}$) = a; Br. 3.$58^b$ ( ); Ga. 6.$42^b$ = a; H. $176^b$, $177^a$; Śidh. 54.$41^b$, $42^a$; Vi. I. 15.$132^b$, $133^a$. 1) Vi. –श्चादितिजा; A. अंशुश्च द्वादशादित्या; Ga. अंशुमांश्च भगस्त्वैव । 2) Br. –मासंस्ते ।

60 = A. ($3^{aII}$) = a; Br. 3. ( ) $59^a$; H. $177^b$, $178^a$; Kū. (16.$20^a$) = a, cfr. 18.$15^b$, $16^a$; Śidh. 54.$42^b$, $43^a$; Vi. I. 15.$133^b$, $134^a$. 1) Śidh रैवतस्या– । 2) Br. वा; Śidh, तु; A. भासन् वैवस्वतेऽन्तरे । 3) Kū. वैवस्वतेऽन्तरे प्रोक्ता आदित्याश्चादितेः सुताः । 4) Kū. 18.$16^a$ –शसुताः । 5) Kū. –त्न्यश्च सुव्रताः; Śidh. Vi. –त्न्योऽथ सुव्रताः ।

61 = A. 19.$3^b$ = b; Br. 3.$59^b$, $60^a$; H. $178^b$, $179^a$; Kū. 18.$16^b$ = b; Śidh, 54.$43^b$, $44^a$; Vi. I. 15.135. 1) Śidh. दीप्तयोऽमि– । 2) H. –साम् ; Vi. –सा । 3) Śidh. अरिष्टनेमेः । 4) Kū. T. –त्यानां ह्यनेकशः ।

62 = A. 19.$4^{abI}$ = $a^{bI}$; Br. 3.$60^b$, $61^a$; H. $179^b$, $180^a$; Kū. 18.17; Śidh. 64.$44^b$ = a; Vi. 15.136. 1) Śidh याः सुताः । 2) Br. T. चाक्षुषस्यान्तरे पूर्वं; Kū. तद्वदङ्गिरसः श्रेष्ठा । 3) A. श्रेष्ठाः; Kū. ऋषयो वृषस्कृताः ।

63 = A. 19.($4^{bII}$) = a; Br. 3.$61^b$, $62^a$; H. $180^b$, $181^{aa}$; Kū. 18.$18^{ab}$; Śidh. 54.45; Vi. I. 15.137. 1) Br. H. च । 2) A. कृशाश्वस्य सुरायुधाः; H. Vi.2 सुताः; Kū. T. –वः प्रहरणः सुतः । 3) H. ह ।

64 = Br. 3.$62^b$, $63^a$; H. $181^b$, $182^a$; Śidh, 54.46; Vi. I. 15.138. 1) H. –स्तत्र; Śidh. –स्तात; Vi. देवनिकायाश्च । 2) Vi. छन्दजाः । 3) Vi. –मपीह । 4) H. राजेन्द्र; Śidh. विप्रेन्द्र; Vi. सततं ।

यथा सूर्यस्य *गगन*[1]) उदयास्तमयाविह, ।
एवं देवनिकायास्ते संभवन्ति युगे युगे[2]) ॥ 65 ॥

दित्याः[1]) पुत्रद्वयं जज्ञे[2]) कश्यपादिति नः श्रुतम् ।
हिरण्यकशिपुश्चैव[3]) हिरण्याक्षश्च वीर्यवान्[4]), ॥ 66 ॥

सिंहिका चाभवत् कन्या, विप्रचित्तेः[1]) परिग्रहः, ।
| सैंहिकेया इति ख्याता यस्याः पुत्रा महाबलाः[1]) ॥ 67 ॥

हिरण्यकशिपोः पुत्राश्चत्वारः *प्रथितौजसः*[1]) ।
अनुह्लादश्च ह्लाद[1]श्च प्रह्लादश्चैव वीर्यवान्[3]), ॥ 68 ॥

संह्लादश्च चतुर्थोऽभूद् ह्लादपुत्रो ह्रदस्तथा[1]) ।
संह्लादपुत्रः सुन्दश्च निसुन्दश्चैव तावुभौ ।
ह्रदस्य[1]) पुत्र[2]) *आयुष्मान्*[3]) *शिवि*[4]*र्वास्कल एव*[5]) च ॥ 69 ॥

विरोचनश्च[1]) प्राह्लादिर्बलिर्जज्ञे विरोचनात्[2]) ।
बलेः पुत्रशतं त्वासीद् बाणज्येष्ठं तपोधनाः[1]) ॥ 70 ॥

धृतराष्ट्रश्च सूर्यश्च चन्द्रमाश्चेन्द्रतापनाः[1]) ।
कुम्भनाभो गर्दभाक्षः कुक्षिरित्येवमादयः ॥ 71 ॥

---

65 = A. 19.(5$^{a}$); Br. 3.63$^{b}$, 64$^{a}$; H. 182$^{b}$, 183$^{a}$; Śidh. 54.47; Vi. I. 15.139. 1) Śidh. नित्यं हि; Vi. मैत्रेय । 2) A. उदयास्तमने सूर्ये तद्वदेते युगे युगे ।

66 = A. 19.5$^{b}$ = b; Br. 3.64$^{b}$, 65$^{a}$; Ga. 7.(43$^{a}$) = b; H. 183$^{b}$, 184$^{a}$; Śidh. 54.48; Vi. I. 15.140. 1) Śidh. –त्या । 2) Śidh, बभूवतुः पुत्रौ । 3) A. Ga. –पुर्दित्यां । 4) A. कश्यपात्; Ga. –क्षोऽभवद् तथा; Vi. दुर्जयः ।

67$^{a}$ = A. 19.6$^{a}$; Br. 4.65$^{b}$; Ga. 6.43$^{b}$; H. 184$^{b}$; Śidh. 54.49$^{a}$; Vi. I. 15.141$^{a}$. 1) Ga. –चित्ति– ।

| 67$^{b}$ = A. 19.(6$^{b}$); Br. 3.66$^{a}$; H. 185$^{a}$. 1) A. राहुप्रभृतयस्तस्यां सैंहिकेया इति श्रुताः ।

68 = A. 19.7; Br. 3.66$^{b}$, 67$^{a}$; Ga. 6.44$^{ab}$; H. 187; Kū. 16.43$^{a}$(46); Śidh. 54.49$^{b}$, 50$^{a}$; Vi. I. 15.141$^{b}$, 142$^{aa}$ 1) Ga. –रः पृथुलौजसः; Śidh. –रोऽप्यमितौजसः । 2) Br. ह्रादश्च अनुह्राद– । 3) A. –श्चातिवैष्णवः; Vi.1 बुद्धिमान् ; Vi.2 धर्मवान् ; Kū. प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च ।

69$^{a}$ = A. 19.8$^{a}$; Br. 3.67$^{b}$; Ga. 6.(44$^{c}$); H. 188$^{a}$; Śidh. 54.50$^{b}$; Vi. I. 15.142$^{b}$. 1) Śidh. –दः स्मृतः; Ga. –श्चाभवद् तेषां प्रह्लादो विष्णुतत्परः; Vi. –श्च महावीर्या ( र्यो ) दैत्यवंशविवर्धनाः ( नः ) ।

69$^{b}$ = 188$^{b}$. Cp. Bḍ. II. 5.34$^{b}$; Vā. 67.71$^{a}$.

69$^{c}$ = A. 19.8$^{b}$; Br. 3.68$^{a}$; Ga. 6.45$^{a}$; H. 189$^{a}$; Śidh. 54.41$^{a}$; Vi. I, 21.1. 1) A. T. Ga. Vi. संह्राद– । 2) Br. पुत्रौ; H. –त्रो ह्या । 3) Br. द्वौ वीरौ; H. आयुर्वै; Vi.2 –त्रश्चायुष्मान् । 4) Br. शिवः; Ga. H. Vi.1 –विः । 5) Br. H. Śidh. कालस्तथैव ।

70 = A. 19.9; Br. 3.68$^{b}$, 69$^{a}$; Ga. 6.45$^{bc}$; H. 189$^{b}$, 190$^{a}$; Kū. 18.1$^{a}$ = b; Śidh. 54.51$^{b}$, 52$^{a}$; Vi. I. 21.1$^{b}$, 2$^{a}$. 1) A. Śidh. Vi. –स्तु । 2) Śidh. बाणो ज्येष्ठश्च तस्य तु; A. Vi.1 महामुने; Vi.2 नराधिपात् ; Ga. वृषध्वज; H. नराधिप; Kū. महाबलपराक्रमम् ।

71 = Br. 3.69$^{b}$, 70$^{a}$; H. 190$^{b}$, 191$^{a}$; cfr. Bḍ. II. 6.8$^{b}$, 5.43$^{a}$; Vā. 68.8$^{b}$, 67.83$^{c}$. 1) Br. –श्चान्द्रतापनः ।

बाणस्तेषामतिबलो ज्येष्ठः पशुपतेः[1]) प्रियः[2]) ।
पुराकल्पे तु[3]) बाणेन प्रसाद्योमापतिं प्रभुम् ।
पार्श्वतो विहरिष्यामि, इत्येवं याचितो वरः[4]) ॥ $71_1$ ॥

हिरण्याक्षसुताः पञ्च[1]) विद्वांसः[2]) सु[3]महाबलाः ।
उत्करः[4]) शकुनिश्चैव भूतसंतापनस्तथा[5]) ॥ 72 ॥

महानाम[1]श्च विक्रान्तः[2]) कालनामस्तथैव च[3]) ।
अभवन् दनुपुत्राश्च शतं तीव्रपराक्रमाः ॥ 73 ॥

तपस्विनो[1]) महावीर्याः, प्राधान्येन ब्रवीमि तान्[2]) ।
द्विमूर्धा शङ्कुनिश्चैव[3]) तथा शङ्कुशिराः[4]) प्रभुः[5]) ॥ 74 ॥

शङ्कुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा, ।
अयोमुखः शम्बरश्च[1]) कपिलो वामन[2]स्तथा ॥ 75 ॥

मारीचिर्मेघवांश्चैव इरा गर्गशिरा वृकः[1]), ।
विक्षोभणश्च केतुश्च केतुवीर्यशतह्रदौ, ॥ 76 ॥

इन्द्रजित् सर्वजिच्चैव वज्रनामस्तथैव च, ।
एकचक्रो महाबाहुस्तारकश्च महाबलः, ॥ 77 ॥

वैश्वानरः[1]) पुलोमा च विद्रावण-महाशिराः[2]), ।
स्वर्भानुर्वृषपर्वा च तुहुण्डश्च[3]) महासुरः[4]), ॥ 78 ॥

सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनामो महागिरिः, ।

---

$71_1$ = A. 19.10 = b[c]; Br. 3.70[b], 71; H. 191[b], 192; Kū. 18.(b) = a. 1) H. –ति– । 2) Kū. तेषां प्रधानो द्युतिमान् बाणो नाम महाबलः । 3) A. H. हि । 4) A. प्राप्त ईश्वरात् ।

72 = A. 19.11[a] = a[I](b[I]); Br. 3.72; Ga. 6.46[ab]; H. 194; Śidh. 54.52[b], 53[a]; Vi. I. 21.2[b], 3[a]. 1) Br. T. –ताश्चैवं Ga. Vi.1 –ताश्चासन् ; Vi.2 –ताश्चापि । 2) Śidh. पण्डिताः । 3) Br. च; Ga. Vi. सर्वे एव । 4) Br. T. मर्मरः; V. कर्जराः; H. झर्झरः; Śidh. कुकुरः; Vi. वक्कुरः । 5) A. शम्बरः शकुनिस्त्विति ।

73 = Br. 73; Ga. 6.46[c], 47[aI] = a[bI]; H. 195, Cfr. 199[b] = a; Śidh. 54.53[b], 54[a]; Vi. I. 21.3[b], 4[aI] = ab[I]. 1) Ga. Vi. नामो; Śidh. –नाद– । 2) Ga. Vi. महाबाहुः । 3) Ga. Vi. –स्तथापरः ।

74 = A. 19.(11[bI]) = b[I]; Br. 3.74; Ga. 6.47[aII] = b[I]; H. 196; Śidh. 54.54[b], 55[a]; Vi. I. 21.4[aII] = b[I]. 1) Śidh. महाबला । 2) H. निबोध तान् ; Śidh. निबोध मे । 3) A. T. शङ्कुरायश्च; V. शम्बराद्याश्च; Br. शङ्कुकर्णश्च; Ga. Vi. शङ्कुरस्तथा; H. शकुनिश्चैव; Śidh. शङ्कुरश्चैव । 4) Br. T. वृषशिरा; Śidh. वलिशिवः । 5) Br. विभुः ।

75 = Br. 3.75[a] = b; Ga. 6.47[b] = b; H. 197; Śidh. 54.55[b] = b; Vi. I. 21.4[b]=b. Cp. Bḍ. II. 6.4[b], 5[a]; Vā. 68.4[b], 5[a]. 1) Ga. Vi. शङ्कुशिराः । 2) Ga. Vi. –कः शम्बर– ।

76 = Br. 3.75[b], 76[a]; H. 198. Cp. Bḍ. II. 6.5[b], 6[a]; Vā. 68. 5[b], 6[a]. 1) Br. इल्वलः स्वसृमस्तथा । Cp. Br. 3.88[a].

77 = Br. 3.76[b], 77[a]; Ga. 6.48[a] = b; H. 199[a], 200[a]; Vi. I. 21.5[a] = b. Cp. Bḍ. II. 6[b], 7[a]; Vā. 68.6[b] 7[a].

78 = Br. 3.77[b], 78[I]; Ga. 6.48[b] = b; H. 200[b], 201[a]; Śidh. 54.56[abI] = ab[I]; Vi. I. 21.5[b] = b. Cfr. Bḍ. II. 6.7[b], 8[a]; Vā. 68.7[b], 8[a]. 1) Śidh. विश्वानरः । 2) Śidh. –शुरो । 3) Ga. Vi. पुलोमा च । 4) Vi.1 –बलः ।

असिलोमा सुकेशश्च[1]) शठश्च बलको मदः, ॥ 79 ॥

तथा गगनमूर्धा च कुम्भनाभो महासुरः, ।
प्रमदो *मयश्च* कुपथो हयग्रीवश्च वीर्यवान्, ॥ 80 ॥

वैसृपः सविरूपाक्षः सुपथोऽथ हराहरौ, ।
*हिरण्यकशिपुश्चैव* शतमायश्च शम्बरः, ॥ 81 ॥

शरभः शलभश्चैव *विप्रचित्तिश्च* वीर्यवान् ; ।
सर्वे एते दनोः पुत्राः[1]) कश्यपादभिजज्ञिरे[2]) ॥ 82 ॥

| विप्रचित्तिप्रधानास्ते दानवाः सुमहाबलाः, ।
| एतेषां यदपत्यं[1]) तु, न तच्छक्यं *द्विजोत्तमाः*[2]) ।
| प्रसंख्यातुं बहुत्वाच्च[3]) पुत्रपौत्रमनन्तकम् ॥ $82_1$ ॥

स्वर्भानोस्तु प्रभा[1]) कन्या, पुलोम्नस्तु शची सुता[2]) ।
उपदानवी[3]) हयशिराः, शर्मिष्ठा वार्षपर्वणी[4]) ॥ 83 ॥

पुलोमा कालिका[1]) चैव वैश्वानरसुते उभे[2]), ।
बह्वपत्ये महावीर्ये[3]) मारीचेस्तु परिग्रहः[4]) ॥ 84 ॥

तयोः[1]) पुत्रसहस्राणि षष्टिर्दानवनन्दनाः[2]) ।
चतुर्दश शतान्यन्यान् हिरण्यपुरवासिनः ॥ 85 ॥

मारीचिर्जनयामास महता तपसान्वितः ।
पौलोमाः कालकेया[1]श्च दानवास्ते[2]) महाबलाः[3]) ॥ 86 ॥

---

79 = H. $201^{b}$, $202^{a}$; Cp. Bḍ. II. 69; Vā. 68.9. 1) H. T. च केशी च ।

80 = H. $202^{b}$, $203^{a}$; Cp. Bḍ. II. 6.10; Vā. 68.10.

81 = H. $203^{b}$, $204^{a}$; Cp. Bḍ. II. 6.11; Vā. 68.11.

82 = A. 19.($11^{bII}$) = b; Br. $3.78^{aII}$, $79^{a}$ = $a^{II}$b; Ga. 6.49 = $b^{I}a^{II}$; H. $204^{b}$, $205^{a}$; Śidh. $54.56^{bII}$, $57^{a}$ = $a^{II}$b; Vi. I. $21.6^{a}$ = a. 1) Ga. Vi. एते दनोः सुताः ख्याताः । 2) Śidh. –दनुजज्ञिरे; A. शतमासन् दनोः सुताः ।

| $82_1$ = Br. $3.79^{b}$, $80^{a}$; H. $205^{b}$, 206. 1) Br. T. –षां पुत्रपौत्रं । 2) H. नराधिप । 3) H. महीपाल ।

83 = A. 19.12; Br. $3.80^{b}$, $81^{a}$; Ga. 6.50; H. 207; Śidh. $54.57^{b}$, $58^{a}$; Vi. I. $21.6^{b}$, $7^{a}$. 1) A. Ga. –नोः सुप्रभा । 2) A. स्मृता; Ga. Vi. शर्मिष्ठा वार्षपर्वणी; H. सुतात्रयम् । 3) Br. T. उपदीप्तिर्–; Ga. औपदानवी । 4) Ga. Vi. प्रख्याता वरकन्यकाः ।

84 = A. $19.13^{a}(b^{I})$; Br. $3.81^{b}$, $82^{a}$; Ga. 6.(51); H. 208; Śidh. $54.58^{b}$, $59^{a}$; Vi. I. 21.($7^{b}$, $8^{a}$). 1) A. H. कालका । 2) Ga. Vi. वैश्वानरसुते चोभे पुलोमा कालका तथा । 3) Br. महापत्ये; V. महासत्त्वे; Ga. Vi.2 उभे ते तु महाभागे; Vi.1 उभे सुते महाभागे । 4) Śidh. –हे; A. कश्यपस्य तु भार्ये द्वे ।

85 = A. 19.13.($a^{II}$) = a; Br. $3.82^{b}$, $83^{a}$; Ga. $6.52^{a}$ = a; H. 209; Śidh. $54.59^{b}$ = a; Vi. I. 21.8 = a. Cp. Bḍ. II. $6.26^{b}$, $27^{a}$; Vā. 68.26. 1) Ga. Vi. ताभ्यां । 2) A. तयोः पुत्राश्च कोटयः; Ga. Vi. दानवसत्तमाः; H. –ष्टिं दानवनन्दनान् ।

86 = Br. $3.83^{b}$, $84^{a}$; Ga. $6.52^{b}$ = b; H. 210; Śidh. 54.60; Vi. I. $21.9^{a}$ = b. 1) Ga. Vi.2 कालकञा–; Śidh. कालखञा– । 2) Ga. Vi. मारीचतनयाः; Śidh. दानवानां । 3) Ga. Vi. स्मृताः ।

अवध्या देवतानां हि[1]) हिरण्यपुरवासिनः ।
पितामहप्रसादेन, ये[2]) हताः सव्यसाचिना ॥ 87 ॥

प्रभाया नहुषः पुत्रो, जयन्तश्च[1]) शचीसुतः ।
पुरुं जज्ञेऽथ शर्मिष्ठा, दुष्मन्तमुपदानवी ॥ 88 ॥

ततोऽपरे महावीर्या दानवा[1]स्त्वतिदारुणाः[2]) ।
सिंहिकायामथोत्पन्ना[3]) विप्रचित्तेः सुता[4]स्तथा, ॥ 89 ॥

दैत्यदानवसंयोगाज् जातास्तीव्रपराक्रमाः ।
सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः ॥ 90 ॥

व्यंशः[1]) शल्यश्च बलिनौ[2]) नल[3]श्चैव महाबलः[4]) ।
वातापिर्नमुचिश्चैव इल्वल स्वसृम[5]स्तथा, ॥ 91 ॥

अञ्जिको[1]) नरकश्चैव कालनाभस्तथैव च ।
राहुर्ज्येष्ठस्तु तेषां वै सूर्यचन्द्रप्रमर्दनः, ।
सरमानस्तथा चै[2]व स्वरकल्प[3]श्च वीर्यवान्[4]), ॥ 92 ॥

मूकश्चैव तुहुण्डश्च ह्रदपुत्रौ बभूवतुः, ।
मारीचः सुन्दपुत्रश्च ताडकायां व्यजायत, ॥ 93 ॥

एते वै[1]) दानवाः श्रेष्ठा दनुवं[1]शविवर्धनाः[3]) ।
तेषां पुत्राश्च पौत्राश्च[4]) शतशोऽथ सहस्रशः[5]) ॥ 94 ॥

संह्लादस्य[1]) तु दैत्यस्य[2]) निवातकवचाः कुले[3]) ।
समुत्पन्नाः सुमहता त[4]पसा भावितात्मनः ॥ 95 ॥

---

87 = Br. 3.84$^b$, 85$^a$; H. 211; Śidh. 54.61. 1) H. च । 2) H. कृताः पितामहेनाजौ नि– ।

88 = H. 212. Cp. Bḍ. II. 6.24$^b$, 25$^a$; Vā. 68.24. 1) H. –त्रः सृञ्जयश्च ।

89 = Br. 3.85$^b$, 86$^a$; Ga. 6.53$^a$ = b; H. 213; Śidh. 54.62$^a$ = b; Vi. I. 21.9$^b$, 10$^a$. 1) Vi. दारुणा– । 2) Vi. –स्त्वतिनिर्घृणाः; Vi.2 –श्चातिनिघृणाः । 3) Ga. समुत्पन्ना । 4) Ga. –यां –चित्तिसुता– ।

90 = Br. 3.86$^b$, 87$^a$; H. 214; Śidh. 54.62$^b$, 63$^a$.

91 = Br. 3.87$^b$, 88$^a$; Ga. 6.53$^b$, 54$^a$; H. 215; Śidh. 54.63$^b$, 64$^a$; Vi. I. 21.10$^b$, 11$^a$. 1) Br. वंश्यः; Śidh. राहुः । 2) Ga. Vi. ब·वान् ; Śidh. सुबलिनो । 3) Ga. H. Vi. नम–; Śidh. बल– । 4) Br. तथा बलः । 5) Śidh. स्वसृप– ।

92 = Br. 3.88$^b$, 89$^a$ = ac; Ga. 6.54$^b$ = a; H. 216, 217$^a$; Śidh. 54.64$^b$,(65$^{aI}$) = ac; Vi. I. 21.11$^b$,(12$^a$) = a(c). Cp. Bḍ. II. 6.20$^b$; Vā. 68.20 = b. 1) Ga. Vi. अश्वको; H. माश्वको; Śidh. अजिको । 2) H. शुकः पोतरणश्चैव । 3) H. वज्रनाम– । 4) Śidh. शरमाणः शरकल्पस् ; Vi. स्वर्भानुश्च महावीर्यश्चक्रयोधी महाबलः ।

93 = H. 217$^b$, 218$^a$; Cp. Bḍ. II. 5.35; Vā. 67.71$^b$, 72$^b$.

94 = Br. 3.89$^b$, 90$^a$; H. 218$^a$, 219$^a$; Śidh. 54.65$^{aIIb}$ = a$^{II}$b; Vi. I. 21.12$^b$, 13$^a$. 1) Vi. ते । 2) Br. H. दनोर्वं– । 3) Śidh. एते वंशविवर्धनाः । 4) Vi. एतेषां पुत्रपौत्राश्च । 5) Śidh. –श्च दनुवंशविवर्धनाः ।

95 = A. 19.14$^a$ = a; Br. 3.90$^b$, 91$^a$; Ga. 6.(54$^c$) = a; H. 219$^b$, 220$^a$; Śidh. 54.66; Vi. I. 21.13$^b$, 14$^a$. 1) A. Vi. प्रह्लादस्य । 2) A. चतुष्कोट्यो । 3) Ga. निवातकवचा दैत्याः प्रह्लादस्य कुलेऽभवन् । 4) Śidh. –त्पन्ना महता तस्मिंस्त– ।

तिस्रः कोट्यः सुतास्तेषां मणिवत्यां निवासिनः[1]), ।
*अवध्यास्तेऽपि*[2]) देवानामर्जुनेन निपातिताः ॥ 96 ॥

षट् सुताः सु[1]महासत्त्वा[2]स्ताम्रायाः परिकीर्तिताः[3]) ।
काकी[4]) श्येनी च भासी च सुग्रीवी शुचिर्गृध्रिका[5]) ॥ 97 ॥

काकी[1]) *काका*[2]नजनयदु[3]लूकप्रत्युलूककान्[4]), ।
श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि[5]), ॥ 98 ॥

शुचिरौ[1]दकान् पक्षिगणान्[2]), सुग्रीवी तु *व्यजायत*[3]) ।
अश्वानुष्ट्रान् गर्दभांश्च ताम्रावंशः प्रकीर्तितः[4]) ॥ 99 ॥

विनतायास्तु पुत्रौ द्वौ[1]) *अरुणो गरुडस्तथा*[2]) ।
सुपर्णः[3]) पततां[4]) श्रेष्ठो[5]), दारुणः[6]) *स्वेन कर्मणा*[7]) ॥ 100 ॥

सुरसायाः[1]) सहस्रं तु सर्पाणाममितौजसाम्[2]) ।
अनेकशिरसां तेषां[3]) खेचराणां महात्मनाम् ॥ 101 ॥

काद्रवेयास्तु[1]) बलिनः[2]) सहस्रममितौजसः[3]) ।
सुपर्णवशगा नागा[4]) जज्ञिरेऽने[5]कमस्तकाः, ॥ 102 ॥

येषां[1]) प्रधानाः *सततं*[2]) शेष-वासुकि-तक्षकाः, ।

---

96 = Br. $3.91^{b}$, $92^{a}$; H. $220^{b}$, $221^{a}$; Cp. Vā. $67.74^{bc}$. 1) H. –वासिनाम् । 2) H. तेऽप्यवध्याश्च ।

97 = A. 19.($14^{b}$, $15^{aI}$); Br. $3.92^{b}$, $93^{a}$; Ga. 6.55; H. $221^{b}$, $222^{a}$; Śidh. 54.67; Vi. I. $21.14^{b}$, $15^{a}$. 1) Ga. सुताश्च; Śidh. खरमुखा । 2) Br. H. सुमहाभागा–; Ga. Śidh. महासत्त्वा– । 3) A. ताम्रायाः षट् सुताः स्मृताः । 4) Br. क्रौञ्ची; Ga. Vi. शुकी । 5) A. भास्यपि गृध्रिका च शुचिग्रीवा; Śidh. सुग्रीवी गृध्रिका शुकी ।

98 = A. 19.($15^{aII}$); Br. $3.93^{b}$, $94^{a}$; Ga. 6.56; H. $222^{b}$, $223^{a}$; Śidh. 54.68; Vi. I. $21.15^{b}$, $16^{a}$. 1) Br. क्रौञ्ची; Ga. Vi. शुकी । 2) Ga. Vi. शुका– । 3) Br. T. तु जनयामास उ–; V. क्रौञ्चानजनयदु– । 4) Ga. H. Vi. –कौ प्रत्युलूककान् ; Śidh. –किकान् ; A. ताभ्यः काकादयोऽभवन् । 5) Śidh. गृध्री तु गृध्रकान् ।

99 = A. 19.($15^{bI}$) = b; Br. $3.94^{b}$, $95^{a}$; Ga. 6.57; H. $223^{b}$, $224^{a}$; Śidh. 54.69; Vi. I. $21.16^{b}$, $17^{a}$. 1) Ga. Vi. शुच्यौ–; Śidh. शुकी । 2) Śidh. शुकान्यदेवांस्तु । 3) Br. द्विजोत्तमाः; H. परंतप; Śidh. शुभपक्षिणः । 4) A. अश्वाश्चोष्ट्राश्च ताम्रायाः ।

100 = A. 19.($16^{aI}$), $15^{bII}$ = a; Br. $3.95^{b}$, $96^{a}$; Ga. $6.58^{a}$ = a; H. $224^{b}$, $225^{a}$; Śidh. 54.70; Vi. I. $21.17^{b}$, $18^{a}$. 1) A. –तायाः सहस्रं तु ; Br. द्वौ पुत्रौ । 2) Br. T. Ga. Vi. विख्यातौ गरुडारुणौ; Kū. –याश्च पुत्रौ द्वौ प्रख्यातौ गरुडारुणौ । 3) Br. T. गरुडः । 4) H. –तग– । 5) Śidh. श्रैष्ठ्याद् । 6) Śidh. अरुणः । 7) Vi. पन्नगाशनः ।

101 = A. 19.($16^{aII}$); Br. $3.96^{b}$, $97^{a}$; Ga. $6.58^{b}$ = a; H. $225^{b}$, $226^{a}$; Kū. 18.9; Śidh. 54.71; Vi. I. $21.18^{b}$, $19^{a}$. 1) Vi. –सायां । 2) A. सर्पाश्च सुरसाभवाः; Kū. –ममवद् द्विजाः । 3) Br. विप्राः; A. तात; Kū. तद्वत् ; Vi. महान् ।

102 = A. 19.($16^{bI}$) = a; Br. $3.97^{b}$, $98^{a}$; Ga. $6.59^{a}$ = a; H. $226^{b}$, $227^{a}$; Vi. I. $21.19^{b}$, $20^{a}$. 1) Ga. H. –श्च । 2) Ga. फणिनः । 3) A. काद्रवेयाः सहस्रं तु । 4) Vi. महान् । 5) Br. Vi. –नै– ।

ऐरावतो[3]) महापद्मः कम्बलाश्वतरावुभौ[4]) ॥ 103 ॥
एलापत्रस्तथा पद्मः[1]) कर्कोटक-धनञ्जयौ, ।
महानील-महाकर्णौ[2]) धृतराष्ट्र[3]बलाहकौ[4]), ॥ 104 ॥
कुहरः पुष्पदंष्ट्र[1]श्च दुर्मुखः सुमुखस्तथा, ।
| शङ्खश्च शङ्खपालश्च कपिलो वामनस्तथा, ।
नहुषः[2]) शङ्ख[3]रोमा च म[4]णिरित्येवमादयः ॥ 105 ॥
| तेषां पुत्राश्च पौत्राश्च गरुडेन निपातिताः[1]) ।
| चतुर्दश सहस्राणि क्रूराणामनिलाशिनाम्[2]) ॥ $105_1$ ॥
गणं[1]) क्रोधवशं[2]) *विद्धि*[3]), तस्य[4]) सर्वे च दंष्ट्रिणः[5]), ।
स्थलजाः[6]) पक्षिणोऽब्जाश्च *धरायाः*[7]) *प्रसवाः स्मृताः*[8]) ॥ 106 ॥
गास्तु वै[1]) जनयामास सुरभिर्महिषांस्त[2]था[3]), ।
इरा[4]) वृक्षलता[5]वल्लीस्तृणजाती[6]श्च सर्वशः[7]) ॥ 107 ॥
खशा[1]) तु[2]) यक्षरक्षांसि, मुनि[3]रप्सरसस्तथा[4]), ।
अरिष्टा तु महासत्त्वान्[5]) गन्धर्वान् *समजीजनत्*[6]) ॥ 108 ॥
एते कश्यपदायादाः कीर्तिताः स्थाणुजङ्गमाः[1]), ।
तेषां[2]) पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः[3]) ॥ 109 ॥

---

103 = A. 19.16$^{bII}$ = a$^{II}$; Br. 3.98$^{b}$, 99$^{a}$; Ga. 6.59$^{b}$, 60$^{a}$; H. 227$^{b}$, 228$^{a}$; Śidh. 54.72; Vi. I. 21.20$^{b}$, 21$^{a}$. 1) Ga. H. Vi. तेषां । 2) Ga. –नं भूतेश; Śidh. –ना राजानः; Vi. –नमूतास्तु ( Vi.2 ते ) । 3) Ga. Vi. शङ्खः श्वेतो । 4) Ga. Vi. –वतरौ तथा ।

104 = Br. 3.99$^{b}$, 100$^{a}$; Ga. 6.60$^{b}$ = a; H. 228$^{b}$, 229$^{a}$; Śidh. 54.73; Vi. I. 21.21$^{b}$ = a. 1) Br. –त्रश्च शङ्खश्च; Ga. Vi. –स्तथा नागः; H. शङ्खः । 2) Śidh. –वर्णौ । 3) Śidh. –राष्ट्रो । 4) Śidh. –हकः ।

105 = Br. 3.100$^{b}$, 101; H. 229$^{b}$, 230; Śidh. 54.74. 1) Śidh. –दन्त– । 2) Śidh. बहुशः । 3) Śidh. खर– । 4) Śidh. पा– ।

| $105_1$ = Br. 3.102; H. 231. 1) Br. शतशोऽथ सहस्रशः । 2) H. –सुरगाशिनाम् ।

106 = A. 19.17$^{a}$($^{I\text{-}II}$) = a$^{I}$b$^{II}$; Br. 3.103; Ga. 6 60$^{c}$ = a; H. 232; Śidh. 54.75; Vi. I. 21.22$^{b}$, 23$^{a}$. 1) Br. T. –णः । 2) Br. T. –वशो; Ga. Śidh. –वशा । 3) Br. विप्रास् ; Ga. Śidh. विप्र । 4) Ga. ते च; Vi. तस्याः । 5) A. दंष्ट्रिणः क्रोधवशगा । 6) Śidh. अण्डजाः । 7) Śidh. वरायाः; Vi. दारुणाः । 8) A. पक्षिणो जले; Śidh. पशवः स्मृताः; Vi. पिशिताशनाः ।

107 = A. 19.(17$^{bI,\ II}$) = ab; Br. 3.104; Ga. 6.61$^{b}$, 62$^{a}$; H. 233; Kū. 18.12$^{ab}$; Śidh. 54.77; Vi. I. 21.23$^{c}$, 24$^{a}$. 1) Kū. –स्तथा; Śidh. शशांस्तु । 2) Br. T. Kū. –हिषीस्त–; Śidh. –षी त– । 3) A. सुरभ्यां गोमहिष्यादि । 4) Śidh. इला । 5) Śidh. वृक्षतला– । 6) H. स्थाणुजाती–; Śidh. तृणजाती– । 7) Śidh. सर्वतः; A. इरोत्पन्नास्तृणादयः ।

108 = A. 19.18$^{a}$($^{b}$); Br. 3.105; Ga. 6.62$^{bc}$. H. 234; Kū. 18.12$^{c}$, (10$^{a}$); Śidh. 54.78$^{a}$($^{b}$); Vi. I. 21. 24$^{b}$, 25$^{a}$. 1) Ga. खगा । 2) A. खसायां; Ga. च; Kū. तथा वै । 3) A. मुने– । 4) A. –रसोऽभवन् । 5) Br. T. महासिद्धा; Y. महासत्त्वा । 6) Br. H. अमितौजसः; A. अरिष्टायास्तु गन्धर्वाः [illegible] वरम्; Kū. –ष्टा जनयामास गन्धर्वाणां

एष मन्वन्तरे *विप्राः*[1]) *सर्गः*[2]) स्वारोचिषे स्मृतः ।
वैवस्वते तु[3]) महति वारुणे वितते क्रतौ ॥ 110 ॥

जुह्वानस्य ब्रह्मणो वै प्रजा[1]सर्ग इहोच्यते ।
पूर्वं यत्र तु ब्रह्मर्षीनुत्पन्नान्[2]) सप्त मानसान् ॥ 111 ॥

पुत्रत्वे[1]) कल्पयामास स्वयमेव पितामहः, ।
ततो विरोधे[2]) देवानां दानवानां[3]) च *भो द्विजाः*[4]) ॥ 112 ॥

दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम्[1]) ।
तां कश्यपः[2]) प्रसन्नात्मा, सम्यगाराधितस्तया[3]), ॥ 113 ॥

वरेण छन्दयामास, सा च वव्रे वरं तदा[1]) ।
पुत्रमिन्द्रवधार्थाय समर्थममितौजसम्[2]) ॥ 114 ॥

स च तस्यै[1]) वरं प्रादात् प्रार्थितः सुमहातपाः[2]) ।
दत्त्वा च वरम*व्यग्रो*[3]) मारीच[4]*स्तामभाषत*[5]) ॥ 115 ॥

इन्द्रं[1]) पुत्रो[2]) निहन्ता ते, गर्भं वै शरदां शतम्[3]) ।
यदि धारयसे, शौचतत्परा व्रतमास्थिता[4]) ॥ 116 ॥

तथेत्यभिहितो भर्ता तया देव्या महातपाः[1]) ।
धारयामास गर्भं तु शुचिः सा *वरवर्णिनी*[2]) ॥ 117 ॥

| | |
|---|---|
| ततोऽभ्युपागमद्दित्यां<br>गर्भमाधाय कश्यपः । | ततस्त्वाधाय सो दित्यां<br>गर्भं तं संशितव्रतः । |

---

सहस्रकम् ; Śidh. अरिष्टासुत सर्वांश्च प्रभावैर्मानवोत्तम ।

109 = A. 19.($19^{a}$)=b; Br. 3.106; H. 235; Kū. 18.$15^{a}$ = a; Śidh. 54.79; Vi. I. 21.$25^{b}$, $26^{a}$. 1) Śidh. शृणु अङ्गमान् । 2) Br. T. Vi.2 येषां; Śidh. एषां । 3) A. एषां पुत्रादयोऽसंख्या देवैर्वं दानवा जिताः ।

110 = Br. 3.107; H. 236; Śidh. 54.80; Vi. I. 21.$26^{b}$, $27^{a}$. 1) H. Śidh. तात ; Vi. सर्गो । 2) Vi. ब्रह्मन् । 3) Br. –ऽति–; Vi. च ।

111 = Br. 3.108; H. 237; Śidh. 54.81; Vi. I. 21.$27^{b}$, $28^{a}$. 1) Śidh. प्रजाः । 2) Br. समुत्पन्नान् ब्रह्मर्षीन् ; Vi. सप्तर्षीनुत्पन्नान् ।

112 = Br. 3.109; H. 238; Śidh. 54.82; Vi. I. 21.$28^{b}$, $29^{a}$. 1) Śidh. पुत्रान् वै । 2) Vi. गन्धर्वभोगि– । 3) H. दैत्यानां । 4) H. चैव भारत; Śidh. –नां महर्षयः; Vi. –नां च सत्तम ।

113 = A. 19.$19^{b}$ = a; Br. 3.110; H. 239; Śidh. 54.83; Vi. I. 21.$29^{b}$, ($30^{a}$). 1) Śidh. वै कश्यपं समुपस्थिता । 2) Br. कश्यपस्तु । 3) Vi. तया चाराधितः सम्यक् कश्यपस्तपतां वरः ।

114 = A. 19.($20^{a}$) = b; Br. 3.111; H. 240; Śidh. 54.84; Vi. I. 21.$30^{b}$, $31^{a}$. 1) Vi. ततो वरन् । 2) A. पुत्रमिन्द्रप्रहर्तारमिच्छन्ती प्राप कश्यपात् ।

115 = Br. 3.112; H. 241; Śidh. 54.$85^{a}$ = a; Vi. I. 21.$31^{b}$, $32^{a}$. 1) Br. तस्मै । 2) Vi. –दाद्धार्यायै मुनिसत्तम । 3) Br. T. –मत्युग्रो; Vi. –मत्युग्रं । 4) Vi. कश्यप– । 5) Br. –चः समभाषत; Vi. –स्तानुवाच ह ।

116 = Br. 3.113; H. 242$^{b}$, 243$^{a}$; Vi. I. 21.($32^{b}$, $33^{a}$). 1) Vi. शक्रं । 2) H. सुतो । 3) Vi. यदि गर्भं शरच्छतम् । 4) Vi. समाहितातिप्रयता शुचिनी धारयिष्यसि ।

117 = Br. 3.114; H. 243$^{b}$, 344$^{a}$; Śidh. 54.$85^{b}$ = b; Vi. I. 21.($33^{b}$, $34^{a}$). 1) Vi. इत्येवमुक्त्वा तां देवीं संगतः कश्यपो मुनिः । 2) Br. मुनिसत्तमाः; H. वसुधाधिप; Vi. दधार सा च तं गर्भं सम्यक् शौचसमन्विता ।

रोच[1]यन् वै गण[2]श्रेष्ठं
देवानाममितौजसाम् ॥ 118 ॥
तेजः संहृत्य दुर्धर्ष-
मवध्यममरैरपि ।
जगाम पर्वतायैव
तपसे संशितव्रतः[1]) ॥ $118_1$ ॥

जगाम कश्यपस्तप्तुं
तपसा हृष्टमानसः ॥ 118 ॥

तस्याश्चैवान्तर[1]प्रेप्सुरभवत्[2]) पाकशासनः, ।
ऊने[1]) वर्षशते चास्या ददर्शान्तरमच्युतः[2]) ॥ 119 ॥

अकृत्वा पादयोः शौचं दितिः शयनमाविशत्[1]) ।
निद्रां चाहा[2]रयामास ; तस्याः[3]) कुक्षिं प्रविश्य सः[4]) ॥ 120 ॥

वज्रपाणिस्ततो[1]) गर्भं सप्तधा[2]) तं न्यकृन्तत[3]) ।
स पाट्यमानो गर्भोऽथ[4]) वज्रेण[5]) प्ररुरोद ह[6]), ॥ 121 ॥

मा रोदीरिति तं[1]) शक्रः[2]) पुनः पुनरथाब्रवीत्[3]) ।
सोऽभवत् सप्तधा गर्भस्तमिन्द्रो रुषितः[4]) पुनः ॥ 122 ॥

एकैकं सप्तधा चक्रे वज्रेणैवारिकर्षणः[1]) ।
मरुतो नाम ते देवा[2]) बभूवुः सुमहाबलाः[3]) ॥ 123 ॥

यथोक्तं वै[1]) मघवता, तथैव[2]) मरुतोऽभवन्, ।
देवाश्चैको[3]नपञ्चाशत् सहाया वज्रपाणिनः[4]) ॥ 124 ॥

---

118 = Br. 3.115; H. $244^b$, $245^a$. 1) Br. रोच- । 2) Br. -णं ।

118 = Śidh. 54.86.

$118_1$ = Br. 3.116; H. $245^b$, $246^a$. 1) Br. T. -शितव्रता ।

119 = Br. 3.117; H. $246^b$, $247^a$; Śidh. 54.87; Vi. I. $21.35^b$, $36^a$. 1) Śidh. Vi.1 -रं । 2) Śidh. -प्सुः सोऽभवत् ; Vi. -प्सुरतिष्ठत् । 3) Br. T. जाते । 4) Śidh. -मेव सः; Vi.1 -मात्मना ; Vi.2 -मात्मनः ।

120 = Br. 3.118; H. $247^b$, $248^a$; Śidh. 54.88; Vi. I. $21.36^b$, $37^a$. 1) Śidh. -तिरर्वाक्शिरास्ततः । 2) H. चाका-; Śidh. Vi.2 आहा- । 3) Br. तस्यां । 4) Śidh. ह ।

121 = A. 19.($20^b$) = a; Br. 3.119; H. $248^b$, $249^a$; Śidh. 54.89; Vi. I. $21.37^b$, $38^a$. 1) Śidh. -स्तु तं ; Vi. -र्महा- । 2) Vi. चिच्छेदाथ । 3) Br. न्यकृन्तयत् ; Śidh. -धा समकृन्तत ; Vi. स सप्तधा; A. पादाप्रक्षालनात्सुप्ता तस्या गर्भं जघान ह । 4) H. Vi. वज्रेण । 5) H. गर्भस्तु । 6) Vi. -ण प्ररुरोदातिदारुणम् ।

122 = Br. 3.120; H. $249^b$, $250^a$; Śidh. 54.90; Vi. I. $21.38^b$, $39^a$. 1) Śidh. -दीस्त्वं पुनः । 2) Vi. शत्रुः । 3) Śidh. -नरेवाभ्यभाषत; Vi. -नः पुनरभाषत । 4) Śidh. -न्द्रस्त्रसितः; Vi. -न्द्रः कुपितः ।

123 = A. 19.($21^a$) = b; Br. 3.121; H. $250^b$, $251^a$; Śidh. 54.91; Vi. I. $21.39^b$, $40^a$. 1) Vi. -ज्रेणारि( द्रि )विदारिणा । 2) H. Vi. देवास्ते । 3) Br. द्विजसत्तमाः; H. भरतर्षभ; Vi. -ह्युरतिवेगिनः; A. छिद्रमन्विष्य चेन्द्रस्तु ते देवा मरुतोऽभवन् ।

124 = A. $19.21^b$ = b; Br. 3.122; H. $251^b$, $252^a$; Śidh. $54.92^a$ = b; Vi. I. $21.40^{bc}$. 1) H. यथैवोक्तं; Vi. यदुक्तं वै । 2) Vi. तेनैव । 3) A. शक्रस्यैको-; H. Vi. देवा एको-; Śidh. खगा एको- । 4) A. दीप्ततेजसः ।

| | |
|---|---|
| तेषामेवं प्रवृद्धानां[1])<br>भूतानां द्विजसत्तमाः[2]) ।<br>रोचयन् वै गणश्रेष्ठं[3])<br>देवानाममितौजसाम्, ॥ $124_1$ ॥<br>निकायेषु निकायेषु<br>हरिः प्रादात् *प्रजापतिः*[1]) ।<br>क्रमशस्तानि राज्यानि पृथुपूर्वाणि *भो द्विजाः*[1]) ॥ 125 ॥<br>स हरिः[1]) पुरुषो वीरः कृष्णो जिष्णुः प्रजापतिः ।<br>पर्जन्यस्तपनो व्यक्त[2]स्तस्य सर्वमिदं जगत् ॥ 126 ॥ | तेषामेव प्रवृद्धानां<br>हरिः प्रादात् प्रजापतिः । |
| भूतसर्गमिमं सम्यग्<br>जानतो *द्विजसत्तमाः*[1]) ।<br>मरुतां च शुभं जन्म<br>शृण्वतः पठतोऽपि च[2]) ।<br>नावृत्तिभयमस्तीह,<br>परलोकभयं कुतः ॥ 127 ॥ | भूतसर्गमिमं सम्यक्<br>कथितं शृणु चाग्रतः ॥ 127 ॥ |

---

| | |
|---|---|
| $124_1$ = Br. 3.123; H. 252[b], 253[a]. 1) Br. प्रवृत्तानां । 2) H. जनमेजय । 3) Br. –श्रेष्ठान् ।<br>125[a] = Br. 3.124[a]; H. 253[b]. 1) Br. T. –पतीन् ; H. –पतिम् । | 125[a] = Śidh. 54.92[b]. |

125[b] = Br. 3.124[b]; H. 254[a]; Śidh. 54.93[a]. 1) H. भारत; Śidh. पूर्वं शृणुध्व तत् ।

126 = Br. 3.125; H. 254[b], 255[a]; Śidh. 54.93[b], 94[a]. 1) Śidh. अरिष्ट– । 2) Br. T. –ऽनन्त–; Śidh. –न्यस्तु धनाध्यक्ष– ।

| | |
|---|---|
| 127 = Br. 3.126 = ac; H. 255[b], 256. 1) H. भरतर्षभ । 2) H. वा । | 127 = Śidh. 54.94[b] |

## सन्दर्भस्तवकः Ia

### A.

( Bd. II. 3.1—131; Vā. 66.1—152. )

ऋषय ऊचुः

देवानां दानवानां च दैत्यानां चैव सर्वशः ।
उत्पत्तिं विस्तरेणैव[1]) ब्रूहि वैवस्वतेऽन्तरे ! ॥ 1 ॥

सूत उवाच :

धर्मस्यैव प्र[1]वक्ष्यामि निसर्गं, तं निबोधत ।
अरुन्धती वसुर्यामी[2]) लम्बा भानुर्मरुत्वती ।
संकल्पा च मुहूर्ता च साध्या विश्वा तथैव च, ॥ 2 ॥
धर्मपत्न्यो दश त्वेता[1]) दक्षः प्राचेतसो ददौ ।
साध्या पुत्रास्तु[2]) धर्मस्य, साध्या[3]) द्वादश जज्ञिरे, ॥ 3 ॥
साध्या नाम महाभागाश्छन्दजा यज्ञभागिनः ।
देवेभ्यस्तान् परान् देवान् देवज्ञाः[1]) परिचक्षते ॥ 4 ॥
ब्रह्मणा[1]) वै मुखात् सृष्टा जया देवाः प्रजेप्सया, ।
सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥ 5 ॥
दर्शश्च पौर्णमासश्च बृहद्यच्च रथन्तरम् ।
चित्ति[1]श्चैव विचि[2]त्तिश्च आकूतिः कूतिरेव च ॥ 6 ॥
विज्ञाता चैव विज्ञातो मनो यज्ञस्तथैव च[1]), ।
नामान्येतानि तेषां वै जयानां प्रथितानि च ॥ 7 ॥
ब्रह्मशापेन ते जाताः पुनः स्वायंभुवेऽजिताः ।
स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः, ॥ 8 ॥
तामसे हरयो नाम, वैकुण्ठा रै[1]वतान्तरे, ।
सन्ध्याश्च[2]) चाक्षुषे नाम्ना छन्दजा जज्ञिरे सुराः ॥ 9 ॥
धर्मपुत्रा महाभागाः साध्या ये द्वादशामराः ।
पूर्वं स्म अ[1]नुसूयन्ते चाक्षुषस्यान्तरे मनोः ॥ 10 ॥
स्वारोचिषेऽन्तरेऽतीता देवा ये वै महौजसः, ।
तुषिता नाम तेऽन्योन्यमूचुर्वै[1]) चाक्षुषेऽन्तरे, ॥ 11 ॥

---

1 = Bd. II. 3.1; Vā. 66.1. 1) Vā. –रेणेह ।
2 = Bd. II. 3.2, 3a; Vā. 66.2, 3a. 1) Vā. –स्य तावद् । 2) Bd. –यामा– ।
3 = Bd. II. 3.3b, 4a; Vā. 66.3b, 4a. 1) Bd. धर्मस्य पत्न्यो दश ता । 2) Vā. पुत्रांस्तु । 3) Vā. –ध्यान् ।
4 = Bd. II. 3.4b = b; Vā. 66.4bc. 1) Bd. देवज्ञः ।
5 = Bd. II. 3.5; Vā. 66.5. 1) Vā. T. –ह्मणो ।
6 = Bd. II. 3.6; Vā. 66.6. 1) Bd. विचित्ति– । 2) Bd. विवि– ।
7 = Bd. II. 3.7; Vā. 66.7. 1) Vā. यज्ञश्च ते स्मृताः ।
8 = Bd. II. 3.8; Vā. 66.8.
9 = Bd. II. 3.9; Vā. 66.9. 1) Vā. रै– । 2) Bd. ते साध्याश् ।
10 = Bd. II. 3.10; Vā. 66.10. 1) Bd. सम– ।
11 = Bd. II. 3.11; Vā. 66.11. 1) Bd. –मूचुष ।

किंचिच्छिष्टे तदा तस्मिन् देवा वै तुषिताब्रुवन् ।
एतामेव[1]) महाभागां[2]) वयं साध्यां[3]) प्रविश्य ह[4]) ॥ 12 ॥
मन्वन्तरे भविष्यामस्तन्नः श्रेयो भविष्यति ।
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ॥ 13 ॥
तस्यां[1]) द्वादश संभूता धर्मात् स्वायंभुवात् पुनः ।
नरनारायणौ तत्र जज्ञाते पुनरेव हि, ॥ 14 ॥
विपश्चिदिन्द्रो यश्चासीत्[1]) तथा सत्यो हरिश्च तौ, ।
स्वारोचिषेऽन्तरे पूर्वमास्तां तौ तुषितौ सुरौ[2]) ॥ 15 ॥
तुषितानां तु साध्यत्वे नामान्येतानि चक्षते[1]) ।
मनोऽनुमन्ता प्राणश्च नरोऽपान[2]श्च वीर्यवान् ॥ 16 ॥
चित्तिर्हयो नय[1]श्चैव हंसो नारायणस्तथा ।
प्रभवोऽथ विभुश्चैव[2]) साध्या द्वादश जज्ञिरे ॥ 17 ॥
स्वायंभुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः ।
नामान्यासन् पुनस्तानि तुषितानां निबोधत ॥ 18 ॥
प्राणापानावुदानश्च समानो व्यान एव च ।
चक्षुः श्रोत्रं रसो घ्राणं[1]) स्पर्शो बुद्धिर्मनस्तथा, ॥ 19 ॥
नामान्येतानि वै पूर्वं[1]) तुषितानां स्मृतानि च[2]) ।
वसोस्तु वसवः पुत्राः साध्यानामनुजाः[3]) स्मृताः ॥ 20 ॥
धरो ध्रुवश्च सोमश्च आप[1]श्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभास[2]श्च वसवोऽष्टौ प्रकीर्तिताः ॥ 21 ॥
धरस्य पुत्रो द्रविणो हुतहव्यवह[1]स्तथा, ।
ध्रुवपुत्रोऽभवत्तात[2]) कालो लोकप्रकालनः ॥ 22 ॥
सोमस्य भगवान् वर्चा बुधश्च ग्रहबोधनः, ।
रोहिण्यां तौ समुत्पन्नौ त्रिषु लोकेषु विश्रुतौ ॥ 23 ॥
धारोर्मि-कलिला[1]श्चैव त्रयश्च[2]न्द्रमसः सुताः ।
आपस्य[3]) पुत्रो वैतण्ड्यः शमः शान्तस्तथैव च ॥ 24 ॥
स्कन्दः सनत्कुमारश्च जज्ञे पादेन तेजसः ।

---

12 = Bd. II. 3.12; Vā. 66.12[ab]. 1) Vā. इतरेतरं । 2) Vā. –गान् । 3) Vā. –ध्यान् । 4) Bd. वै ।
13 = Bd. II. 3.13; Vā. 66.12[c], 13[a].
14 = Bd. II. 3.14; Vā. 66.13[b], 14[a]. 1) Vā. तस्माद् ।
15 = Bd. II. 3.15; Vā. 66.14[bc]. 1) Bd. –श्चाभूत् । 2) Bd. तुषिताह्वतौ ।
16 = Bd. II. 3.16; Vā. 66.15. 1) Vā. वक्ष्यते । 2) Vā. T. –रो यान– ।
17 = Bd. II. 3.17; Vā. 66.16. 1) Bd. वितिर्नयो हय– । 2) Bd. विभुश्चापि प्रभुश्चापि ।
18 = Bd. II. 3.18; Vā. 66.17.
19 = Bd. II. 3.19; Vā. 66.19[a]; 18[b], Cp. 18[a]. 1) Vā. T. तथा प्राणः; V. नसोऽप्राणं ।
20 = Bd. II. 3.20; Vā. 66.19[b], 20[a]. 1) Vā. पूर्वं तु । 2) Vā. ह । 3) Vā. –नां मनुजाः ।
21 = Bd. II. 3.21; Vā. 66.20[bc]. 1) Bd. आयु– । 2) Bd. प्रभात– ।
22 = Bd. II. 3.22; Vā. 66.21. 1) Bd. Vā. T. हुतहव्यो रज– । 2) Vā. –त्रो भवो नाम्ना ।
23 = Bd. II. 3.23[a] = a; Vā. 66.22.
24 = Bd. II. 3.23[b], 24[a]; Vā. 66.23. 1) Bd. धरोर्मी कलिल– । 2) Bd. पञ्च च– । 3) Bd. आपस्य ।

अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत[1]) ॥ 25 ॥
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ।
अनिलस्य शिवा भार्या, तस्याः पुत्रो मनोजवः, ॥ 26 ॥
अविज्ञात[1]गतिश्चैव द्वौ पुत्रावनिलस्य च ।
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम्[2]) ॥ 27 ॥
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ।
बृहस्पतेस्तु भगिनी वरस्त्री[1]) ब्रह्मचारिणी[2]) ॥ 28 ॥
योगसिद्धा जगत् कृत्स्नमसक्ता विचरत्युत[1]) ।
प्रभासस्य तु सा भार्या[2]) वसूनामष्टमस्य ह ॥ 29 ॥
विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः[1]), ।
स कर्ता सर्वशिल्पानां त्रिदशानां च वर्धकिः ॥ 30 ॥
भूषणानां च सर्वेषां कर्ता कारयिता च सः, ।
सर्वेषां च विमानानि देवातानां करोति सः, ॥ 31 ॥
मानुषाश्चोपजीवन्ति यस्य शिल्पानि शिल्पिनः ।
विश्वेदेवास्तु विश्वायां[1]) जज्ञिरे दश विश्रुताः ॥ 32 ॥
क्रतुर्दक्षः श्रवः सत्यः कालः कामो मुनि[1]स्तथा ।
कुरवान् प्रभवांश्चैव[2]) . रोचमानश्च, ते दश ॥ 33 ॥
धर्मपुत्राः सुरा[1]) ह्येते[2]) विश्वायां जज्ञिरे शुभाः ।
मरुत्वत्यां मरुत्वन्तो[3]), भानवो भानुजाः स्मृताः ॥ 34 ॥
मुहूर्ताश्च मुहूर्तायां, घोषं[1]) लम्बा व्य[2]जायत ।
संकल्पायां तु संजज्ञे विद्वान् संकल्प एव च[3]) ॥ 35 ॥
नागवीथ्यस्तु या[1]म्यां च[2]) पयत्रयसमा[3]श्रिताः ।
पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत[4]) ॥ 36 ॥

---

25 = Bḍ. II. 3.24b, 25a; Vā. 66.24ab. 1) Bḍ. Vā. V. अग्नेः पुत्रं कुमारं तु स्वाहा जज्ञे श्रिया वृतम् ( Vā. सुरावृतम् ) ।
26 = Bḍ. II. 3.25b, 26a; Vā. 66.24c, 25a.
27 = Bḍ. II. 3.26b, 27a; Vā. 66.25b, 26a. 1) Bḍ. अविज्ञान- । 2) Vā. -दुः पुत्र ऋषिर्नाम्ना तु देवलः ।
28 = Bḍ. II. 3.27b, 28a; Vā. 66.26b, 27a. 1) Bḍ. Vā. V. भुवना । 2) Bḍ. Vā. V. -वादिनी ।.
29 = Bḍ. II. 3.28b, 29a; Vā. 66.27b, 28a. 1) Bḍ. -मशक्ता चरति स्म ह । 2) Bḍ. तु भार्या सा; Vā. तु या भार्या ।
30 = Bḍ. II. 3.29b = a; Vā. 66.28b, 29a. 1) Bḍ. तस्याः प्रजापतिपतिर्विभुः ।
31 = Vā. 66.29b, 30a.
32 = Bḍ. II. 3.30a = b; Vā. 66.30b, 31a. 1) Bḍ. Vā. -श्वाया ।
33 = Bḍ. II. 3.30b, 31a; Vā. 66.31b, 32a. 1) Vā. धुनि- । 2) पुरूरवो मार्द्रवसो ।
34 = Bḍ. II. 3.31b, 32a; Vā. 66.32b, 33a. 1) Vā. स्मृता । 2) Bḍ. एते । 3) Vā. T. -त्यां तु मरुतो ।
35 = Bḍ. II. 3.32b, 33a; Vā. 66.33b, 34a. 1) Bḍ. -ष- । 2) Bḍ. ख- । 3) Bḍ. तु ।
36 = Bḍ. II. 3.33b, 34a; Vā. 66.34b, 35a. 1) Vā. जा- । 2) Bḍ. जामाद्याः । 3) Bḍ. -पत्सुपा- ।
4) Bḍ. अजायत ।

एष सर्गः समाख्यातो विद्वान् धर्मस्य शाश्वतः ।
मुहूर्ताश्चैव तिष्यश्च पति[1]भिः सह सुव्रताः ॥ 37 ॥
नामतः संप्रवक्ष्यामि, ब्रुवतो मे निबोधत ! ।
अहोरात्रविभागश्च नक्षत्राणि समाश्रितः[1]), ॥ 38 ॥
मुहूर्ताः सर्वनक्षत्रा अहोरात्रभिद[1]स्तथा ।
अहोरात्रकलानां तु षडशीत्य[2]धिकाः स्मृताः[3]) ॥ 39 ॥
रवेर्गतिविशेषेण सर्वर्तुषु च नित्यशः[1]) ।
ततो वेदविदश्चैतां गति[2]मिच्छन्ति पर्वसु ॥ 40 ॥
अविशेषेषु कालेषु ज्ञेयः[1]) सवितृमानतः[2]) ।
रौद्रः सार्प[3]स्तथा मैत्रः पित्र्यो[4]) वासव एव च ॥ 41 ॥
आप्योऽथ वैश्वदेवश्च ब्राह्मो मध्याह्नसंश्रिताः ।
प्राजापत्यस्तथैवेन्द्र इन्द्राग्नी[1]) निर्ऋतिस्तथा ॥ 42 ॥
वारुणश्च तथार्यम्णो भग्य[1]श्चापि दिना[2]श्रिताः ।
एते दिनमुहूर्ताश्च दिवाकरविनिर्मिताः ॥ 43 ॥
शङ्कुच्छायाविशेषेण वेदितव्याः प्रमाणतः ।
अजैकपादहिर्बुध्न्य[1]पूषाश्वि[2]यमदेवताः ॥ 44 ॥
आग्नेयश्चापि विज्ञेयः प्राजापत्यस्तथैव च ।
ब्राह्मः सौम्यस्त[1]थादित्यो बार्हस्पत्यश्च[2]) वैष्णवः ॥ 45 ॥
सावित्रश्च[1]) तथा त्वाष्ट्रो[2]) वायव्यश्चेति संग्रहः; ।
एते[3]) रात्रेर्मु[4]हूर्ताः स्युः क्रमोक्ता दश पञ्च च ॥ 46 ॥
इन्दोर्गत्युदया ज्ञेया नाडिकाः पादिका[1]स्तथा ।
कालावस्थास्त्विमास्त्वेते मुहूर्ता देवताः स्मृताः ॥ 47 ॥
सर्वग्रहाणां त्रीण्येव स्थानानि विहितानि च ।
दक्षिणोत्तरमध्यानि तानि विद्याद् यथाक्रमम् ॥ 48 ॥
स्थानं जारद्गवं मध्ये, तथैरावतमुत्तरम्, ।
वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥ 49 ॥

---

37 = Bḍ. II. $3.34^{b}$, $35^{a}$; Vā. $66.35^{b}$, $36^{a}$. 1) Bḍ. प्रति- ।
38 = Bḍ. II. $3.35^{b}$, $36^{a}$; Vā. $66.36^{b}$, $37^{a}$. 1) Vā. T. समासतः ।
39 = Bḍ. II. $3.36^{b}$, $37^{a}$; Vā. $66.37^{b}$, $38^{a}$. 1) Vā. -त्रविद्- । 2) Vā. पट्शतीत्य- । 3) Vā. T. -धिका स्मृता ।
40 = Bḍ. II. $3.37^{b}$, $38^{a}$; Vā. $66.38^{b}$, $39^{a}$. 1) Vā. T. सर्वेषु ऋतुमिच्छतः; V. सर्वं ऋतुभिर्नित्यशः । 2) Vā. तिथि- ।
41 = Bḍ. II. $3.38^{b}$, $39^{a}$; Vā. $66.39^{b}$, $40^{a}$. 1) Vā. योज्यः । 2) Vā. स पितृदानतः । 3) Vā. T. सार्व-; V. सर्प- ।
4) Vā. T. पिण्ड्य-; V. पित्र्यं ।
42 = Bḍ. II. $3.39^{b}$, $40^{a}$; Vā. $66.40^{b}$, $41^{a}$. 1) Vā. -स्तथा ऐन्द्रस्तथेन्द्रो ।
43 = Bḍ. II. $3.40^{b}$, $41^{a}$; Vā. $66.41^{b}$, $42^{a}$. 1) Bḍ. भग-; Vā. T. मागा- । 2) Bḍ. -न- ।
44 = Bḍ. II. $3.41^{b}$, $42^{a}$; Vā. $66.42^{b}$, $43^{a}$. 1) Bḍ. -र्बुध्न्याः । 2) Vā. अजास्तथाहिर्बुध्नश्च पुषा हि ।
45 = Bḍ. II. $3.42^{b}$, $43^{a}$; Vā. $66.43^{b}$, $44^{a}$. 1) Bḍ. सौम्यश्चापि त-; Vā. ब्रह्मसौम्यस्त- । 2) Vā. -स्पोऽथ ।
46 = Bḍ. II. $3.43^{b}$, $44^{a}$; Vā. $6\,.44^{b}$, $45^{a}$. 1) Vā. -त्रिष्रोऽथ । 2) Vā. त्वष्ट्रे । 3) Vā. एक- । 4) Vā. -त्रिमु- ।
47 = Bḍ. II. $3.44^{b}$, $45^{a}$; Vā. $66.45^{bc}$. 1) Bḍ. नालिका आदिता- ।
48 = Bḍ. II. 3.45b, $46^{a}$; Vā. 66.46.
49 = Bḍ. II. $3.46^{b}$, $47^{a}$; Vā. 66.47.

अश्विनी कृत्तिका याम्यं[1]) नागवीथीति विश्रुता[2]), ।
ब्राह्मं सौम्यं तथार्द्रा च गजवीथीति शब्दिता, ॥ 50 ॥
पुष्याश्लेषे तथादित्यं[1]) वीथी चै[2]रावती मता, ।
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते ॥ 51 ॥
पूर्वोत्तरे च फल्गुन्यौ[1]) मघा चैवार्षभी[2]) स्मृता, ।
हस्तश्चित्रा[3]) तथा स्वाती गोवीथीत्यभि[4]शब्दिता, ॥ 52 ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी स्मृता[1]); ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥ 53 ॥
मूलं पूर्वोत्तराषाढे[1]) अजवीथ्यभिशब्दिता[2]), ।
श्रवणं च धनिष्ठा च मार्गी[3]) शतभिषक् तथा ॥ 54 ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता, ।
एतास्तु वीथयस्तिस्रो | स्मृता वीथ्यस्तु तिस्रस्ता
दक्षिणो[1]) मार्ग उच्यते ॥ 55 ॥ | मार्गो वै दक्षिणो बुधैः ॥
सप्तविंशति[1]) याः कन्या दक्षः सोमाय ता ददौ, ।
सर्वा नक्षत्रनाम्न्यस्ता ज्यो[2]तिषे परि[3]कीर्तिताः, ॥ 56 ॥
तासामपत्यान्यभवन् दीप्तान्यमि[1]ततेजसः[2]) ।
यास्तु शेषास्तदा कन्याः प्रतिजग्राह कश्यपः ॥ 57 ॥
चतुर्दश[1]) महाभागाः, सर्वास्ता लोकमातरः ।
अदितिर्दितिर्दनुः काला अरिष्टा सुरसा[2]) तथा ॥ 58 ॥
सुरभिर्विनता चैव ताम्रा[1]) क्रोधवशा इरा[2]) ।
कद्रूर्मुनिश्च धर्मज्ञा[3]), प्रजास्तासां निबोधत ! ॥ 59 ॥
चाक्षुषे[1])ऽन्तरेऽतीते[2]) ये द्वादश सुरोत्तमाः[3]), ।
वैकुण्ठा नाम ते साध्या बभूवुश्चाक्षुषेऽन्तरे ॥ 60 ॥
उपस्थितेऽन्तरे ह्यस्मिन् पुनर्वैवस्वतस्य ह ।

---

50 = Bḍ. II. 3.47[b], 48[a]; Vā. 66.48[a] = a. 1) Vā. –म्या । 2) Vā. –वीथिरिति स्मृता ।

51 = Bḍ. II. 3.48[b], 49[a]; Vā. 66.48[bc]. 1) Vā. –पे पुनर्वसू ; Vā. पुष्योऽश्लेषा पुनर्वसू । 2) Vā. –थिरै– ।

52 = Bḍ. II. 3.49[b], 50[a]; Vā. 66.49. 1) Vā. –रे फाल्गुन्यौ च । 2) Vā. T. –वार्षभी । 3) Vā. हस्त-चित्रे ।
4) Bḍ. –थीति तु ।

53 = Bḍ. II. 3.50[b], 51[a]; 66.50. 1) Bḍ. मता ।

54 = Bḍ. II. 3.51[b], 52[a]; Vā. 66.51. 1) Vā. चाषाढे द्वे चापि । 2) Bḍ. –ब्दिते । 3) Vā. गार्गी ।

55[a] = Bḍ. II. 3.52[b]; Vā. 66.52[a].

55[b] = Bḍ. II. 3.53[a]. 1) Bḍ. T. –णे । | 55[b] = Vā. 66.52[b].

56 = Bḍ. II. 3.53[b], 54[a]; Vā. 66.53[ab]. 1) Bḍ. अष्टाविंशति; Vā. –शत्तु । 2) Bḍ. ज्यो– । 3) Vā. –षे चैव ।

57 = Bḍ. II. 3.54[b], 55[a]; Vā. 66.53[c], 54[a]. 1) Bḍ. –न्यभवन् दीप्तयोऽमि– । 2) Vā. –जसा ।

58 = Bḍ. II. 3.55[b], 56[a]; Vā. 66.54[b], 55[a]. 1) Bḍ. –शा । 2) Bḍ. –नुः काष्ठारिष्टानायुः खशा ।

59 = Bḍ. II. 3.56[b], 57[a]; Vā. 66.55[bc]. 1) Bḍ. –नता ताम्रा मुनिः । 2) Bḍ. तथा । 3) Bḍ. Vā. –द्रूर्माता च नागानां ।

60 = Bḍ. II. 3.57[b], 58[a]; Vā. 66.56. 1) Bḍ. स्वायम्भुवे । 2) Bḍ. तात । 3) Vā. पुरोगमाः ।

आराधीता ह्य[1]दित्या ते समेत्याहुः[2]) परस्परम् ॥ 61 ॥
एतामेव महाभागामदितिं संप्रविश्य वै।
वैवस्वतेऽन्तरे ह्यस्मिन् योगादर्धेन तेजसा[1]) ॥ 62 ॥
गच्छेम[1]) पुत्रतामस्यास्तन्नः श्रेयो भविष्यति।
[ अदित्यास्तु प्रसूतानामादित्यत्वं भविष्यति। ]
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः[2]) ॥ 63 ॥
जज्ञिरे द्वादशादित्या, मारीचात् कश्यपात् पुनः, ।
शतक्रतुश्च विष्णुश्च जज्ञाते पुनरेव हि ॥ 64 ॥
वैवस्वतेऽन्तरे ह्यस्मिन् नर-नारायणौ सुरौ[1]), ।
तेषामपि हि देवानां निधनोत्पत्तिरुच्यते, ॥ 65 ॥
यथा सूर्यस्य लोकेऽस्मिनुदयास्तमयावुभौ, ।
प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः ॥ 66 ॥
दृष्टानु[1]श्रविके यस्मात् स[2]क्ताः शब्दादिलक्षणे।
अष्टात्मकेऽणिमाद्ये च, तस्मात् ते जज्ञिरे सुराः ॥ 67 ॥
इत्येष विषये रागः संभूत्याः कारणं स्मृतम्।
ब्रह्म-शापेन संभूता जयाः स्वायंभुवेऽजिताः, ॥ 68 ॥
स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः, ।
तामसे हरयो देवा जाताश्चारिष्णवे[1]) तु वै ॥ 69 ॥
वैकुण्ठाश्चाक्षुषे साध्या, आदित्याः सांप्रते[1]) पुनः।
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥ 70 ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः, ।
ततस्त्वष्टा, ततो विष्णुरजघन्यो ज[1]घन्यजः; ॥ 71 ॥
इत्येते द्वादशादित्याः कश्यपस्य सुताः स्मृताः[1])।
सुरभी[2]) कश्यपाद्रुद्राने[3]कादश विजज्ञुषी[4]) ॥ 72 ॥
महादेवप्रसादेन तपसा भाविता सती।
अङ्गारकं तथा सर्पं निर्ऋतिं सदसस्पतिम् ॥ 73 ॥
अजैकपादहिर्बुध्न्यौ[1]) द्वावेकं च[2]) ज्वरं तथा।
भुवनं चेश्वरं मृत्युं कपालिं[3]) चैव[4]) विश्रुतम् ॥ 74 ॥

---

61 = Bḍ. II. 3.58b, 59a; Vā. 66.57. 1) Bḍ. ता अ-। 2) Bḍ. -मेत्योचुः।
62 = Bḍ. II. 3.59b, 60a; Vā. 66.58. 1) Vā. T. -सः।
63 = Bḍ. II. 3.60b, 61a = ac; Vā. 66.59, 60a. 1) Vā. गच्छामः। 2) Bḍ. वर्तमानेऽन्तरे तदा।
64 = Bḍ. II. 3.61b, 62a; Vā. 66.60b, 61a.
65 = Bḍ. II. 3.62b, 63a; Vā. 66.61b, 62a. 1) Bḍ. तदा।
66 = Bḍ. II. 3.63b = a; Vā. 66.62bc.
67 = Bḍ. II. 3.64; Vā. 66.63. 1) Vā. श्रेष्ठानु-। 2) Vā. -स्माच्छ-।
68 = Bḍ. II. 3.65; Vā. 66.64.
69 = Bḍ. II. 3.66; Vā. 66.65ab. 1) Bḍ. -श्चारिष्टवे।
70 = Bḍ. II. 3.67; Vā. 66.65c, 66a. 1) Bḍ. सप्तमे।
71 = Bḍ. II. 3.68; Vā. 66.65b, 67a. 1) Vā. -ऽज-।
72 = Bḍ. II. 3.69; Vā. 66.67b, 68a. 1) Bḍ. सुता विभोः। 2) Bḍ. -रभ्यां। 3) Bḍ. -द्रा ए-। 4) Bḍ. Vā. विजज्ञिरे।
73 = Bḍ. II. 3.70; Vā. 66.68b, 69a.
74 = Bḍ. II. 3.71; Vā. 66.69b, 70a. 1) Vā. -ध्नं। 2) Vā. ऊर्ध्वकेतुं। 3) Vā. T. कपालं। 4) Bḍ. कपालीति च।

देवानेकादशैतांस्तु रुद्रांस्त्रिभुवनेश्वरान्; ।
तपसोग्रेण[1]) महता सुरभी[2]) तानजीजनत् ॥ 75 ॥
ततो दुहितरावन्ये सुरभी द्वे व्य[1]जायत ।
रोहिणीं[2]) चैव सुभगां गान्धर्वीं च यशस्विनीम्[3]) ॥ 76 ॥
रोहिण्यां[1]) जज्ञिरे कन्याश्चतस्रो लोकविश्रुताः ।
सुरूपा हंसकाली[2]) च भद्रा कामदुघा तथा ॥ 77 ॥
सुषुवे गाः कामदुघा[1]), सुरूपा तनयद्वयम्, ।
हंसकाली[2]) तु महिषान्[3]), भद्रायास्त्वविजातयः[4]) ॥ 78 ॥
विश्रुतास्तु महाभागा गान्धर्व्यां[1]) वाजिनः सुताः ।
उच्चैःश्रवादयो[2]) जाताः, खेचरास्ते मनोजवाः ॥ 79 ॥
श्वेताः शोणाः पिशङ्गाश्च सारङ्गा हरितार्जुनाः ।
उक्ता[1]) देवोपवाह्यास्ते गान्धर्वी[2]योनयो हयाः ॥ 80 ॥
भूयो जज्ञे सुरभ्यास्तु श्रीमांश्चन्द्रप्रभो वृषः[1]) ।
स्रग्वी ककुद्मी द्युतिमानमृतालयसंभवः, ॥ 81 ॥
सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः; ।
इत्येते कश्यप-सुता रुद्रादित्याः प्रकीर्तिताः, ॥ 82 ॥
धर्मपुत्राः स्मृताः साध्या विश्वे च वसवस्तथा ।
[ अरिष्टनेमि-पत्नीनामपत्यानीह षोडश ॥ 83 ॥
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः, ।
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥ 84 ॥
कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः, ।
एते युगसहस्रान्ते जायन्ते पुनरेव हि ॥ 85 ॥
सर्वे देवगणा विप्रास्त्रयस्त्रिंशत्तु छन्दजाः, ।
एतेषामपि देवानां निरोधोत्पत्तिरुच्यते ॥ 86 ॥
यथा सूर्यस्य लोकेऽस्मिन्नुदयास्तमयावुभौ, ।
एते देवनिकायास्ते संभवन्ति युगे युगे ॥ 87 ॥

ऋषय ऊचुः

साध्याश्च वसवो विश्वे रुद्रादित्यास्तथैव च ।
अभिजात्या प्रभावैश्च कर्मभिश्चैव विश्रुताः ॥ 88 ॥

---

75 = Bd. II. 3.72; Vā. 66.70bc. 1) Vā. तपसा तेन । 2) Bd. –भिस् ।
76 = Bd. II. 3.73; Vā. 66.71. 1) Bd. –भिर्देव्य– । 2) Bd. Vā. –हिणी । 3) Vā. –च रुद्रामा गान्धारी च यशस्विनी ।
77 = Bd. II. 3.74; Vā. 66.72ab. 1) Bd. –ण्या । 2) Vā. T. –कीला ।
78 = Bd. II. 3.75; Vā. 66.72c, 73a. 1) Vā. –वे कामदुघा तु । 2) Vā. –कीला । 3) Vā. नृमहिषा । 4) Vā. –यास्तु व्यजायत ।
79 = Bd. II. 3.76; Vā. 66.73b, 74a. 1) Vā. गन्धर्वा । 2) Vā. उच्चैःश्रवास्तदा ।
80 = Bd. II. 3.77; Vā. 66.74bc. 1) Vā. रुद्रा । 2) Vā. गन्धर्व– ।
81 = Bd. II. 3.78; Vā. 66.75a, 76a. 1) Vā. –न्द्रामसुप्रभः ।
82 = Bd. II. 3.79; Vā. 66.76b, 77a.
83 = Bd. II. 3.80a = a; Vā. 66.77b, 78a.
84 = Vā. 66.78bc.
85 = Vā. 66.79.
86 = Vā. 66.80.
87 = Vā. 66.81.
88 = Vā. 66.82.

प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः ।
अन्तरं ज्ञातुमिच्छामो, यच्च यस्माद्विशिष्यते ॥ 89 ॥
यच्च यस्मात् प्रभवति, यश्च यस्मिन् प्रतिष्ठितः, ।
ज्यायान् यो मध्यमश्चैव कनीयान् यश्च तेषु वै, ॥ 90 ॥
प्रधानभूतो यस्तेषां गुणभूतश्च तेषु यः, ।
कर्मभिश्चाभिजात्या च प्रभावेण च यो महान्; ।
एतत् प्रब्रूहि नः सर्वं, त्वं हि वेत्थ यथायथम् ! ॥ 91 ॥

सूत उवाच :

अत्र वो वर्णयिष्येऽहमन्तरं तेषु यत् स्मृतम्, ।
यद् ब्रह्म-विष्णु-रुद्राणां शृणुध्वं मे विवक्षतः ! ॥ 92 ॥
राजसी तामसी चैव सात्त्विकी चैव ताः स्मृताः ।
तन्वः स्वयंभुवः प्रोक्ताः, काले काले भवन्ति याः ॥ 93 ॥
एतासामन्तरं वक्तुं नैव शक्यं द्विजोत्तमाः ।
गुणवृद्धिनिबद्धत्वाद् द्विधानुग्रहबन्धतः ॥ 94 ॥
प्रवृत्तिं च निवृत्तिं च गुणवृद्धिमिह द्विजाः ।
यथाशक्त्या प्रवक्ष्यामि तनूनां, तन्निबोधत ! ॥ 95 ॥
ब्राह्मी तु राजसी तेषां, कालाख्या तामसी स्मृता, ।
सात्त्विकी पौरुषी चैव ; कर्म तासां निबोधत ! ॥ 96 ॥
एका तु कुरुते तासां राजसी सर्वतः प्रजाः, ।
एका चैवार्णवस्था तु सानुगृह्णाति सात्त्विकी, ।
एका सा क्षिपते काले तामसी ग्रसते प्रजाः ॥ 97 ॥
रजसा तु समुद्रिक्तो ब्रह्मा संभवते यदा, ।
पुरुषाख्या तदा तस्य सात्त्विकी विनिवर्तते ॥ 98 ॥
यदा भवति कालात्मा उद्रेकात्तमसस्तु सः, ।
ब्रह्माख्या सा तदा त्वस्य राजसी विनिवर्तते ॥ 99 ॥
सत्त्वोद्रेकात्तु पुरुषो यदा भवति स प्रभुः, ।
कालाख्या सा तदा तस्य पुनर्न भवतीति वै ॥ 100 ॥
क्रमात् तस्य निवर्तन्ते रूपं नाम च कर्म च ।
त्रैलोक्ये वर्तमानस्य सर्गानुग्रहनिग्रहैः ॥ 101 ॥
यदा भवति ब्रह्मा च, तदा चान्तरमुच्यते ; ।
यदा च पुरुषो ब्रह्मा, न चैव पुरुषस्तु सः ॥ 102 ॥

---

89 = Vā. 66.83.
90 = Vā. 66.84.
91 = Vā. 66.85.
92 = Vā. 66.86.
93 = Vā. 66.87.
94 = Vā. 66.88.
95 = Vā. 66.89.
96 = Vā. 66.90.
97 = Vā. 66.91.
98 = Vā. 66.92.
99 = Vā. 66.93.
100 = Vā. 66.94.
101 = Vā. 66.95.
102 = Vā. 66.96.

मणिर्विभजते वर्णान् विचित्रान् स्फटिके यथा, ।
वैमल्यादाश्रयवशात् तद्वर्णः स्यात् तदञ्जनः, ॥ 103 ॥
तदा गुणवशात्तस्य स्वयंभोरनुरञ्जनम्; ।
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥ 104 ॥

| | |
|---|---|
| यथेन्धनवशाद्वह्नि-<br>रेकस्तु बहुधा भवेत्, ।<br>भवत्येकस्तथा तद्वन्<br>मूर्तीनां स पितामहः ॥ | एको भूत्वा यथा मेघः<br>पृथक्त्वेनावतिष्ठते ।<br>रूपतो वर्णतश्चैव,<br>तथा गुणवशात्तु सः ।<br>भवत्येको द्विधा चैव<br>त्रिधा मूर्तिविनाशनात् ॥ 105 ॥ |

एको ब्रह्मान्तकृच्चै[1]व पुरुषश्चेति तु त्रयः[2]), ।
एकस्यैताः स्मृतास्तिस्रस्तनवस्तु स्वयंभुवः ॥ 106 ॥
ब्राह्मी च पौरुषी चैव कालाख्या चेति ताः स्मृताः[1]) ।
तत्र या[2]) राजसी तस्य तनुः, सा वै प्रजाकरी, ॥ 107 ॥
तामसी या[1]) तु कालाख्या, प्रजाक्षयकरी तु सा, ।
सात्त्विकी पौरुषी या तु, सा त्वनुग्रहिका[2]) स्मृता ॥ 108 ॥
Cp. 132a. { राजस्या[1]) ब्रह्मणोंऽशेन[2]) मारीचः[3]) कश्यपोऽभवत्, ।
तामसी चान्तकृद् या तु, तदंशेनाभवद्भवः, ॥ 109 ॥
सात्त्विकी पौरुषी या तु[1]), तदं[2]शो विष्णुरुच्यते; ।
त्रैलोक्ये ताः स्मृतास्तिस्रस्तनवस्तु[3]) स्वयंभुवः ॥ 110 ॥
नानाप्रयोजनार्थां[1]) हि कालावस्थाः[2]) करोति यः[3]), ।
ब्रह्मत्वेन प्रजाः सृष्ट्वा[4]) विष्णुत्वेना[5]नुगृह्य च ॥ 111 ॥
वैष्णव्या[1]नुगृहीतास्ता रौद्रया[2]नुग्रसते पुनः ।
एकः स्वयंभुवः काल[3]स्त्रिभिर्लीन् वै[4]) करोति सः ॥ 112 ॥
सृजते चा[1]नुगृह्णाति प्रजाः संहरते तथा[2]) ।
इत्येताः कथिता[3]स्तिस्रस्तनवस्तु[4]) स्वयंभुवः, ॥ 113 ॥
प्राजापत्या च रौद्री[1]) च वैष्णवी चैव[2]) ताः स्मृताः[3]) ।
एतास्तन्वः[4]) स्मृता वेदे[5]) धर्मशास्त्रे पुरातने ॥ 114 ॥

---

103 = Vā. 66.99.
104 = Vā. 66.100.
105 = Bḍ. II. 3.80$^{b}$, 81$^{a}$. | 105 = Vā. 66.101, 102$^{a}$.
106 = Bḍ. II. 3.81$^{b}$, 82$^{a}$; Vā. 66.102$^{b}$, 103$^{a}$. 1) Bḍ. –कृच्चै– । 2) Bḍ.1 तत्र यः; Vā. ये त्रयः ।
107 = Bḍ. II. 3.82$^{b}$, 83$^{a}$; Vā. 66.103$^{b}$, 104$^{a}$. 1) Vā. अन्तकारी च ते त्रयः । 2) Bḍ. या तत्र ।
108 = Bḍ. II. 3.83$^{b}$, 84$^{a}$; Vā. 66.104$^{bc}$. 1) Bḍ.1 मता सा या; Vā. या तामसी । 2) Bḍ.1 तनुः पाल्किा ; Vā. T. सानुग्रहकरी ।
109 = Bḍ. II. 3.84$^{b}$, 85$^{a}$; Vā. 66.105. 1) Bḍ.1 –जसी । 2) Bḍ. या तु । 3) Vā. मरीचिः ।
110 = Bḍ. II. 3.85$^{b}$, 86$^{a}$; Vā. 66.106. 1) Vā. सा । 2) Vā. तस्यां– । 3) Bḍ. –वो वै ।
111 = Bḍ. II. 3.86$^{b}$ = a; [ Bḍ.2 ]; Vā. 66.107$^{ab}$. 1) Vā. T. –र्थं । 2) Vā. T. कालोऽवस्थां । 3) Bḍ. सः । 4) Bḍ.2 –ष्ट्य । 5) Bḍ.2 –त्वम– ।
112 = [ Bḍ.2 ] Vā. 66.107$^{c}$, 108$^{a}$. 1) Bḍ.2 –वा– । 2) Bḍ.2 रुद्रोऽ– । 3) Bḍ.2 –मूर्वैं कल्प– । 4) Bḍ.2 प्र– ।
113 = Bḍ. II. 3.87; Vā. 66.108$^{b}$, 109$^{a}$. 1) Bḍ. सृजत्यथा– । 2) Bḍ. तथा संहरति प्रजाः । 3) Bḍ. एवमेताः स्मृता– । 4) Bḍ. –वो हि ।
114 = Bḍ. II. 3.88; Vā. 66.109$^{b}$, 110$^{a}$. 1) Bḍ. –द्रा । 2) Bḍ. चेति । 3) Bḍ. तास्त्रिधा । 4) Vā. T. एका तनुः; V. एतास्तन्वः । 5) Bḍ. वेदा ।

सांख्ययोगरतैर्धीरैः[1]) पृथगैकार्थ्य[2]दर्शिभिः ।
अभिजात[3]प्रभावज्ञैर्ऋषिभि[4]स्तत्त्वदर्शिभिः ॥ 115 ॥
एकत्वेन[1]) पृथक्त्वेन[2]) तासु भिन्नाः प्रजास्त्विमाः[3]) ।
इदं परमिदं नेति ब्रुवते[4]) भिन्नदर्शिनः[5]) ॥ 116 ॥
ब्रह्माणं कारणं केचित्, केचिदाहुः[1]) प्रजापतिम्, ।
केचिच्छिवं[1]) परत्वेन प्राहुर्विष्णुं तथापरे ॥ 117 ॥
अविज्ञानेन संभूताः[1]) सक्ता रत्या विचेतसः[2]) ।
तत्त्वं[3]) कालं च देशं च कार्यं चा[4]वेक्ष्य कर्म च[5]) ॥ 118 ॥
कारणं च[1]) स्मृता होता[2]) नानार्थेष्विह देवताः; ।
एकं प्रशंसमानस्तु सर्वानेव प्रशंसति, ॥ 119 ॥
एकं निन्दति यस्ते[1]षां, सर्वानेव स निन्दति, ।
| एकं यो वेत्ति पुरुषं, तमाहुर्ब्रह्मवादिनम् ॥ 120 ॥
न प्रद्वेषस्ततः[1]) कार्यो देवतासु विजानता, ।
न शक्यमी[2]श्वरं[3]) ज्ञातुमैश्वर्येण व्यवस्थितम्[4]) ॥ 121 ॥
एकात्मा[1]) स त्रिधा भूत्वा संमोहयति यः[2]) प्रजाः, ।
एतेषां च[3]) त्रयाणां तु विचरन्त्य[4]न्तरं जनाः ॥ 122 ॥
जिज्ञासवः[1]) परीक्षन्तः[2]) सक्ता दुष्टा[3]) विचेतसः; ।
इदं परमिदं नेति वदन्ति[4]) भिन्नदर्शिनः ॥ 123 ॥

| | |
|---|---|
| यातुधाना विशेषा ये | यातुधानान् विशन्त्येताः |
| पिचाशाश्चैव नान्तरम्, । | पिशाचांश्चैव तान्नरान्, । |
| एकः स तु पृथक्त्वेन | एकत्वेन पृथक्त्वेन |
| स्वयं भूत्वा च तिष्ठति ॥ 124 ॥ | स्वयंभूर्व्यवतिष्ठते ॥ 124 ॥ |

गुणमात्रात्मिकाभिस्तु तनुभिर्मोहयन् प्रजाः ।
तेष्वेकं यजते यस्तु[1]), स तदा यजते त्रयम् ॥ 125 ॥
तस्माद् देवास्त्रयो ह्येते नैरन्तर्ये व्यव[1]स्थिताः, ।
तस्मात् पृथक्त्वमेकत्वं[2]) संख्यासंख्ये[3]) गतागतम् ॥ 126 ॥

---

115 = Bḍ. II. 3.89; Vā. 66.110$^{bc}$. 1) Vā. –गपरैर्वीरैः । 2) Bḍ. –गेकार्थं–; Vā. T. पृथक्त्वैकत्व– । 3) Bḍ. ज्ञाति– ।
4) Bḍ. –र्मुनिभि– ।
116 = Bḍ. II. 3.90; Vā. 66.111. 1) Vā. –त्वे च । 2) Vā. –क्त्वे च । 3) Vā. –स्त्विह । 4) Vā. –वन्तो ।
5) Vā. –दर्शनाः ।
117 = Bḍ. II. 3.91; Vā. 66.112$^{ab}$. 1) Vā. –चित् प्राहुः । 2) Bḍ. –चिद् भवं ।
118 = Bḍ. II. 3.92; Vā. 66.112$^{c}$, 113$^{a}$. 1) Vā. संसक्ताः । 2) Bḍ. सक्तारिष्टविचेतसः; Vā. रत्यादिचेतसा । 3) Bḍ. सत्त्वं ।
4) Vā. T. –र्याण्या–; V. कार्यं च वीक्ष्य । 5) Vā. तत्त्वतः ।
119 = Bḍ. II. 3.93; Vā. 66.113$^{bd}$. 1) तु । 2) Bḍ. ह्येते ।
120$^{a}$ = Bḍ. II. 3.94$^{a}$; Vā. 66.113$^{c}$, 114$^{a}$. 1) Bḍ. –स्त्वे– ।
| 120$^{b}$ = Vā. 66.114$^{b}$.
121 = Bḍ. II. 3.94$^{b}$, 95$^{a}$; Vā. 66.115. 1) Vā. अद्वेषस्तु सदा । 2) Bḍ. –क्या ई– । 3) Bḍ. –रा । 4) Bḍ. –ताः ।
122 = Bḍ. II. 3.95$^{b}$, 96$^{a}$; Vā. 66.116. 1) Bḍ. एकत्वात् । 2) Bḍ. संप्रमोहयति । 3) Bḍ. वै । 4) Bḍ. विचिन्वन्त्य– ।
123 = Bḍ. II. 3.96$^{b}$, 97$^{a}$; Vā. 66.117. 1) Vā. –ज्ञासन्तः । 2) Bḍ. परीहन्ते । 3) Bḍ. हृष्ट–; Vā. रूपा– ।
4) Bḍ. संरम्भाद् ।
124 = Bḍ. II. 3.97$^{b}$, 98$^{a}$. | 124 = Vā. 66.118.
125 = Bḍ. II. 3.98$^{b}$, 99$^{a}$; Vā. 66.119. 1) Bḍ. यो वै ।
126 = Bḍ. II. 3.99$^{b}$, 100$^{a}$; Vā. 66.120$^{ab}$. 1) Bḍ. –र्येण पि– । 2) Vā. T. –त्व– । 3) Vā. –संख्या संख्या ।

एकत्वं[1]) वा बहुत्वं वा तेषु को ज्ञातुमर्हति ? ।
यस्मात्[2]) सृष्ट्वानुगृह्णीते[3]) ग्रसते चैव स[4]) *प्रजाः*[5]) ॥ 127 ॥
गुणात्मकत्वात् त्रैकाल्ये[1]), तस्मादेकः स उच्यते ।
रुद्रं ब्रह्माणमिन्द्रं च लोकपालान् ऋषीन् मनून्[2]) ॥ 128 ॥
देवं तमे[1]कं बहुधा प्राहुर्नारायणं द्विजाः ।
प्राजापत्या च रौद्री[2]) च तनुर्या चैव वैष्णवी ॥ 129 ॥
मन्वन्तरेषु वै तिस्र[1]) आवर्तन्ते पुनः पुनः ।
क्षेत्रज्ञा[2]) अपि चान्येऽस्य[3]) विभो*र्जायन्त्य*[4]नुग्रहात् ॥ 130 ॥
तेजसा यशसा बुद्ध्या श्रुतेन च बलेन च ।
Cp. 109a. जायन्ते तत्समाश्चैव, तानपीह[1]) निबोधत ! ॥ 131 ॥
{ राजस्या ब्रह्मणोंऽशेन मारीचः[1]) कश्यपोऽभवत्, ।
तामस्यास्तस्य चांशेन कालात्मा रुद्र[2]) उच्यते, ॥ 132 ॥
सात्त्विक्या पुरुषांशेन[1]) यज्ञे[2]) विष्णुरभूत्तदा[3]); ।
त्रिषु कालेषु तस्यैता ब्रह्मणस्तनवों*ऽशजाः*[4]) ॥ 133 ॥

Cp. 149. 3b. {
| मन्वन्तरेष्विह स्रष्टुमावर्तन्ते पुनः पुनः ।
| मन्वन्तरेषु सर्वेषु प्रजाः स्थावरजंगमाः ॥ $133_1$ ॥
| युगादौ सकृदुत्पन्नास्तिष्ठन्तीह प्रसंयमात्, ।
| प्राप्ते प्राप्ते तु कल्पान्ते रुद्रः संहरति प्रजाः ॥ $133_2$ ॥

कालो भूत्वा पुनश्चासौ[1]) रुद्रः संहरते *प्रजाः*[2]) ।
संप्राप्ते चैव कल्पान्ते सप्तरश्मिर्दिवाकरः ॥ 134 ॥
भूत्वा संवर्तकादित्यस्त्री*ल्लोकान् स*[1]) दहत्युत[2]) ।

विष्णुः प्रजानुग्रहकृत्
सदा पालयति प्रजाः ॥ 135 ॥

| विष्णुः प्रजानुगृह्णाति
| नामरूपविपर्ययैः ॥ 135 ॥

तस्यां तस्यामवस्थायां तत्तद्[1]रूपाद्य कारणम् ।
सत्त्वोद्रिक्ता तु या प्रोक्ता ब्रह्मणः पौरुषी तनुः, ॥ 136 ॥

---

127 = Bḍ. II. 3.100b, 101a; Vā. 66.120c, 121a. 1) Bḍ. अल्पत्वं । 2) Bḍ. तस्मात् । 3) Bḍ. –गृह्णाति । 4) Vā. T. ते । 5) Bḍ. सर्वशः ।
128 = Bḍ. II. 3.101b, 102a; Vā. 66.121b, 122a. 1) Bḍ.1 –कत्वत्वैकल्ये; Bḍ.2 –त्रैकल्पे । 2) Vā. दनून् ।
129 = Bḍ. II. 3.102b, 103a; Vā. 66.122b, 123a. 1) Bḍ. –मै– । 2) Vā. –त्या तनुर्या ।
130 = Bḍ. II. 3.103b, 104a; Vā. 66.123b, 124a. 1) Bḍ.2 –रे तु कर्तृणि; Vā. –रे च कल्पे च । 2) Vā. –ज्ञो । 3) Vā. चानेष्य । 4) Vā. विभजेदित्य– ।
131 = Bḍ. II. 3.104b, 105a; Vā. 66.124bc. 1) Bḍ. –पीमान् ।
132 = Bḍ. II. 3.105b, 106a; Vā. 66.125ab. 1) Vā. मरीचिः । 2) Bḍ. कालो रुद्रः स ।
133 = Bḍ. II. 3.106b, 107a; Vā. 66.125c, 126a. 1) Bḍ. –क्याश्च तथांशेन । 2) Bḍ. यज्ञो । 3) Bḍ. –ष्णुरजायत । 4) Bḍ. द्विजाः ।
| $133_1$ = Bḍ. II. 3.107b, 108a.
| $133_2$ = Bḍ. II. 3.108b, 109a.
134 = Bḍ. II. 3.109b, 110a; Vā. 66.126b, 127a. 1) Bḍ. युगात्मासौ । 2) Bḍ. पुनः ।
135a = Bḍ. II. 3.110b; Vā. 66.127b. 1) Bḍ. –कांश्च । 2) Vā. –त्यो लोकांस्त्रीन् स तदा दहन् ।
135b = Bḍ. II. 3.111a. | 135b = Vā. 66.128a.
136 = Bḍ. II. 3.111b, 112a; Vā. 66.128b, 129a. 1) Bḍ. तत उ– ।

Cp. 3. Part, Textgroup 3. A. Sl. 25–34.

तस्यांशेन विजज्ञे स इह[1]) स्वायंभुवेऽन्तरे ।
आकूत्यां[2]) मनसो[3]) देव उत्पन्नः प्रथमो[4]) विभुः ॥ 137 ॥
ततः पुनः स वै देवः प्राप्ते स्वारोचिषेऽन्तरे ।
तुषितायां समुत्पन्नो ह्यजितस्तुषितैः सह ॥ 138 ॥
औत्तमे ह्यन्तरे चापि | औत्तमे चान्तरे चैव
तुषितस्तु पुनः[1]) स वै ।
वशवर्तिभिरुत्पन्नो
ह्यजितस्तु पुनः स वै[1]) । | वशवर्ती हरिः पुनः ।
सत्यायामभवत् सत्यः सत्यैः सह[1]) सुरोत्तमैः ॥ 139 ॥
तामसस्यान्तरे चैव[1]) संप्राप्ते[2]) पुनरेव हि ।
हरिण्यां[3]) हरिभिः सार्धं हरिरेव बभूव ह ॥ 140 ॥
चारिष्णवे[1]ऽन्तरे चापि हरिर्देवैः[2]) पुनस्तु सः ।
विकुण्ठायामजो[3]) जज्ञे ह्याभूत[4]रजसैः सह ॥ 141 ॥
| वैकुण्ठः स पुनर्देवः संप्राप्ते चाक्षुषेऽन्तरे ।
| धर्मो नारायणः साध्यः साध्यैः सह सुरैरभूत् ।
| स तु नारायणः साध्यः प्राप्ते वैवस्वतेऽन्तरे ॥ $141_1$ ॥
मारीचात् कश्यपाद्विष्णुरदित्यां संबभूव ह ।
त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा विष्णुस्त्रिविक्रमः[1]) ॥ 142 ॥
प्रत्यपादयदिन्द्राय देवेभ्य[1]श्चैव स प्रभुः ।
इत्येतास्तनवस्तस्य[2]) व्यतीताः सप्त सप्तसु ।
मन्वन्तरेष्वतीतेषु, याभिः संरक्षिताः प्रजाः ॥ 143 ॥
यस्माद् विष्ट[1]मिदं सर्वं वामनेनेह जायता[2]), ।
तस्मात् स वै स्मृतो विष्णुर्विशेर्धातोः[3]) प्रवेशनात् ॥ 144 ॥
इत्येतद् ब्रह्मणश्चैव वामनस्य महात्मनः[1]) ।
एकत्वं च पृथक्त्वं च वि[2]शिष्टत्वं च कीर्तितम् ॥ 145 ॥
देवतानामिहांशेन जायन्ते यास्तु देवताः[1]), ।
तासां तास्ते[2]जसा बुद्धया श्रुतेन च बलेन च ।
। जायन्ते तत्समाश्चैव ता वै तेषामनुग्रहात् ॥ 146 ॥

---

137 = Bd. II. 3.112[b], 113[a]; Vā. 66.129[bc]. 1) Bd. –न च विज्ञेयो मनोः । 2) Bd. आकूत्यां । 3) Bd. –सा ।
4) Bd. –मं; Vā. T. –मे ।
138 = Bd. II. 3.113[b], 114[a]; Vā. 66.130.
139[a] = Bd. II. 3.114[b]. 1) Bd.1 प्रभुः । | 139[ab] = Vā. 66.131. 1) Vā. T. विदुः ।
139b(c) = Bd. II. 3.115[a]; Vā. 66.132[a]. 1) Bd. सह सत्यैः ।
140 = Bd. II. 3.115[b], 116[a]; Vā. 66.132[bc]. 1) Bd. Vā. T. चापि । 2) Bd. स देवः । 3) Vā. भार्यायां ।
141 = Bd. II. 3.116[b], 117[a]; Vā. 66.133[ab]. 1) Bd. वैवस्वतेऽ– । 2) Vā. –वः । 3) Bd. वैकुण्ठो नामतो ।
4) Bd.1 विधूत–; Bd.2 विभूत– ।
| $141_1$ = Vā. 66.133[c], 134.
142 = Bd. II. 3.117[b], 118[a]; Vā. 66.135. 1) Vā. –ष्णुरुरुक्रमम् ; V. –मः ।
143 = Bd. II. 3.118[b], 119; Vā. 66.136. 1) Bd. दैवते– । 2) Bd. –वो जाता ।
144 = Bd.1 II. 3.120[a] = a [Bd.2]; Vā. 66.137. 1) Bd. विश्व– । 2) Bd.1 जायते लीयते पुनः । 3) Bd.2 –विशेषान्ताः ।
145 = [Bd.2]; Vā. 66.138. 1) Bd.2 –णः प्रोक्तं विष्णोस्त्वैव भवस्य च । 2) Bd.2 व– ।
146[ab] = Bd.1 II. 3.(120[b]), 121[a]; [Bd.2]; Vā. 66.139[ab]. 1) Bd.1 यस्यांशेनामराः सर्वे जायन्ते त्रिदिवेश्वराः । 2) Bd.1 वर्धन्ते ते–; Bd.2 तेषां ते ते– ।
| 146[c] = Vā. 66.139[c].

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा, ।
तत्तदेवावगच्छध्वं विष्णोस्तेजोंऽशसंभवम् ॥ 147 ॥

स एव जायतेंऽशेन, केचिदिच्छन्ति मानवाः, ।
| ततोऽपरे ब्रुवन्तीममन्योन्यांशेन जायते, ॥ 148 ॥

एवं[1]) विवदमानास्तु[2]) दृष्टान्तांश्च[3]) ब्रुवन्ति ह[4]) ।
यस्मान्[5]) न विद्यते भेदो मनसश्चेतसश्च ह[6]), ॥ 149 ॥

Cp. 133.1b, 133.2a.

| तस्मादनुग्रहास्तेषां क्षेत्रज्ञास्ते भवन्त्युत ।
| एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः ॥ $149_1$ ॥
| भूत्वा यस्माच्च बहुधा भवत्येकः पुनस्तु सः, ।
| तस्मात् सुमनसो भेदाज्जायन्ते तेजसश्च ह ॥ $149_2$ ॥
| { मन्वन्तरेषु सर्वेषु प्रजाः स्थावरजङ्गमाः ।
| { सर्गादौ सकृदुत्पन्नास्तिष्ठन्तीह प्रशंसया, ।
| प्राप्ते प्राप्ते तु कल्पान्ते रुद्रः संहरति प्रजाः ॥ $149_3$ ॥

जायन्ते मोहयन्तोऽ[1]थैरी[2]श्वरा योगमायया ।
| ऐश्वर्येण चरन्तस्ते मोहयन्ति ह्यनीश्वराः, ॥ 150 ॥

तस्मात् तेषां[1]) प्रचारे तु[2]) युक्तायुक्तं न विद्यते ।
भूतापवादिनः[3]) कष्टा[4]), मध्यस्था भूतवादिनः[5]), ॥ 151 ॥

भूतानुवादिनः[1]) शक्तास्त्रयो वेदाः[2]) प्रवादिनाम् ।
परीक्ष्य यो न गृह्णाति[3]) गृह्णाति च विपर्ययात्[4]) ॥ 152 ॥

दृढपूर्वश्रुतत्वाच्च[1]) प्रवादाच्चैव लौकिकात्[2]) ।
चतुर्भिः कारणै[3]रेतै[4]र्यथातत्त्वं न विन्दति[5]) ॥ 153 ॥

| पूर्वमर्यान्तरे न्यस्ताः कालान्तरगता अपि, ।
| तेनान्यत् सन्तमप्यर्थं द्वेषान्न प्रतिपद्यते ॥ $153_1$ ॥

---

147 = Bḍ. II. 3.121b, 122a; Vā. 66.140; Cp. Bhagavadgītā 10.41.
148a = Bḍ. II. 3.122b; Vā. 66.141a.
| 148b = Vā. 66.141b.
149 = Bḍ. II. 3.123; Vā. 66.142ab. 1) Bḍ.1 एके । 2) Vā. –स्ते । 3) Vā. दृष्ट्वा तान् वै । 4) Bḍ.1 हि । 5) Bḍ.1 एषाम् (–षां ?) । 6) Bḍ.1 –दक्षयाणां शुसदामिह; Bḍ.2 चेतसा नैप जायते ।
| $149_1$ = Vā. 66.142c, 143a.
| $149_2$ = Vā. 66.143b, 144a.
| $149_3$ = Vā. 66.144bc, 145a.
150a = Bḍ. II. 3.124; Vā. 66.145b. 1) Bḍ.1 –यन्त्य–; Bḍ.2 –यन्ते– । 2) Vā. –ऽयानी– ।
| 150b = Vā. 66.145c.
151 = Bḍ. II. 3.125; Vā. 66.145d, 146a. 1) Vā. –स्माद्दोप– । 2) Vā. –रेषु । 3) Bḍ. भूतानुवादिनाम् ( Bḍ.2 –नः ) । 4) Bḍ.1 आद्या; Vā. –नो दुष्टा । 5) Bḍ.1 –नाम् ; Bḍ.2 –वाहिनः; Vā. भाविनः ।
152 = Bḍ. II. 3.126; Vā. 66.146b, 147a. 1) Vā. –तापवादिनः । 2) Bḍ.1 –यश्चैव; Bḍ.2 शक्तास्त्रयो । 3) Bḍ. चानुगृह्णन्ति । 4) Bḍ. निगृह्णन्ति खलान् स्वयम् ।
153 = Bḍ. II. 3.127(a); Vā. 66.147bc. 1) Bḍ.1 मत्तः पूर्वं च ते तस्मात्; Bḍ.2 –वंश्च तत्वाश्च । 2) Bḍ. प्रभवश्च ततोऽधिकाः । 3) Bḍ.1 तथाधिकरणै–; Bḍ.2 रथार्त्तिः कारणै– । 4) Vā. –रेभि– । 5) Bḍ.1 –र्यथा तस्यनिदर्शकाः ।
| $153_1$ = Vā. 66.148.

देवानां[1]) द्रव्यभूतो यो[2]) गुणभूतश्च[3]) तेषु यः[4]) ।
कर्मणां महतां कर्ता[5]) अभिजात्या च यो महान्[6]) ॥ 154 ॥

श्रुतज्ञैः कारणैरेतैश्चतुर्भिः परिकीर्तिताः[1]) ।
असंज्ञकस्ता[2]) जानाति[3]) देवताः प्रविभागशः[4]) ॥ 155 ॥

| | |
|---|---|
| इमं चोदाहरन्त्यत्र<br>श्लोकं योगेश्वरं[1]) प्रति | इमौ चोदाहरन्त्यत्र<br>श्लोकौ योगेश्वरं प्रति ।<br>आत्मनः प्रतिरूपाणि<br>परेषां च सहस्रशः । |

कुर्याद् योगबलं प्राप्य तैश्च सर्वैः सहाच[1]रेत्, ॥ 156 ॥

प्राप्नुयाद्विषयांश्चैव तथैवोग्र[1]तपश्चरन्[2]) ।
संहरेच्च[3]) पुनः सर्वान् सूर्यो ज्योतिर्गणा[4]निव ॥ 157 ॥

---

154 = Bḍ. II. 3.128; Vā. 66.149$^{ab}$. 1) Bḍ.2 –वायां; Vā. दशानां । 2) Bḍ.1 देवभूताश्च; Bḍ.2 द्रव्यभूतायां । 3) Vā. –स्तु । 4) Bḍ.1 ते वै सर्वप्रवर्तकाः । 5) Bḍ.1 ते हि । 6) Bḍ. कर्तारो जगदीश्वराः ।

155 = Bḍ. II. 3.129; Vā. 66.149$^{c}$, 150$^{a}$. 1) Vā. –र्यते । 2) Bḍ.1 बालिशास्ते न; Vā. अशक्तश्चो । 3) Bḍ.1 –नन्ति 4) Bḍ.1 दैवतानि प्रभागशः ।

156$^{a}$ = Bḍ. II. 3.130$^{a}$. 1) Bḍ.1 –रान् ।

157$^{ab}$ = Vā. 66.150$^{b}$, 151$^{a}$.

156$^{b(c)}$ = Bḍ. II. 3.130$^{b}$; Vā. 66.151$^{b}$. 1) Bḍ. –वैर्महांश्च– ।

157 = Bḍ. II. 3.131; Vā. 66.152. 1) Bḍ. पुनश्चोर्ध्वं । 2) Bḍ. –श्चरेत् । 3) Bḍ. –हरेत । 4) Vā. –यंतेजो गुणा– ।

# B.

( Bd. II. 4.1—37; Va. 67.1—47. )

एतच्छ्रुत्वा वचस्तस्य नैमिषेयास्तपस्विनः ।
पप्रच्छुर्ऋषयः श्रेष्ठं वचनस्य यथाक्रमम् ॥ $1_1$ ॥
सप्तस्विह कथं देवा जाता मन्वन्तरेष्विह ।
इन्द्रविष्णुप्रधानास्ते आदित्यास्तु महौजसः, ।
एतत् प्रब्रूहि नः सर्वं विस्तराद् रोमहर्षण ! ॥ $1_2$ ॥
एवमुक्तस्तदा सूतो विनयी ब्रह्मवादिभिः ।
उवाच वदतां श्रेष्ठो, यथा पृष्टो महर्षिभिः ॥ $1_3$ ॥

ब्रह्मणो[1]) वै मुखात् सृष्टा जया[2]) देवाः प्रजेप्सया ।
सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥ 1 ॥
दर्शश्च पौर्णमासश्च बृहत्साम[1]) रथंतरम् ।

[ आकूतः प्रथमस्तेषां
ततस्त्वाकूतिरेव च । ]

वित्तिश्चैव सुवित्तिश्च आ[1]कूतिः कूतिरेव च ॥ 2 ॥

विज्ञातश्चैव विज्ञाता
मनो यज्ञश्च द्वादशः ।

अधीष्टस्तु ततो ज्ञेयः,
अधीतिश्चैव तत्त्वतः ।
विज्ञातिश्चैव विज्ञाता[1])
मनवो ये च द्वादश ॥ $2_1$ ॥
[ ज्ञेयो द्वादशपुत्रश्च
यश्चाब्देन समाजयेत् ।
तं दृष्ट्वा चाब्रवीद् ब्रह्मा
जया देवानसूयत ॥ $2_2$ ॥

दाराग्निहोत्रसंबन्धं
वितत्य यजतेति च ।

दाराग्निहोत्रसंयोग-
मिज्यामारभतेति च ! ।

एवमुक्त्वा तु तान्[1]) ब्रह्मा तत्रैवान्तरधीयत[2]) ॥ 3 ॥
ततस्ते नाभ्यनन्दन्त तद्वाक्यं परमेष्ठिनः ।
संन्यस्येह च[1]) कर्माणि वासनाः कर्मजाश्च वै[2]) ॥ 4 ॥

---

$1_1$ = Va. 67.1.
$1_2$ = Va. 67.2.
$1_3$ = Va. 67.3.

1 = Bd. II. 4.1; Va. 67.4. 1) Bd. –णा । 2) Va. यथा ।

2[a] = Bd. II. 4.2[a]; Va. 67.5[a]. 1) Va. बृहद् यच्च ।

[ ] = Va. 67.5[b].

2[b] = Bd. II. 4.2[b]; Va. 67.6[a]. 1) Bd. चितिश्च सुचितिश्चैव आ– ।

$2_1$ = Va. 67.6[bc]. 1) Va. T. –तो ।
$2_2$ = Va. 67.7.
3[a] = Va. 67.8[a].

3[ab] = Bd. II. 4.3.

3[c(b)] = Bd. II. 4.4[a]; Va. 67.8[b]. 1) Va. तं । 2) Bd. –चान्तरधात् प्रभुः ।

4 = Bd. II. 4.4[b], 5[a]; Va. 67.9. 1) Va. तु । 2) Bd.2 –नाकर्मजाति वै; Va. वासनाः कर्मजानि तु ।

धर्मेष्वेवावतिष्ठन्ते दोषं दृष्ट्वा तु कर्मसु ।
क्षयातिशययुक्तं तु[1]) ते दृष्ट्वा कर्मणां फलम् ॥ 5 ॥
जुगुप्सन्तः प्रसूतिं च निस्तन्द्रा[1]) निर्ममाभवन्, ।
अजन्म[2]) काङ्क्षमाणास्ते विरक्ता[3]) दोषदर्शिनः ॥ 6 ॥
अर्थं धर्मं च कामं च हित्वा ते वै व्यवस्थिताः ।
परमं ज्ञानमास्थाय
तत् संक्षिप्य सुसंस्थिताः ॥ 7 ॥

| पौरुषं ज्ञानमास्थाय
| तेजः संक्षिप्य चास्थिताः ॥ 7 ॥

तेषां तु[1]) तमभिप्रायं ज्ञात्वा ब्रह्मा चुकोप ह[2]) ।
तानब्रवीत् ततो[3]) ब्रह्मा निरुत्साहान् सुरानथ ॥ 8 ॥
प्रजार्थमिह यूयं वै *मया सृष्टाः स्थ*[1]) नान्यथा, ।
प्रसूयध्वं यजध्वं चेत्युक्तवानस्मि *वः*[2]) पुरा ॥ 9 ॥
यस्माद् वाक्यमनादृत्य मम वैराग्यमास्थिताः ।
जुगुप्समानाः स्वं जन्म संततिं नाभ्यनन्दथ[1]) ॥ 10 ॥
कर्मणां च[1]) कृतो न्यासो[1]) ह्यमृतत्वाभिकाङ्क्षया, ।
तस्माद् यूय*मिहावृत्ति*[3]) सप्तकृत्वो *ह्यवाप्स्यथ*[4]) ॥ 11 ॥
ते शप्ता ब्रह्मणा देवा जयास्तं वै प्रसादयन् ।
क्षमास्माकं महादेव, यदज्ञानात् कृतं वि[1]भो ॥ 12 ॥
*प्रणतान्* वै[1]) सानुनयं ब्रह्मा तानब्रवीत् पुनः ।
लोके *मयाननुज्ञातः*[2]) कः स्वातन्त्र्यमिहार्हति ? ॥ 13 ॥
मया *परिगतं* सर्वं[1]); कथमच्छन्दतो मम ।
प्रतिपत्स्यन्ति भूतानि शुभं वा यदि वाऽशुभम्[2]) ? ॥ 14 ॥
लोके यदस्ति किंचिद्वै *शं वाशं वा*[1]) व्यवस्थितम्, ।
बुद्ध्यात्मना मया व्याप्तं; को मां लोकेऽतिसंधयेत्[2]) ? ॥ 15 ॥
भूतानामीहितं[1]) यच्च, यच्चाप्येषां विचिन्तितम्[2]) ।
तथोपचरितं[3]) यच्च, तत्सर्वं विदितं मम ॥ 16 ॥
मया बद्ध[1]मिदं सर्वं जगत् स्थावरजङ्गमम् ।
आशामयेन बन्धेन[2]), कस्तं[3]) छेत्तुमिहोत्सहेत्[4]) ? ॥ 17 ॥

---

5 = Bḍ. II. 4.5$^{b}$, 6$^{a}$; Vā. 67.10. 1) Bḍ. च ।
6 = Bḍ. II. 4.6$^{b}$, 7$^{a}$; Vā. 67.11. 1) Bḍ. निःसत्त्वा । 2) Vā. T. अजस्त्वं; V. अजत्वं । 3) Bḍ. निर्मुक्ता ।
7$^{a}$ = Bḍ. II. 4.7$^{b}$; Vā. 67.12$^{a}$.
7$^{b}$ = Bḍ. II. 4.8$^{a}$. | 7$^{b}$ = Vā. 67.12$^{b}$.
8 = Bḍ. II. 4.8$^{b}$, 9$^{a}$; Vā. 67.13. 1) Vā. च । 2) Bḍ. तु कोपितः । 3) Vā. तदा ।
9 = Bḍ. II. 4.9$^{b}$, 10$^{a}$; Vā. 67.14. 1) Vā. प्रजास्रष्टास्मि । 2) Vā. यत ।
10 = Bḍ. II. 4.10$^{b}$, 11$^{a}$; Vā. 67.15. 1) Bḍ. –न्दत; Vā. नाभिनन्दथ ।
11 = Bḍ. II. 4.11$^{b}$, 12$^{a}$; Vā. 67.16. 1) Bḍ. न । 2) Bḍ. –ऽन्यासो । 3) Vā. –मनादृत्य । 4) Vā. –त्वस्तु यास्यथ ।
12 = Bḍ. II. 4.12$^{b}$, 13$^{a}$; Vā. 67.17. 1) Bḍ. –नात्मकं प्र– ।
13 = Bḍ. II. 4.13$^{b}$, 14$^{a}$; Vā. 67.18. 1) Vā. प्रणिपत्य । 2) Bḍ. –केऽप्ययथानुयुञ्जीत ।
14 = Bḍ. II. 4.14$^{b}$, 15$^{a}$; Vā. 67.19. 1) Bḍ. गतं तु सर्वं हि । 2) Bḍ. वोत्तरम् ।
15 = Bḍ. II. 4.15$^{b}$, 16$^{a}$; Vā. 67.20. 1) Vā. सच्चासच्च । 2) Bḍ. –ऽतिवर्तयेत् ।
16 = Bḍ. II. 4.16$^{b}$, 17$^{a}$; Vā. 67.21. 1) Vā. –नां तर्कितं । 2) Vā. विधारितम् । 3) Vā. –था विचारितं ।
17 = Bḍ. II. 4.17$^{b}$, 18$^{a}$; Vā. 67.22. 1) Vā. स्थित– । 2) Vā. तत्त्वेन । 3) Vā. कथं । 4) Vā. –त्सहे ।

यस्माच्चाहं विवृत्तो[1]) वै सर्गा[2]र्थमिह नान्यथा, ।
इह[3]) कर्माण्यनारभ्य को मे[4]) छन्दाद् वियोक्ष्यते[5]) ॥ 18 ॥

एवं संभाष्य तान्[1]) देवान्
जयानध्यात्मचेतसः ।
अथ वीक्ष्य पुनश्चाह
ध्रुवं दण्डयान् प्रजापतिः ॥ 19 ॥

परिभाष्य ततो देवान्
जयान् वै नष्टचेतसः ।
अब्रवीत् स पुनस्तान् वै
धृतान् दण्डे प्रजापतिः ॥ 19 ॥

यस्मान् माम[1]भिसंधाय संन्यासो वः[2]) कृतः पुरा[3]), ।
यस्मात्[4]) स विफलो यत्नो[5]) ह्यापारस्त्वेष, यः[6]) कृतः, ।
भवितातः[7]) दुःखोदर्को दिव्यभावेन[8]) जायताम् ॥ 20 ॥
आत्मच्छन्देन वो जन्म भविष्यति सुरोत्तमाः, ।
मन्वन्तरेषु संसिद्धाः[1]) सप्तस्वाविर्भवि[2]ष्यथ ॥ 21 ॥
वैवस्वतान्तेषु सुरास्तथा स्वायंभुवादिषु ।
एवं च[1]) ब्रह्मणा तत्र श्लोको गीतः पुरातनः ॥ 22 ॥

त्रयी विद्या ब्रह्ममयप्रसूतिः
श्राद्धं तपो यज्ञमनुप्रदानम्, ।
एतानि नित्यैः सहसा रजोभि-
र्भूत्वा विमुक्तंसतेऽन्यत्प्रशस्तम् ॥ 23 ॥
एवं श्लोकार्थमुक्त्वा तु
जयान् देवानथाब्रवीत् ।

त्रयीं विद्यां ब्रह्मचर्यं
प्रसूतिं श्राद्धमेव च ।
यज्ञं चैव तु दानं च
एषामेव तु कुर्वताम्, ।
स हि स्म विरजा भूत्वा
वसतेऽन्यप्रशंसया ॥ 23 ॥
स एवं श्लोकमुक्त्वा तु
जयान् देवानथाऽब्रवीत् ।

वैवस्वतेऽन्तरेऽतीते मत्समीपमिहै[1]ष्यथ, ॥ 24 ॥
ततो यूयं मया सार्धं सिद्धिं प्राप्स्यथ शाश्वतीम् ! ।
एवमुक्त्वा तु तान् ब्रह्मा[1]) तत्रैवान्तरधीयत ॥ 25 ॥
ततो देवा[1]स्तिरोभूत ईश्वरे[2]) ह्यकुतोभयाः[3]) ।
प्रपन्ना अणिमाद्यैश्च युक्ता[4]) योगबलान्विताः[5]) ॥ 26 ॥

ततस्तेन रुषा शप्ता-
स्तेऽभवन् द्वादशाजिताः ।
जया इति समाख्याताः
कृता एवं विसंनिभाः ॥ 27 ॥

ततस्तेषां तु यास्तन्व-
स्ताभवन् द्वादश ह्लदाः ।
जया इति समाख्याता
जाताश्चोदधिसंनिभाः ॥ 27 ॥

---

18 = Bḍ. II. 4.18[b], 19[a]; Vā. 67.23. 1) Bḍ. –स्माद्ध्रति द्रुतो । 2) Bḍ. सर्वां– । 3) Bḍ. इति । 4) Bḍ. कामं । 5) Bḍ. –क्षते ।

19 = Bḍ.2 4.19[b], 20[a]. 1) Bḍ.2 पुरा भाष्य ततो । | 19 = Vā. 67.24.

20 = Bḍ. II. 4.20[b], 21; Vā. 67.25. 1) Bḍ. मान– । 2) Bḍ. –सादिः । 3) Bḍ. सुराः । 4) Bḍ. तस्माद । 5) Bḍ. विपुलायत्तो । 6) Bḍ. व्यापारस्त्वथ मत्– । 7) Bḍ. भविता च । 8) Vā. देवा भावेषु ।

21 = Bḍ. II. 4.22; Vā. 67.26. 1) Vā. संमूढाः । 2) Vā. पट्सु सर्वे गमि– ।

22 = Bḍ. II. 4.23; Vā. 67.27. 1) Vā. ताञ्ज्ञात्वा ।

23 = Bḍ. II. 4.24. | 23 = Vā. 67.28.

24[a] = Bḍ. II. 4.25[a]. | 24[a] = Vā. 67.29[a].

24[b] = Bḍ. II. 4.25[b]; Vā. 67.29[b]. 1) Vā. –मिहे– ।

25 = [Bḍ.2]; Vā. 67.30. 1) Bḍ.2 बुद्ध्या ।

26 = Bḍ. II. 4.26; Vā. 67.31. 1) Bḍ. –व– । 2) Bḍ. –रो । 3) Bḍ. –यः । 4) Bḍ. –त्वाधारणामार्या युक्त्वा । 5) Bḍ. –ताम् ।

27 = Bḍ. II. 4.27. | 27 = Vā. 67.32.

ततः स्वायंभुवे तस्मिन्
सर्गेऽतीते ते[1]) वै सुराः ॥ 28 ॥

| ततः स्वायंभुवे तस्मिन्
| सर्गे ते जज्ञिरे सुराः ।

| अजितायां रुचेः पुत्रा अजिता द्वादशात्मकाः ॥ 28 ॥
| विधिश्च मुनयश्चैव क्षेमो नन्दोऽव्ययस्तथा ।
| प्राणोऽपानः सुधामा च ऋतुः शक्तिर्ध्रुवः स्थितिः[1]), ॥ $28_1$ ॥
| इत्येते मानसाः सर्वे अजिता द्वादश स्मृताः, ।
| ते च यज्ञे सुरैः सार्धं यज्ञभाजस्तथा स्मृताः ॥ $28_2$ ॥
| स्वायंभुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः ।
| तुषिता नाम ते ह्यासन् प्राणाख्या यज्ञियाः सुराः ॥ $28_3$ ॥

पुनस्ते तुषिता देवा *जाताः स्वारोचिषेऽन्तरे*[1]) ।
| तुषितायां समुत्पन्नाः पुनः पुत्राः स्वरोचिषः ॥ 29 ॥
उत्तमस्य मनोः[1]) पुत्राः सत्यायां जज्ञिरे*ऽशुभाः*[2]), ।
ततः सत्याः स्मृता देवा औत्तमे[3]) चान्तरे तदा[4]) ॥ 30 ॥
| अभवन् यज्ञभाजस्ते तृतीये द्वापरान्तरे, ।
| ते तु सत्याः पुनर्देवाः संप्राप्ते तामसेऽन्तरे ॥ $30_1$ ॥
*हरिण्यां नाम तुषिता*[1]) जज्ञिरे द्वादशैव तु, ।
हरयो नाम ते देवा यज्ञभाजस्तद*ा*[2]ऽभवन् ॥ 31 ॥
ततस्ते हरयो देवाः प्राप्ते चारिष्णवे[1]ऽन्तरे ।
वि[2]कुण्ठायां पुन[3]स्ते वै चरिष्णोर्ज[4]ज्ञिरे सुराः ॥ 32 ॥
वैकुण्ठा नाम ते देवाः पञ्चमस्यान्तरे मनोः ।
ततस्ते वै पुनर्देवा वैकुण्ठाः प्राप्य चाक्षुषम् ॥ 33 ॥
| साध्यायां द्वादश सुता जज्ञिरे धर्मसूनवः ।
ततस्ते वै पुनः साध्याः संक्षीणे चाक्षुषेऽन्तरे ।
उपस्थिते पुनः[1]) सर्गे मनो[2]र्वैवस्वतस्य ह ॥ 34 ॥
| आद्ये त्रेतायुगमुखे प्राप्ते वैवस्वतस्य तु ।
अंशेन साध्यास्तेऽदित्यां मारीचात् कश्यपात् पुनः ।
जज्ञिरे द्वादशादित्या वर्तमानेऽन्तरे सुराः[1]) ॥ 35 ॥

---

28 = Bḍ. II. 4.28ᵃ. 1) Bḍ. T. त । | 28 = Vā. 67.33.
| $28_1$ = Vā. 67.34ᵃᵇ. 1) Vā. T. क्रतु-शक्ति-व्यवस्थिताः ।
| $28_2$ = Vā. 67.34ᶜ, 35ᵃ.
| $28_3$ = Vā. 67.35ᵇ, 36ᵃ.
$29^a$ = Bḍ. II. 4.28ᵇ; Vā. 67.36ᵇ. 1) Vā. उत्तमे त्वन्तरे त्वयम् ।
| $29^b$ = Vā. 67.36ᶜ.
30 = Bḍ. II. 4.29; Vā. 67.37. 1) Vā. T. तु ते; V. रुचेः । 2) Bḍ. तदा । 3) Vā. उत्तमे । 4) Bḍ. मनोः ।
| $30_1$ = Vā. 67.38.
31 = Bḍ. II. 4.30; Vā. 67.39. 1) Vā. हर्या ये तमसः पुत्रा । 2) Vā. –स्तथा– ।
32 = Bḍ. II. 4.31; Vā. 67.40ᵃᵇ. 1) Bḍ. चारिष्ठवे । 2) Vā. वै– । 3) Vā. तत– । 4) Bḍ. वरिष्ठा ज– ।
33 = Bḍ. II. 4.32; Vā. 67.40ᶜ, 41ᵃ.
| $34^a$ = Vā. 67.41ᵇ.
$34^{ab(bc)}$ = Bḍ. II. 4.33; Vā. 67.42. 1) Vā. मनोः । 2) Vā. पुन– ।
| $35^a$ = Vā. 67.43ᵃ.
$35^{ab(bc)}$ = Bḍ. II. 4.34; Vā. 67.43ᵇ, 44ᵃ. 1) Vā. पुनः ।

यदा त्वेते[1]) समुत्पन्नाश्चाक्षुषस्यान्तरे मनोः, ।
शप्ताः[2]) स्वयंभुवा[3]) साध्या जज्ञिरे द्वादशामराः ।

| एवमाद्या जयास्ते वै शापात् समभवंस्तदा ॥ 36 ॥

एवं शृणोति यो मर्त्यो, | य इमां सप्तसंभूतिं
जयस्तस्य भवेत् सदा, । | देवानां देवशासनात् ।

पठेद् यः[1]) श्रद्धया युक्तः प्रत्यवायं न[2]) गच्छति ॥ 37 ॥
इत्येता वृत्त[1]यः सप्त देवा[2]नां जन्म[3]लक्षणाः ।
परिक्रान्ता मया वोऽद्य[4]), किं भूयः श्रोतुमिच्छतः ? ॥ 38 ॥

---

36ab = Bd. II. 4.35; Vā. 67.44b, 45a. 1) Bd. चैते । 2) Vā. ततः । 3) Vā. स्वायंभुवे ।
| 36c = Vā. 67.45b.

37a = Bd. II. 4.36a. | 37a = Vā. 67.46a.

37b = Bd. II. 4.36b; Vā. 67.46b. 1) Bd. जयानां । 2) Bd. प्रत्यध्यायं तु ।

38 = Bd. II. 4.37; Vā. 67.47. 1) Vā. भूत- । 2) Vā. जया- । 3) Vā. सप्त- । 4) Bd. -द्या; Vā. चाद्य ।

## C.

( Bḍ. II. 5.1—106; Vā. 67.48—135. )

ऋषय ऊचुः

दैत्यानां दानवानां च गन्धर्वोरगरक्षसाम् ।
सर्प-भूत-पिशाचानां पशू[1]नां पक्षिवीरुधाम् ॥ 1 ॥
उत्पत्तिं निधनं चैव विस्तरात् कथयस्व नः ! ।
एवमुक्तस्तदा सूत उवाच ऋषिसत्तमान्[1]) ॥ 2 ॥
दितेः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम्[1]) ।
कश्यपस्यात्मजौ तौ तु[2]) सर्वेभ्यः पूर्वजौ स्मृतौ ॥ 3 ॥
सौत्येऽह्न्यतिरात्रस्य कश्यपस्याश्वमेधिके[1]) ।
हिरण्यकशिपुर्नाम प्रथितं पृथ[2]गासनम् ॥ 4 ॥
दित्या गर्भाद्विनिःसृत्य तत्रासीनः समन्ततः[1]), ।
हिरण्यकशिपुस्तस्मात् कर्मणा तेन स स्मृतः ॥ 5 ॥ { Cp. Śl. 14b.

ऋषय ऊचुः

हिरण्यकशिपोर्जन्म नाम[1]) चैव महात्मनः ।
प्रभावं चैव दैत्यस्य विस्तराद् ब्रूहि नः प्रभो ! ॥ 6 ॥

सूत उवाच :

कश्यपस्याश्वमेधोऽभूत् पुण्ये[1]) वै पुष्करे पुरा[2]) ।
ऋषिभिर्देवताभिश्च गन्धर्वैरुपशोभितः ॥ 7 ॥
उत्कृष्टेनैव[1]) विधिना आख्यानादौ यथाविधि ।
आसनान्युपक्लृप्तानि काञ्चनानि[2]) तु पञ्च वै ॥ 8 ॥
कुशपूतनि[1]) त्रीण्यत्र कूर्चः फलकमेव च ।
मुख्यर्त्विजस्तु[2]) चत्वारस्तेषां तान्युपकल्पयन्[3]) ॥ 9 ॥

क्लृप्तं तत्रासनं यत्तु[1])
होतुरर्थे हिरण्मयम् ॥ 10 ॥

| शुभं तत्रासनं यत्तु
होतुरर्थे प्रकल्पितम् ।
हिरण्मयं तथा दिव्यं
दिव्यास्तरणसंस्तृतम् ॥ 10 ॥

---

1 = Bḍ. II. 5.1; Vā. $67.48^{ab}$. 1) Bḍ. वसू– ।
2 = Bḍ. II. 5.2; Vā. $67.48^{c}$, $49^{a}$. 1) Bḍ. –तः प्रत्युवाच ऋषिसत्तमम् ।
3 = Bḍ. II. 5.3; Vā. $67.49^{b}$, $50^{a}$. 1) Bḍ. कन्या चैका महाबला । 2) Vā. वै ।
4 = Bḍ. II. 5.4; Vā. $67.50^{b}$, $51^{a}$. 1) Bḍ. –धिकाः । 2) Vā. प्रथमं ह्युत्ति– ।
5 = Bḍ. II. 5.5; Vā. $67.51^{bc}$. 1) Vā. –नोऽश्वसंसदि ।
6 = Bḍ. II. 5.6; Vā. 67.52. 1) Vā. –र्नाम जन्म ।
7 = Bḍ. II. 5.7; Vā. 67.53. 1) Vā. –ण्यो । 2) Bḍ. तदा ।
8 = Bḍ. II. 5.8; Vā. 67.54. 1) Bḍ. उत्सृष्टे स्वे च । 2) Bḍ. सौवर्णानि ।
9 = Bḍ. II. 5.9; Vā. 67.55. 1) Bḍ. कुलस्पदापि । 2) Vā. –जश्च । 3) Vā. T. –कल्पयेत् ।
10 = Bḍ. II. $5.10^{a}$; Cp. Śl. $12^{b}$. 1) Bḍ.1 चैकं । | 10 = Vā. 67.56.

अन्तर्वत्नी[1]) दितिश्चैव पत्नीत्वं समुपागता, ।
दश वर्षसहस्राणि गर्भस्तस्या अवर्तत ॥ 11 ॥
स तु गर्भो विनिःसृत्य[1]) मातुर्वै उदरात्तदा, ।
उपक्लृप्तासनं यत्तु होतुरर्थे हिरण्मयम्, ॥ 12 ॥
निषसाद स गर्भोऽत्र तत्रासीनः शशंस च ।
आख्यानमानुपूर्व्येण[1]) महर्षिः क[2]श्यपो यथा ॥ 13 ॥
तं दृष्ट्वा ऋषय[1]स्तस्य नामाकुर्वंस्तु[2]) *तद्विधम्*[3]), ।
Cp. Ś. 8b. { हिरण्यकशिपुस्तस्मात् कर्मणा तेन स स्मृतः[4]) ॥ 14 ॥
हिरण्याक्षोऽनुजस्तस्य सिंहिका तस्य चानुजा, ।
राहोः सा जननी देवी विप्रचित्तेः परिग्रहः ॥ 15 ॥
हिरण्यकशिपुर्दैत्यश्चचार परमं तपः ।
शतं वर्षसहस्राणां निराहारो ह्यधः शिराः ॥ 16 ॥
*तं ब्रह्मा छन्दयामास दैत्यं* तुष्टो[1]) वरेण तु ।
सर्वामरत्वमवधं[2]) सर्वभूतेभ्य एव च[3]) ॥ 17 ॥
योगाद् देवान् विनिर्जित्य सर्वदेवत्वमास्थितः ।

| | |
|---|---|
| कारयेऽहमिहैश्वर्यं<br>बलवीर्यसमन्वितः, ।<br>दानवास्त्वसुराश्चैव<br>देवाश्च सह चारणैः ॥ 18 ॥<br>भवन्तु वशगाः सर्वे<br>मत्समीपानुभोजनाः, ।<br>आर्द्रशुष्कैरवध्यश्च<br>दिवारात्री तथैव च ॥ $18_1$ ॥ | दानवाश्चासुराश्चैव<br>देवाः समा भवन्तु वै ।<br>मारुतेर्यन्महैश्वर्यं<br>मेष मे दीयतां वरः ॥ 18 ॥ |
| एवमुक्तस्तदा ब्रह्मा-<br>नुजज्ञे सान्तरं वरम् ।<br>महानयं वरस्तात<br>वृतो दितिसुत त्वया ॥ 19 ॥<br>एहीदानीं प्रतिज्ञानं<br>भविष्यत्ये[1]वमेव तु<br>दत्त्वा चाभिमतं तस्मै<br>तत्रैवान्तरधीयत[2]) ॥ $19_1$ ॥ | एवमुक्तोऽथ ब्रह्मा तु<br>तस्मै दत्त्वा यथेप्सितम् ।<br>दत्त्वा तस्मै वरान् दिव्यां-<br>स्तत्रैवान्तरधीयत ॥ 19 ॥ |

---

11 = [Bd.2]; Vā. 67.57. 1) Bd.2 –र्थानाद् ।
12 = [Bd.2]; Vā. 67.58^ab. 1) Bd.2 –र्भे हि विसृत्य ।
13 = Bd. II. 5.10^b, 11^a; Vā. 67.58^c, 59^a. 1) Vā. –नपत्रमान् वेदान् । 2) Vā. का– ।
14 = Bd. II. 5.11^b, 12^a; Vā. 67.59^b, 60^a. 1) Vā. मुनय– । 2) Bd. –म कुर्वन्ति । 3) Bd. वर्धितम् । 4) Vā. विश्रुतः ।
15 = Bd. II. 5.12^b, 13^a; Vā. 67.60^bc.
16 = Bd. II. 5.13^b, 14^a; Vā. 67.61.
17 = Bd. II. 5.14^b, 15^a; Vā. 67.62^ab. 1) Bd. वरयामास ब्रह्माणं तुष्टं दैत्यो । 2) Vā. –त्वं विप्रेशाः । 3) Bd. हि ।
18^a = Bd. II. 5.15^b; Vā. 67.62^c.

| | |
|---|---|
| 18^bc = Bd. II. 5.16.<br>$18_1$ = Bd. II. 5.17^ab.<br>19 = Bd. II. 5.17^c, 18^a.<br>$19_1$ = Bd. II. 5.18^b, 19^a. 1) Bd.2 –ष्यते– ।<br>2) Bd.1 –रधीयत । | 18^bc = Vā. 67.63.<br>19 = Vā. 67.64^ab. |

सोऽपि दैत्यस्तदा सर्वं
जगत्[1]) स्थावरजंगमम् ।
महिम्ना व्याप्य संतस्थे
बहुमूर्तिरमित्रजित् ॥ $19_2$ ॥
स एव तपति व्योम्नि
चन्द्रसूर्यत्वमास्थितः, ।
स एव वायुर्भूत्वा च
ववौ जगति सर्वदा, ॥ $19_3$ ॥
स गोपालो विपालश्च
कर्षकश्च स एव हृ, ।
स ज्ञाता सर्वलोकेषु
मन्त्रव्याख्याकरस्तथा, ॥ $19_4$ ॥
नेता गोप्ता गोपयिता
दीक्षितो याजकः स तु ।
तस्य देवाः सुराः सर्वे
तदासन् सोमपायिनः ॥ $19_5$ ॥
एवंप्रभावो दैत्योऽसा-
वतो भूयो निबोधत ! ।
तस्मै सर्वे नमस्कारं
कुर्वन्तीज्यः स एव च ॥ $19_6$ ॥

हिरण्यकशिपो[1])र्दैत्यैः श्लोको[2]) गीतः पुरा *त्विह*[3]) ।
हिरण्यकशिपू राजा यां[4]) यामाशां निरैक्षत[5]), ॥ 20 ॥
तस्यै तस्यै तदा[1]) देवा नमश्चक्रुर्महर्षिभिः ।
| एवंप्रभावो दैत्येन्द्रो हिरण्यकशिपुर्द्विजाः, ।
तस्यासीन्नरसिंहस्तु[1]) विष्णुर्मृत्युः[2]) पुरा किल ॥ 21 ॥
नरात्तु यस्माज्जन्मास्य नरमूर्तिश्च यत् प्रभुः ।
तस्मात् स नरसिंहो वै गीयते वेदवादिभिः ॥ $21_1$ ॥
सागरस्य च वेलायामुच्छ्रितस्तपसो विभुः, ।
शरीरं तस्य देवस्य ह्यासीद् देवमयं प्रभो ॥ $21_2$ ॥
नाम्ना सुदर्शनं चैव विश्रुतश्च महाबलः, ।
ततः स बाहुयुद्धेन दैत्येन्द्रं तं महाबलम् ॥ $21_3$ ॥

---

$19_2$ = Bḍ. II. 5.19$^b$, 20$^a$. 1) Bḍ.1 –र्वं गत् ।
$19_3$ = Bḍ. II. 5.20$^b$, 21$^a$.
$19_4$ = Bḍ. II. 5.21$^b$, 22$^a$.
$19_5$ = Bḍ. II. 5.22$^b$, 23$^a$.
$19_6$ = Bḍ. II. 5.23$^b$, 24$^a$.
20 = Bḍ. II. 5.24$^b$, 25$^a$; Vā. 67.64$^c$, 65$^a$. 1) Vā. –रिपु– । 2) Vā. –त्यः श्लोकैर् । 3) Vā. पुरातनैः । 4) Vā. राजा हिरण्यकशिपुर्यां । 5) Vā. निषेवते ।
21$^a$ = Bḍ. II. 5.25$^b$; Vā. 67.65$^b$. 1) Vā. दिशे ।
| 20$^b$ = Vā. 67.66$^a$.
21$^{b(c)}$ = Bḍ. II. 5.26$^a$; Vā. 67.66$^b$. 1) Vā. –हः स । 2) Bḍ. मृत्युर्विष्णुः ।
$21_1$ = Bḍ. II. 5.26$^b$, 27$^a$.
$21_2$ = Bḍ. II. 5.27$^b$, 28$^a$.
$21_3$ = Bḍ. II. 5.28$^b$, 29$^a$.

नखैर्बिभेद संक्रुद्धो[1]) नार्द्र[2]शुष्का नखाः स्मृताः[3]) ॥ 22 ॥
हिरण्याक्षसुताः पञ्च विक्रान्ताः सुमहाबलाः ।
उत्कुरः[1]) शकुनिश्चैव कालनाभस्तथैव च ॥ 23 ॥
महानाभश्च[1]) विक्रान्तो भूतसंतापनस्तथा ; ।
हिरण्याक्षसुता ह्येते देवैरपि दुरासदाः ॥ 24 ॥
तेषां पुत्राश्च पौत्राश्च दैतेयाः सगणाः स्मृताः[1]) ।
शतं तानि[2]) सहस्राणि निहतास्तारकामये ॥ 25 ॥
हिरण्यकशिपोः पुत्राश्चत्वारः सु[1]महाबलाः ।
प्रह्लादः[3]) पूर्वजस्तेषामनुह्लाद[2]स्तथैव च[4]) ॥ 26 ॥
संह्लादश्चैव ह्लादश्च[1]) ह्ला[2]दपुत्रौ[3]) निबोधत ! ।
सुन्दो निसुन्दश्च तथा
ह्लादपुत्रौ बभूवतुः ॥ 27 ॥

| ह्लादो निसुन्दश्च तथा
| ह्लादपुत्रौ बभूवतुः, ।
| सुन्दोपसुन्दौ विक्रान्तौ
| निसुन्दतनयावुभौ ॥ 27 ॥

ब्रह्मघ्नौ तौ महावीरौ
मूकस्तु ह्लाददायकः ।

| ब्रह्मघ्नस्तु महावीर्यो
| मूकस्तु ह्रददायकः[1]) ।

मारीचः सुन्दपुत्रस्तु ताडकायामजायत[1]), ॥ 28 ॥
दण्डके निहतः सो[1]ऽथ राघवेण बलीयसा, ।
मूको विनिहतश्चापि कै[2]राते सव्यसाचिना ॥ 29 ॥
| संह्लादस्य तु दैत्यस्य निवातकवचाः कुले ।
उत्पन्ना महता चैव तपसा भाविताः स्वयम् ॥ 30 ॥
तिस्रः कोटयः सुतास्तेषां[1]) मणिवत्यां[2]) निवासिनाम् ।
अवध्या देवतानां वै निहताः सव्यसाचिना ॥ 31 ॥
| अनुह्लादसुतो वायुः सिनीवाली तथैव च, ।
| तेषां तु शतसाहस्रो गणो हालाहलः स्मृतः ॥ $31_1$ ॥
| विरोचनस्तु प्राह्ला[1]दिः, पञ्च तस्यात्मजाः स्मृताः ।
| गवेष्ठी कालनेमिश्च जम्भो बाष्कल एव च, ॥ $31_2$ ॥

---

22 = Bḍ. II. 5.29b; Vā. 67.66c. 1) Vā. –खैस्तु तेन निर्मिन्ना । 2) Bḍ. –र्द्राः । 3) Bḍ. –खा इति ।
23 = Bḍ. II. 5.30; Vā. 67.67. 1) Bḍ. शंबरः ।
24 = Bḍ. II. 5.31; Vā. 67.68. 1) Bḍ. –मः सु– ।
25 = Bḍ. II. 5.32; Vā. 67.69. 1) Bḍ.2 जालेयसगणाः स्मृताः; Vā. वाडेयः स गणः स्मृतः । 2) Bḍ. स शतानि ।
26 = Bḍ. II. 5.33; Vā. 67.70ab. 1) Vā. –रस्तु । 2) Bḍ. Vā. –ह्लादः । 3) Vā. –ह्लाद– । 4) Bḍ. –स्तथापरः ।
27a = Bḍ. II. 5.34a; Vā. 67.70c. 1) Vā. –दश्च ह्रदश्चैव । 2) Vā. ह्र– । 3) Vā. –त्रान् ।
27b = Bḍ. II. 5.34b.
28a = Bḍ. II. 5.35a.
| 27bc = Vā. 67.71.
| 28a = Vā. 67.72a. 1) T. –दायिनः ।
28b = Bḍ. II. 5.35b; Vā. 67.72b. 1) Vā. –कासुपपद्यते ।
29 = Bḍ. II. 5.36; Vā. 67.73. 1) Vā. T. ताडका निहता सा– । 2) Vā. T. कि– ।
| 30a = Bḍ. II. 5.37a.
30b = Bḍ. II. 5.37b; Vā. 67.74a.
31 = Vā. 67.74bc. 1) Vā. T. –टयस्तु तेषां वै । 2) Vā. T. –वतं– ।
| $31_1$ = Vā. 67.75.
| $31_2$ = Vā. 67.[illegible] 1) Vā. –[illegible]– ।

शम्भुः षष्ठोऽनुज[1]स्तेषां, स्मृताः प्रह्लादि[2]सूनवः ।
यथाप्रधानं वक्ष्यामि तेषां पुत्रान् दुरासदान् ॥ $31_3$ ॥
शुम्भश्चैव निशुम्भश्च विष्वक्सेनो महौजसः ॥

| | |
|---|---|
| अरयो देवतानां ते<br>जम्भस्य शतदुन्दुभिः ।<br>तथा दक्षोऽसुरश्चण्ड-<br>श्चत्वारो दैत्यनायकाः ॥ 32 ॥ | गवेष्ठिनः सुता ह्येते,<br>जम्भस्य शतदुन्दुभिः ॥ $31_4$ ॥<br>तथा दक्षश्च खण्डश्च<br>चत्वारो जम्भसूनवः ।<br>विरोधश्च मनुश्चैव<br>वृक्षायुः कुशलीमुखः ॥ 32 ॥ |

बाष्कलस्य सुता ह्येते, कालनेमेः[1]) सुताञ्शृणु ।
ब्रह्मजित् क्षत्रजि[2]च्चैव देवान्तक-नरान्तकौ, ॥ 33 ॥
कालनेमिसुता ह्येते शम्भोस्तु शृणुत प्रजाः ।

| | |
|---|---|
| राजाजश्चैव गोमांश्च[1])<br>शम्भोः पुत्राः प्रकीर्तिताः[2]) ॥ 34 ॥ | धनुकोऽह्यसिलोमा च<br>नाबलश्च सगोमुखः ।<br>गवाक्षश्चैव गोमांश्च<br>शम्भोः पुत्राः प्रकीर्तिताः ॥ 34 ॥ |

विरोचनस्य पुत्रस्तु[1]) बलिरेकः प्रतापवान् ।
बलेः पुत्रशतं जज्ञे, राजानः सर्व एव ते ॥ 35 ॥
तेषां प्रधानाश्चत्वारो विक्रान्ताः सुमहाबलाः ।
सहस्रबाहुर्ज्येष्ठस्तु[1]), बाणो *द्रविणसंमतः*[2]) ॥ 36 ॥
कुम्भनाभो[1]) गर्दभाक्षः[2]) कुक्षि[3]रित्येवमादयः, ।
शकुनी पूतना चैव कन्ये द्वे तु बलेः सुते[4]) ॥ 37 ॥
बलेः पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।
वालेया[1]) नाम विख्याता[2]) गणा[3]) विक्रान्तपौरुषाः[4]) ॥ 38 ॥
बाणस्य चेन्द्रधन्वा तु[1]) लौहित्या[2]मुदपद्यत[3]) ।
दितिर्विनष्ट[4]पुत्रा वै तोषयामास कश्यपम् ॥ 39 ॥
तां[1]) कश्यपः प्रसन्नात्मा, सम्यगाराधितस्तया[2]), ।
वरेण छन्दयामास, सा च वव्रे वरं ततः ॥ 40 ॥

---

31₃ = Vā. 67.76ᶜ, 77ᵃ. 1) Vā. T. –म्भुस्तु अनुज– । 2) Vā. T. प्रह्लाद– ।
31₄ = Vā. 67.77ᵇ, 78ᵃ.

32 = Bḍ. II. 5.38. | 32 = Vā. 67.78ᵇ, 79ᵃ.

33 = Bḍ. II. 5.39; Vā. 67.79ᵇ, 80ᵃ. 1) Vā. –मि– । 2) Bḍ. क्रतुजि– ।

34ᵃ = Bḍ. II. 5.40ᵃ; Vā. 67.80ᵇ.

34ᵇ = Bḍ. II. 5.40ᵇ. 1) Bḍ.1 –मश्च । 2) Bḍ.1 –श्चौ प्रकीर्तितौ । | 34ᵇᶜ = Vā. 67.81ᵃᵇ.

35 = Bḍ. II. 5.41; Vā. 67.82. 1) Bḍ.1 –त्रश्च; Bḍ.2 –त्रस्य ।

36 = Bḍ. II. 5.42; Vā. 67.83ᵃᵇ. 1) Bḍ.1 –हुः श्रेष्ठोऽभूद् ; Bḍ.2 –हुः श्रेष्ठस्तु । 2) Bḍ. राजा प्रतापवान् ।

37 = Bḍ. II. 5.43; Vā. 67.83ᶜ, 84ᵃ. 1) Bḍ. –गर्तौ । 2) Bḍ.1 दयोमोजः; Bḍ.2 गर्दमोजः । 3) Bḍ. कुक्षि–; Vā. कुक्षि– । 4) Bḍ.1 स्मृते ।

38 = Bḍ. II. 5.44; Vā. 67.84ᵇ, 85ᵃ. 1) Bḍ.2 वातेयौ; Vā. वलियों । 2) Bḍ.2 –तौ; Vā. –तो । 3) Bḍ.2 –णौ; Vā. –णो । 4) Bḍ.2 Vā. –षः ।

39 = Bḍ. II. 5.45; Vā. 67.85ᵇ, 86ᵃ. 1) Vā. चेन्द्रमनसो । 2) Bḍ. –हित्या–; Vā. लौहित्य– । 3) Vā. –मुपपद्यते । 4) Bḍ. –विहित– ।

40 = Bḍ. II. 5.46; Vā. 67.86ᵇ, 87ᵃ. 1) Vā. स । 2) Bḍ. –स्तथ ।

स तु1) तस्यै वरं प्रादात् प्रार्थितो2) भगवान् प्रभुः3) ।

उक्ते1) वरे तु सा तुष्टा
दितिस्तं समभाषत ॥ 41 ॥

| किमिच्छसीति चाप्युग्रो
| मारीचस्तामभाषत ॥ 41 ॥

मारीचं कश्यपं देवी1) भर्तारं प्राञ्जलिस्तदा2) ।
हतपुत्राऽस्मि भगवन्नादित्यैस्तव सूनुभिः; ॥ 42 ॥
शक्रहन्तारमिच्छामि1) पुत्रं दीर्घतपोर्जितम्2) ।
अहं3) तपश्चरिष्यामि गर्भमाधातुमर्हसि ॥ 43 ॥
| पुत्रमिन्द्रवधे युक्तं त्वं मे वै दातुमर्हसि ।
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तदा1) ।
प्रत्युवाच महातेजा दितिं परमदुःखिताम्2) ॥ 44 ॥
एवं भवतु, भद्रं ते1), शुचिर्भव तपोधने ! ।
जनयिष्यसि पुत्रं त्वं2) शक्रहन्तारमाहवे ॥ 45 ॥
पूर्णं वर्षसहस्रं तु शु1चिर्यदि भविष्यसि, ।
पुत्रं त्रिलोकप्रवर2मथ त्वं3) जनयिष्यसि ॥ 46 ॥
एवमुक्त्वा महातेजास्तया समवसत्1) तदा2) ।
तामालिङ्ग्य3) स्व4भवनं जगाम भगवानृषिः ॥ 47 ॥
गते भर्तरि सा देवी दितिः परमहर्षिता ।
कुशप्लवन1मासाद्य तपस्तेपे सुदारुणम् ॥ 48 ॥
| शक्रस्तु समुपश्रुत्य संवादं तं तयोः प्रभुः ।
| कुशप्लवनमागम्य दितिं वाक्यमभाषत ॥ $48_1$ ॥
| शुश्रूषां ते करिष्यामि माऽनुज्ञां दातुमर्हसि, ।
| समिधश्चाहरिष्यामि पुष्पाणि च फलानि च ॥ $48_2$ ॥
| यथा त्वं मन्यसे वत्स शुश्रूषाभिरतो भव, ।
| सर्वकर्मसु निष्णात आत्मनो हितमाचर ! ॥ $48_3$ ॥

वरं श्रुत्वा तु तद्वाक्यं
मातुः शक्रः प्रहर्षितः ।
शुश्रूषाभिरतो भूत्वा
कलुषेणान्तरात्मना ॥ 49 ॥

| तपस्तस्यां तु कुर्वत्यां
| परिचर्यां चकार ह ।
| सहस्राक्षः सुरश्रेष्ठः
| परया गुणसंपदा ॥ 49 ॥

---

41[a] = Bḍ. II. 5.47[a]; Vā. 67.87[b]. 1) Bḍ. अथ । 2) Vā. –तं । 3) Bḍ. पुनः ।
41[b] = Bḍ. II. 5.47[b]. 1) Bḍ.2 लब्धे । | 41[b] = Vā. 67.87[c].
42 = Bḍ. II. 5.48; Vā. 67.88. 1) Vā. तुष्टं । 2) Vā. –स्तथा ।
43 = Bḍ. II. 5.49; Vā. 67.89. 1) Vā. –मिच्छेयं । 2) Vā. –ऽन्वितम् । 3) Bḍ. साहं ।
| 44[a] = Bḍ. II. 5.50[a].
44[bc(ab)] = Bḍ. II. 5.50[b], 51[a]; Vā. 67.90. 1) Vā. –स्तथा । 2) Bḍ. –तः ।
45 = Bḍ. II. 5.51[b], 52[a]; Vā. 67.91. 1) Bḍ. गर्भे तु । 2) Vā. T. –ष्यति सत्पुत्रं ।
46 = Bḍ. II. 5.52[b], 53[a]; Vā. 67.92. 1) Vā. T. –र्षशतं तावच्छु– । 2) Vā. T. प्रवर– । 3) Bḍ. –मन्मथं ।
47 = Bḍ. II. 5.53[b], 54[a]; Vā. 67.93. 1) Bḍ. –स्तथा सममवत् । 2) Vā. प्रभुः । 3) Bḍ. –मालभ्य । 4) Vā. त्रिभु– ।
48 = Bḍ. II. 5.54[b], 55[a]; Vā. 67.94. 1) Vā. T. कुशलं वन– ।
| $48_1$ = Bḍ. II. 5.55[b], 56[a].
| $48_2$ = Bḍ. II. 5.56[b], 57[a].
| $48_3$ = Bḍ. II. 5.57[b], 58[a].
49 = Bḍ. II. 5.58[b], 59[a]. | 49 = Vā. 67.95,

शुश्रूषते तु तां शक्रः
सर्वकालमनुव्रतः ।
फलपुष्पाण्युपादाय
समिधश्च दृढव्रतः ॥ 50 ॥

अग्निं समित्कुशं काष्ठं
फलं मूलं तथैव च ।
न्यवेदयत् सहस्राक्षो
यच्चान्यदपि किंचन ॥ 50 ॥

गात्रसंवाहनैश्चैव[1]) श्रमापनयनैस्त[2])था ।
शक्रः सर्वेषु कालेषु[3]) दितिं परिचचार ह ॥ 51 ॥

किञ्चिच्छिष्टे व्रते देवी
तुष्टा शक्रमुवाच ह ।

एवमाराधिता शक्र-
मुवाचाथ दितिस्तथा ।

प्रीताहं ते[1]) सुरश्रेष्ठ, दश वर्षाणि पुत्रक ॥ 52 ॥
अवशिष्टानि, भद्रं ते, भ्रातरं द्रक्ष्यसे ततः ।

तमहं त्वत्कृते पुत्र
सह धास्ये जयैषिणम्, ॥ 53 ॥

जयलिप्सुं समाधास्ये
लब्ध्वाहं तादृशं सुतम्, ॥ 53 ॥

त्रैलोक्यविजयं पुत्र भोक्ष्यसे[1]) सह तेन वै ।

नाहं पुत्राभिजानामि
मद्भक्तिगतमानसम् ॥ 54 ॥

एवमुक्त्वा दितिः शक्रं मध्यं प्राप्ते दिवाकरे ।

निद्रयाऽपहृता देवी
शिरः कृत्वा तु जानुनि ॥ 55 ॥
केशान् कृत्वा तु पादस्थान्
सा सुष्वाप देवता ।
अधस्ताद् यत् तु ना[1]भेर्वै
सर्वं तदशुचि स्मृतम् ॥ $55_1$ ॥
ततस्तामशुचिं ज्ञात्वा
सोऽन्तरं तदमन्यत ।
दृष्ट्वा तु[1]) कारणं सर्वं
तस्य बुद्धिरजायत ॥ 56 ॥
गर्भं निहन्तुं वै देव्याः;
स हि दोषोऽत्र दृश्यते ।
ततो विवेश दित्या वै
ह्युपस्थितेनोदरं वृषा ॥ 57 ॥

निद्रयाऽपहृता देवी
जान्वोः कृत्वा शिरस्तदा ॥ 55 ॥
दृष्ट्वा तामशुचिं शक्रः
पादयोर्गतमूर्धजाम् ॥ 56 ॥
तस्यास्तदन्तरं लब्ध्वा
जहास च मुमोद च ।
तस्याः शरीरं विवृतं
विवेशाथ पुरंदरः ॥ 57 ॥

प्रविश्य चापि तं[1]) दृष्ट्वा गर्भमिन्द्रो महौजसम् ।

---

50 = Bḍ. II. 5.59[b], 60[a]. | 50 = Vā. 67.96.

51 = Bḍ. II. 5.60[b], 61[a]; Vā. 67.97[ab]. 1) Bḍ. –वाहनं काले । 2) Bḍ. –यने त– । 3) Vā. लोकेषु ।

52[a] = Bḍ. II. 5.61[b]. | 52[a] = Vā. 67.97[c].

52[b] = Bḍ. II. 5.62[a]; Vā. 67.98[a]. 1) Vā. –ता तेऽहं ।

53[a] = Bḍ. II. 5.62[b]; Vā. 67.98[b].

53[b] = Bḍ. II. 5.63[a]. | 53[b] = Vā. 67.99[a].

54[a] = Bḍ. II. 5.63[b]; Vā. 67.99[b]. 1) Vā. प्राप्स्यामि ।

54[b] = Bḍ. II. 5.64[a].

55[a] = Bḍ. II. 5.64[b]; Vā. 67.100[a].

55[b] = Bḍ. II. 5.65[a]. | 55[b] = Vā. 67.100[b].

$55_1$ = Bḍ. II. 5.65[b], 66[a]. 1) Bḍ. T. तथा– ।

56 = Bḍ. II. 5.66[b], 67[a]. 1) Bḍ. T. तत् । | 56 = Vā. 67.101[a].

57 = Bḍ. II. 5.67[b], 68[a]. | 57 = Vā. 67.101[b], 102[a].

58[a] = Bḍ. II. 5.68[b]; Vā. 67.102[b]. 1) Vā. चामितं ।

भीतस्तं सप्तधा गर्भं
बिभेद रिपुमात्मनः ॥ 58 ॥

अभिनत् सप्तधा तं तु
कुलिशेन महायशाः ॥ 58 ॥

*भिद्यमानस्तदा गर्भो*[1]) वज्रेण शतपर्वणा ।
रुरोद स[2]स्वरं भीमं वेपमानः पुनः पुनः ॥ 59 ॥
मा रोदीरिति तं[1]) गर्भं शक्रः पुनर[2]भाषत ।
तं गर्भं सप्तधा कृत्वा ह्येकैकं सप्तधा पुनः ॥ 60 ॥
कुलिशेन बिभेदेन्द्रस्ततो दितिरबुध्यत ।
न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ॥ 61 ॥
निष्पपातोदराद्[1]) वज्री मातुर्वचनगौरवात्, ।
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥ 62 ॥
अशुचिर्देवि सुप्ताऽसि पादयोर्गतमूर्धजा, ।
तदन्तर*महं लब्ध्वा*[1]) शक्र[2]हन्तार[3]माहवे ॥ 63 ॥
भिन्नवान् गर्भं[1]मेतं ते बहुधा, क्षन्तुमर्हसि ।
तस्मिंस्तु विफले गर्भे दितिः परमदुःखिता ॥ 64 ॥
सहस्राक्षं दुराधर्षं वाक्यं[1]) सानुनया[2]ब्रवीत् ।
ममापराधाद्गर्भोऽयं यदि ते विफलीकृतः, ॥ 65 ॥
नापराधोऽस्ति देवेश *तव*[1]), पुत्र महाबल ! ।
शत्रोर्वधे न दोषोऽस्ति *भेतव्यं न च ते विभो*[2]) ॥ 66 ॥
प्रियं तु कृत[1]मिच्छामि, श्रेयो गर्भस्य मे कुरु[2]) ।
भवन्तु मम पुत्राणां सप्त स्थानानि वै दिवि, ॥ 67 ॥
वातस्कन्धानिमान् सप्त चरन्तु मम पुत्रकाः, ।
*मरुतश्चेति*[1]) विख्याता गणा[2]स्ते सप्त सप्तकाः ॥ 68 ॥
पृथिव्यां प्रथमस्कन्धो द्वितीयश्चैव[1]) भास्करे, ।
सोमे तृतीयो विज्ञेयश्चतुर्थो ज्योतिषां गणे, ॥ 69 ॥
ग्रहेषु पञ्चमश्चैव षष्ठः सप्तर्षिमण्डले, ।
ध्रुवे तु सप्तमश्चैव वातस्कन्धः परस्तु सः[1]) ॥ 70 ॥
तानेते विचरन्त्वद्य काले काले ममात्मजाः ।
*वातस्कन्धाधिपा*[1]) भूत्वा चरन्तु मम पुत्रकाः ॥ 71 ॥

---

58[b] = Bḍ. II. 5.69[a]. | 58[b] = Vā. 67.102[c].

59 = Bḍ. II. 5.69[b], 70[a]; Vā. 67.103[ab]. 1) Bḍ. स गर्भो भिद्यमानस्तु । 2) Bḍ. सु– ।

60 = Bḍ. II. 5.70[b], 71[a]; Vā. 67.103[c], 104[a]. 1) Bḍ. मा रोद मा रोद इति । 2) Bḍ. –क्रोऽभ्य ।

61 = Bḍ. II. 5.71[b], 72[a]; Vā. 67.104[b], 105[a].

62 = Bḍ. II. 5.72[b], 73[a]; Vā. 67.105[bc]. 1) Bḍ. –पात ततो ।

63 = Bḍ. II. 5.73[b], 74[a]; Vā. 67.106[ab]. 1) Bḍ. –रमनुप्राप्य । 2) Bḍ. गर्भं । 3) Bḍ. हतार– ।

64 = Bḍ. II. 5.74[b], 75[a]; Vā. 67.106[c], 107[a]. 1) Bḍ. –वानह्– ।

65 = Bḍ. II. 5.75[b], 76[a]; Vā. 67.107[b], 108[a]. 1) Vā. –क्षं ततो वाक्यं सा । 2) Vā. –नयम– ।

66 = Bḍ. II. 5.76[b], 77[a]; Vā. 67.108[b], 109[a]. 1) Vā. T. ऋपि– । 2) Bḍ.2 तेनैवं नशने विभोः; Vā. तेन त्वां न शपामि भोः ।

67 = Bḍ. II. 5.77[b], 78[a]; Vā. 67.109[b], 110[a]. 1) Vā. T. कर्तु– । 2) Bḍ. कुतः ।

68 = Bḍ. II. 5.78[b], 79[a]; Vā. 67.110[bc]. 1) Bḍ. –स्ते तु । 2) Bḍ. गता– ।

69 = Bḍ. II. 5.79[b], 80[a]; Vā. 67.111. 1) Bḍ. –श्चापि ।

70 = Bḍ. II. 5.80[b], 81[a]; Vā. 67.112. 1) Bḍ.1 –न्धाश्च सप्त ये; Bḍ.2 –न्धासवश्च यः ।

71 = Bḍ. II. 5.81[b], 82[a]; Vā. 67.113. 1) Vā. –न्धानिमान् ।

पृथिव्यां प्रथमस्कन्ध आ मेघे[1]भ्यो य आवहः, ।
चरन्तु मम पुत्रास्ते, सप्त ये[2]) प्रथमे गणे ॥ 72 ॥
द्वितीयश्चापि मेघे[1]भ्य आ सूर्यात् प्रवहस्ततः[2]), ।
वातस्कन्धो हि विज्ञेयो[3]) द्वितीयश्चरतां गणः ॥ 73 ॥
सूर्याद्रू[1]र्ध्वमधः[2]) सोमादुद्वहो यः[3]) स[4]) वै स्मृतः, ।
वातस्कन्धस्तृतीयश्च पुत्राणां च[5]रतां गणः ॥ 74 ॥
सोमादूर्ध्वमध[1]र्क्षेभ्यश्चतुर्थः सं[2]वहस्तु यः[3]), ।
चतुर्थो मम पुत्राणां गणस्तु चरतां विभो ॥ 75 ॥
ऋक्षे[1]भ्यश्च तथैवोर्ध्वमा ग्रहाद् विवहस्तु यः, ।
वातस्कन्धः पञ्चमस्तु पुत्राणां[2]) चरतां गणः ॥ 76 ॥

| | |
|---|---|
| ग्रहेभ्य ऊर्ध्वमा ऋषिभ्यः | ऊर्ध्वं ग्रहादृषिभ्यस्तु |
| षष्ठो ह्यनुवहश्च यः, । | षष्ठो यो वै परावहः, । |
| वातस्कन्धस्तत्र मम | चरन्तु मम पुत्रास्तु, |
| पुत्राणां चरतां गणः ॥ 77 ॥ | तत्र षष्ठे गणे तु ये ॥ 77 ॥ |
| ऋषिभ्य ऊर्ध्वमाध्रौवं | सप्तर्षयस्तथैवोर्ध्व- |
| सप्तमो यः प्रकीर्तितः, । | मा ध्रुवात् सप्तमस्तु यः, । |

वातस्कन्धः परिवहस्तत्र तिष्ठन्तु मे सुताः ॥ 78 ॥
एतान् सर्वांश्चरन्त्वेते[1]) काले काले ममात्मजाः, ।
त्वत्कृतेन च नाम्नां वै भवन्तु मरुतस्त्विमे ॥ 79 ॥

| | |
|---|---|
| ततस्तेषां तु नामानि | ततस्तेषां तु नामानि |
| मत्पुत्राणां शतक्रतो । | मातापुत्रौ प्रचक्रतुः । |
| तद्विधैः कर्मभिश्चैव | तत्कृते कर्मभिश्चैव |
| समवेहि पृथक् पृथक् ॥ 80 ॥ | मरुतो वै पृथक् पृथक् ॥ 80 ॥ |
| शक्रज्योतिस्तथा सत्यः | सत्यज्योतिस्तथादित्यः |
| सत्यज्योतिस्तथापरः । | सत्यज्योतिस्तथापरः ॥ |
| चित्रज्योतिश्च ज्योतिष्मान् | तिर्यग्ज्योतिश्च सज्योति- |
| सुतपाश्चैत्य एव च ॥ 81 ॥ | र्ज्योतिष्मान् हरित[1]स्तथा ॥ 81 ॥ |

प्रथमोऽय[1]) गणः प्रोक्तो, द्वितीयं तु[2]) निबोधत ।
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित् तथा ॥ 82 ॥

---

72 = Bḍ. II. 5.82$^{b}$, 83$^{a}$; Vā. 67.114. 1) Vā. मेघे- । 2) Vā. -मे ।
73 = Bḍ. II. 5.83$^{b}$, 84$^{a}$; Vā. 67.115. 1) Vā. मेघ्ये- । 2) Vā. -स्तु यः । 3) Vā. -र्थं द्वितीयं तु ।
74 = Bḍ. II. 5.84$^{b}$, 85$^{a}$; Vā. 67.116. 1) Vā. T. सूर्योर्ध्वं तु । 2) Vā. ततः । 3) Bḍ. -ऽथ यः । 4) Vā. यस्तु । 5) Vā. -स्कन्धं तृतीयस्तु तं प्राहुश्च- ।
75 = Bḍ. II. 5.85$^{b}$, 86$^{a}$; Vā. 67.117. 1) Vā. -र्ध्वं तथ- । 2) Vā. सु- । 3) Bḍ. सः ।
76 = Bḍ. II. 5.86b, 87$^{a}$; Vā. 67.118. 1) Vā. यक्षे- । 2) Vā. पञ्चमं पञ्चमः सौम्यः स्कन्धस्तु ।

| | |
|---|---|
| 77 = Bḍ. II. 5.87$^{b}$, 88$^{a}$. | 77 = Vā. 67.119. |
| 78$^{a}$ = Bḍ. II. 5.88$^{b}$. | 78$^{a}$ = Vā. 67.120$^{a}$. |

78$^{b}$ = Bḍ. II. 5.89$^{a}$; Vā. 67.120$^{b}$.
79 = Bḍ. II. 5.89$^{b}$, 90$^{a}$; Vā. 67.121. 1) Vā. एतद् सर्वं चरन्त्येते ।

| | |
|---|---|
| 80 = Bḍ. II. 5.90$^{b}$, 91$^{a}$. | 80 = Vā. 67.122. |
| 81 = Bḍ. II. 5.91$^{b}$, 92$^{a}$. | 81 = Vā. 67.123. 1) Vā. T. -ष्मानपर- । |

82 = Bḍ. II. 5.92$^{b}$, 93$^{a}$; Vā. 67.124. 1) Vā. -मस्तु । 2) Vā. मे ।

| | |
|---|---|
| सुतमित्रो ह्यमित्रश्च<br>सुरमित्रस्तथापरः । | सत्यमित्रो ह्य¹मित्रश्च<br>हरिमित्रस्तथापरः । |

गण एष द्वितीयस्तु, तृतीयं च¹) निबोधत ॥ 83 ॥

| | |
|---|---|
| धातुश्च धनदश्चैव<br>ह्युग्रो भीमस्तथैव च ॥ 84 ॥ | ऋतः सत्यो ध्रुवो धर्ता<br>विधर्ताथ विधारयः ।<br>ध्वान्तश्चैव धुनिश्चैव<br>ह्युग्रो भीमस्तथैव च ॥ 84 ॥ |
| वरुणश्च तृतीयं च<br>मया प्रोक्तं निबोधत ।।<br>अभियुक्ताक्षिकश्चैव<br>साह्वयश्च गणः स्मृतः ॥ 85 ॥ | अभियुः साक्षिपश्चैव-<br>माह्वयश्च गणः स्मृतः । |
| ईदृक् चैव तथान्यादृक्<br>ससरिद्-द्रुम-वृक्षकाः¹) । | ईदृक् चैव तथान्यादृग्<br>यादृक् च प्रतिकृत् तथा ॥ 85 ॥ |
| मितश्च समितश्चैव<br>पञ्चमश्च तथा गणः ॥ 86 ॥ | ऋक् तथा समितिश्चैव<br>संरम्भश्च तथा गणः । |
| ईदृक् च पुरुषश्चैव<br>नान्यादृक् समचेतनः । | ईदृक् च पुरुषश्चैव<br>अन्यादृक्षाश्च चेतसः ॥ 86 ॥ |
| संमितः समवृत्तिश्च<br>प्रतिहर्ता च वै¹) गणाः ॥ 87 ॥ | समितासमिदृक्षाश्च<br>प्रतिदृक्षाश्च वै गणाः ।<br>मरुतिद्रसरतश्चैव (?)<br>तथा देवो दिशोऽपरः ॥ 87 ॥ |
| यज्ञैश्चित्वास्तुवन् सर्वे<br>तथान्ये मानुषा विशः । | यजुश्चैवानुदृक् साम-<br>स्तथान्यो मानुषीविशः । |

दैत्या¹) देवाः समाख्याताः²) सप्तैते सप्तका गणाः³) ॥ 88 ॥
एते ह्येकोनपञ्चाशन् मरुतो नामतः स्मृताः ।
प्रसंख्यातास्तदा¹) ताभ्यां दित्या शक्रेण²) चैव वै³) ॥ 89 ॥
कृत्वा तेषां तु¹) नामानि दितिरिन्द्रमुवाच ह ।
वातस्कन्धाश्च²रन्त्वेते भ्रातरो³) मम पुत्रकाः⁴) ॥ 90 ॥
विचरन्तु च भद्रं ते देवैः सह ममात्मजाः ।
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः ॥ 91 ॥

---

| | |
|---|---|
| 83^a = Bḍ. II. 5.93^b.<br>83^b = Bḍ. II. 5.94^a; Vā. 67.125^b. 1) Vā. मे । | 83^a = Vā. 67.125^a. 1) Vā. T. –ऽमि– । |
| 84 = Bḍ. II. 5.94^b. | 84 = Vā. 67.126^ab. |
| 85 = Bḍ. II. 5.95. | 85 = Vā. 67.126^c, 127^a. |
| 86 = Bḍ. II. 5.96. 1) Bḍ.2 ईदृक् च परिदृक् तथा । | 86 = Vā. 67.127^b, 128^a. |
| 87 = Bḍ. II. 5.97. 1) Bḍ.1 च षड् ; Bḍ.2 प्रतिह(र्?)क्षा च वै । | 87 = Vā. 67.128^b, 129^a |
| 88^a = Bḍ. II. 5.98^a. | 88^a = Vā. 67.129^b. |

88^b = Bḍ. II. 5.98^b; Vā. 67.129^c. 1) Bḍ. दैत्य– । 2) Bḍ. –ता । 3) Bḍ. सप्तसप्तकाः ।
89 = Bḍ. II. 5.99; Vā. 67.129₁. 1) Vā. –स्तथा । 2) Vā. चेन्द्रेण । 3) Vā. हि ।
90 = Bḍ. II. 5.100; Vā. 67.130^ab. 1) Bḍ. चैतानि । 2) Vā. –न्त्वं च– । 3) Bḍ.2 महेन्द्र । 4) Vā. मम पुत्राश्च पुत्रक ।
91 = Bḍ. II. 5.101; Vā. 67.130^c, 131^a.

उवाच प्राञ्जलिर्भूत्वा मातर्भवतु तत् तथा, ।
सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ 92 ॥
देव[1]भूता महात्मानः कुमारा देव[2]संमताः ।
देवैः सह भविष्यन्ति यज्ञभाजस्तवात्मजाः ॥ 93 ॥
तस्मात् ते मरुतो देवाः सर्वे चेन्द्रानुजा वराः[1]) ।
विज्ञेयाश्चामराः सर्वे दितिपुत्रास्तप[2]स्विनः ॥ 94 ॥
एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने[1]) ।
जग्मतुस्त्रिदिवं हृष्टौ, शक्रश्चा[2]भूद् गतज्वरः[3]) ॥ 95 ॥
मरुतां च[1]) शुभं जन्म शृणुयाद् यः पठेच्च[2]) वा, ।

| | |
|---|---|
| वादे विजयमाप्नोति<br>लब्धात्मा च भवत्युत ॥ 96 ॥ | नावृष्टिभयमाप्नोति<br>बह्वायुश्च भवन्त्युत ॥ 96 ॥ |

---

92 = Bḍ. II. 5.102; Vā. 67.131$^{b}$, 132$^{a}$.

93 = Bḍ. II. 5.103; Vā. 67.132$^{bc}$. 1) Bḍ. एवं– । 2) Bḍ. लोक– ।

94 = Bḍ. II. 5.104; Vā. 67.133. 1) Vā. –जामराः । 2) Bḍ. –स्तर– ।

95 = Bḍ. II. 5.105; Vā. 67.134. 1) Vā. –पोषनौ । 2) Bḍ. –क्रमा– । 3) Vā. शक्रोऽपि त्रिदिवं गतः ।

96$^{a}$ = Bḍ. II. 5.106$^{a}$; Vā. 67.135$^{a}$. 1) Vā. हि । 2) Vā. पठेत ।

96$^{b}$ = Bḍ. II. 5.106$^{b}$. | 96$^{b}$ = Vā. 67.135$^{b}$.

## D.

( Bd. II. 6.1—39; Vā. 68.1—39. )

| अत ऊर्ध्वं प्रवक्ष्यामि दनुपुत्रान् निबोधत ! ।
अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः ! ।
विप्रचित्तिप्रधानास्ते शतं तीव्र[1]पराक्रमाः ॥ 1 ॥

सर्वे लब्धवराश्चैव सु[1]तप्ततपसस्तथा ।
सत्यसंधाः पराक्रान्ताः क्रूरा मायाविनश्च ते; ॥ 2 ॥

महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः[1]) ।
कीर्त्यमानान् मया सर्वान् प्राधान्येन निबोधत ॥ 3 ॥

द्विमूर्धा शंबरश्चैव[1]) तथा शङ्कुर्निरामयः[2]) ।
शङ्कुकर्णो विपादश्च[3]) गवेष्ठिर्दु[4]न्दुभिस्तथा ॥ 4 ॥

अयोमुखस्तु[1]) मघवान् कपिलो वामन[2]स्तथा[3]) ।
मारीचिरक्षक[4]श्चैव महामायोऽङ्गिरा भृगी[5]) ॥ 5 ॥

विक्षोभ[1]श्च सुकेतुश्च केतुवीर्यशतह्रदौ[2]) ।
इन्द्रजिद् विश्वजिच्चै[3]व तथा भद्रश्च देवजित्[4]) ॥ 6 ॥

एकचक्रो महाबाहुस्ता[1]रकश्च महाबलः ।
वैश्वानरः पुलोमा च प्रापणो[2]ऽथ महाशिराः ॥ 7 ॥

स्वर्भानुर्वृषपर्वा च पुरुण्ड[1]श्च[2]) महासुरः ।
धृतराष्ट्रश्च सूर्यश्च चन्द्रमाश्च[3]न्द्रतापनः[4]) ॥ 8 ॥

सूक्ष्मश्चैव निचन्द्रश्च ऊर्ण[1]नाभो महागिरिः ।
असिलोमा सुकेशश्च शठ[2]श्च बलको मदः[3]) ॥ 9 ॥

---

| 1[a] = Vā. 68.1[a].

1(bc) = Bd. II. 6.1; Vā. 68.1[b], 2[a]. 1) Bd.1 –ऽचिन्तनीय–; Bd.2 सर्वे तीव्र– ।

2 = Bd. II. 6.2; Vā. 68.2[b]. 3[a]. 1) Bd. ते ।

3 = Bd. II. 6.3; Vā. 68.3[bc]. 1) Bd.1 –तास्ते जवना ब्रह्मिष्ठा ये च साग्नयः; Bd.2 –तास्तेजबला ब्रह्मिष्ठाः पञ्चमाग्नयः ।

4 = Bd. II. 6.4; Vā. 68.4. 1) Vā. शङ्कुकर्णश्च । 2) Bd. –ङ्कुरथो विभुः । 3) Vā. महाविश्वो । 4) Bd. गविष्ठो दु– ।

5 = Bd. II. 6.5; Vā. 68.5. 1) Vā. अजामुखोऽथ । 2) Vā. मगवान् शिखो वामनस– । 3) Bd. –नो मयः । 4) Bd. –रसिपा– । 5) Vā. महागार्ग्योऽङ्गिरावृतः ।

6 = Bd. II. 6.6; Vā. 68.6. 1) Vā. –भ्य– । 2) Bd. –ताह्वयौ; Vā. सुवीर्यः सुह्रदस्तथा । 3) Bd. विविदश्चै– । 4) Vā. T. सुरविमर्दनः; V. शूरश्च देवजित् ।

7 = Bd. II. 6.7; Vā. 68.7. 1) Vā. –कः सुबाहुश्च ता– । 2) Vā. T. प्रवीणो–; V. प्रवाणो– ।

8 = Bd. II. 6.8; Vā. 68.8. 1) Vā. मुण्डक– । 2) Bd. –श्चा– । 3) Bd. –मा इ– । 4) Vā. चन्द्र इन्द्रश्च तापिनः ।

9 = Bd. II. 6.9; Vā. 68.9. 1) Bd. चूर्ण– । 2) Vā. सद– । 3) Bd. मुक्कोदरः; Vā. –को दश ।

तथा[1]) गगनमूर्धा च कुम्भनाभो[2]) महोदरः[3]) ।
प्रमदोह[4]श्च कुपथो हय[5]ग्रीवश्च वीर्यवान् ॥ 10 ॥
वैसृपः स[1]विरूपाक्षः सुपथोऽथ[2]) हलाहलौ[3]) ।
अजो[4]) हिरण्मयश्चैव शतमायु[5]श्च शम्बरः ॥ 11 ॥
शरभः शलभश्चैव सूर्याचन्द्रमसावुभौ; ।
असुराणां स्मृतावे[1]तौ सुराणां च प्रभाविणौ[2]) ॥ 12 ॥
इति पुत्रा दनोर्वंशे[1]) प्रधानाः परिकीर्तिताः ।
तेषामपरिसंख्येयं पुत्रपौत्रम[2]नन्तकम् ॥ 13 ॥
इत्येते त्व[1]सुराः प्रोक्ता[2]) दैतेया दानवास्तथा[3]) ।
स्वर्भानु[4]स्तु स्मृतो दैत्यो ह्यनुमानुर्दनोः सुतः[5]), ॥ 14 ॥
इमे तु[1]) वंशानुगता दनोः पुत्रास्तु ये[2]) स्मृताः ।
एकाक्षऋषभोऽरिष्टः[3]) प्रलम्ब-नरकावपि ॥ 15 ॥
इन्द्रबाधनकेशी च मेरुः शम्बोऽथ घेनुकः[1]) ।
गवेष्ठिश्च[2]) गवाक्षश्च तालकेतुश्च वीर्यवान्, ॥ 16 ॥
एते मनुष्यावध्या[1]स्तु दनुपुत्रान्वयाः[2]) स्मृताः ।
दैत्य-दानव-संयोगे[3]) जाता भी[4]मपराक्रमाः, ॥ 17 ॥
सिंहिकायामथोत्पन्ना विप्रचित्तेः[1]) सुतास्त्विमे[2]) ।
सैंहिकेया इति[3]) ख्यातास्चतुर्दश महासुराः ॥ 18 ॥
शलश्च शलभश्चैव सव्यसिव्य[1]स्तथैव च, ।
इल्वलो नमुचि[2]श्चैव वातापिश्च सितांशुकः[3]), ॥ 19 ॥
हरकल्पः कालनाभो भौमश्च कनक[1]स्तथा, ।
राहुर्ज्येष्ठस्तु तेषां वै सूर्यचन्द्र[2]प्रमर्दनः ॥ 20 ॥
इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ।
दारुणाभिजनाः क्रूराः सर्वे ब्रह्मद्विष[1]श्च ते ॥ 21 ॥

---

10 = Bd. II. 6.10; Vā. 68.10. 1) Bd. जम्भो । 2) Bd. –मानो । 3) Bd. –दकः । 4) Bd. प्रमदोऽथ–; Vā. T. प्रमोदाह– । 5) Bd. ह्यश्व– ।

11 = Bd. II. 6.11; Vā. 68.11. 1) Bd. वैमृगः स–; Vā. असुरश्च । 2) Bd. –श्च । 3) Vā. महासुरः । 4) Bd. अश्वो । 5) Bd. शतग्रीव– ।

12 = Bd. II. 6.12; Vā. 68.12. 1) Vā. सुरावे– । 2) Vā. सांप्रताविमौ ।

13 = Bd. II. 6.13; Vā. 68.13. 1) Bd. –वंश– । 2) Vā. –त्राथ– ।

14 = Bd. II. 6.14; Vā. $68.14^{ab}$. 1) Bd. –त्येत अ– । 2) Bd. क्रान्ता । 3) Vā. –वाश्च ये । 4) Vā. सुत्वान– । 5) Bd. –ता दैत्या असुत्वानो दनोः सुताः ।

15 = Bd. II. 6.15; Vā. $68.14^{c}$, $15^{a}$. 1) Bd. च । 2) Bd. –त्रान्वयाः । 3) Bd. एकाक्षेऽश्वप्रोऽस्मारिष्टः ।

16 = Bd. II. 6.16; Vā. $68.15^{b}$, $16^{a}$. 1) Bd. पुरुषः शेषवानुरः । 2) Bd. गरिष्ठश्च ।

17 = Bd. II. 6.17; Vā. $68.16^{b}$, $17^{a}$. 1) Vā. –ध्यधर्मा– । 2) Vā. –नोः पुत्रा मया । 3) Vā. –संघर्षे । 4) Bd. भो– ।

18 = Bd. II. 6.18; Vā. $68.17^{b}$, $18^{a}$. 1) Vā. –चित्ति– । 2) Bd. सुता इमे । 3) Bd. –याः समा– ।

19 = Bd. II. 6.19; Vā. $68.18^{b}$, $19^{a}$. 1) Vā. शतगालश्च बलवान् न्यासः शाम्ब– । 2) Vā. T. अनुलोमः शुचि– । 3) Bd. –पिस्तु सुपुष्किकः ।

20 = Bd. II. 6.20; Vā. $68.19^{b}$, $20^{a}$. 1) Vā. नरक– । 2) Vā. चन्द्रसूर्य– ।

21 = Bd. II. 6.21; Vā. $68.20^{b}$, $21^{a}$. 1) Bd. –ब्राह्मण– ।

दशान्यानि[1]) सहस्राणि सैंहिकेयो गणः स्मृतः[2]), ।
निहतो[3]) जामदग्न्येन भार्गवेण बलीयसा ॥ 22 ॥

स्वर्भानोस्तु प्रभा कन्या, पुलोम्नस्तु[1]) शची सुता, ।
उपदानवी *मयस्यापि*[2]) शर्मिष्ठा वार्षपर्वणी[3]) ॥ 23 ॥

पुलोमा कालिका चैव वैश्वानर-सुते उभे ।
प्रभाया[1]) नहुषः पुत्रो जयन्तश्च[2]) शचीसुतः ॥ 24 ॥

पुरुं जज्ञेऽथ शर्मिष्ठा, दुष्यन्तमुपदानवी, ।
वैश्वानरसुते ह्येते[1]) पुलोमा कालिका[2]) *तथा*[3]) ॥ 25 ॥

बह्वपत्ये[1]) तु ते[2]) कन्ये मारीचस्य परिग्रहः[3]), ।
*तयोः*[4]) पुत्रसहस्राणि षष्टिर्दानवपुंगवाः ॥ 26 ॥

चतुर्दश तथान्यानि हिरण्यपुरवासिनाम् ।
पौलोमाः कालकेयाश्च दानवाः सुमहाबलाः, ॥ 27 ॥

अवध्या देवतानां ते निहताः सव्यसाचिना ।
मयस्य जाता हेमायां[1]) *पुत्राः* षट् च महाबलाः[2]) ॥ 28 ॥

मायावी दुन्दुभिश्चैव वृष[1]श्च महिषस्तथा, ।
काळिकश्चाज[2]कर्णश्च कन्या मन्दोदरी तथा; ॥ 29 ॥

दैत्यानां दानवानां च सर्ग एष प्रकीर्तितः ।
वना[1]युषायाः पुत्रास्तु[2]) स्मृताः पञ्च महाबलाः ॥ 30 ॥

*अररुर्बलवृत्रौ* च *विज्वरश्च* वृष[1]स्तथा ।
अररो[2]स्तनयः क्रूरो धुन्धुर्नाम महासुरः, ॥ 31 ॥

निहतः कुव[1]लाश्वेन उत्तङ्कवचनाद् *विले*[2]) ।
बल[3]पुत्री महावीर्यौ तेजसाप्रतिमावुभौ ॥ 32 ॥

*निकुम्भ*[1]श्चक्रवर्मा च, स कर्णः पूर्वजन्मनि ।
*विज्वर*[2]स्यापि पुत्री द्वौ कालकश्च ख[3]रश्च तौ ॥ 33 ॥

---

22 = Bd. II. 6.22; Vā. 68.21ᵇ, 22ª. 1) Bd. –श तानि । 2) Bd. –या गणाः स्मृताः । 3) Bd. निहता ।
23 = Bd. II. 6.23; Vā. 68.22ᵇ, 23ª. 1) Vā. –म्नोऽथ । 2) Bd. सदस्याथ । 3) Bd. वृषपर्वणः ।
24 = Bd. II. 6.24; Vā. 68.23ᵇ, 24ª. 1) Bd. –यां । 2) Bd. ˙–स्तु ।
25 = Bd. II. 6.25; Vā. 68.24ᵇ, 25ª. 1) Bd. –ते एते । 2) Bd. –लका । 3) Vā. –माकालिके उभे ।
26 = Bd. II. 6.26; Vā. 68.25ᵇ, 26ª. 1) Vā. उभे ह्यपि । 2) Bd. उभे । 3) Vā. –ग्रहे । 4) Vā. ताभ्यां ।
27 = Bd. II. 6.27; Vā. 68.26ᵇ, 27ª.
28 = Bd. II. 6.28; Vā. 68.27ᵇ, 28ª. 1) Bd. रम्भायां । 2) Vā. T. –ता ये पुत्राः सर्वे वीरपराक्रमाः; V. –ता हेमायाः पुत्राः पञ्च महाबलाः ।
29 = Bd. II. 6.29; Vā. 68.28ᵇ, 29ª. 1) Bd. पुत्र– । 2) Vā. वालिको वज्र– ।
30 = Bd. II. 6.30; Vā. 68.29ᵇ, 30ª. 1) Vā. दना– । 2) Bd. –स्ते ।
31 = Bd. II. 6.31; Vā. 68.30ᵇ, 31ª. 1) Vā. अरूरुर्बलि-जम्भौ च विरक्षश्च विप– । 2) Vā. अरूरो– ।
32 = Bd. II. 6.32; Vā. 68.31ᵇ, 32ª. 1) Vā. कुव– । 2) Vā. –नात् किल । 3) Vā. बलेः ।
33 = Bd. II. 6.33; Vā. 68.32ᵇ, 33ª. 1) Vā. कुम्भिल– । 2) Vā. विरक्ष– । 3) Vā. व– ।

वृषस्य तु पुनः[1]) पुत्राश्चत्वारः क्रूरकर्मिणः[2]) ।
श्राद्धहा[3]) यज्ञहा चैव ब्रह्महा पशुहा तथा ॥ 34 ॥

क्रान्ता ह्यनायुषा[1]पुत्रा, वृत्रस्यापि निबोधत ! ।
जज्ञिरे श्वसनाद्घोराद्[2]) वृत्रस्येन्द्रेण युध्यतः[3]) ॥ 35 ॥

वका नाम समा[1]ख्याता राक्षसाः सुमहाबलाः, ।
शतं तानि सहस्राणि महेन्द्रानुचराः स्मृताः; ॥ 36 ॥

सर्वे ब्रह्मविदः सौम्या धार्मिकाः सूक्ष्ममूर्तयः ।
प्रजास्वन्तर्गताः सर्वे निवसन्ति सुधार्मिकाः[1]) ॥ 37 ॥

| दैत्यानां दानवानां च सर्गं एष प्रकीर्तितः ।

क्रोधा त्वप्रतिमान् पुत्रान्
जज्ञे वै गायनोत्तमान् ॥ 38 ॥
सिद्धः पूर्णश्च वर्ह्री च
पूर्णांशश्चैव वीर्यवान् ।
ब्रह्मचारी शतगुणः
सुपर्णश्चैव सप्तमः ॥ 39 ॥
विश्वावसुश्च भानुश्च
सुचन्द्रो दशमस्तथा ।
इत्येते देवगन्धर्वाः
क्रोधायाः परिकीर्तिताः ॥ 40 ॥

प्रवाह्यजनयत् पुत्रान्
यज्ञे वै गायनोत्तमान् ॥ 38 ॥
सत्वनः सत्त्वात्मकश्चैव
कलापश्चैव वीर्यवान् ।
कृतवीर्यो ब्रह्मचारी
सुपाण्डुश्चैव सप्तमः ॥ 39 ॥
पनश्चैव तरण्यश्च
सुचन्द्रो दशमस्तथा, ।
इत्येते देवगन्धर्वा
विज्ञेयाः परिकीर्तिताः ॥ 40 ॥

---

34 = Bd. II. 6.34; Vā. 68.33[bc]. 1) Vā. विषस्य त्वभवन् । 2) Bd. –कर्मणः । 3) Bd. –श्राद्धो ।
35 = Bd. II. 6.35; Vā. 68.34. 1) Bd. अनायुषः; Vā. दनायुषा– । 2) Bd. –ञ्छ्समहाघोरा । 3) Bd. –ता ।
36 = Bd. II. 6.36; Vā. 68.35. 1) Vā. भर्तारो मनसा ।
37 = Bd. II. 6.37; Vā. 68.36. 1) Bd. क्षुधावृताः ।

38 = Bd. II. 6.38[a].
39 = Bd. II. 6.38[b], 39[a].
40 = Bd. II. 6.39[bc].

38 = Vā. 68.37.
39 = Vā. 68.38.
40 = Vā. 68.39.

# E.

( Bḍ. II. 7.443$^{b}$—465$^{a}$; Vā. 69.324—343. )

... ... ... ... ... ... ... ... ... ... ... ...

सर्पाणां सुरसा जज्ञे[1]) शतमेकं[2]) शिरोभृताम्[3]), ।
सर्पाणां तक्षको राजा नागानां चापि वासुकिः, ॥ 1 ॥
तमोबहुल इत्येष गणः क्रोधवशान्वयः[1]) ।
पुलहस्यात्मजः[2]) सर्गस्ताम्रायास्तु[3]) निबोधत ! ॥ 2 ॥
षट् कन्या[1]स्त्वभिविख्यातास्ताम्रायाश्च विजज्ञिरे ।
श्येनी[2]) भासी तथा[3]) क्रौञ्ची धृतराष्ट्री शुकी तथा[4]) ॥ 3 ॥
अरुणस्य च गृध्री[1]) तु वीर्यवन्तौ महाबलौ ।
संपातिं च जटायुं च प्रसूता पक्षिसत्तमौ ॥ 4 ॥

| | |
|---|---|
| संपातेर्विजयाः पुत्रा | संपातिरजनत् पुत्रं |
| द्विरास्याः प्रसहाश्च ये । | कन्यामेकां तथैव च, । |

जटायुषश्च ये[1]) पुत्राः काक[2]गृध्राश्वकर्णिनः[3]) ॥ 5 ॥
भार्या गरुत्मतश्चैव[1]) भासी क्रौञ्ची तथा शुकी ।
धृतराष्ट्री च भद्रा च[2]), तास्वपत्यानि वच्मि ते[3]) ॥ 6 ॥
शुकी गरुत्मतः पुत्रान् सुषुवे षट् परिश्रुतान् ॥

| | |
|---|---|
| | त्रिशिरं सुमुखं चैव |
| | बलं पृष्ठं महाबलम् । |
| सुखं सुनेत्रं विशिखं | त्रिशङ्कुनेत्रं सुमुखं |
| सुरूपं सुरसं बलम् ॥ 7 ॥ | सुरूपं सुरसं बलम् ॥ 7 ॥ |

ते[1]षां पुत्राश्च पौत्राश्च गरुडानां महात्मनाम् ।
चतुर्दश सहस्राणि क्रू[2]राणां पन्नगाशिनाम् ॥ 8 ॥
पुत्रपौत्रविसर्गाच्च तेषां वै वंशविस्तरैः[1]) ।
व्याप्तानि यानि स्थानानि[2]) तानि वक्ष्ये यथाक्रमम् ॥ 9 ॥
शाल्मलिद्वीपमखिलं देवकूटं च पर्वतम् ।
मणिमन्तं च शैलेन्द्रं सहस्रशिखरं तथा ॥ 10 ॥

---

1 = Bḍ. II. 7.443$^{b}$, 444$^{a}$; Vā. 69.324$^{ab}$. 1) Vā. सुरसाथ विजज्ञे तु । 2) Bḍ.1 –तं नैक–; Bḍ.2 –तमेक– । 3) Bḍ.2 –धरम् ; Vā. –सृतम् ।

2 = Bḍ. II. 7.444$^{b}$, 445$^{a}$; Vā. 69.324$^{c}$, 325$^{a}$. 1) Vā. –शासकः । 2) Vā. –जात । 3) Vā. –स्तन् ।

3 = Bḍ. II. 7.445$^{b}$, 446$^{a}$; Vā. 69.325$^{b}$, 326$^{a}$. 1) Vā. बह्न्या– । 2) Bḍ.1 गृध्री । 3) Bḍ.1 शुकी । 4) Bḍ.1 श्येनी च धृतराष्ट्रिका ।

4 = Bḍ. II. 7.446$^{b}$, 447$^{a}$; Vā. 69.326$^{bc}$. 1) Vā. भार्या श्येनी ।

| | |
|---|---|
| 5$^{a}$ = Bḍ. II. 7.447$^{b}$. | 5$^{a}$ = Vā. 69.327$^{a}$. |

5$^{b}$ = Bḍ. II. 7.448$^{a}$; Vā. 69.327$^{b}$. 1) Bḍ.1 पुराः; Bḍ.2 सुरः । 2) Bḍ. कङ्क– । 3) Bḍ.1 –भाश्च कर्णिकाः; Bḍ.2– कर्किकः ।

6 = Bḍ. II. 7.448$^{b}$, 449$^{a}$; Vā. 69.328. 1) Vā. –श्चापि । 2) Bḍ. तथा श्येनी । 3) Bḍ.2 –क्ष्यति; Vā. –क्ष्यते (–च्म्यहम्) ।

7$^{a}$ = Bḍ. II. 7.449$^{b}$; Vā. 69.329$^{a}$.

| | |
|---|---|
| 7$^{b}$ = Bḍ. II. 7.450$^{a}$. | 7$^{bc}$ = Vā. 69.329$^{b}$, 330$^{a}$. |

8 = Bḍ. II. 7.450$^{b}$, 451$^{a}$; Vā. 69.330$^{b}$, 331$^{a}$. 1) Vā. ए– । 2) Bḍ.1 पु– ।

9 = Bḍ. II. 7.451$^{b}$, 452$^{a}$; Vā. 69.331$^{b}$, 332$^{a}$. 1) Vā. –रः । 2) Vā. देशानि ( स्थानानि ) ।

10 = Bḍ. II. 7.452$^{b}$, 453$^{a}$; Vā. 69.332$^{b}$, 333$^{a}$,

पर्णमालं सुकेशं च शतश्रृङ्गं तथाचलम् ।
कौरजं[1]) पञ्चशिखरं हेमकूटं च पर्वतम् ॥ 11 ॥
प्रचण्डवायुप्रज[1]वैर्दीपितैः पद्मरागिभिः ।
शैलश्रृङ्गाणि[2]) व्याप्तानि गारुडैस्तैर्महात्मभिः ॥ 12 ॥
भासीपुत्राः स्मृता भासा उलूकाः काककुक्कुटाः ।
मयूराः कलविङ्काश्च कपोता लावतित्तिराः ॥ 13 ॥
क्रौञ्ची वाध्री[1]णसाञ्श्येनी कुररान् सारसान् बकान्[2]) ।
इत्येवमादयोऽन्येऽपि क्रव्यादा ये च पक्षिणः ॥ 14 ॥
धृतराष्ट्री तु[1]) हंसांश्च कलहंसांश्च भामिनी ।
चक्रवाकांश्च विहगान् सर्वांश्चैवोदकान् द्विजान् ॥ 15 ॥
*एतानेव*[1]) विजज्ञेऽ*थ*[2]) पुत्रपौत्र*मनन्त*कम्[3]) ।
गरुडस्यात्मजाः प्रोक्ता ; इरायाः श्रृणुत प्रजाः ! ॥ 16 ॥
इरा प्र[1]जज्ञे कन्या वै तिस्रः कमललोचनाः ।
वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः ॥ 17 ॥

| | |
|---|---|
| लता चैवालता चेति | लता चैवाथ वल्ली च |
| वीरुधा चेति ते त्रयः[1]) । | वीरुधा चेति तास्तु वै । |
| लता वनस्पतीञ्ज[2]ज्ञे | लता वनस्पतीञ्जज्ञे |
| पुष्पादपि फलावहान्, ॥ 18 ॥ | ह्यपुष्पान् पुलिनस्थितान् ॥ 18 ॥ |
| पुष्पैः फलग्रहैर्वृक्षा- | युक्तान् पुष्पफलैर्वृक्षाल्ँ |
| नलता समसूयत । | लता वै संप्रसूयते । |
| गुल्मास्तथा लतावल्ल्य- | अथ वल्ली तु गुल्मांश्च |
| स्त्वक्सारास्तृणजातयः । | त्वक्सारास्तृणजातयः । - |

वीरुधस्त[1]दपत्यं *हि*[2]), वंशश्चात्र समाप्यते ॥ 19 ॥
एते कश्यपदायादा व्याख्याताः स्थाणुजंगमाः, ।
तेषां पुत्राश्च पौत्राश्च, यैरिदं संत[1]तं जगत् ॥ 20 ॥
एष[1]) सर्गैकदेशस्य कीर्तितोऽवयवो मया, ।
मारीचोऽयं[2]) प्रजासर्गः समासेन प्रकीर्तितः, ।
न शक्यं व्यासतो वक्तुं वर्षाणां च शतैरपि[3]) ॥ 21 ॥
... ... ... ... ... ... ... ... ... ... ... ... ...

---

11 = Bḍ. II. 7.453b, 454a; Vā. 69.333b, 334a. 1) Bḍ. –रं ।
12 = Bḍ. II. 7.454b, 455a; Vā. 69.334b, 335a. 1) Vā. –म– । 2) Vā. –जालानि ।
13 = Bḍ. II. 7.455b, 456a; Vā. 69.335b, 336a.
14 = Bḍ. II. 7.456b, 457a; Vā. 69.336b, 337a. 1) Vā. वार्धा– । 2) Bḍ. –श्चा वाध्रीणसाः श्येनाः कुररा सारसा बकाः ।
15 = Bḍ. II. 7.457b, 458a; Vā. 69.337b, 338a. 1) Vā. च ।
16 = Bḍ. II. 7.458b, 459a; Vā. 69.338b, 339a. 1) Bḍ. श्येन्यनन्तं । 2) Bḍ. तु । 3) Bḍ. –त्रं द्विजोत्तमाः ।
17 = Bḍ. II. 7.459b, 460a; Vā. 69.339bc. 1) Bḍ. वि– ।

18 = Bḍ. II. 7.460b, 461a. 1) Bḍ.1 तत्र या; Bḍ.2 इति ते त्रयम् । 2) Bḍ.1 –तिर्जे–; Bḍ.2 –तीर्जे– ।
19ab = Bḍ. II. 7.461b, 462a.

18 = Vā. 69.339d, 340a.
19ab = Vā. 69.340b, 341a.

19c = Bḍ. II. 7.462b; Vā. 69.341b. 1) Vā. T. –धा त– । 2) Vā. T. –दपत्यानि; V. –त्ये हि ।
20 = Bḍ. II. 7.463; Vā. 69.342. 1) Vā. पूरि– ।
21 = Bḍ. II. 7.464, 465a; Vā. 69.343. 1) Vā. इति । 2) Bḍ.1 –चो वः । 3) Vā. –न्तुमपि वर्षशतैर्द्विजाः ।

## सन्दर्भस्तवकः II

### A.

( L. 63.1—21; Mt. 5.1—32; P.1 I. 6.1—33$^{a}$; P.2 V. 6.1—33. Cp. Kū. 16.1—16. )

देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं *विस्तरेणैव*[1]) *सूत*[2]) ब्रूहि *यथातथम्*[3]) ! ॥ 1 ॥

सूत ( पुलस्त्य ) उवाच :

संकल्पाद् दर्शनात् स्पर्शात् पूर्वेषां सृष्टिरुच्यते, ।
दक्षात् प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसंभवा[1]) ॥ 2 ॥

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
यथा ससर्ज चैवादौ[1]), तथैव[2]) *शृणुत द्विजाः*[3]) ! ॥ 3 ॥

यदा तु सृजतस्तस्य देवर्षिगणपन्नगान् ।
न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः ॥ 4 ॥

दक्षः पुत्रसहस्राणि *तदासिक्न्या*[1]मजीजनत् ।
तांस्तु दृष्ट्वा महाभागान्[2]) सिसृक्षुर्वि[3]विधाः प्रजाः ॥ 5 ॥

नारदः प्राह हर्यश्वान् दक्ष-पुत्रान् समागतान् ।
भुवः प्रमाणं सर्वत्र[1]) ज्ञात्वोर्ध्वमध एव च[2]) ॥ 6 ॥

ततः सृष्टिं विशेषेण कुरुध्वमृषिसत्तमाः[1]) ! ।
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतो दिशम्, ॥ 7 ॥

अद्यापि न निवर्तन्ते समुद्रादिव सिन्धवः ।
हर्यश्वेषु *प्रनष्टेषु*[1]) पुनर्दक्षः प्रजापतिः ॥ 8 ॥

---

1 = L. 63.1; Mt. 5.1; P.1 I. 6.1; P.2 V. 6.1. 1) L. ब्रूहि सूताद्य; P.1 P.2 विस्तरेणेमां । 2) P.1 P.2 गुरो । 3) L. यथाक्रममनुत्तमम् ; P.1 P.2 यथाविधि ।

2 = L. 63.2; Mt. 5.2; P.1 I. 6.2; P.2 V. 6.2. 1) P.2 प्रजा मैथुनसंभवाः ।

3 = Mt. 5.3; P.1 I. 6.3$^{a}$ = b; P.2 V. 6.3$^{a}$ = b. 1) P.1 P.2 V. चैवासौ । 2) P.2 तच्चैव । 3) P.1 P.2 शृणु कौरव ।

4 = L. 63.3$^{ab}$; Mt. 5.4$^{ab}$; P.1 I. 6.3$^{b}$, 4$^{a}$; P.2 V. 6.3$^{b}$, 4$^{a}$.

5 = L. 63.3$^{c}$, 4$^{a}$; Mt. 5.4$^{c}$, 5$^{a}$; P.1 6.4$^{b}$, 5$^{a}$; P.2 V. 6.4$^{b}$, 5$^{a}$. 1) L. पञ्च सूत्या–; Mt. पाञ्चजन्या–; P.2 यथासिक्न्या–; V. पञ्चशक्त्या– । 2) Mt. महाभागाः; P.2 महाभाग । 3) P.1 P.2 सिसृक्षून् वि– ।

6 = L. 63.4$^{b}$, 5$^{a}$; Mt. 5.5$^{b}$, 6$^{a}$; P.1 I. 6.5$^{b}$. 6$^{a}$; P.2 V. 6.5$^{b}$, 6$^{a}$. 1) L. P.1 सर्वं तु । 2) P.1 P.2 वा ।

7 = L. 63.5$^{b}$, 6$^{a}$; Mt. 5.6$^{b}$, 7$^{a}$; P.1 I. 6.6$^{b}$, 7$^{a}$; P.2 V. 6.6$^{b}$, 7$^{a}$. 1) L. –वं मुनिसत्तमाः ।

8 = L. 63.6$^{b}$, 7$^{a}$; Mt. 5.7$^{b}$, 8$^{a}$; P.1 I. 6.7$^{b}$, 8$^{a}$; P.2 V. 6.7$^{b}$, 8$^{a}$. 1) L. च नष्टेषु ।

धर्मवीर्यबलोपेता दशैते रै[1]वतात्मजाः ।
भृगुः सुधामाविरजाः[2]) सहिष्णु[3]र्नाद[4]) एव च ॥ 22 ॥

विवस्वानतिनामा[1]) च षष्ठे[2]) सप्तर्षयोऽप[3]रे ।
चाक्षुषस्यान्तरे देवा[4]) लेखा नाम परिश्रुताः ॥ 23 ॥

ऋभवो[1]ऽथ पृथग्भूता[2]) वारिमूला दिवौकसः[3]) ।
चाक्षुषस्यान्तरे प्राप्ते[4]) देवानां पञ्च योनयः[5]) ॥ 24 ॥

रुरुप्रभृतयस्तद्वच्चाक्षुषस्य सुता दश ।
प्रोक्ताः स्वायंभुवे वंशे, ये मया पूर्वमेव ते[1]) ॥ 25 ॥

अन्तरं चाक्षुषं[1]) चैतन्म[2]या ते परिकीर्तितम्, ।
सप्तमं च[3]) प्रवक्ष्यामि, यद्वैवस्वतमुच्यते ॥ 26 ॥

अत्रिश्चैव वसिष्ठश्च कश्यपो गौतमस्तथा ।
भरद्वाजस्तथा योगी विश्वामित्रः प्रतापवान् ॥ 27 ॥

जमदग्निश्च सप्तैते सांप्रतं ये[1]) महर्षयः ।
कृत्वा धर्मव्यवस्थानं प्रयान्ति परमं पदम् ॥ 28 ॥

| साध्या विश्वे च रुद्राश्च मरुतो वसवोऽश्विनौ ।
| आदित्याश्च सुरास्तद्वत् सप्त देवगणाः स्मृताः ॥ 29 ॥

| इक्ष्वाकुप्रमुखाश्चास्य दश पुत्राः स्मृता भुवि ।
| मन्वन्तरेषु सर्वेषु सप्त सप्त महर्षयः ।
| कृत्वा धर्मव्यवस्थानं प्रयान्ति परमं पदम् ॥ 30 ॥

सावर्ण[1]स्य प्रवक्ष्यामि मनोर्भावि तथान्तरम्; ।
अश्वत्थामा शरद्वांश्च[2]) कौशिको[3]) गालवस्तथा ॥ 31 ॥

शतानन्दः काश्यपश्च रामश्च ऋषयः स्मृताः ।
धृतिर्वरीयान् यवसुः[1]) सुवर्णो वृष्टि[2]रेव च ॥ 32 ॥

---

22 = Mt. 9.22; P.1 I. $7.100^{b}$, $101^{a}$; P.2 V. $7.101^{ab}$. 1) P.1 रे– । 2) P.1 विरजः; P.2 T. –रजो । 3) P.2 T. विष्णु– । 4) P.1 P.2 –र्नारद ।

23 = Mt. 9.23; P.1 I. $7.101^{b}$, $102^{a}$; P.2 V. $7.101^{c}$, $102^{a}$. 1) P.1 P.2 T. –स्वान् कृतिनामा; P.2 –नभिमानी । 2) P.1 P.2 सप्त । 3) P.2 –यः प– । 4) P.2 जाता ।

24 = Mt. 9.24; P.1 I. $7.102^{b}$, $103^{a}$; P.2 V. $7.102^{b}$, $103^{a}$. 1) P.1 विभवो– । 2) Mt. ऋभमायाश्च । 3) P.1 पृथक् चानुकीर्तिताखिदिवौकसः । 4) Mt. प्रोक्ता । 5) P.1 P.2 पञ्चमो जनः; P.2 V. नयः ।

25 = Mt. 9.25; P.1 I. $7.103^{b}$, $104^{a}$; P.2 V. $7.103^{b}$, $104^{a}$. 1) Mt. तु ।

26 = Mt. 9.26; P.1 I. $7.104^{b}$, $105^{a}$; P.2 V. $7.104^{b}$, $105^{a}$. 1) P.1 चाक्षुषं । 2) P.1 P.2 चैव म– । 3) Mt. तद् ।

27 = Mt. 9.27; P.1 I. $7.105^{b}$, $106^{a}$; P.2 V. $7.105^{b}$, $106^{a}$.

28 = Mt. 9.28; P.1 I. $7.106^{b}$, $107^{a}$; P.2 V. $7.106^{b}$, $107^{a}$. 1) P.1 P.2 ते ।

| 29 = Mt. 9.29.
| 30 = Mt. 9.30, $31^{a}$.

31 = Mt. $9.31^{b}$, $32^{a}$; P.1 I. $7.107^{b}$, $108^{a}$; P.2 V. $7.107^{b}$, $108^{a}$. 1) Mt. –ण्य– । 2) P.2 T. ऋष्यशृङ्ग, V. भरद्वाजः । 3) P.2 T. कौशिक्यो ।

32 = Mt. $9.32^{b}$, $33^{a}$; P.1 I. $7.108^{a}$, $109^{a}$; P.2 V. $7.108^{b}$, $109^{a}$. 1) Mt. यवसः । 2) P.1 P.2 T. धृति–; P.2 V. धृष्टि– ।

चरिष्णु[1]रीड्यः[2]) सुमतिर्वसुः शुक्रश्च वीर्यवान् ।
भविष्या दश[3]) सावर्णेर्म[4]नोः पुत्राः प्रकीर्तिताः ॥ 33 ॥

रौच्यादयस्तथान्येऽपि मनवः संप्रकीर्तिताः ।
रुचेः प्रजापतेः पुत्रो रौच्यो नाम भविष्यति, ॥ 34 ॥

मनुर्भूतिसुतस्तद्वद् भौत्यो नाम भविष्यति, ।
ततस्तु[1]) मेरुसावर्णिर्ब्रह्मसूनुर्मनुः स्मृतः[2]) ॥ 35 ॥

ऋत[1]श्च ऋतु[2]धामा च विष्वक्सेनो मनुस्तथा ।
अतीतानागताश्चैव मनवः परि[3]कीर्तिताः ॥ 36 ॥

वर्षाणां[1]) युगसाहस्रमेभिर्व्याप्तं नराधिप ! ।
स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्य सचराचरम्[2]) ॥ 37 ॥

कल्पक्षये विनिर्वृत्ते[1]) मुच्यन्ते ब्रह्मणा सह ।
एते[2]) युगसहस्रान्ते विनश्यन्ति पुनः पुनः ।
ब्रह्माद्या विष्णुसायुज्यं ततो[3]) यास्यन्ति वै *द्विजाः*[4]) ॥ 38 ॥

---

33 = Mt. 9.33$^b$, 34$^a$; P.1 I. 7.109$^b$, 110$^a$; P.2 V. 7.109$^b$, 110$^a$. 1) P.1 वरिष्णु– । 2) P.1 –र्वांर्यः; P.2 –ष्णुराद्यः । 3) P.1 P.2 भविष्यस्यार्क– । 4) P.1 –सावर्णमे–; P.2 सावर्ण्यम– ।

34 = Mt. 9.34$^b$, 35$^a$; P.1 I. 7.110$^b$, 111$^a$; P.2 V. 7.110$^b$, 111$^a$.

35 = Mt. 9.35$^b$, 36$^a$; P.1 I. 7.111$^b$, 112$^a$; P.2 V. 7.111$^b$, 112$^a$. 1) P.2 –तश्च । 2) P.2 –नुः स्मृतश्च यः ।

36 = Mt. 9.36$^b$, 37$^a$; P.1 I. 7.112$^b$, 113$^a$; P.2 V. 7.112$^b$, 113$^a$. 1) P.1 P.2 ऋभु– । 2) Mt. ऋत–; P.2 T. वीत– । 3) P.2 –वस्तव ।

37 = Mt. 9.37$^b$, 38$^a$; P.1 I. 7.113$^b$, 114$^a$; P.2 V. 7.113$^b$, 114$^a$. 1) Mt. पद्भूनं । 2) P.1 P.2 –दं समुत्पाद्य चराचरम् ।

38 = Mt. 9.38$^b$, 39; P.1 I. 7.114$^b$, 115; P.2 V. 7.114$^b$, 115. 1) P.1 निवृत्ते तु । 2) P.1 P.2 अमी । 3) Mt. याता । 4) P.1 P.2 नृप ।

---

## सन्दर्भस्तवकः III

### A.

( Kū. 51.1—36; Vi. III. 1.5—47. )

अतीतानागतानीह यानि मन्वन्तराणि वै ।
तान्यहं भवते सम्यक् कथयामि यथाक्रमम्[1]) ॥ 1 ॥

स्वायंभुवो मनुः पूर्वो[1]), मनुः[2]) स्वारोचिषस्ततः[3]) ।
औत्तमि[4]स्तामसश्चैव रैवतश्चाक्षुषस्तथा, ॥ 2 ॥

षडेते मनवोऽतीताः, सांप्रतं तु रवेः सुतः ।
वैवस्वतोऽयं यस्यै[1]) तत् सप्तमं वर्ततेऽन्तरम्[2]) ॥ 3 ॥

स्वायंभुवं तु कथितं कल्पादावन्तरं मया ।

| देवास्तथा[1]र्षयश्चैव यथावत् कथिता मया ।
अत ऊर्ध्वं प्रवक्ष्यामि[1]) मनोः स्वारोचिषस्य तु ॥ 4 ॥

| मन्वन्तराधिपान् सम्यग् देवर्षींस्तत्सुतांस्तथा ।

पारावतास्च[1]) तुषिता देवाः स्वारोचिषेऽन्तरे ॥ 5 ॥

विपश्चित् नाम[1]) देवेन्द्रो बसूवासुरमर्दनः[2]) ।
ऊर्जस्तम्भ[3]स्तथा प्राणो दत्तोलि[4]र्ऋषभस्तथा ॥ 6 ॥

निश्चरश्चोर्व[1]रीवांश्च तत्र[2]) सप्तर्षयोऽभवन्, ।
चैत्र किंपुरुषाद्याश्च[3]) सुताः स्वारोचिषस्य तु ॥ 7 ॥

द्वितीयमेतत् कथित[1]मन्तरं, शृणु चोत्तमम् ! ।
तृतीये त्व[2]न्तरे चैव[3]) औत्तमिर्ना[4]म वै[5]) मनुः ॥ 8 ॥

---

1 = Kū. 51.1ᵃ(ᵇ); Vi. III. 1.5. 1) Kū. तानि त्वं कथयास्माकं व्यासं च द्वापरे युगे ।
2 = Kū. 51.4; Vi. III. 1.6. 1) Kū. मनुः स्वायंभुवः पूर्वं । 2) Kū. ततः । 3) Kū. T. -पो मतः; Vi. -स्तथा ।
4) Kū. उत्तम- ।
3 = Kū. 51.5; Vi. III. 1.7. 1) Kū. T. सप्तै- । 2) Kū. T. परम् ।
4ᵃ = Kū. 51.6ᵃ; Vi. III. 1.8ᵃ.
| 4ᵇ = Vi. III. 1.8ᵇ. 1) Vi.2 -व्र- ।
4ᵇ(ᶜ) = Kū. 51.6ᵇ; Vi. III. 1.9ᵃ. 1) Kū. निबोधध्वं ।
| 5ᵃ = Vi. III. 1.9ᵇ.
5ᵇ = Kū. 51.7ᵃ; Vi. III. 1.10ᵃ. 1) Vi. -ताः स ।
6 = Kū. 51.7ᵇ, 8ᵃ; Vi. III. 1.10ᵇ, 11ᵃ. 1) Vi. -श्चिच्चैव । 2) Vi. मैत्रेयासीन् महाबलः । 3) Vi. -स्व-; Vi.2 -र्जस्वल- ।
4) Kū. दान्तोऽथ ऋ-; Vi.2 दत्तोऽग्निर्ऋ- ।
7 = Kū. 51.8ᵇ, 9ᵃ; Vi. III. 1.11ᵇ, 12ᵃ. 1) Kū. तिमिरश्चाव- । 2) Kū. सप्त । 3) Kū. -स्तु ।
8 = Kū. 51.9ᵇ, 10ᵃ; Vi. III. 1.12ᵇ, 13ᵃ. 1) Kū. आख्यात- । 2) Kū. -ऽप्य- । 3) Vi. महान् । 4) Kū. उत्तमो
ना- । 5) Vi.2 यो ।

सुशान्तिस्तत्र देवेन्द्रो *बभूवामित्रकर्षणः*[1]), ।
सुधामानस्तथा सत्याः शिवाश्चासन् प्रतर्दनाः[2]) ॥ 9 ॥
वशवर्तिनश्च[1]) पञ्चैते गणा द्वादशकाः स्मृताः ।
रजो गात्रोऽर्ध्वबाहुश्च
सवनश्चानघस्तथा ॥ 10 ॥
सुतपाः शक्र इत्येते
सप्त सप्तर्षयोऽभवन् ।

| वशिष्ठतनयास्तत्र
| सप्त सप्तर्षयोऽभवन् ॥ 10 ।
| अजः परशुदि[1]व्याद्या-
| स्तस्योत्तमिमनोः सुताः ।

तामसस्यान्तरे देवाः सुरूपा हरय[1]स्तथा ॥ 11 ॥
सत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ।
शिबिरि[1]न्द्रस्तथा चासी[2]च्छतयज्ञोपलक्षणः, ।
बभूव शङ्करे भक्तो
महादेवार्चने रतः ॥ 12 ॥

| सप्तर्षयश्च ये तेषां
| तत्र नामानि मे शृणु ॥ 12 ॥

ज्योतिर्धामा पृथुः काव्य[1]श्चैत्रोऽग्निर्वनक[2]स्तथा ।
पीवरश्च[3]र्षयो ह्येते सप्त तत्रापि चान्तरे ॥ 13 ॥

| ततः ख्यातिः शान्तहयो[1]) जानुजङ्घादयस्तथा ।
| पुत्रास्तु तामसस्यासन् राजानः सुमहाबलाः ॥ $13_1$ ॥

पञ्चमे चापि *मैत्रेय*[1]) रैवतो नाम नामतः ।
मनुर्विभुश्च तत्रेन्द्रो, *देवांश्चैवान्तरे शृणु*[2]) ॥ 14 ॥
*अ[1]मिताभाभूतरजो-वैकुण्ठाः स सुमेधसः*[2]) ।
एते देवगणास्तत्र चतुर्दश चतुर्दश ॥ 15 ॥
हिरण्यरोमा वेदश्रीरूर्ध्वबाहुस्तथैव च[1]) ।
वेदबाहुः सुधामा च पर्जन्यश्च[2]) महामुनिः, ।
एते सप्तर्षयो विप्र त[3]त्रासन् रैवतेऽन्तरे ॥ 16 ॥

| बलबन्धुस्तु संभाव्यः[1]) सत्यकाद्याश्च तत्सुताः ।
| नरेन्द्राः सुमहावीर्या बभूवुर्मुनिसत्तम ॥ $16_1$ ॥

---

9 = Kū. 51.10[b], 11[a]; Vi. III. 1.13[b], 14[a]. 1) Vi. –न्तिर्नाम तत्रेन्द्रो मैत्रेयासीत् सुरेश्वराः । 2) Kū. –स्या शिवश्चाथ प्रतर्दनः; Vi.2 प्रदर्शनाः ।

10[a] = Kū. 51.11[b]; Vi. III. 1.14[b]. 1) Vi.2 –वर्तीति ।

10[b] = Kū. 51.12[a].

11[a] = Kū. 51.12[b].

| 10[b] = Vi. III. 1.15[a].
| 11[a] = Vi. III. 1.15[b]. 1) Vi.1 प्रजाः परमदि– ।

11[b] = Kū. 51.13[a]; Vi. III. 1.16[a]. 1) Kū. सुरायासहरा– ।

12[ab] = Kū. 51.13[b], 14[a]; Vi. III. 1.16[b], 17[a]. 1) Vi.2 शिखी त्वि– । 2) Kū. T. –स्तथैवासी– ।

12[c] = Kū. 51.14[b].

| 12[c] = Vi. III. 1.17[b].

13 = Kū. 51.15; Vi. III. 1.18. 1) Kū. T. पृथक् कल्प– । 2) Kū. T. ऽग्निवसन–; V. ऽग्निर्वरुण–; Vi. T. –वनक–; Vi.2 –वमक– । 3) Kū. T. –स्त्व– ।

| $13_1$ = Vi. III. 1.19. 1) Vi.1 नरः ख्यान्तिः शन्तहयो ।

14 = Kū. 51.16; Vi. III. 1.20. 1) Kū. विप्रेन्द्राः । 2) Kū. बभूवासुरमर्दनः ।

15 = Kū. 51.17(a,b; Vi. III. 1.21. 1) Vi.2 प्र– । 2) Kū. अमिता भूतयस्तत्र वैकुण्ठाश्च सुरोत्तमाः ।

16 = Kū. 51.18; Vi. III. 1.22, 23[a]. 1) Vi. –स्तथापरः । 2) Kū. T. सुबाहुश्च सपर्जन्यो । 3) Kū. –प्रास्त– ।

| $16_1$ = Vi. III. 1.23[b], 24. 1) Vi.1 सुसंभारः ।

स्वारोचिषश्चोत्तमि[1]श्च तामसो रैवतस्तथा ।
प्रियव्रतान्वया[2]) ह्येते चत्वारो मनवस्तथा[3]) ॥ 17 ॥

| विष्णुमाराध्य तपसा स राजर्षिः प्रियव्रतः ।
| मन्वन्तराधिपानेतान् लब्धवानात्मवंशजान् ॥ $17_1$ ॥

षष्ठे मन्वन्तरे चासीच्चा[1]क्षुषाख्यस्तथा मनुः[2]) ।
मनोजवस्तथैवेन्द्रो, देवानपि[3]) निबोध मे[4]) ॥ 18 ॥
आद्याः प्रसूता भव्याश्च[1]) पृथुगा[2]श्च दिवौकसः ।
महानुभावा लेखा[3]श्च, पञ्चैतेऽप्यष्टका गणाः[4]) ॥ 19 ॥
सुमेधा विरजाश्चैव हविष्मानुत्तमो मधुः[1]) ।
अतिनामा[2]) सहिष्णुश्च सप्तासन्नृषयः शुभाः[3]) ॥ 20 ॥

| ऊरुः पूरुः[1]) शतद्युम्नप्रमुखाः सुमहाबलाः ।
| चाक्षुषस्य मनोः पुत्राः पृथिवीपतयोऽभवन् ॥ $20_1$ ॥

विवस्वतः सुतो विप्र[1]) श्राद्धदेवो महाद्युतिः ।
मनुः स वर्तते धीमान्[2]) साम्प्रतं सप्तमेऽन्तरे, ॥ 21 ॥
आदित्य-वसु-रुद्राद्या देवाश्चात्र महामुने[1]) ।
पुरंदरस्तथैवात्र मैत्रेय त्रिदशेश्वरः[2]) ॥ 22 ॥
वसिष्ठः कश्यपो[1]ऽथा[2]त्रिर्जमदग्निः स[3]गौतमः ।
विश्वामित्रो भरद्वाजः[4]) सप्त सप्तर्षयोऽभवन् ॥ 23 ॥

| इक्ष्वाकुश्चैव नाभागो धृष्टः[1]) शर्यातिरेव च ।
| नरिष्यन्तश्च विख्यातो नाभागोदिष्ट[2]) एव च ॥ $23_1$ ॥
| करूषश्च पृषध्रश्च वसुमान् लोकविश्रुतः ।
| मनोर्वैवस्वतस्यैते नव पुत्राश्च धार्मिकाः ॥ $23_2$ ॥

विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता[1]) ।

| तदंशभूता राजानः | मन्वन्तरेष्वशेषेषु |
|---|---|
| सर्वे च त्रिदिवौकसः ॥ 24 ॥ | देवत्वेनाधितिष्ठति ॥ 24 ॥ |

---

17 = Kū. 51.19; Vi. III. 1.25. 1) Kū. –श्चोत्तम– । 2) Kū. –तान्विता । 3) Kū. –वः स्मृताः ।
| $17_1$ = Vi. III. 1.26.
18 = Kū. 51.20; Vi. III. 1.27. 1) Kū. T. चापि चा– । 2) Kū. –षस्तु मनुर्द्विजाः । 3) Kū. –वांश्चैव ।
4) Kū. –धत ।
19 = Kū. 51.21; Vi. III. 1.28. 1) Kū. T. प्रभूत-भाव्या– । 2) Kū. T. प्रथना– । 3) Kū. –या– । 4) Kū. T. पञ्च देवगणाः स्मृताः ।
20 = Kū. 51.22; Vi. III. 1.29. 1) Kū. T. विरजाश्च हविष्मांश्च सोमो मनुसमः स्मृतः । 2) Kū. T. अविनामा ।
3) Vi. –सन्निति चर्षयः ।
| $20_1$ = Vi. III. 1.30. 1) Vi.1 उरुः पुरुः ।
21 = Kū. 51.23; Vi. III. 1.31. 1) Kū. –प्राः । 2) Kū. T. संवर्तनो विप्राः; Vi.1 संवर्तते विप्राः; Vi.2 व– ।
22 = Kū. 51.24; Vi. III. 1.32. 1) Kū. –त्या वसवो रुद्रा देवास्तत्र मरुद्गणाः । 2) Kū. –वेन्द्रो बभूव परवीरहा ।
23 = Kū. 51.25; Vi. III. 1.33. 1) Kū. V. Vi.1 काश्यपो । 2) Kū. –पश्चा– । 3) Kū. –ग्निश्च । 4) Vi.2 –त्र-भरद्वाजौ ।
| $23_1$ = Vi. III. 1.34. 1) Vi.2 नभगश्चैव । 2) Vi.1 नाम उदिष्ट ।
| $23_2$ = Vi. III. 1.35.
24ᵃ = Kū. 51.26ᵃ; Vi. III. 1.36ᵃ. 1) Kū. स्थिता स्थितौ ।
24ᵇ = Kū. 51.26ᵇ. | 24ᵇ = Vi. III. 1.36ᵇ.

Cp. 2. Part, 2. Ch, Text & Is. A. Śl. 137–144.

स्वायंभुवेऽन्तरे पूर्वं
आकूत्यां[1]) मानसः सुतः ।
रुचेः प्रजापतेर्जज्ञे
तदंशेनाभवद् द्विजाः ॥ 25 ॥

अंशेन तस्य जज्ञेऽसौ
यज्ञः स्वायंभुवेऽन्तरे ।
आकूत्यां मानसो देव
उत्पन्नः प्रथमेऽन्तरे ॥ 25 ॥

ततः पुनः स वै[1]) देवः प्राप्ते स्वारोचिषेऽन्तरे ।
तुषितायां समुत्पन्नो ह्यजितस्तुषितैः सह[2]) ॥ 26 ॥
औ[1]त्तमे त्वन्तरे चैव[2]) तुषितस्तु[3]) पुनः स वै[4]) ।
सत्यायामभवत् सत्यः सत्यैः सह सुरोत्तमैः[5]) ॥ 27 ॥
तामसस्यान्तरे चैव संप्राप्ते पुनरेव हि ।
हर्यायां हरिभिः सार्धं हरिरेव बभूव ह[1]) ॥ 28 ॥
रैवतेऽप्यन्तरे चैव[1]) संभूत्यां मानसोऽभवत्[2]) ।
संभूतो मानसैः[3]) सार्धं देवैर्देववरो हरिः[4]) ॥ 29 ॥
चाक्षुषेऽप्य[1]न्तरे चैव[2]) वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठैर्दैवतैः सह ॥ 30 ॥
मन्वन्तरे तु[1]) संप्राप्ते तथा वैवस्वते द्विज[2]) ।
वामनः कश्यपाद् विष्णुरदित्यां संबभूव ह ॥ 31 ॥
त्रिभिः क्रमैरिमात् लोकान् जित्वा येन महात्मना ।
पुरंदराय त्रैलोक्यं दत्तं निहतकण्टकम् ॥ 32 ॥
इत्येतास्तनवस्तस्य सप्तमन्वन्तरेषु वै ।
सप्त चैवा[1]भवन् विप्र[2]), याभिः संरक्षिताः[3]) प्रजाः ॥ 33 ॥
यस्माद् विष्ट[1]मिदं सर्वं[2]) वामनेन महात्मना[3]), ।
तस्मात् स वै[4]) स्मृतो[5]) विष्णुर्विशेर्धातोः प्रवेशनात्[6]) ॥ 34 ॥

सर्वे च देवा मनवः समस्ताः
सप्तर्षयो ये मनुसूनवश्च ।
इन्द्रश्च यो यस्त्रिदशेशभूतो,
विष्णोरशेषास्तु विभूतयस्ताः ॥ $34_1$ ॥

---

25 = Kū. 51.27. 1) Kū. T. प्रकृत्यां; V. आकुत्यां । | 25 = Vi. III. 1.37.
26 = Kū. 51.28; Vi. III. 1.38. 1) Kū. –नरसौ । 2) Kū. –न्नस्तुषितैः सह दैवतैः ।
27 = Kū. 51.29; Vi. III. 1.39. 1) Kū. Vi.2 उ– । 2) Kū. विष्णुः । 3) Kū. सत्यैः सह । 4) Kū. T. सुरोत्तमः 5) Kū. सत्यरूपो जनार्दनः ।
28 = Kū. 51.30; Vi. III. 1.40. 1) Kū. –भिर्देवैर्हरिरेवाभवद् हरिः ।
29 = Kū. 51.31; Vi. III. 1.41. 1) Vi. देवः । 2) Kū. T. संकल्पान् मानसो हरिः । 3) Kū. V. Vi.1 राजसैः; Vi.2 मानसः । 4) Kū. –वैः सह महाद्युतिः ।
30 = Kū. 51.32; Vi. III. 1.42. 1) Vi. चा– । 2) Vi. देवो ।
31 = Kū. 51.33; Vi. III. 1.43. 1) Kū. T. च । 2) Kū. ऽन्तरे ।
32 = Kū. 51.34; Vi. III. 1.44.
33 = Kū. 51.35; Vi. III. 1.45. 1) Vi.1 सप्तायथवा–; Vi.2 सप्तथैवा– । 2) Kū. विप्रा । 3) Kū. संकर्षिताः ।
34 = Kū. 51.36; Vi. III. 1.46. 1) Kū. Vi.1 विश्व– । 2) Kū. कृत्स्नं । 3) Vi. तस्य शक्त्या महात्मनः । 4) Kū. सर्वं; । 5) Vi. स( सो)प्रोच्यते । 6) Kū. T. –तो नूनं देवैः सर्वेषु दैत्यहा ।
| $34_1$ = Vi. III. 1.47.

## B.

( Vi. III. 2.1—60. )

मैत्रेय उवाच :

प्रोक्तान्येतानि भवता सप्त मन्वन्तराणि वै।
भविष्याण्यपि विप्रर्षे ममाख्यातुं त्वमर्हसि ! ॥ 1 ॥

पराशर उवाच :

सूर्यस्य पत्नी संज्ञाभूत्, सुता या[1]) विश्वकर्मणः।
मनोर्यमो यमी चैव तदपत्यानि वै मुने ॥ 2 ॥
असहन्ती तु सा भर्तुस्तेजश्छायां युयोज वै।
भर्तुः शुश्रूषणेऽरण्यं स्वयं च तपसे ययौ ॥ 3 ॥
संज्ञेयमित्यथार्कश्च छायायामात्मजत्रयम्।
शनैश्चरं मनुं चान्यं तपतीं चाप्यजीजनत् ॥ 4 ॥
छायासंज्ञा ददौ शापं यमाय कुपिता यदा,।
तदान्येयमसौ बुद्धिरित्यासीद् यम-सूर्ययोः ॥ 5 ॥
ततो विवस्वानाख्याते तयैवारण्यसंस्थिताम्।
समाधिदृष्ट्या ददृशे तामश्वां तपसि स्थिताम् ॥ 6 ॥
वाजिरूपधरः सोऽपि तस्यां देवावथाश्विनौ।
जनयामास रेवन्तं रेतसोऽन्ते च भास्करः ॥ 7 ॥
आनिन्ये च पुनः संज्ञां स्वस्थानं भगवान् रविः,।
तेजसः शमनं चास्य विश्वकर्मा चकार ह[2]) ॥ 8 ॥
भ्रमिमारोप्य सूर्यं तु तस्य तेजोविशातनम्।
कृतवानष्टमं भागं न व्यशातयता[3]व्ययम् ॥ 9 ॥
यत् सूर्याद् वैष्णवं तेजः शातितं विश्वकर्मणा,।
जाज्वल्यमानमापत् तद् भूमौ मुनिसत्तम ॥ 10 ॥
त्वष्टैव तेजसा तेन विष्णोश्चक्रमकल्पयत्।
त्रिशूलं चैव रुद्रस्य शिबिकां धनदस्य च ॥ 11 ॥
शक्तिं गुहस्य देवानामन्येषां च यदायुधम्;।
तत् सर्वं तेजसा तेन विश्वकर्मा व्यवर्धयत् ॥ 12 ॥
छायासंज्ञासुतो योऽसौ द्वितीयः कथितो मनुः।
पूर्वजस्य सवर्णोऽसौ, सावर्णिस्तेन सो[4]च्यते ॥ 13 ॥
तस्य मन्वन्तरं ह्येतत् सावर्ण[5]कमथाष्टमम्।
तच्छृणुष्व महाभाग, भविष्यं कथयामि ते ॥ 14 ॥
सावर्णिस्तु मनुर्योऽसौ, मैत्रेय, भविता ततः।
सुतपाश्चामिताभाश्च मुख्याश्चापि तदा सुराः, ॥ 15 ॥
तेषां गणस्तु देवानामेकैको विंशकः स्मृतः।
सप्तर्षीनपि वक्ष्यामि भविष्यान् मुनिसत्तम ॥ 16 ॥
दीप्तिमान् गालवो रामः कृपो द्रौणिस्तथापरः।
मत्पुत्रस्तु तथा व्यास ऋष्यशृङ्गश्च सप्तमः ॥ 17 ॥
विष्णुप्रसादादनघः पातालान्तरगोचरः।
विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ॥ 18 ॥

---

1) Vi.1 तनया। 2) Vi.2 सः। 3) Vi.2 वोऽ। 4) Vi.1 चो–। 5) Vi.2 –र्णि–।

विरजाश्चा[1]र्वरीवांश्च निर्मोहाद्यास्तथापरे[2]) ।
सावर्णस्य मनोः पुत्रा भविष्यन्ति नरेश्वराः ॥ 19 ॥
नवमो दक्षसावर्णो मैत्रेय भविता मनुः ।
पारा मरीचिगर्भाश्च सुधर्माण[3]स्तथा त्रिधा ॥ 20 ॥
भविष्यन्ति तदा देवा, एकैको द्वादशो गणः ।
तेषामिन्द्रो महावीर्यो भविष्यत्यद्भुतो द्विज ॥ 21 ॥
सवनो[4]) द्युतिमान् भव्यो वसुर्मेधाधृति[5]स्तथा ।
ज्योतिष्मान् सप्तमः सत्यस्तत्रैते च महर्षयः ॥ 22 ॥
धृतकेतुर्दीप्ति[6]केतुः पञ्चहस्तो निरामयः ।
पृथुश्रवाद्याश्च तथा दक्षसावर्णकात्मजाः ॥ 23 ॥
दशमो ब्रह्मसावर्णिर्भविष्यति मुने मनुः ।
सुधामानो विरुद्धाश्च शतसंख्यास्तथा सुराः ॥ 24 ॥
तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः; ।
सप्तर्षयो भविष्यन्ति ये तदा, तान् शृणुष्व च ॥ 25 ॥
हविष्मान् सुकृतिः सत्यो[7]) ह्यपांमूर्तिस्तथापरः ।
नाभागोऽप्रतिमौजाश्च सत्यकेतुस्तथैव च ॥ 26 ॥
सुक्षेत्रश्चोत्तमौजाश्च हरिषेणादयो दश, ।
ब्रह्मसावर्णपुत्रास्तु[8]) रक्षिष्यन्ति वसुंधराम् ॥ 27 ॥
एकादशश्च भविता धर्मसावर्णिको मनुः ।
विहंगमाः कामगमा निर्माणरतयस्तथा ॥ 28 ॥
गणास्त्वेते[9]) तदा मुख्या देवानां च भविष्यताम्, ।
एकैकस्त्रिंशकस्तेषां गणश्चेन्द्रश्च वै वृषः ॥ 29 ॥
निश्चरश्चाग्नितेजाश्च वपुष्मान् विष्णुरा[10]रुणिः ।
हविष्मालनघ[11]श्चैते भाव्याः सप्तर्षयस्तथा ॥ 30 ॥
सर्वगः सर्वधर्मा च देवानीकादयस्तथा ।
भविष्यन्ति मनोस्तस्य तनयाः पृथिवीश्वराः ॥ 31 ॥
रुद्रपुत्रस्तु सावर्णो भविता द्वादशो मनुः, ।
ऋतधामा च तत्रेन्द्रो भविता, शृणु मे सुरान् ॥ 32 ॥
हरिता लोहिता देवास्तथा सुमनसो द्विज ।
सुकर्माणश्च ताराश्च दशकाः पञ्च वै गणाः ॥ 33 ॥
तपस्वी सुतपाश्चैव तपोमूर्तिस्तपोरतिः ।
तपोधृतिर्द्युतिश्चान्यः सप्तमस्तु तपोधनः ॥ 34 ॥
देववानुपदेवश्च देवश्रेष्ठादयस्तथा ।
मनोस्तस्य महावीर्या भविष्यन्ति सुता नृपाः ॥ 35 ॥
त्रयोदशो रौच्यनामा भविष्यति मुने मनुः ।
सुत्रामाणः सुधर्माणः सुकर्माणस्तथापराः[12]) ॥ 36 ॥
त्रयस्त्रिंशद्विभेदास्ते देवानां ये तु वै गणाः; । दिवस्पतिर्महावीर्यस्तेषामिन्द्रो भविष्यति ॥ 37 ॥
निर्मोहस्तत्त्वदर्शी च निष्प्रकम्पो निरुत्सुकः । धृतिमानव्ययश्चान्यः सप्तमः सुतपा मुनिः, ॥ 38 ॥

---

1) Vi.2 –श्चो– । 2) Cp. Bd. III. 1.22ª. 3) Vi.1 निर्मोहाद्या– । 4) Vi.1 सबलो । 5) Vi.2 –धामृति– । 6) Vi.2 –दांस– । 7) Vi.2 –श्चो । 8) Vi.2 –श्च । 9) Vi.2 –स्त्वे ते । 10) Vi.2 –ष्णु-वा– । 11) Vi.2 –श्मां स्तनय– । 12) Vi.2 –थामराः ।

सप्तर्षयस्त्विमे; तस्य पुत्रानपि निबोध मे।
चित्रसेन-विचित्राद्या भविष्यन्ति महीक्षितः ॥ 39 ॥
भौत्यश्चतुर्दशश्चात्र[1]) मैत्रेय, भविता मनुः।
शुचिरिन्द्रः, सुरगणास्तत्र पञ्च, शृणुष्व तान् ॥ 40 ॥
चाक्षुपाश्च पवित्राश्च कनिष्ठा भ्राजिरास्तथा।
वचो[2]वृद्धाश्च वै देवाः; सप्तर्षीनपि मे शृणु ॥ 41 ॥
अग्निबाहुः शुचिः शुक्रो मागधोऽग्नीध्र एव च।
युक्तस्तथा जितश्चान्यो; मनुपुत्रानतः शृणु ॥ 42 ॥
उरुगंभीर-ब्र[3]ध्नाद्या मनोस्तस्य सुता नृपाः।
कथिता, मुनिशार्दूल, पालयिष्यन्ति ये महीम् ॥ 43 ॥
चतुर्युगान्ते वेदानां जायते किल सं[4]प्लवः, ।
प्रवर्तयन्ति तानेत्य भुवि सप्तर्षयो दिवः ॥ 44 ॥
कृते कृते स्मृतेर्विप्र प्रणेता जायते मनुः, ।
देवा यज्ञभुजस्ते तु, यावन् मन्वन्तरं तु तत् ॥ 45 ॥
भवन्ति ये मनोः पुत्रा, यावन् मन्वन्तरं, तु तैः।
तदन्वयोद्भवैश्चैव तावद् भूः परिपाल्यते ॥ 46 ॥
मनुः सप्तर्षयो देवा भूपालाश्च मनोः सुताः।
मन्वन्तरे भवन्त्येते शक्रश्चैवाधिकारिणः ॥ 47 ॥
चतुर्दशभिरेतैस्तु गतैर्मन्वन्तरैर्द्विज।
सहस्रयुगपर्यन्तः कल्पो निःशेष उच्यते ॥ 48 ॥
तावत्प्रमाणा च निशा ततो भवति सत्तम।
ब्रह्मरूपधरः शेते शेषाहावम्बुसं[5]प्लवे ॥ 49 ॥
त्रैलोक्यमखिलं ग्रस्त्वा भगवानादिकृद् विभुः।
स्वमायासंस्थितो विप्र सर्वभूतो जनार्दनः ॥ 50 ॥
ततः प्रबुद्धो भगवान्, यथा पूर्वं, तथा पुनः।
सृष्टिं करोत्यव्यया[6]त्मा कल्पे कल्पे रजोगुणः ॥ 51 ॥
मनवो भूभुजः सेन्द्रा देवाः सप्तर्षयस्तथा।
सात्त्विकोंऽशः स्थितिकरो जगतो द्विजसत्तम ॥ 52 ॥
चतुर्युगेऽप्य[7]सौ विष्णुः स्थितिव्यापारलक्षणः।
युगव्यवस्थां कुरुते यथा, मैत्रेय तत् शृणु ! ॥ 53 ॥
कृते युगे परं ज्ञानं कपिलादिस्वरूपधृक्।
ददाति सर्वभूतानां सर्वभूतहिते रतः ॥ 54 ॥
चक्रवर्तिस्वरूपेण त्रेतायामपि स प्रभुः।
दुष्टानां निग्रहं कुर्वन् परिपाति जगत्त्रयम् ॥ 55 ॥
वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः।
करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ 56 ॥
वेदांस्तु द्वापरे व्यस्य कलेरन्ते पुनर्हरिः। कल्किस्वरूपी दुर्वृत्तान् मार्गे स्थापयति प्रभुः ॥ 57 ॥
एवमेष[8]) जगत् सर्वं परिपाति करोति च। हन्ति चान्तेष्व[9]नन्तात्मा; नास्त्यस्माद् व्यतिरेकि यत् ॥ 58 ॥
भूतं भव्यं भविष्यं च सर्वभूतान् महात्मनः। तदत्रान्यत्र वा विप्र सद्भावः कथितस्तव ॥ 59 ॥
मन्वन्तराण्यशेषाणि कथितानि मया तव। मन्वन्तराधिपाश्चैव किमन्यत् कथयामि ते ? ॥ 60 ॥

1) Vi.2 –श्रान्यो। 2) Vi.2 वाचा–। 3) Vi.2 बु–। 4) Vi.1 वि–। 5) Vi.2 –वत्युप–। 6) Vi.2 –त्यशेषा–।
7) Vi.2 त्व–। 8) Vi.2 –मेतज्। 9) Vi.2 –न्ते त्व–।

## चतुर्थोऽध्यः

# वंशानुचरितम्

## प्रथमोऽध्यायः

### सन्दर्भस्तवकः 1

( Bḍ. II. 59.33—86; Bh. I. 79.17b—83; Br. 6.1—54; H. 545—612; Mr. 106.3—29a; Śidh. 59.1—41;
Vā. 84.32—86; Cp. Vi. III. 2.2—13. )

विवस्वान् कश्यपाज्जज्ञे दाक्षायण्यां[1]) *महायशाः*[2]), ।
तस्य भार्या[3]भवत् संज्ञा[4]) त्वाष्ट्री देवी[5]) विवस्वतः[6]), ॥ 1 ॥

| | |
|---|---|
| *सुरेश्वरीति*[1])[विख्याता | सुरेणुरिति विख्याता |
| त्रिषु लोकेषु *भाविनी*[2]) । | पुनः संज्ञेति विश्रुता । |

सा वै[1]) भार्या भगवतो मार्तण्डस्य *महात्मनः*[2]) ॥ 2 ॥

भर्तृरूपेण नातुष्यद्[1]) रूपयौवनशालिनी, ।

[ संज्ञा नाम सुतपसा सदीप्तेन समन्विता । ]

आदित्यस्य हि[1]) तद्रूपं *मण्डलस्य*[2]) सु[3]तेजसा ॥ 3 ॥

गात्रेषु परिदग्धं[1]) वै नातिकान्तमिवाभवत् ।
न खल्वयं *मृतोऽण्डस्थ*[2]), इति स्नेहाद*भाषत*[3]) ॥ 4 ॥

---

1 = Bḍ. II. 59.33; Br. 6.1; H. 545; Śidh. 59.1; Vā. 84.32ab. 1) Bḍ. दाक्षायिण्यां । 2) Br. द्विजोत्तमाः; H. अरिंदमः; Śidh. महान् ऋषिः । 3) Bḍ. संज्ञा– । 4) Bḍ. भार्या; Vā. त्वाष्ट्री । 5) Vā. महादेवी । 6) Śidh. सुरेणुका ।

2a = Bh. I. 79.17b; Br. 6.2a; H. 546a. 1) Bh. सुरेणुरिति । 2) H. भामिनी । | 2a = Bḍ. II. 59.34a; Vā. 84.32c.

2b = Bḍ. II. 59.34b; Bh. I. 79.19a; Br. 6.2b; H. 546b; Vā. 84.33a. 1) Bḍ. Bh. Vā. तु । 2) Bḍ. Vā. –स्यातितेजसः ।

3a = Bh. I. 79.19b; Br. 6.3a; H. 547a; Śidh. 59.2a; Vā. 84.33b. 1) Vā. नातुष्यद्भर्तृरूपेण; Bh. साध्वी पतिव्रता देवी ।

[ [ = Br. 6.3b; H. 547b. ]

3b = Bh. I. 79.20b; Br. 6.4a; H. 548a; Śidh. 59.2b; Vā. 84.34a. 1) Bh. आदित्यस्येह । 2) Bh. महता; H. रूपमण्डलस्य; Śidh. रूपमसहन्ती; Vā. रूपं मार्तण्डस्य । 3) Bh. स्वेन; H. तु; Vā. हि ।

4 = Bḍ. II. 59.35a = b; Bh. I. 79.21a = a; Br. 6.4b, 5a; H. 548b, 549a; Vā. 84.34b, 35a. 1) Bh. –ष्वप्रतिरूपेषु; Vā. परिदग्धं । 2) Bḍ. Vā. मृतो ह्यण्डे; Br. मृतोऽण्डस्य । Cp. Blau i. Z. D. M. G. 62 (1908), S. 340, Anm. 6. 3) Bḍ. Vā. –हात् तमब्रवीत् ।

अजानन्[1]) कश्यप[2]स्तस्मान्[3]) मार्तण्ड इति चोच्यते ।
तेजस्त्वभ्यधिकं तस्य[4]) नित्यमेव[5]) विवस्वतः, ॥ 5 ॥

येनाति[1]तापयामास त्रीँल्लोकान् कश्यपात्मजः[2]) ।

| | |
|---|---|
| त्रीण्यपत्यानि भो विप्राः[1])<br>संज्ञायां तपतां वरः ॥ 6 ॥ | त्रीण्यपत्यानि संज्ञायां[1])<br>जनयामास वै रविः[2]) ॥ 6 ॥ |
| आदित्यो जनयामास<br>कन्यां द्वौ च प्रजापती । | द्वौ सुतौ तु महावीर्यौ[1])<br>कन्यां कालिन्दिमेव च[2]) । |

मनु[1]र्वैवस्वतः पूर्वं[2]) श्राद्धदेवः प्रजापतिः ॥ 7 ॥

| | |
|---|---|
| यम[1]श्च यमुना चैव<br>यमजौ संबभूवतुः । | ततो यमो यमी चैव<br>यमजौ[1]) संबभूवतुः । |

श्यामवर्णं तु[1]) तद्रूपं दृष्ट्वा संज्ञा[2]) विवस्वतः ॥ 8 ॥

असहन्ती तु स्वां[1]) छायां सवर्णां निर्ममे ततः[2]) ।

| | |
|---|---|
| मायामयी[1]) तु सा संज्ञा[2]),<br>तस्यां[3]) छाया समुत्थिता[4]) ॥ 9 ॥ | महीमयी[1]) तु सा नारी,<br>तस्याश्छाया समुद्गता ॥ 9 ॥ |

---

5 = Bḍ. II. 59.35$^{b}$, 36$^{a}$; Br. 6.5$^{b}$, 6$^{a}$; H. 549$^{b}$, 550$^{a}$; Mr. 106.5$^{a}$ = b; Vā. 84.35$^{b}$, 36$^{a}$.   1) H. अज्ञनात्; Vā. अज्ञानः । 2) Br. काश्यपः । 3) Bḍ. Vā. –पः स्नेहान् । 4) H. तात; Mr. यत् तेजोऽभ्यधिकं तस्य । 5) Mr. मार्तण्डस्य ।

6$^{a}$ = Bḍ. II. 59.36$^{b}$; Br. 6.6$^{b}$; H. 550$^{b}$; Mr. 106.5$^{b}$; Vā. 84.36$^{b}$. 1) Bḍ. Vā. येनापि–; Mr. तेनाति– । 2) Mr. सचराचरान् ।

| | |
|---|---|
| 6$^{b}$ = Br. 6.7$^{a}$; H. 551$^{a}$. 1) H. कौरव्य । | 6$^{b}$ = Bḍ. II. 59.37$^{a}$; Bh. I. 79.23$^{b}$; Mr. 106.3$^{a}$; Śidh. 59.3$^{b}$; Vā. 84.37$^{a}$. 1) Mr. असौ तस्यां; Śidh. स्त्र्येऽस्यां त्रीण्यपत्यानि । 2) Mr. गोपतिः; Śidh. भास्करः । |
| 7$^{a}$ = Br. 6.7$^{b}$; H. 551$^{b}$. | 7$^{a}$ = Bḍ. II. 59.37$^{b}$; Mr. 106.3$^{b}$; Vā. 84.37$^{b}$. 1) Mr. पुत्रौ सुमहाभागौ । 2) Bḍ. कन्यैका विदितैव च; Mr. कन्यां च यमुनां मुने । |

7$^{b}$ = Bḍ. II. 59.38$^{a}$; Br. 6.8$^{a}$; H. 552$^{a}$; Mr. 106.4$^{a}$; Śidh. 59.4$^{a}$; Vā. 84.38$^{a}$.   1) H. सवि– ।   2) Bḍ. Mr. Vā. –तो ज्येष्ठः; Śidh. संज्ञायां तु मनुः पूर्वं ।

| | |
|---|---|
| 8$^{a}$ = Br. 6.8$^{b}$; H. 552$^{b}$; Śidh. 59.4$^{b}$. 1) Śidh. सम– । | 8$^{a}$ = Bḍ. II. 59.38$^{b}$; Mr. 106.4$^{b}$; Vā. 84.38$^{b}$. 1) Mr. यमलौ । |

8$^{b}$ = Bḍ. II. 59.39$^{a}$; Br. 6.9$^{a}$; H. 553$^{a}$; Mr. 106.6$^{a}$; Śidh. 59.5$^{a}$; Vā. 84.39$^{a}$. 1) Bḍ. असह्यतेजस् ; Mr. गोलाकारं तु; Śidh. संवर्तुलं तु; Vā. श्यातवर्णं तु । 2) Br. H. संज्ञा दृष्ट्वा; Mr. तं दृष्ट्वा संज्ञा रूपं ।

9$^{a}$ = Bḍ. II. 59.39$^{b}$; Br. 6.9$^{b}$; H. 553$^{b}$; Mr. 106.6$^{b}$; Śidh. 59.5$^{b}$; Vā. 84.39$^{b}$. 1) Bḍ. Vā. स्वकां; Mr. महद् तेजः; Śidh. ततः । 2) Bḍ. Vā. पुनः; Mr. स्वछायां प्रेक्ष्य सामवीद् ; Śidh. आत्मनः सासजच्छुभा ।

| | |
|---|---|
| 9$^{b}$ = Br. 6.10$^{a}$; H. 554$^{a}$; Śidh. 59.6$^{a}$. 1) Śidh. छाया सती । 2) Śidh. संज्ञां । 3) H. –स्याश् । 4) Śidh. मवोचन्नृक्तितः शुभे; Br. छाया समुत्थिताम् । | 9$^{b}$ = Bḍ. II. 59.40$^{a}$; Vā. 84.40$^{a}$. 1) Bḍ. –हाभागा । |

<table>
<tr><td>प्राञ्जलिः प्रणता भूत्वा<br>छाया संज्ञां द्विजोत्तमाः[1]) ।<br>उवाच,'किं मया कार्यं[2]),<br>कथयस्व शुचिस्मिते ! ।<br>स्थितास्मि तव निर्देशे,<br>शाधि मां वरवर्णिनि ! ॥ 10 ॥</td><td>प्राञ्जलिः प्रयता भूत्वा<br>पुनः संज्ञामभासत ।<br><br><br>वदस्व, किं मया कार्यं !<br>सा संज्ञा तामथाब्रवीत् ॥ 10 ॥</td></tr>
</table>

संज्ञोवाच :

अहं यास्यामि, भद्रं ते, स्वमेव[1]) भवनं पितुः, ।
त्वयैव[2]) भवने मह्यं वस्तव्यं निर्विकारया[3]) ॥ 11 ॥

इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा[1]) ।
संभाव्या[2]स्ते न[3]) चाख्येय[4]मिदं भगवते त्वया[5]) ॥ 12 ॥

सवर्णोवाच :

आ केश[1]ग्रहणाद् देवी आ शापान्[2]) नैव कर्हिचित्[3]) ।
आख्यास्यामि मतं[4]) तुभ्यं, गच्छ देवि यथासुखम्[5]) ! ॥ 13 ॥

समादिश्य सवर्णा तु[1]) तथेत्युक्त्वा तया[2]) च सा ।
त्वष्टुः समीपमगमद् व्रीडितेव तपस्विनी[3]) ॥ 14 ॥

<table>
<tr><td>पितुः समीपगा सा तु<br>पित्रा निर्भर्त्सिता तदा[1]) ।</td><td>पिता तामागतां दृष्ट्वा<br>क्रुद्धः संज्ञामथाब्रवीत् ।</td></tr>
</table>

---

10 = Br. 6.10[b], 11; H. 554[b], 555; Śidh. 59.(6[b]) = b.
1) H. नरेश्वर । 2) Śidh. किं करोमि हि कार्यं ते ।

10 = Bḍ. II. 59.40[b], 41[a]; Vā. 84.40[b], 41[a].

11 = Bḍ. II. 59.41[b], 42[a]; Br. 6.12; H. 556; Mr. 106.7; Śidh. 59.7; Vā. 84.41[b], 42[a]. 1) Śidh. ममैव । 2) Bḍ. H. Vā. त्वयेह । 3) Bḍ. Br. Vā. निर्विशङ्कया; Mr. निर्विकारं त्वयाप्यत्र स्थेयं मच्छासनाच्छुभे ।

12 = Bḍ. II. 59.42[b], 43[a]; Br. 6.13; H. 557; Mr. 106.8; Śidh. 59.8; Vā. 84.42[b], 43[a]. 1) Bḍ. Mr. Vā. च वरवर्णिनी । 2) Bḍ. भर्तव्या; Mr. संभाव्यौ; Śidh. पालनीयाः; Vā. भर्त्रे वै । 3) Bḍ. Vā. नैवम् ; Mr. नैव; Śidh. सुखेनैव । 4) Bḍ. Vā. आख्येय– । 5) Br. H. कथित ; Śidh. –थं मम चेदिच्छसि प्रियम् ।

13 = Br. 6.14; H. 558; Mr. 106.9; Śidh. 59.9; Vā. 84.44. 1) Br. H. आ कच– । 2) Vā. आशयं । 3) Śidh. सहिष्यामि सुदुष्कृतम्; 4) Br. T. नमस् । 5) Mr. गम्यतां यत्र वाञ्छितम् ; Vā. –वि स्वमालयम् ।

14 = Bḍ. II. 59.43[b], 44[a]; Br. 6.15; H. 559; Mr. 106.(10[a]) = a; Śidh. 59.(10[a]) = b; Vā. 84.45. 1) Bḍ. इमौ च बालकौ मह्यं; Vā. समादाय च तां संज्ञा । 2) Bḍ. तथा । 3) Mr. इत्युक्त्वा छायया संज्ञा जगाम पितृमन्दिरम् ; Śidh. इत्युक्त्वा सागमद् देवी व्रीडिता संनिधौ पितुः ।

[ वर्षाणां तु सहस्रं वै
वसति स्म1) पितुर्गृहे2) ।

भर्तुः समीपं *गच्छेति*1) *नियुक्ता च*2) पुनः पुनः ॥ 15 ॥

अगच्छद्1) वडवा भूत्वाच्छाद्य2) रूपमनिन्दिता3); ।
कुरूनथोत्तरान्4) गत्वा5) तृणान्यथ6) चचार ह7) ॥ 16 ॥

द्वितीयायां तु संज्ञायां संज्ञेयमिति चिन्तयन्1) ।

| | |
|---|---|
| आदित्यो जनयामास<br>पुत्रमात्मसमं तदा ॥ 17 ॥<br>पूर्वजस्य मनोर्*विप्राः*1)<br>सदृशोऽयमिति प्रभुः, । | आदित्यो1) जनयामास<br>पुत्रावादित्यवर्चसौ2) ॥ 17 ॥<br>पूर्वजस्य मनोस्तुल्यौ1)<br>सादृश्येन तु तौ प्रभू2), । |

मनुरेवाभवन् *नाम्ना*1) सावर्णिरि2ति चोच्यते3) ॥ 18 ॥

। श्रुतश्रवं तु1) धर्मज्ञं2)
श्रुतकर्माणमेव3) च ।

---

15$^{a}$ = Br. 6.16$^{a}$; H. 560$^{a}$; Śidh. 59.10$^{bI}$ = I.
1) Br. शुभा; Śidh. तत्र ।

15$^{a}$ = Bḍ. II. 59.44$^{b}$; Vā. 84.46$^{a}$. [ Bh. I. 79.24$^{a}$; Mr. 106.(10$^{b}$); Vā. 84.47$^{b}$. 1) Bh. वसमाना । 2) Mr. तत्रावसत् पितुर्गेहे कंचित् कालं शुभेक्षणा । ]

15$^{b}$ = Bḍ. II. 59.45$^{a}$; Bh. I. 79.24$^{b}$; Br. 6.16$^{b}$; H. 560$^{b}$; Mr. 106.11$^{a}$; Śidh. 59.10$^{bII}$ = II; Vā. 84.48$^{a}$. 1) Bh. Mr. याहीति; Vā. गच्छ त्वं । 2) Bh. Mr. पित्रोक्ता सा; Śidh. सा ।

16 = Bḍ. II. 59.45$^{b}$, 46$^{a}$; Bh. I. 79.25; Br. 6.17; H. 561; Mr. 106.11$^{b}$ = a$^{I}$, b$^{I}$; Śidh. 59.11; Vā. 84.48$^{bc}$. 1) Br. Śidh. आगच्छद ; Bḍ. Vā. अगमद् । 2) Bh. त्यक्त्वा । 3) Bh. –पंयशस्विनां; Śidh. –पं ततः स्वकम् । 4) Bḍ. Vā. उत्तरान् सा कुरून् ; Bh. उत्तरांश्च कुरून् ; Mr. कुरून् विप्रोत्तरांस् ; Śidh. कुरूंस्तदोत्तरान् । 5) Mr. ततः; Śidh. प्राप्य । 6) Bh. –न्यनु–; Śidh. नृणां मध्ये । 7) Bḍ. Vā. सा ।

17$^{a}$ = Bḍ. II. 59.46$^{b}$; Bh. I. 79.27$^{a}$; Br. 6.18$^{a}$; H. 562$^{a}$; Mr. 106.(13$^{b}$); Śidh. 59.(12$^{a}$); Vā. 84.49$^{a}$. 1) Bḍ. Vā. चिन्त्या ताम् ; Mr. तस्यां च भगवान् सूर्यः संज्ञायामिति चिन्तयन् ; Śidh. संज्ञां तां तु रविर्मत्वा छायायां स सुतं तदा ।

17$^{b}$ = Br. 6.18$^{b}$; H. 562$^{b}$.

17$^{b}$ = Bḍ. II. 59.47$^{a}$; Bh. I. 79.27$^{b}$; Mr. 106.14$^{a}$; Vā. 84.49$^{b}$. 1) Mr. तथैव । 2) Bh. कन्यां च रूपिणीं; Mr. द्वौ सुतौ कन्यकां तथा ।

18$^{a}$ = Br. 6.19$^{a}$; H. 563$^{a}$. 1) H. –स्तात ।

18$^{a}$ = Bḍ. II. 59.47$^{b}$; Bh. I. 79.28$^{a}$; Mr. 106.14$^{bI}$; Vā. 84.50$^{a}$. 1) Mr. –स्तुल्यः । 2) Bh. च त्वाद्भुतौ; Vā. T. प्रभुः ।

18$^{b}$ = Bḍ. II. 59.49$^{b}$; Br. 6.19$^{b}$; H. 563$^{b}$; Mr. 106.(14$^{bII}$); Śidh. 59.(12$^{b}$); Vā. 84.52$^{a}$. 1) Bḍ. –वत्सोऽपि; Vā. –वत्स वै । 2) Br. H. Vā. सावर्ण इ– । 3) Mr. तेन सोऽभवत् ; Vā. बुध्यते; Śidh. जनयामास सावर्णिर्मनुः स भाविता किल ।

श्रुतश्रवा मनुस्ता[4]भ्यां[4]) ।
सावर्णिर्वै[5]) भविष्यति ॥ 18$_1$ ॥

द्वितीयो यः सुतस्तस्याः,
स विज्ञेयः[1]) शनैश्चरः ।
संज्ञा तु पार्थिवी *सा वै*[1])
स्व[2]स्य पुत्रस्य वै तदा ॥ 19 ॥
चकाराभ्यधिकं स्नेहं
न तथा पूर्वजेषु वै[1]) ।

श्रुतकर्मा तु विज्ञेयो,
ग्रहो वै यः[1]) शनैश्चरः ।
संज्ञा तु पार्थिवी तेषा-
मात्मजानां *यथा*[1]) करोत्, ॥ 19 ॥
न स्नेहं[1]) पूर्वजातानां[2])
तथा कृतवती तु सा[3]) ।

मनुस्तस्याक्षमत्, *तद् तु*[1]) यमस्त[2]*स्या न चक्षमे*[3]), ॥ 20 ॥
स वै रोषाच्च[1]) बाल्याच्च भाविनोऽर्थस्य वै बलात्[2]) ।
पदा[3]) संतर्जयामास *संज्ञां*[4]) वैवस्वतो यमः[5]) ॥ 21 ॥
तं[1]) शशाप ततः क्रोधात् *सावर्णजननी तदा*[2]) ।

चरणः पततामेष
तवेति[1]) भृशदुःखिता[2]) ॥ 22 ॥

पदा[1]) तर्जयसे[2]) यस्मात्[3])
पितृभा[4]र्यां यशस्विनीम्[5]), ।
तस्मात् तवैष चरणः
पतिष्यति न संशयः ॥ 22 ॥

---

18$_1$ = Bḍ. II. 59.48; Bh. I. 79.28$^{b}$; Vā. 84.50$^{b}$.
1) Bh. –वाश्च । 2) Bh. –ह्मः । 3) Bh. –र्मा तथैव ।
4) Vā. –नुः सोऽपि । 5) Bh. –र्यो ।

19$^{a}$ = Br. 6.20$^{a}$; H. 564$^{a}$; Mr. 106.(15$^{b}$).
1) Mr. योऽभवच्चान्यः स ग्रहोऽभूच्च ।

19$^{b}$ = Bḍ. II. 59.50$^{a}$; Br. 6.20$^{b}$; H. 564$^{b}$; Śidh. 59.13$^{a}$; Vā. 84.52$^{b}$. 1) Br. विप्राः; H. तात; Śidh. या तु ।
2) Śidh. त– ।

19$^{a}$ = Bḍ. II. 59.49$^{a}$; Bh. I. 79.28$^{b}$; Vā. 84.51$^{b}$.
1) Bh. यो वै ।

19$^{b}$ = Bh. I. 79.30$^{b}$; Mr. 106.16$^{b}$. 1) Bh. –नामथा– ।

20$^{a}$ = Bḍ. II. 59.50$^{b}$; Br. 6.21$^{a}$; H. 565$^{a}$; Śidh. 59.13$^{b}$; Vā. 84.53$^{a}$. 1) Śidh. पूर्वजे सुते ।

20$^{a}$ = Bh. I. 79.31$^{a}$; Mr. 106.17$^{a}$. 1) Mr. स्नेहान्न ।
2) Bh. पूर्वजानां तु । 3) Mr. सती ।

20$^{b}$ = Bḍ. II. 59.51$^{a}$; Bh. I. 79.31$^{b}$; Br. 6.21$^{b}$; H. 565$^{b}$; Mr. 106.17$^{b}$; Śidh. 59.14$^{a}$; Vā. 84.53$^{b}$. 1) Bh. –स्तु क्षमते तस्या; Bḍ. Vā. –स्तच्चाक्षमत् सर्वं; Br. –स्तस्याः क्षमत्, तत्तु; Mr. –स्तत् क्षान्तवान् तस्याः; Śidh. अनुजस्य च भूपादि । 2) Mr. –स्या– । 3) Bḍ. Vā. यमस्तद्वै न चाक्षमत् ।

21 = Bḍ. II. 59.52; Bh. I. 79.32$^{b}$, 33$^{a}$; Br. 6.22; H. 566; Mr. 106.18$^{b}$, 19$^{a}$; Śidh. 59.14$^{b}$, 15$^{a}$; Vā. 84.53$^{b}$, 54$^{a}$ 1) Bḍ. Vā. तां वै रोषाच्च; H. तां स रोषाच्च; Bh. Mr. कोपाच्च; Śidh. सरोषः स च । 2) Br. ऽर्थस्य वानघ; H. ऽगौरवात् । 3) Bḍ. Bh. यदा; Śidh. छायां । 4) Bḍ. छायां; Śidh. पदा । 5) Mr. छायासंज्ञां यमो मुने ।

22$^{a}$ = Bḍ. II. 59.53$^{a}$; Bh. I. 79.33$^{b}$; Br. 6.23$^{a}$; H. 567$^{a}$; Mr. 106.(19$^{b}$); Śidh. 59.15$^{b}$; Vā. 84.54$^{b}$. 1) Bḍ. Vā. सा । 2) Bḍ. Vā. सावर्णि( Vā. र्णा )जननी यमम्; Bh. संज्ञा सा पार्थिवी भृशम्; H. नी नृप; Śidh. छाया तं कलुषीकृता; Mr. ततः शशाप च यमं संज्ञा सामर्षिणी भृशम् ।

22$^{b}$ = Br. 6.23$^{b}$; H. 567$^{b}$; Śidh. 59.16$^{a}$. 1) Śidh. न वेति । 2) Śidh. भृशरोषिता ।

22$^{bc}$ = Bḍ. II. 59.53$^{b}$, 54$^{a}$; Bh. I. 79.34; Mr. 106.20; Vā. 84.55. 1) Bḍ. यदा । 2) Bh. संतर्जयसे ।
3) Bḍ. ऽकस्मात्; Bh. यन् मां । 4) Bh. –तुर्मा– ।
5) Bh. Mr. गरीयसीम् ।

यमस्तु तत्[1]) पितुः सर्वं
प्राञ्जलिः प्रत्यवेदयत् ।

यमस्तु तेन शापेन
भृशं पीडितमानसः ।
मनुना सह धर्मात्मा[1])
पितुः सर्वं[2]) न्यवेदयत् ।

भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विवेजितः[1]) ॥ 23 ॥

शापोऽयं विनिवर्तेत,
स प्राह[1]) पितरं तदा[2]), ।
मात्रा स्नेहेन सर्वेषु
वर्तितव्यं सुतेषु वै ॥ 24 ॥

स्नेहेन तुल्यमस्मासु
माता देव न वर्तते ॥ 24 ॥

सेय[1]मस्मानपहाय[2]) कनीयांसं[3]) बुभूषति[4]) ।
तस्यां[5]) मयोद्यतः पादो, न तु देहे[6]) निपातितः ॥ 25 ॥

बाल्याद् वा यदि वा मोहात्[1]) तद्[2]) भवान् क्षन्तु[3]मर्हति[4]) ! ।
शप्तोऽहमस्मि[5]) लोकेश[6]) जनन्या तपतां वर[7]), ।
तव प्रसादाच्चरणौ[8]) न पतेत्[9]) मम गोपते[10]) ! ॥ 26 ॥

विवस्वानुवाच :

असंशयं पुत्र महद्[1]) भविष्यत्यत्र कारणम् , ।
येन त्वामाविशत् क्रोधो धर्मज्ञं सत्यवादिनम्[2]) ॥ 27 ॥

---

23ª = Br. 6.24ª; H. 568ª; Śidh. 59.66ᵇ.
1) Śidh. –स्ततः ।

23ᵃᵇ = Bḍ. II. 59.54ᵇ, 55ª; Bh. I. 79.35; Mr. 106.21; Vā. 84.56. 1) Bh. तन्मातुः 2) Mr. सर्वं पित्रे ।

23ᵇ⁽ᶜ⁾ = Bḍ. II. 59.55ᵇ; Br. 6.24ᵇ; H. 568ᵇ; Śidh. 59.17ª; Vā. 84.57ª. 1) Bḍ. Vā. –विनिर्जितः; Br. –विशङ्कितः; Śidh. –विचेष्टितः ।

24ª = Br. 6.25ª; H. 569ª. 1) Br. प्रोवाच । 2) Br. T. द्विजाः ।

24ᵇ = Br. 6.25ᵇ; H. 569ᵇ; Śidh. 59.17ᵇ.

24ᵇ = Bh. I. 79.36ª; Mr. 106.22ª.

25 = Bh. I. 79.36ᵇ, 37ª; Br. 6.26; H. 570; Mr. 106.22ᵇ, 23ª; Śidh. 59.18ᵃᵇᴵ = abᴵ. 1) Śidh. स्नेह– । 2) Br. T. –नपास्येह; Bh. निःस्नेहाज्ज्यायसो ह्यस्मान् ; Mr. विसृज्य ज्यायसोऽप्यस्मान् । 3) Br. विवस्वन् ; Br. V. H. यवीयांसं; Mr. कनीयांसौ । 4) Br. संबुभूषति; Śidh. विभुपति । 5) Bh. H. तस्याः; Śidh. तस्मान् । 6) Bh. देव ।

26 = Bḍ. II. 59.56ᵇ, 57; Bh. I. 79.37ᵇ, 38; Br. 6.27; H. 571ª, 572ᵇ, 573; Mr. 106.23ᵇ, 24ª, 26ª; Śidh. 59.18ᵇᴵᴵ; 19 = aᴵᴵb; Vā. 84.57ᵇ, 58. 1) Br. T. लौल्यात् । 2) Br. T. मोहाद ; Vā. –द्वान्मां । 3) Br. T. तत्क्षन्तु–; Vā. भवांस्त्रातु– । 4) Bh. Br. T. –मर्हसि । 5) Bh. –मस्मिन् ; Mr. –हं तात । 6) Mr. कोपेन; Śidh. देवेश । 7) Mr. तनयो यतः । 8) Bḍ. Vā. प्रसादो नक्षातु( Bḍ. –तुं ) । 9) Bh. –नक्षायतां; Bḍ. पतस्मान् ; Vā. घोतस्मान् । 10) Bḍ. Bh. Vā. महतो भयात् ; Mr. भगवान् यथा ।

27 = Bḍ. II. 59.58ᵇ, 59ª; Bh. I. 79.39; Br. 6.28; H. 574; Mr. 106.27; Śidh. 59.20; Vā. 84.59ᵇ, 60ª. 1) Bh. H. महत् पुत्रः Mr. इदं पुत्र । 2) Bh. धर्मशालिनम् ।

न शक्य[1]मेतन् मिथ्या तु[2]) कर्तुं[3]) मातुर्व[4]चस्तव, ।
कृमयो[5]) मांसमादाय यास्यन्ति तु[6]) महीतले[7]) ॥ 28 ॥

| ततः[1]) पादं[2]) महाप्राज्ञ पुनः[3]) संप्राप्स्यसे[4]) सुखम् ; ।
कृतमेवं[5]) वचः सत्यं[6]) मातुस्तव भविष्यति, ॥ 29 ॥

शापस्य परिहारेण त्वं च त्रातो भविष्यसि ।
आदित्यस्त्वब्रवीत्[1]) संज्ञां[2]) किमर्थं तनयेषु वै[3]) ॥ 30 ॥

तुल्येष्व[1]भ्यधिकः[2]) स्नेह एकस्मिन्[3]) क्रियते त्वया[4]) ? ।
सा तत् परिहरन्ती तु[5]) नाचचक्षे विवस्वतः[6]) ॥ 31 ॥

आत्मानं स[1]) समाधाय योगात्[2]) तथ्य[3]मपश्यत, ।
तां शप्तुकामो भगवान् नाशाय[4]) कुपितः प्रभुः[5]) ॥ 32 ॥

| मूर्धजेषु च ज[1]ग्राह; समयेऽतिगते तु सा[2]) ।
ततः[1]) सर्वं[2]) यथावृत्तमा[3]चचक्षे विवस्वतः[4]) ।
विवस्वानथ तच्छ्रु[5]त्वा क्रुद्ध[6]स्त्वष्टार[7]मभ्यगाद[8]) ॥ 33 ॥

---

28 = Bḍ. II. 59.59$^{b}$, 60$^{a}$; Bh. I. 79.41$^{a}$, 42$^{a}$; Br. 6.29; H. 575; Mr. 106.29$^{a}$, 30$^{a}$; Śidh. 59.21; Vā. 84.60$^{b}$, 61$^{a}$. 1) H. अशक्य– । 2) Bh. मे; H. –मन्यथा कर्तुं; Śidh. वै । 3) H. मया । 4) Br. H. Śidh. मातृव– । 5) Śidh. Vā. क्रिमयो । 6) Mr. प्रयास्यन्ति; Śidh. गमिष्यन्ति । 7) Bḍ. Vā. च( Vā. तु )मह्यां तव; Br. अवनिमेव च; H. धरणीतलम् ; Mr. –लम् ।

29 = Bḍ. II. 59.60$^{b}$, 61$^{a}$; Bh. I. 79.42$^{bI}$ = b$^{I}$; Br. 6.30$^{a}$ = b; H. 576; Mr. 106.30$^{bI}$ = b$^{I}$; Śidh. 59.22(a$^{I}$) = b$^{I}$; Vā. 84.61$^{b}$, 62$^{a}$. 1) H. तव । 2) H. पादान् । 3) H. ततस् । 4) H. त्वं प्राप्स्यसे । 5) Bh. Mr. –तं तस्या । 6) Br. H. तथ्यं; Śidh. तद्वचो भविता नित्यं ।

30 = Bḍ. II. 59.61$^{b}$, 62$^{a}$; Bh. I. 79.42$^{bII}$, 43$^{a}$ = a$^{II}$b; Br. 6.30$^{b}$, 31$^{a}$; H. 577; Mr. 106.30$^{bII}$, 31$^{a}$ = a$^{II}$b; Śidh 59.22$^{aIIb}$ = a$^{II}$b; Vā. 84.62$^{b}$, 63$^{a}$. 1) Br. Śidh. आदित्यश्चाब्रवीत् ; H. आदित्योऽथाब्रवीत् । 2) Bh. Mr. छायां; Śidh. तां तु । 3) Bḍ. तु; Bh. तनयावुभौ; Śidh. छायां क्रोधसमन्वितः ।

31 = Bḍ. II. 59.62$^{b}$, 63$^{a}$; Bh. I. 79.43$^{b}$, 44$^{a}$, Br. 6.31$^{b}$, 32$^{a}$; H. 578; Mr. 106.31$^{b}$, 33$^{a}$; Śidh. 59,23$^{a}$ = a; Vā. 84.63$^{b}$, 64$^{a}$. 1) Śidh. किं तुल्येऽ– । 2) Bḍ. H. –त्यधिक–; Mr. Vā. –प्यधिकः । 3) Bh. Mr. एकत्र । 4) H. –इः क्रियतेति पुनः पुनः; Śidh. एतदाख्यातुमर्हसि । 5) Bḍ. Vā. वै; Mr. च; Bh. पुरा भवन् तस्मै । 6) Br. H. विवस्वते ।

32 = Bḍ. II. 59.63$^{b}$, 64$^{a}$; Bh. I. 79.44$^{b}$, 45$^{a}$; Br. 6.32$^{b}$, 33$^{a}$; H. 579; Mr. 106.33$^{b}$, (34$^{a}$); Vā. 84.64$^{b}$, 65$^{a}$. 1) Bḍ. Vā. आत्मना स; Br. Mr. स चात्मानं । 2) Vā. योगं; Bh. वक्तुं; Mr. मुक्तस् । 3) Bḍ. Mr. तत्त्व–; Bh. तस्या– । 4) Br. –न्नाशपन् ; Bh. –मुद्यतः । 5) Bh. ततः; Br. मुनिसत्तमाः; H. कुरुनन्दन; Mr. तं शप्तुमुद्यतं दृष्ट्वा छायासंज्ञा दिवस्पतिम् ।

| 33$^{a}$ = Br. 6.33$^{b}$; H. 580$^{a}$. 1) Br. –पु निज– । 2) Br. स तु तां मुनिसत्तमाः ।

33$^{bc(ab)}$ = Bḍ. II. 59.64$^{b}$, 65$^{a}$; Bh. I. 79.45$^{b}$, 46$^{a}$; Br. 6.34; H. 580$^{b}$, 581$^{a}$; Mr. 106.(34$^{b}$), 35$^{a}$; Śidh. 59.(23$^{b}$), 24$^{a}$; Vā. 84.65$^{b}$, 66$^{a}$. 1) Bḍ. Vā. सा तद् । 2) Bh. छाया । 3) Bḍ. Vā. यथातत्त्वमा–; Mr. भयेन कम्पती ब्रह्मन् आ–; Śidh. सा रवेर्वचनं श्रुत्वा आ– । 4) Br. H. विसवते–; Mr. Śidh. यथावृत्तं( Śidh. तथ्यं )न्यवेदयत् । 5) Bḍ. –स्वान् तु यथा श्रु–; Bh. Mr. –स्वान् तु ततः कु–; Śidh. – पि तच्छ्रु– । 6) Bh. Mr. क्रुद्धः श्रुत्वा । 7) Bh. Mr. त्वष्टार– । 8) Bḍ. Vā. –मभ्ययात् ; Bh. –मागतः ।

त्वष्टा तु[1]) तं यथान्यायमर्चयित्वा विभावसुम्[2]) ।
निर्दग्धुकामं रोषेण सान्त्वयामास वै तदा[3]) ॥ 34 ॥

त्वष्टोवाच :

तवातितेजसाविष्ट[1]मिदं रूपं न शोभते[2]), ।
असहन्ती तु तत् संज्ञा[3]) वने चरति[4]) शाड्वले[5]) ॥ 35 ॥

द्रक्ष्यते[1]) तां भवानद्य स्वां[2]) भार्यां शुभचारिणीम् ।

| | |
|---|---|
| श्लाघ्यां[1]) *योगबलोपेतां*[2]) | रूपार्थं भवतोऽरण्ये |
| योगमास्थाय[3]) गोपते ॥ 36 ॥ | चरन्तीं सुमहत् तपः ॥ 36 ॥ |
| अनुकूलं तु ते देव[1]) | स्मृतं मे[1]) ब्रह्मणो वाक्यं[2]) |
| यदि स्यान्, *मम यन्मतम्*[2]), | यदि ते देव रोचते[3]), । |

रूपं निवर्तयाम्यद्य[1]) तव[2]) कान्त[3]मरिंदम[4]) ॥ 37 ॥

---

34 = Bḍ. II. 59.65[b], 66[a]; Bh. I. 79.46[b], 47[a]; Br. 6.35; H. 581[b], 582; Mr. 106.35[bc]; Śidh. 59.24[b], 25[a]; Vā. 84.66[b], 67[a]. 1) Br. दृष्ट्वा तु; Bh. Mr. स चापि; Śidh. त्वष्टा च । 2) Bh. Mr. दिवाकरम् । 3) Bḍ. Bh. Vā. वै (Bh. तं) शनैः; Mr. सुव्रतः ।

35 = Bḍ. II. 59.66[b], 67[a]; Bh. I. 79.47[b], 48[a]; Br. 6.36; H. 583; Mr. 106.36; Śidh. 59.25[b], 26[a]; Vā. 84.67[b], 68[a]. 1) Bḍ. Vā. –सा युक्त–; Mr. –सा व्याप्त–; Śidh. –सा दग्धा–इ । 2) Bh. Mr. सुदुःसहम् । 3) Bh. तु संज्ञा च; Br. च संज्ञा सा; H. Śidh. च तव संज्ञा ; Mr. ततः संज्ञा । 4) Śidh. वसति । 5) Mr. वै तपः ।

36[a] = Bḍ. II. 59.67[b]; Bh. I. 79.48[b]; Br. 6.37[a]; H. 584[a]; Mr. 106.37[a]; Vā. 84.68[b]. 1) Br. H. द्रष्टा हि । 2) Mr. स्व– ।

| | |
|---|---|
| 36[b] = Bḍ. II. 59.68[a]; Br. 6.37[b]; H. 586[a]; Śidh. 59.26[b]; Vā. 84.69[a]. 1) Bḍ. श्लाघ्य–; Śidh. श्लाघ्या । 2) Bḍ. Vā. यौवनसंपन्नां; Śidh. योगबलोपेता । 3) Śidh. –मासाद्य । | 36[b] = Bh. I. 79.49[a]; Mr. 106.37[b]. |
| 37[a] = Bḍ. II. 59.68[b]; Br. 6.38[a]; H. 586[b]; Śidh. 59.27[a]; Vā. 84.69[b]. 1) Bḍ. Vā. मवेदेवं; Śidh. तु देवेश । 2) Bḍ. Vā. स्यात् समयो मतः; Br. संमतम्; H. तन्मतं । | 37[a] = Bh. I. 79.49[b]; Mr. 106.38[a]. 1) Bh. रूपं ते । 2) Bh. वाक्याद् । 3) Bh. वै रोचते विभो । |

37[b] = Bḍ. II. 59.69[a]; Br. 6.38[b]; H. 587[a]; Mr. 106.38[b]; Śidh. 59.27[b]; Vā. 84.70[a]. 1) Bḍ. Vā. निवर्तयेऽयं ते; Br. निवर्तयाम्यद्य ; Mr. –म्येतत् । 2) Bḍ. स्वार्थं; Vā. आर्यं; Śidh. नवं । 3) Bḍ. Vā. श्रेष्ठ– । 4) Mr. –न्तं दिवस्पते; Śidh. करोम्यहम् ।

ततोऽभ्युपगमात्[1]) त्वष्टा[2]) | विश्वकर्मा त्व[1]नुज्ञातः ।
मार्तण्डस्य विवस्वतः । | शाकद्वीपे विवस्वतः ।
भ्रमिमारोप्य तत् तेजः शातयामास तस्य वै[1]) ॥ 38 ॥

ततो[1]) निर्भासितं[2]) रूपं[3]) तेजसा संहृतेन[4]) तु[5]) ।
कान्तात्[6]) कान्ततरं[7]) द्रष्टु[8]मधिकं[9]) शुशुभे तदा[10]) ॥ 39 ॥

ददर्श[1]) योगमास्थाय[2]) स्वां भार्यां वडवां तथा[3]) ।
अधृष्यां[4]) सर्वभूतानां तेजसा[5]) नियमेन च[6]) ॥ 40 ॥

| वडवावपुषा विप्रा[1]श्चरन्तीमकुतोभयाम् ।

सोऽश्वरूपेण[1]) मार्तण्ड[2]स्तां मुखे समभावयत्[3]) ।
मैथुनाय विचेष्टन्तीं[4]) परपुंसोपशङ्कया[5]) ॥ 41 ॥

सा तन्निरवमच्छु[1]क्रं नासिकाभ्यां[2]) विवस्वतः[3]) ।
देवौ तस्याम[4]जायेताम[5]श्विनौ भिषजां वरौ ॥ 42 ॥

---

38ª = Bḍ. II. 59.71ᵇ; Br. 6.39ª; H. 589ᵇ; Śidh. 59.28ª; Vā. 84.72ᵇ. 1) Bḍ. ततोऽभ्युपागमत् ; Śidh. तच्छ्रुत्वापगतः । 2) Śidh. क्रोधो । | 38ª = Bh. I. 79.51ᵇ; Mr. 106.40ª. 1) Bh. ह्य- ।

38ᵇ = Bḍ. II. 59.72ª; Bh. I. 79.52ª; Br. 6.39ᵇ; H. 590ª; Mr. 106.40ᵇ; Śidh. 59.28ᵇ; Vā. 84.73ª. 1) Br. भो द्विजाः; H. भारत; Śidh. वै मुनिः; Mr. शातनायोपचक्रमे ।

39 = Bḍ. II. 59.72ᵇ, 73ª; Bh. I. 79.53ᵇ, 54ª; Br. 6.40; H. 590ᵇ, 591ª; Śidh. 59.29; Vā. 84.73ᵇ, 74ª. 1) Bh. तत्र; Vā. तत्तु । 2) Bḍ. तं निर्मूच्छित-; Bh. तद्भासितं; Śidh. विभ्राजितं । 3) Bḍ. तेजस्कं; Vā. तेजस् । 4) Bḍ. Vā. तेजसापहृतेन; Bh. प्रकृतेन; Śidh. संवृतेन । 5) Br. H. वै; Śidh. च । 6) Bḍ. कान्तां; Śidh. कृतं । 7) Bḍ. प्रभाकरो । 8) Bh. भूत्वा; Śidh. रूपं । 9) Bḍ. -मियेप; Śidh. त्वष्टा तच् ; Vā. -मशुभं । 10) Bḍ. शुभदर्शनः; Bh. Vā. ततः ।

40 = Bḍ. II. 59.73b, 74ª; Bh. I. 79.54ᵇ, 55ª; Br. 6.41; H. 598. Mr. 108.6ᵇ, 7ª; Śidh. 59.30; Vā. 84.74ᵇ, 75ª. 1) Śidh. ततोऽसौ । 2) Mr. स ददर्श समाधिस्थः । 3) Br. H. ततः; Mr. वडवाकृतिम् ; Śidh. वै ददर्श ह । 4) Śidh. अधृष्यं । 5) H. Mr. तपसा । 6) Bh. स्वेन संवृताम् ।

| 41ª = Br. 6.42ª; H. 599ª. 1) H. राजं- ।

41(bc, ab) = Bḍ. II. 59.74ᵇ, 75ª; Bh. I. 79.55ᵇ, 56ª; Br. 6.42ᵇ, 43ª; H. 599ᵇ, 600ª; Mr. 108.(7ᵇ, 8ª); Śidh. 59.31(ª)ᵇ; Vā. 84.75ᵇ, 76ª. 1) Bḍ. Bh. Vā. अश्वरूपेण; Śidh. सोऽश्वरूपं । 2) Br. H. भगवां-; Śidh. समास्थाय । 3) Bh. न समासदत् ; Śidh. गत्वा तां मैथुनाय च; Mr. उत्तरांश्च कुरून् गत्वा भूत्वाश्वो भानुरागमत् । 4) Bḍ. मैथुनान्तनिविष्टा च; Śidh. Vā. विचेष्टन्ती; Mr. सा च दृष्ट्वा तमायान्तं । 5) Bḍ. -ऽभिशङ्कया; Bh. Mr. -सो विशङ्कया; Br. -सोऽवशङ्कया; H. परपुरुषशङ्कया ।

42 = Bḍ. II. 59.75ᵇ, 76ª; Bh. I. 79.56ᵇ, 57ª; Br. 6.43ᵇ, 44ª; H. 600ᵇ, 601ª; Mr. 108.9ᵇᴵᴵ, 10ª = aᴵᴵb; Śidh. 59.32(ª)ᵇ; Vā. 84.76ᵇ, 77ª. 1) Bḍ. तं निस्सारयामास; Bh. तद्विवस्वतः शु ; Vā. -न्निरथमच्छु- । 2) Bḍ. नोस्यां शुक्रं; Bh. नासाभ्यां; H. नासिकायां । 3) Bh. समधारयत् ; Śidh. मुखतो नासिकायां तु शुक्रं तन् न्यदधन् मुने । 4) Bḍ. Vā. तस्माद्-; Mr. तत्र; Śidh. ततः । 5) Mr. समुत्पन्नाव-; Sidh. प्रजायेताम- ।

नासत्यश्चैव दस्रश्च[1]) स्मृतौ द्वावश्विनाविति[2]) ।
मार्तण्डस्य सुता[3]वेतावष्टमस्य प्रजापतेः[4]) ॥ 43 ॥

तां तु रूपेण कान्तेन[1]) दर्शयामास भास्करः[2]), ।
सा तु दृष्ट्वैव भर्तारं[3]) तुतोष च मुमोह च[4]) ॥ 44 ॥

यमस्तु तेन शापेन[1]) भृशं पीडितमानसः[2]) ।
धर्मेण रञ्जयामास[3]) धर्मराज इमाः प्रजाः[4]) ॥ 45 ॥

स लेभे[1]) कर्मणा तेन[2]) शुभेन परमद्युतिः[3]) ।
पितृणामाधिपत्यं च लोकपालत्वमेव च[4]) ॥ 46 ॥

मनुः प्रजापतिस्त्वासीत्[1]) सावर्णिः[2]) स महायशाः[3]) ।
भाव्यः सोऽनागते[4]) तस्मिन्[5]) मनुः सावर्णिकेऽन्तरे[6]) ॥ 47 ॥

---

43 = Bḍ. II. 59.76[b], 77[a]; Bh. I. 79.57[b] = a; Br. 6.44[b], 45[a]; H. 601[b], 602[a]; Mr. 108.10[b], 11[a]; Śidh. 59.32[b]-a; Vā. 84.77[b], 78[a]. 1) Mr. नासत्यदस्रौ तनया–; Śidh. नासत्यौ तौ च दस्रौ च । 2) Bḍ. द्वादशमूर्तितः; Bh. तौ स्मृतौ नामतोऽश्विनौ; Śidh. –वपि; Mr. –वश्ववक्त्राद्विनिर्गतौ । 3) Br. H. –स्यात्मजा– । 4) Mr. –वस्वरूपधरस्य हि ।

44 = Bḍ. II. 59.77[b], 78[a]; Bh. I. 79.58; Br. 6.45[b], 46[a]; H. 602[b], 603[a]; Mr. 108.12[b], (13[a]); Śidh. 59.33[b], (34[a]); Vā. 84.78[b], 79[a]. 1) Bh. अतः परं स्वकं रूपं; Mr. ततः स्वरूपममलं; Śidh. तौ तु कान्तेन रूपेण । 2) Mr. भानुमान् । 3) Bḍ. स तां दृष्ट्वा तदा भार्यां; Bh. तद् दृष्ट्वा चापि संज्ञा तु; Mr. तस्य शान्तं समालोक्य; Śidh. आत्मानं सा तु तं दृष्ट्वा । 4) Bḍ. तुतोपैतामुवाच ह; Br. मुनिसत्तमाः; H. जनमेजय; Mr. सा रूपं मुदमाददे; Śidh. प्रहृष्टा प्रतिमादरात् ।

45 = Bḍ. II. 59.78[b], 79[a]; Bh. I. 79.(69[b]), 70[a]; Br. 6.46[b], 47[a]; H. 603[b], 604[a]; Mr. 108.15[b], 16[a]; Śidh. 59.34[b], 35[a]; Vā. 84.79[b], 80[a]. 1) Bh. दृष्ट्वा जनं सदा तात; Br. H. Śidh. कर्मणा तेन । 2) Bh. –सन् । 3) Mr. धर्मोऽभिरोचते यस्माद् । 4) Bḍ. Vā. धर्मराजस्ततस्तु सः; Bh. Mr. धर्मराजस्ततः स्मृतः ।

46 = Bḍ. II. 59.79[b], 80[a]; Bh. I. 79.70[b], 71[a]; Br. 6.47[b], 48[a]; H. 604[b], 605[a]; Mr. 108.(18[b]), 19[a]; Śidh. 59.35[b], 36[a]; Vā. 84.80[b], 81[a]. 1) Bḍ. Vā. सोऽलभत् ; Bh. शुद्धेन; Śidh. लेभे स । 2) Bh. तात । 3) Bḍ. परमां द्युतिम् ; Bh. परमद्युतिम् ; Śidh. धर्मराजो महाद्युतिः; Mr. तस्मै ददौ पिता विप्र भगवान् लोकपालताम् । 4) Bh. –माप च; Mr. परितुष्टो दिवाकरः ।

47 = Bḍ. II. 59.80[b], 81[a]; Bh. I. 79.73[b], (74[a]); Br. 6.48[b], 49[a]; H. 605[b], 606[a]; Mr. 108.24; Śidh. 59.36[b], 37[a]; Vā. 84.81[b], 82[a]. 1) Bḍ. Bh. –स्त्वेप; Vā. –स्त्वेवं; Mr. छायासंज्ञासुतश्चापि । 2) Mr. Śidh. Vā. –र्णः । 3) Br. Śidh. तपोधनाः; H. तदोच्यते; Mr. सुमहायशाः । 4) Br. T. भाव्यः समागते; Vā. T. भाव्यसौ नागते । 5) Mr. काले; Śidh. भावी सोऽवर्तकेन्यस्मिन् । 6) Mr. M. सावर्णकोऽष्टमः; Bh. भविष्यः स मनुस्तात अष्टमः परिकीर्तितः ।

मेरुपृष्ठे तपो घोरम[1]द्यापि चरते प्रभुः[2]) ।
भ्राता शनैश्चरस्तस्य[3]) ग्रहत्वं स तु[4]) लब्धवान्[5]) ॥ 48 ॥

त्वष्टा तु[1]) तेजसा तेन[2]) विष्णोश्चक्रमकल्पयत्[3]), ।
तदप्रतिहतं युद्धे[4]) दानवान्तचिकीर्षया[5]) ॥ 49 ॥

यवीयसी तयोर्या तु[1]) यमी कन्या[2]) यशस्विनी[3]), ।
अभवत् सा[4]) सरिच्छ्रे[5]ष्ठा यमुना लोकपावनी[6]) ॥ 50 ॥

मनुरित्युच्यते लोके
सावर्ण इ[1]ति चोच्यते, ।
द्वितीयो यः सुतस्तस्य
मनोर्भ्राता शनैश्चरः, ।
ग्रहत्वं स तु[2]) लेभे वै
सर्वलोकाभिपूजितः[3]) ॥ $50_1$ ॥

यस्तु ज्येष्ठो महातेजाः[1])
सर्गो यस्य तु[2]) सांप्रतम्, ।
विस्तरं तस्य वक्ष्यामि
मनोर्वैवस्वतस्य ह ॥ $50_1$ ॥

य इदं[1]) जन्म देवानां[2]) शृणुयाद् वा पठेत वा[3]) ।
आपदं प्राप्य मुच्येत[4]) प्राप्नुयाच्च[5]) महद्यशः[6]) ॥ 51 ॥

---

48 = Bḍ. II. 59.81$^{b}$, 82$^{a}$; Bh. I. 79.74$^{b}$, 75$^{a}$; Br. 6.49$^{b}$, 50$^{a}$; H. 606$^{b}$, 607$^{a}$; Mr. 108.25; Śidh, 59.37$^{b}$, 38$^{a}$; Vā. 84.82$^{b}$, 83$^{a}$. 1) Bh. दिव्यम–; Br. नित्यम–; Vā. सुरम्ये वै अ– । 2) Br. स चरत्युत; H. चरति प्रभुः । 3) Bḍ. Vā. –स्तत्र; H. –श्चास्य; Śidh. –श्चापि । 4) H. –त्वमुप–; Śidh. प्रग्रहत्वं स । 5) Mr. ग्रहोऽभूच्छासनाद्रवेः ।

49 = Bḍ. II. 59.82$^{b}$, 83$^{a}$; Bh. I. 79.81$^{b}$ = a; Br. 6.50$^{b}$, 51$^{a}$; H. 608$^{b}$, 609$^{a}$; Śidh. 59.38$^{b}$, 39$^{a}$; Vā. 84.83$^{bc}$. 1) Bh. त्वष्टापि । 2) Bḍ. Vā. तेन रूपेण । 3) Bh. मार्तण्डस्यैव चाज्ञया; Śidh. –मवर्तयत् । 4) Bḍ. महामहोऽप्रतिहतं; Vā. महाप्रतिहतं युद्धे । 5) Bḍ. दानवान् प्रति वारणम् ; Vā. दानवप्रतिवारणे; Śidh दानवानां चिकीर्षया ।

50 = Bḍ. II. 59.83$^{b}$, 84$^{a}$; Bh. I. 79.72$^{b}$, 73$^{a}$; Br. 6.51$^{b}$, 52$^{a}$; H. 609$^{b}$, 610$^{a}$; Mr. 108.26; Śidh. 59.39$^{b}$, 40$^{a}$; Vā. 84.84. 1) Bh. यमस्य भगिनी या तु; Br. H. तु सा( H. या )ऽप्यासीद् ; Mr. तु या कन्या; Śidh, जातु । 2) Bḍ. Vā. यमुना च; Śidh. यमकन्या । 3) Mr. –न्यादित्यस्याभूद् द्विजोत्तम । 4) Br. H. Mr. च । 5) Bh. साभवत् सरितां श्रे– । 6) H. Vā. लोकभाविनी ।

$50_1$ = Br. 6.52$^{b}$, 53; H. 610$^{b}$, 611; Śidh. 59.40$^{b}$ = a. 1) Śidh. –णिरि– । 2) Br. च । 3) H. –तम् ।

$50_1$ = Bḍ. II. 59.54$^{b}$, 55$^{a}$; Mr. 108.27; Vā. 84.85. 1) Mr. –भागः । 2) Bḍ. –स्येति; Mr. –स्येह ।

51 = Bḍ. II. 59.85$^{b}$, 86$^{a}$; Bh. I. 79.82$^{b}$, (83$^{b}$); Br. 6.54; H. 612; Mr. 108.28$^{a}$, 29$^{a}$; Śidh. 59.41; Vā. 84.86$^{ac}$. 1) Bḍ. Vā. इदं तु; Br. स इदं; Mr. इदं यो; Śidh. यदिदं । 2) Bh. देवस्य । 3) Bḍ. पठेच्च वा; Br. नरसत्तमः; H. वापि धारयेत् ; Śidh. धारयेत वा । 4) H. आपदः स विमुच्येत । 5) Śidh. –यात् सु– । 6) Mr. महायशः; Bh. सर्वपापविनिर्मुक्तो याति सूर्यसलोकताम् ।

---

## सन्दर्भस्तवकः 11

( Mt. 11.1—39; P.1 I. 8.36—75ᵃ; P.2 V. 8.35—74; Cp. A. 273.1—4; Kū. 20.1—4ᵃ; L. 65.2—17ᵃ. )

आदित्यवंशमखिलं वद सूत[1]) यथाक्रमम् ।
सोमवंशं च तत्त्वज्ञ यथावद् वक्तुमर्हसि ! ॥ 1 ॥

सूत ( पुलस्त्य ) उवाच :

विवस्वान् कश्यपात् पूर्वमदित्यामभवत् सुतः[1]), ।
तस्य पत्नीत्रयं तद्वत् संज्ञा राज्ञी प्रभा तथा ॥ 2 ॥
रैवतस्य सुता राज्ञी रे[1]वतं सुषुवे सुतम्, ।
प्रभा प्रभातं सुषुवे, त्वाष्ट्री संज्ञा तथा मनुम्, ॥ 3 ॥
यमश्च यमुना चैव यमलौ तु बभूवतुः ।
ततस्तेजोमयं रूपमसहन्ती विवस्वतः ॥ 4 ॥
नारीमुत्पादयामास स्वशरीरादनिन्दिताम्[1]) ।
त्वाष्ट्री स्वरूपरूपेण नाम्ना छायेति भामिनी ॥ 5 ॥

| | |
|---|---|
| पुरतः सस्थितां दृष्ट्वा<br>संज्ञा तां प्रत्यभाषत । | किं करोमीति पुरतः<br>संस्थिता[1]) तामभाषत । |

छाये त्वं भज भर्तारं *मदीयं* च[1]) वरानने ॥ 6 ॥
अपत्यानि मदीयानि मातृस्नेहेन पालय ! ।
तथेत्युक्त्वा च[1]) सा देवमगात् कामाय[2]) सुव्रता ॥ 7 ॥
कामयामास देवोऽपि संज्ञेयमिति चादरात् ।
जनयामास *सावर्णि*[1]) *मनुं* *मनुस्व*[2]रूपिणम्, ॥ 8 ॥
सवर्णत्वाच्च सावर्णि[1]र्मनोर्वैवस्वतस्य च[2]) ।
ततः *शनिं*[3]) च तपतीं विष्टिं[4]) चैव क्रमेण तु[5]) ॥ 9 ॥
छायायां जनयामास संज्ञेयमिति भास्करः ।
छाया स्वपुत्रेऽभ्य[1]धिकं स्नेहं[2]) चक्रे मनौ तदा[3]) ॥ 10 ॥

---

1 = Mt. 11.1; P.1 I. 8.36; P.2 V. 8.35. 1) P.1 P.2 ब्रह्मन् ।
2 = Mt. 11.2; P.1 I. 8.37; P.2 V. 8.36. 1) P.1 पुरा ।
3 = Mt. 11.3; P.1 I. 8.38; P.2 V. 8.37, 38ᵃ. 1) P.2 रै– ।
4 = Mt. 11.4; P.1 I. 8.39; P.2 V. 8.38ᵇ, 39ᵃ.
5 = Mt. 11.5; P.1 I. 8.40; P.2 V. 8.39ᵇ, 40ᵃ. 1) P.2 –ता ।

| | |
|---|---|
| 6ᵃ = Mt. 11.6ᵃ. | 6ᵃ = P.1 I. 8.41ᵃ; P.2 V. 8.40ᵇ. 1) P.2 –ता । |

6ᵇ = Mt. 11.6ᵇ; P.2 I. 8.41ᵇ; P.2 V. 8.41ᵃ. 1) Mt. अस्मदीयं; P.1 –यं तं ।
7 = Mt. 11.7; P.1 I. 8.42; P.2 V. 8.41ᵇ, 42ᵃ. 1) Mt. तु । 2) Mt. T. -मगमत् क्वापि ।
8 = Mt. 11.8; P.1 I. 8.43; P.2 V. 8.42ᵇ, 43ᵃ. 1) P.2 –र्णं । 2) Mt. –स तस्यां तु पुत्रं च मनु– ।
9 = L. 65.5ᵇ = b; Mt. 11.9; P.1 I. 8.44; P.2 V. 8.43ᵇ, 44ᵃ. 1) P.1 –र्णे–; P.2 –र्णो । 2) P.1 तु । 3) P.1 सुतां; P.2 शनैश्चरं । 4) P.1 त्वाष्ट्रीं । 5) L. यथाक्रमम् ।
10 = L. 65.6ᵃ = b; Mt. 11.10; P.1 I. 8.45; P.2 V. 8.44ᵇ, 45ᵃ. 1) P.1 –स्वभ्य– । 2) P.2 T. मनसु । 3) Mt. T. तथा ।

पूर्वो मनुस्तच्च[1]क्षाम[2]), यमस्तु[3]) क्रोधमूर्छितः ।
सं[4]तर्जयामास[5]) तदा[6]) पादमुद्यम्य[7]) दक्षिणम् ॥ 11 ॥

शशाप च यमं छाया सव्रणः[1]) कृमिसंयुतः ।
पादोऽयमेको भविता पूयशोणितविस्रवः ! ॥ 12 ॥

निवेदयामास पितुर्यमः शापेन धर्षितः[1]) ।
निष्कारणमहं शप्तो मात्रा देव सकोपया ॥ 13 ॥

बालभावात् मया किंचिदुद्यतश्चरणः सकृत्[1]), ।
मनुना वार्यमाणापि मम शापमदाद्[2]) विभो ॥ 14 ॥

प्रायो न माता सास्माकमसमा स्नेहतो यतः[1]) ।
देवोऽप्याह यमं भूयः किं करोमि महामते ? ॥ 15 ॥

सौख्यात्[1]) कस्य न दुःखं स्याद् ? अथवा कर्मसंततिः ।
अनिवार्या भवस्यापि; का कथान्येषु जन्तुषु ? ॥ 16 ॥

कृकवाकुस्तव पदे स[1]) कृमीन्[2]) भक्षयिष्यति ।
क्लेदं च रुधिरं चैव वत्सायमपनेष्यति[3]) ॥ 17 ॥

एवमुक्तस्तपस्तेपे यम[1]स्तीव्रं महायशाः[2]) ।

| | |
|---|---|
| गोकर्णतीर्थे वैराग्यात् | वैराग्यात् पुष्करे तीर्थे |
| फलपत्रा[1]निलाशनः ॥ 18 ॥ | फलफेनानिलाशनः ॥ 18 ॥ |
| आराधयन् महादेवं | पितामहं समाराध्य |
| यावद् वर्षायुतायुतम्, । | यावद् वर्षायुतं[1]) पुनः, । |
| वरं प्रादान् महादेवः | तपःप्रभावाद् देवेशः |
| संतुष्टः शूलभृत् तदा ॥ 19 ॥ | संतुष्टः पद्मसंभवः ॥ 19 ॥ |

वव्रे स लोकपालत्वं पितृलोकं तथाक्षयम्[1]) ।
धर्माधर्मात्मकस्यास्य[2]) जगतस्तु परीक्षणम् ॥ 20 ॥

---

11 = L. 65.6[b], 7[a]; Mt. 11.11; P.1 I. 8.46; P.2 V. 8.45[b], 46[a]. 1) L. –नुर्न च–; Mt. –स्तु च– । 2) P.2 –क्षमे; P.1 न चक्षमे मनुस्पूर्वस् । 3) Mt. न यमः; P.1 तथमः । 4) P.2 तां । 5) L. –ताडयामास । 6) L. रुषा । 7) P.1 P.2 –मुत्क्षिप्य ।

12 = Mt. 11.12; P.1 I. 8.47; P.2 V. 8.46[b], 47[a]. 1) Mt. सक्षतः; P.1 भवतु ।

13 = Mt. 11.13; P.1 I. 8.48; P.2 V. 8.47[b], 48[a]. 1) Mt. –पादमर्पितः ।

14 = Mt. 11.14; P.1 I. 8.49; P.2 V. 8.48[b], 49[a]. 1) P.2 T. क्वचित् । 2) P.2 मां शशाप मदाद् ।

15 = Mt. 11.15; P.1 I. 8.50; P.2 V. 8.49[b], 50[a]. 1) Mt. शापेनाहं यतो हतः ।

16 = Mt. 11.16; P.1 I. 8.51; P.2 V. 8.50[b], 51[a]. 1) Mt. मौर्ख्यात् ।

17 = Mt. 11.17; P.1 I. 8.52[a](b); P.2 V. 8.51[b], 52[a]. 1) Mt. कुर्मया दत्तो यः । 2) P.1 कृमिं । 3) P.1 खञ्जं च रुधिरं चैव पादमेतद्भविष्यति ।

18[a] = Mt. 11.18[a]; P.1 I. 8.53[a]; P.2 V. 8.52[b]. 1) P.1 तस्समाश्वस्तस्तप–; P.2 उक्त्वा तु ( उक्तस्तु ) शशश्च ( चक्रे स ) तप– । 2) P.1 चकार ह ।

18[b] = L. 65.(9[a]); Mt. 11.18[b]. 1) L. सोऽपि गोकर्णमाश्रित्य फलफेना– ।

19 = L. 65.9[b] = a; Mt. 11.19.

18[b] = P.1 I, 8.53[b]; P.2 V. 8.53[a].

19 = P.1 I. 8.54; P.2 V. 8.53[b], 54[a]. 1) P.2 T. –पंशतं ।

20 = Mt. 11.20; P.1 I. 8.55; P.2 V. 8.54[b], 55[a]. 1) Mt. के नृपालयम् । 2) Mt. –कस्यापि ।

एवं स लोकपालत्व-
मगमच्छूलपाणिनः[1])।

| एवं स लोकपालत्व-
मगमत् पद्मसंभवात्।

पितृणामाधि[1]पत्यं च धर्माधर्मस्य चानघ[2])॥ 21॥
विवस्वानथ तज्ज्ञात्वा संज्ञायाः कर्मचेष्टितम्।
त्वष्टुः समीपमगमदा[1]चचक्षे च[2]) रोषवान्॥ 22॥
तमुवाच ततस्त्वष्टा सान्त्वपूर्वमिदं वचः[1])।
तवासहन्ती भगवंस्तेज[2]स्तीव्रं तमोनुद[3])॥ 23॥
वडवारूपमास्थाय मत्सकाशमिहागता[1])।
निवारिता मया सा तु[2]) त्वद्भयेन दिवस्पते[3])॥ 24॥
यस्मादविज्ञाततया[1]) मत्सकाशमिहागता;।
तस्मान् मदीयं भवनं प्रवेष्टुं न त्वमर्हसि[2])॥ 25॥
एवमुक्ता जगामाथ[1]) मरुदेशमनिन्दिता।
वडवारूपमास्थाय भूतले संप्रतिष्ठिता[2])॥ 26॥
तस्मात् प्रसादं कुरु मे, यद्य[1]नुग्रहभागहम्।
अपनेष्यामि ते तेजः कृत्वा यन्त्रे[2]) दिवाकर[3]),॥ 27॥
रूपं तव करिष्यामि लोकानन्दकरं प्रभो।
तथेत्युक्तः स रविणा भ्रमौ[1]) कृत्वा दिवाकरम्॥ 28॥
पृथक् चकार तत् तेजश्च[1]क्रं विष्णोरकल्पयत्[2])।
त्रिशूलं चापि रुद्रस्य वज्रमिन्द्रस्य चाधिकम्[3])॥ 29॥
दैत्य-दानव-संहर्तुः[1]) सहस्र[2]किरणात्मकम्।
रूपं चाप्रतिमं चक्रे त्वष्टा पद्भ्यामृते महत्,॥ 30॥
न शशाकाथ[1]) तद्[2]) द्रष्टुं पादरूपं रवेः पुनः।
अद्यापि च[3]) ततः पादौ न कश्चित् कारयेत् क्वचित्,॥ 31॥

---

21ᵃ = L. 65.(10ᵃ); Mt. 11.21ᵃ. 1) L. भवप्रसादादागत्य लोकपालत्वमुत्तमम्। | 21ᵃ = P.1 I. 8.56ᵃ; P.2 V. 8.55ᵇ.

21ᵇ = L. 65.10ᵇ; Mt. 11.21ᵇ; P.1 I. 8.56ᵇ; P.2 V. 8.56ᵃ. 1) Mt. –णां चाधि–। 2) L. तु शापमोक्षं तथैव च।

22 = Mt. 11.22; P.1 I. 8.57; P.2 V. 8.56ᵇ, 57ᵃ. 1) P.2 –मागम्य आ–। 2) P.1 P.2 स।

23 = Mt. 11.23; P.1 I. 8.58; P.2 V. 8.57ᵇ, 58ᵃ. 1) Mt. –र्वं द्विजोत्तमाः; P.2 –र्वं तदा वचः। 2) Mt. –वन् मह–। 3) Mt. –दम्।

24 = L. 65.12ᵇ = a; Mt. 11.24; P.1 I. 8.59; P.2 V. 8.58ᵇ, 59ᵃ. 1) L. तपस्तेपे तु सुव्रता। 2) P.1 सा च; P.2 संज्ञा। 3) Mt. त्वया चैव दिवाकर।

25 = Mt. 11.25; P.1 I. 8.60; P.2 V. 8.59ᵇ, 60ᵃ. 1) P.1 P.2 –मना। 2) P.1 न तवार्हति; P.2 तवार्हितम्।

26 = Mt. 11.26; P.1 I. 8.61; P.2 V. 8.60ᵇ, 61ᵃ. 1) P.1 P.2 V. जगामास। 2) P.2 –ति स्थिता।

27 = Mt. 11.27; P.1 I. 8.62; P.2 V. 8.61ᵇ, 62ᵃ. 1) P.2 यद–। 2) Mt. –जो यन्त्रे कृत्वा। 3) P.1 –रम्।

28 = Mt. 11.28; P.1 I. 8.63; P.2 V. 8.62ᵇ, 63ᵃ. 1) P.1 P.2 –मे।

29 = Mt. 11.29; P.1 I. 8.64; P.2 V. 8.63ᵇ, 64ᵃ. 1) P.1 –र तेजश्च च–। 2) P.1 –ष्णोः प्रकल्पयत्; P.2 V. –यन्। 3) P.1 चापरम्।

30 = Mt. 11.30; P.1 I. 8.65; P.2 V. 8.64ᵇ, 65ᵃ. 1) P.1 P.2 –र्तुं। 2) P.2 प्रतप्त–।

31 = Mt. 11.31; P.1 I. 8.66; P.2 V. 8.65ᵇ, 66ᵃ. 1) P.1 –क च। 2) P.2 तं। 3) Mt. अर्चास्वपि।

यः करोति, स पापिष्ठां[1]) गतिमा[2]प्नोति निन्दिताम्, ।
कुष्ठरोगमवाप्नोति लोकेऽस्मिन् दुःखसंयुतम्[3]) ॥ 32 ॥

तस्माच्च[1]) धर्मकामार्थी चित्रेष्वायतनेषु च ।
न क्वचित् कारयेत्पादौ देवदेवस्य धीमतः ॥ 33 ॥

ततः स भगवान् गत्वा भूर्लोकममराधिपः ।
कामयामास कामार्तो[1]) मुख एव दिवाकरः ॥ 34 ॥

अश्वरूपेण महता तेजसा च समन्वितः[1]) ।
संज्ञा च मनसा क्षोभमगमद् भयविह्वला ॥ 35 ॥

नासापुटाभ्यामुत्सृष्टं[1]) परोऽयमिति शङ्कया ।
तस्याथ रेतसो[2]) जातावश्विनाविति नः श्रुतम्[3]) ॥ 36 ॥

दस्रौ सुत[1]त्वात् संजातौ नासत्यौ नासिकाग्रतः ।
ज्ञात्वा चिराच्च सा[2]) देवं संतोषमगमत् परम् ॥ 37 ॥

विमानेनागमत् स्वर्गं पत्या[1]) सह मुदान्विता[2]) ।
सावर्णो[3]ऽपि मनुर्मेरावद्यापि तपते तपः[4]) ॥ 38 ॥

शनिस्तपोबलाच्चापि ग्रहाणां समतां गतः[1]) ।
यमुना तपती चैव पुनर्न[2]द्यौ बभूवतुः, ।
विष्टिर्घोरात्मिका तद्वत् कालत्वेन व्यवस्थिता ॥ 39 ॥

---

32 = Mt. 11.32; P.1 I. 8.67; P.2 V. 8.66[b], 67[a]. 1) P.1 –ष्ठो । 2) P.2 –र्ति प्रा– । 3) Mt. –तः; P.1 –श्रितम् ।

33 = Mt. 11.33; P.1 I. 8.68; P.2 V. 8.67[b], 68[a]. 1) P.1 –मान् न ।

34 = Mt. 11.34; P.1 I. 8.69; P.2 V. 8.68[b], 69[a]. 1) P.2 –र्तां ।

35 = Mt. 11.35; P.1 I. 8.70; P.2 V. 8.69[b], 70[a]. 1) P.2 समावृतः ।

36 = Mt. 11.36; P.1 I. 8.71; P.2 V. 8.70[b], 71[a]. 1) P.2 –मुत्क्षिप्तं । 2) Mt. तद्रेतसस्ततो; P.2 रेत्रस्तो । 3) Mt. निश्चितम् ।

37 = Mt. 11.37[ab]; P.1 I. 8.72; P.2 V. 8.71[b], 72[a]. 1) P.1 P.2 श्रुति– । 2) Mt. P.1 तं ।

38 = Mt. 11.37[c], 38[a]; P.1 I. 8.73; P.2 V. 8.72[b], 73[a]. 1) P.1 स्वर्गं पत्न्या; P.2 पत्न्या । 2) P.1 P.2 –तः । 3) P.1 सावर्ण्यो । 4) Mt. –वद्याप्यास्ते तपोधनः ।

39 = Mt. 11.38[b], 39; P.1 I. 8.74, 75[a]; P.2 V. 8.73[b], 74. 1) Mt. –लादाप ग्रहसाम्यं ततः पुनः । 2) P.2 उभे न– ।

---

# द्वितीयोऽध्यायः

## सन्दर्भस्तवकः I

### A.

( Bḍ. II. 60.2—63.89; Br. 7.1—109; H. 613—729; Śidh. 60.1—91; Vā. 85.3[b]—88.90; Cp. A. 273.4—26[a]; Bhg. IX. 1.10—7.6; De. VII. 2.16—28.83; Ga. 138.1—26[a]; Kū. 20.4[b]—31; L. 65.17[b]—48; Mr. 111.4—136.38; Vi. IV. 1.1—3.12. )

मनोर्वैवस्वतस्यासन्[1]) पुत्रा वै नव[2]) तत्समाः ।
इक्ष्वाकुश्चैव[3]) नाभागो[4]) धृष्टः[5]) शर्यातिरेव च ॥ 1 ॥

नरिष्यन्तस्तथा[1]) प्रांशु[2]र्नाभागारिष्ट[3]सप्तमाः[4]) ।
करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः[5]) ॥ 2 ॥

अकरोत् पुत्रकामस्तु मनुरि[1]ष्टिं प्रजापतिः ।
| मित्रा-वरुणयोर्विंशाः[1]) पूर्वमेव महामतिः[2]) ॥ 3 ॥
| अनुत्पन्नेषु नवसु[1]) पुत्रेष्वेतेषु भो द्विजाः[2]) ।
| तस्यां च[3]) वर्तमानायामिष्टयां च[4]) द्विजसत्तमाः[5]) ॥ 4 ॥

मित्रा-वरुणयोरंशे मनुराहुति[1]माजुहोत्[2]) ।
तत्र दिव्याम्बरधरा दिव्याभरणभूषिता ॥ 5 ॥

---

1 = A. 273.5; Bḍ. II. 60.2; Br. 7.1; De. VII. 2.18[b] = b; H. 613; Kū. 20.4[b], 5[a]; L. 65.17[b], 18[a]; Śidh. 60.1; Vā. 85.3[b], 4[a]. 1) Bḍ. तस्माद्वैवस्वतात् ; Kū. L. मनोस्तु प्रथमस्यासन् ; Vā. मनोः प्रथमजस्यासन् । 2) A. दै न च; Bḍ. जज्ञिरे दश; Kū. L. Vā. नव पुत्रास्तु । 3) De. –कुरथ; Bḍ. –श्च नृगश् ; Śidh. –कुः शिबि–; Vā. –कुर्नहुषश् । 4) Bḍ. Vā. चैव; L. –कुर्नमगश्चैव; Śidh. –गौ । 5) H. Śidh. धृष्णुः ।

2 = A. 273.6; Bḍ. II. 60.3; Br. 7.2; De. VII. 2.19; H. 614; Kū. 20.5[b], 6[a]; L. 65.18[b], 19[a]; Śidh. 60.2[a] = a; Vā. 85.4[ba]. 1) Br. Kū. L. –न्तश्च; H. नरिष्य-प्रांशु–; Śidh. नरिष्यन्तोऽथ । 2) Br. षष्ठां वै; H. –षष्ठा –श्च; Kū. नाभागो; L. वै धीमान् ; Śidh. नाभागः । 3) A. नाभागाचष्ट–; Bḍ. नाभागो दिष्ट–; Br. प्रांशू रिष्टश्च; De. नृगो-दिष्टश्च; Kū. ह्यरिष्टः करुषस् ; L. Vā. नाभागोऽरिष्ट–; Śidh. करूषश्च । 4) A. –सप्तमाः; Bḍ. Vā. एव च; Br. De. –ष्टः सप्तमः; Kū. तथा; Śidh. प्रियव्रतः । 5) A. अयोध्यायां महाबलाः; Br. मुनिसत्तमाः; H. भरतर्षभ; Kū. पृषध्रश्च महातेजा नवैते शक्रसंनिभाः ।

3[a] = Bḍ. II. 60.5[a]; Br. 7.3[a]; H. 615[a]; Śidh. 60.2[b]; Vā. 85.6[a]. 1) Bḍ. Vā. अथाकरोत् पुत्रकामः परामि– ।

| 3[b] = Br. 7.3[b]; H. 615[b]. 1) H. –योस्तात । 2) H. विशांपते ।
| 4 = Br. 7.4; H. 616; Śidh. 60.3[a] = a[I]b[II]. 1) Br. वसुषु; Śidh. पुत्रेषु । 2) H. भारत । 3) H. तु ।
| 4) Śidh. –यां तत्रेष्टयां । 5) H. भरतसत्तम; Śidh. संबभूव ह ।

5 = Bḍ. II. 60.5[b], 6[a]; Br. 7.5; H. 617[a], 619[a]; Śidh. 60.3[b] = b; Vā. 85.6[b], 6[a]. 1) Bḍ. अनलाहुति– ।
2) Bḍ. –मेव यत् ; Br. –मावहत् ; Br. V. Vā. –मावपत् ।

दिव्यसंहनना चैव इला[1]) जज्ञ इति[2]) श्रुतिः[3]) ।
तामिले[4]त्येव[5]) ह्योवाच मनुर्दण्डधरस्तदा[6]) ॥ 6 ॥

अनुगच्छस्व *मा*[1]) *भद्रे*[2]) ! तमि[3]ला[4]) प्रत्युवाच ह ।
धर्मयुक्तमिदं वाक्यं[5]) पुत्रकामं प्रजापतिम् ॥ 7 ॥

इलोवाच :

मित्रा-वरुणयोरंशे जातास्मि वदतां वर, ।
तयोः सकाशं यास्यामि, *मा नो*[1]) धर्मो[2]) हतो[3]) *वधीत्*[4]) ! ॥ 8 ॥

सैव[1]मुक्त्वा मनुं[2]) देवं[3])
मित्रा-वरुणयोरिला[4]) ।

| सैव[1]मुक्त्वा पुनर्देवी
| तयोरन्तिकमागमत् ।

गत्वान्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् ॥ 9 ॥

अंशेऽस्मि[1]) युवयोर्जाता, देवौ[2]) किं करवाणि वाम् ? ।
मनुनैवाह[3]मुक्तास्मि[4]) अनुगच्छस्व मामिति ! ॥ 10 ॥

तां[1]) तथावादिनीं साध्वी-
मिलां धर्मपरायणाम्[2]) ।
मित्रश्च वरुणश्चोभा-
वूचतुस्तां *द्विजोत्तमाः*[3]) ॥ 11 ॥

| तथा तु वदतीं[1]) साध्वी-
| मिडामाश्रित्य तावुभौ ।
| देवौ च मित्रा-वरुणा-
| विदं वचनमूचतुः ॥ 11 ॥

अनेन तव धर्मज्ञे[1]) प्रश्रयेण दमेन च ।
सत्येन चैव सुश्रोणि प्रीतौ स्वो[2]) वरवर्णिनि ॥ 12 ॥

---

6 = Bḍ. II. 60.6[b], 7[a]; Br. 7.6; H. 619[b], 620[a]; Śidh. 60.4; Vā. 85.7[b], 8[a]. 1) H. Śidh. Vā. इडा । 2) H. Vā. जज्ञे इति; Śidh. जज्ञेऽथ । 3) Bḍ. श्रुतम् ; Śidh. विश्रुता । 4) Śidh. Vā. –मिडे– । 5) Bḍ. Vā. –त्यथ । 6) Bḍ. –स्ततः; Śidh. –स्तथा; Vā. –रः स्मृतः ।

7 = Bḍ. II. 60.7[b], 8[a]; Br. 7.7; H. 620[b], 621; Śidh. 60.5; Vā. 85.8[b], 9[a]. 1) Bḍ. अनुगच्छस्व; Vā. अनुगच्छामि । 2) Bḍ. Vā. भद्रं; Śidh. मामेहि । 3) Bḍ. Vā. ते इ– । 4) Śidh. –मिडा । 5) Vā. वाच्यं ।

8 = Bḍ. II. 60.8[b], 9[a]; Br. 7.8; H. 622; Śidh. 60.6; Vā. 85.9[b], 10[a]. 1) Bḍ. माऽतो; Br. H. न मां; Śidh. न मेऽ– । 2) Br. धर्म– । 3) Br. –हतां; Śidh. हि तद् । 4) Br. कुरु; H. –ऽवधीत् ; Śidh. भवेत् ।

9[a] = Br. 7.9[a]; H. 623[a]; Śidh. 60.7[a]. 1) Śidh. एव– । 2) Śidh. ययौ । 3) Śidh. सा तु । 4) Śidh. –रतः ।
| 9[a] = Bḍ. II. 60.9[b]; Vā. 85.10[b]. 1) Bḍ. एव– ।

9[b] = Bḍ. 60.10[a]; Br. 7.9[b]; H. 623[b]; Śidh. 60.7[b]; Vā. 85.11[a].

10 = Bḍ. 60.10[b], 11[a]; Br. 7.10; H. 624; Śidh. 60.8[a] = a; Vā. 85.11[b], 12[a]. 1) Bḍ. अंशेऽस्मिन् ; Śidh. अङ्गास्मिन् । 2) Śidh. भूत । 3) Br. H. –ना चाह– । 4) Br. –मुक्ता वा; H. –मुक्ता वै ।

11 = Br. 7.11; H. 625; Śidh. 60.8[b] = a. 1) Br. तौ । 2) Śidh. –र्ज्ञां मित्रा-वरुणावूचतुः । 3) H. –तुर्यन् निबोध तत् ।
| 11 = Bḍ. II. 60.11[b], 12[a]; Vā. 85.12[b], 13[a], 1) Bḍ. ब्रुवतीं

12 = Bḍ. II. 60.12[b], 13[a]; Br. 7.12; H. 626; Śidh. 60.9; Vā. 85.13[b], 14[a]. 1) Br. H. धर्मेण । 2) Bḍ. स्वौ; Śidh. स्तौ ।

आवयोस्त्वं महाभागे ख्यातिं कन्येति[1]) यास्यसि[2]); ।
| मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि ॥ 13 ॥

सुद्युम्न इति विख्यातस्त्रिषु लोकेषु *पूजितः*[1]) ।
जगत्प्रियो धर्मशीलो मनोर्वंशविवर्धनः ॥ 14 ॥

निवृत्ता सा तु तच्छ्रुत्वा
गच्छन्ती पितुरन्तिकम्[1]) ।

| सा तु देवी वरं लब्ध्वा
| निवृत्ता पितरं प्रति ।

बुधेनान्तर[1]मासाद्य मैथुनायोपमन्त्रिता[2]) ॥ 15 ॥

सोमपुत्राद्[1]) बुधाच्चा*स्याम्*[2]) ऐलो[3]) जज्ञे पुरूरवाः ।
जनयित्वा *ततः*[1]) सा तम्[2])
इला[3]) सुद्युम्नतां[4]) गता ॥ 16 ॥

| बुधात् सा जनयित्वा तु
| सुद्युम्नत्वं[1]) पुनर्गता[2]) ॥ 16 ॥

सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ।
उत्कलश्च[1]) गयश्चै[2]व विनताश्वस्त[3]थैव च[4]) ॥ 17 ॥

उत्कलस्योत्कलं[1]) *राष्ट्रं*[2]), विनताश्वस्य[3]) पश्चिमम्[4]), ।
दिक्पूर्वा *तस्य*[5]) *राजर्षे*[6]र्गयस्य तु[7]) गया पुरी[8]) ॥ 18 ॥
प्रविष्टे तु[1]) मनौ *तस्मिन्*[2]) *प्रजाः सृष्ट्वा*[3]) *दिवाकरम्*[4]) ।
दशधा तद् दधत्[5]) क्षत्र[6]मकरोत् पृथिवीमिमाम्[7]) ॥ 19 ॥

---

13[a] = Bḍ. II. 60.13[b]; Br. 7.13; H. 627[a]; Śidh. 60.10[a]; Vā. 85.14[b]. 1) Br. H. कन्येति; Śidh. चैव; Vā. कन्या । 2) Bḍ. Vā. –न्ये प्रयास्यसि; Śidh. गमिष्यसि ।

| 13[b] = Br. 7.14[a]; H. 627[b]; Śidh. 60.10[b].

14 = Bḍ. II. 60.14; Br. 7.14[b], 15[a]; H. 628; Śidh. 60.11; Vā. 85.15. 1) Br. H. शोभने; Śidh. विश्रुतः ।

15[a] = Br. 7.15[b]; H. 629[a]; Śidh. 60.12[a]. 1) Br. –रन्ति-काद् ।

| 15[a] = Bḍ. II. 60.15[b]; Vā. 85.16[b].

15[b] = Bḍ. II. 60.16[a]; Br. 7.16[a]; H. 629[b]; L. 65.24[a]; Śidh. 60.12[b]; Vā. 85.17[a]. 1) Bḍ. –नोत्तर– । 2) L. –नाय प्रवर्तिता ।

16[a] = Bḍ. II. 60.16[b]; Br. 7.16[b]; H. 630[a]; L. 65.24[b]; Śidh. 60.13[a]; Vā. 85.17[b]. 1) Śidh. सोमस्य पुत्रस् । 2) Br. –धाद् विप्रास् ; H. –धात् राजंस् ; L. –श्चापि; Śidh. तस्यां तु; Vā. –धाच्चास्या । 3) Br. H. तस्यां; Śidh. पुत्रो ।

16[b] = Br. 7.17[a]; H. 630[b]; Śidh. 60.13[b]. 1) H. सुतं; Śidh. तु सा । 2) Śidh. पुत्रं । 3) Śidh. पुनः । 4) Śidh. –कं ।

| 16[b] = Bḍ. II. 60.17[a]; Vā. 85.18[a]. 1) Vā. सुद्युम्नं । 2) Vā. –नरागता ।

17 = Bḍ. II. 60.17[b], 18[a]; Br. 7.17[b], 18[a]; H. 631; Kū. 20.9[b] = b; L. 65.26[b] = b; Śidh. 60.14; Vā. 85.18[b], 19[a]. 1) Kū. उत्कलं च । 2) Kū. गयं चै– । 3) Bḍ. –तश्च; Kū. विनतं च त– । 4) Br. –श्च भो द्विजाः; H. –श्च भारत; Śidh. –श्च वीर्यवान् ।

18 = A. 273.8[b], 9[a]; Bḍ. 60.18[b], 19[a]; Br. 7.18[b], 19[a]; H. 632; L. 65.27[a](b.; Śidh. 60.15; Vā. 85.19[bc]. 1) Br. H. Śidh. –स्योत्कला । 2) Br. विप्रा; H. राजन् ; Śidh. विप्र । 3) Bḍ. –तस्यापि । 4) A. H. Śidh. –मा; Br. माः । 5) Vā. T. दिक्स्ववातस्य । 6) A. राजवर्यस्य ग–; Br. Śidh. मुनिशार्दूल ग–; H. भरतश्रेष्ठ ग– । 7) A. च । 8) Br. Śidh. स्मृता; L. गया गयस्य चाख्याता पुरी परमशोभना ।

19 = Bḍ. II. 60.19[b], 20[a]; Br. 7.19[b], 20[a]; H. 633; Śidh. 60.16; Vā. 85.20. 1) Vā. प्रविसृष्टे । 2) Br. विप्रा; H. तात; Śidh. ताते । 3) Br. H. दिवाकरम् ; Śidh. दिवाकरमतं । 4) Br. अरिंदमम् ; H. अरिंदम; Śidh. मुने; Vā. दिवाकरः । 5) Bḍ. दधात् ; Br. तत् पुनः; Śidh. तत्र तद् । 6) Śidh. Vā. क्षेत्र– । 7) Śidh. –वीं मनुः ।

इक्ष्वाकुर्ज्येष्ठदायादो[1]) मध्यदेशम[2]वाप्तवान्[3]) ।
कन्याभावात्तु[4]) सुद्युम्नो नैव[5]) भाग[6]मवाप्तवान्[7]) ॥ 20 ॥

वसिष्ठवचनात् त्वा[1]सीत् प्रतिष्ठाने[2]) महाद्युतिः[3]) ।
प्रतिष्ठा[4]) धर्मराजस्य सुद्युम्नस्य[5]) महात्मनः[6]) ॥ 21 ॥

तत् पुरूरवसे प्रादाद् राज्यं[1]) प्राप्य महायशाः[2]) ।
मानवेयो[3]) महाभागः[4]) स्त्रीपुंसोर्लक्षणै[5]र्युतः[6]) ॥ 22 ॥

धृतवान् य इ[1]लेत्येवं
सुद्युम्नेति च[2]) विश्रुतः ।

एतच्छ्रुत्वा तु ऋषयः पप्रच्छुस्तदनन्तरम्[1]) ।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत् कथम् ? ॥ $22_1$ ॥

सूत उवाच :

पुरा महेश्वरं द्रष्टुं कुमाराः सनकादयः ।
इलावृतं समाजग्मुर्देवशुं वृषभध्वजम् ॥ $22_2$ ॥
उमया रममाणं तं विलोक्य पिहिते स्थले ।
प्रतिजग्मुस्ततः सर्वे, व्रीडितास्तूच्छिवाप्यथ ॥ $22_3$ ॥

---

20 = Bḍ. II. 60.20[b], 21[a]; Br. 7.20[b], 21[a]; H. 634[b], 635[a]; L. 65.28[b], 29[a]; Śidh. 60.17[a] = a; Vā. 85.21. 1) Bḍ. –कुरेव दायादो; Śidh. –कुः श्रेष्ठदायादो; Vā. –कुरेव दायादान् । 2) Bḍ. भागं दशम–; Vā. अन्यान् दश । 3) Bḍ. –मासवान् ; Vā. समाप्नुयात् । 4) L. –चाच्च । 5) Br. नैतद् ; H. Śidh. नैनं । 6) Br. राज्य–; H. गुण– । 7) Vā. –मवाप्नुयात् ।

21 = Bḍ. II. 60.21[b], 22[a]; Br. 7.21[b], 22[a]; H. 635[b], 636[a]; L. 65.29[b], 30[a]; Śidh. 60.17[b], 18[a]; Vā. 85.22. 1) Bḍ. Vā. –नाच्चा–; 'Śidh. –नादा– । 2) Śidh. प्रतिष्ठानं; Vā. T. प्रतिष्ठा नो । 3) Br. H. Śidh. महात्मनः । 4) Bḍ. Śidh. प्रतिष्ठां । 5) Śidh. सुद्युम्नोऽथ । 6) Br. द्विजोत्तमाः; H. कुरूद्वह; Śidh. ततो ददौ ।

22 = A. 273.10[a] = a; Br. 7.22[b], 23[a]; H. 636[b], 640[a]; L. 65.30[bc]; Śidh. 60.18[b], 19[a]; Vā. 85.23[ab]. 1) Vā. राष्ट्रं । 2) A. सुद्युम्नो राज्यमाप्य तु । 3) Śidh. मानवो यो; Vā. मानवेभ्यो । 4) Br. मुनिश्रेष्ठाः; H. महाराज; Śidh. मुनिश्रेष्ठ; Vā. महाभागा । 5) L. –लंक्षणा–; Śidh. –लंक्षणः; Vā. –लंक्षणं । 6) L. –णान्वितः; Śidh. प्रभुः; Vā. प्रति ।

23[a] = Br. 7.23[b]; H. 640[b]. 1) Br. धृतवांस्तामि– । 2) H. सुद्युम्नश्चेति ।

$22_1$ = Bḍ. II. 60.22[bc]; Vā. 85.24. 1) Bḍ. पप्रच्छौ सूतजं प्रति ।
$22_2$ = Bḍ. II. 60.23.
$22_3$ = Bḍ. II. 60.24.

प्रोवाच वचनं देवी प्रियहेतोः प्रियं प्रिया ।
इमं[1]) ममाश्रमं[2]) देव यः पुमान् संप्रवेक्ष्यति, ॥ $22_4$ ॥

भविष्यति ध्रुवं नारी स[1]) तुल्याप्सरसां शुभा ।
तत्र सर्वाणि भूतानि पिशाचाः पशवश्च ये, ॥ $22_5$ ॥

स्त्रीभूताः सह रुद्रेण क्रीडन्त्यप्सरसो यथा ।
उमावनं प्रविष्टस्तु स राजा मृगयां गतः ॥ $22_6$ ॥

पिशाचैः सह भूतैस्तु रुद्रे[1]) स्त्रीभावमास्थिते ।
तस्मात् स राजा सुद्युम्नः स्त्रीभावं लब्धवान् पुनः ।
महादेवप्रसादाच्च मानवत्व[2]मवाप्तवान्[3]) ॥ $22_7$ ॥

नारिष्यन्ताः[1]) शकाः[2]) पुत्रा,
नाभागस्य तु भो द्विजाः[3]) 23
अम्बरीषोऽभवत् पुत्रः[1])
पार्थिवर्षभसत्तमः[2]) ।
धृष्टस्य[3]) धार्ष्टं[4]) क्षत्र[5])
रणधृष्टं[6]) बभूव ह ॥ 24 ॥

निसर्गं मनुपुत्राणां विस्तरेण निबोधत ! ।
पृषध्रो हिंसयित्वा तु गुरोर्गां निश्य[1]मक्षयत्[2]) ॥ $24_1$ ॥
शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः ।
करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्मदाः, ॥ $24_2$ ॥
सहस्रक्ष[1]त्रियगणो[2]) विक्रान्तः संबभूव ह ।
नाभागोदिष्टपुत्रस्तु[3]) विद्वानासीद् भलन्दनः ॥ $24_3$ ॥

---

$22_4$ = Bḍ. II. 60.25; Vā. 85.25[ab]. 1) Vā. समे, Bḍ. इम । 2) Vā. ममाश्रमे ।
$22_5$ = Bḍ. II. 60.26; Vā. 85.25[c], 26[a]. 1) Vā. सा ।
$22_6$ = Bḍ. II. 60.27; Vā. 85.26[b], 27[a].
$22_7$ = Bḍ. II. 60.28; Vā. 85.27[b], 28. 1) Vā. रुद्रैः । 2) Vā. गाणपत्य– । 3) Vā. –मवाप्नुयात् ।

23[b] = A. 273.10[b]; Br. 7.24[a]; H. 641[a]; Śidh. 60.19[b]. 1) A. H. Śidh. –ष्यतः । 2) Śidh. शका । 3) A. च वैष्णवः; H. भारत; Śidh. सुतोऽभवत् ।
24 = A. 273.11[a] = a[I], b[I]; Br. 7.24[b], 25[a]; H. 641[b], 642[a]; Śidh. 60.20[a] = a. 1) A. –पः प्रजापालो; Śidh. –षस्तु वार्ष्णेयो । 2) Śidh. वाह्लीकं क्षेत्रमावसत् । 3) A. धार्ष्टकं; H. धृष्णोस्तु । 4) A. धृष्टतः; H. धार्ष्णकं । 5) A. कुलम् । 6) Ba.–णदृप्तं; H. रणे धृष्टं ।

$24_1$ = Bḍ. II. 61.1; Vā. 86.1. 1) Vā. –गांवम– । 2) Bḍ. निशि तत्क्षये ।
$24_2$ = Bḍ. II. 61.2; Vā. 86.2.
$24_3$ = Bḍ. II. 61.3; Vā. 86.3. 1) Bḍ. सहस्रं क्ष– । 2) Vā. –गग– । 3) Vā. नामागोऽरिष्ट– ।

भलन्दनस्य पुत्रोऽभूत् प्रांशुर्नाम महाबलः ।
प्रांशोरेकोऽभवत् पुत्रः प्रजानिरिति विश्रुतः[1]) ॥ $24_{4}$ ॥

प्रजानेरभवत् पुत्रः खनित्रो नाम वीर्यवान्, ।
तस्य पुत्रोऽभवच्छ्रीमान् क्षुपो नाम महायशाः ॥ $24_{5}$ ॥

क्षुपस्य विंशः पुत्रस्तु प्रतिमानं बभूव ह, ।
विंशपुत्रस्तु कल्याणो विविंशो नाम धार्मिकः ॥ $24_{6}$ ॥

विविंशपुत्रो धर्मात्मा खनिनेत्रः प्रतापवान्, ।
खरन्धमस्तस्य पुत्रस्त्रेतायुगमुखेऽभवत् ॥ $24_{7}$ ॥

खरन्धमसुतस्चापि आविक्षित् नाम वीर्यवान्, ।
आविक्षितो व्यतिक्रामत् (!) पितरं गुणवत्तया ॥ $24_{8}$ ॥

मरुत्तो[1]) नाम धर्मात्मा चक्रवर्तिसमो नृपः, ।
संवर्तेन दिवं नीतः ससुहृत् सह बान्धवैः[2]) ॥ $24_{9}$ ॥

विवादोऽत्र महानासीद् संवर्तस्य बृहस्पतेः, ।
ऋद्धिं दृष्ट्वा तु यज्ञस्य क्रुद्धस्तस्य बृहस्पतिः ॥ $24_{10}$ ॥

संवर्तेन हृते[1]) यज्ञे चुकोप सुभृशं[2]) तदा, ।
लोकानां स हि नाशाय दैवतैर्हि प्रसादितः ॥ $24_{11}$ ॥

मरुत्त[1]श्चक्रवर्ती स नरिष्यन्तमवाप्तवान्[2]), ।
नरिष्यन्तस्य दायादो राजा दण्डधरो दमः[3]) ॥ $24_{12}$ ॥

तस्य पुत्रस्तु विक्रान्तो[1]) राजासीद् राष्ट्रवर्धनः, ।
सुधृतिस्त[2]स्य पुत्रस्तु, नरः सुधृतितः[3]) पुनः ॥ $24_{13}$ ॥

केवलस्तस्य पुत्रस्तु, बन्धुमान् केवलात्मजः, ।
अथ बन्धुमतः पुत्रो धर्मात्मा वेगवान् नृपः[1]) ॥ $24_{14}$ ॥

बुधो वेगवतः पुत्रस्तृणबिन्दुर्बुधात्मजः, ।
त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥ $24_{15}$ ॥

कन्या तु तस्य द्रविदा[1]) माता विश्रवसो हि सा, ।
पुत्रश्चास्य[2]) विशालोऽभूद् राजा परमधार्मिकः ॥ $24_{16}$ ॥

दाश्वान् प्रख्यातवीर्योजा[1]), विशाला येन निर्मिता, ।
विशालस्य सुतो राजा हेमचन्द्रो महाबलः ॥ $24_{17}$ ॥

---

$24_{4}$ = Bḍ. II. 61.4; Vā. 86.4; Cp. Br. 27.28[b]. 1) Bḍ. –पतिसमो नृपः; Br. –पतिरिति स्मृतः ।
$24_{5}$ = Vā. 86.5.
$24_{6}$ = Vā. 86.6.
$24_{7}$ = Vā. 86.7.
$24_{8}$ = Vā. 86.8.
$24_{9}$ = Bḍ. II. 61.5[a] = b; Vā. 86.9. 1) Vā. T. मनुत्तो । 2) Bḍ. सहबान्धवः ।
$24_{10}$ = Bḍ. II. 61.5[b], 6[a]; Vā. 86.10.
$24_{11}$ = Bḍ. II. 61.6[b], 7[a]; Vā. 86.11. 1) Bḍ. तते । 2) Bḍ. स भृशं ।
$24_{12}$ = Bḍ. II. 61.7[b], 8[a]; Vā. 86.12; Cp. Br. 7.27[a]. 1) Vā. मनुत्त– । 2) Bḍ. –मवासवान् । 3) Br. दं– ः ।
$24_{13}$ = Bḍ. II. 61.8[b], 9[a]; Vā. 86.13. 1) Bḍ. विख्यातो । 2) Vā. सुधृती त– । 3) Vā. –धृतिनः ।
$24_{14}$ = Bḍ. II. 61.9[b], 10[a]; Vā. 86.14. 1) Bḍ. –न्नृप ।
$24_{15}$ = Bḍ. II. 61.10[b], 11[a]; Vā. 86.15.
$24_{16}$ = Bḍ. II. 61.11[b], 12[a]; Vā. 86.16. 1) Bḍ. तस्येडविडा । 2) Bḍ. पुत्रो योऽस्य ।
$24_{17}$ = Bḍ. II. 61.12[b], 13[a]; Vā. 86.17. 1) Vā. विशालस्य समुत्पन्ना ।

सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः[1]), ।
सुचन्द्र-तनयो राजा धूम्राश्व इति विश्रुतः ॥ $24_{18}$ ॥

धूम्राश्व-तनयो विद्वान् सृञ्जयः समपद्यत, ।
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् ॥ $24_{19}$ ॥

कृशाश्वः सहदेवस्य पुत्रः परमधार्मिकः, ।
कृशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ॥ $24_{20}$ ॥

सोमदत्तस्य राजर्षेः सुतोऽभूज् जनमेजयः ।
जनमेजयात्मजश्चैव प्रमतिर्नाम विश्रुतः ॥ $24_{21}$ ॥

तृणबिन्दुप्रसादेन[1]) सर्वे वैशालका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ $24_{22}$ ॥

शर्यातेर्मिथुनं त्वासीदानर्तो[1]) नाम विश्रुतः[2]) ।
पुत्रः सुकन्या कन्या च[3]), या पत्नी[4]) च्यवनस्य ह[5]) ॥ 25 ॥

आनर्तस्य[1]) तु[2]) दायादो रेवो[3]) नाम[4]) महाद्युतिः[5]), ।
आनर्त-विषय[6]श्चासीत्[7]) पुरी चास्य[8]) कुशस्थली ॥ 26 ॥

रेवस्य[1]) रैवतः पुत्रः ककुद्मी नाम धार्मिकः[2]) ।
ज्येष्ठः पुत्रशतस्या[3]सीद् राज्यं[4]) प्राप्य कुशस्थलीम् ॥ 27 ॥

स कन्या सहितः श्रुत्वा[1]) गान्धर्वं ब्रह्मणोऽन्तिके ।
मुहूर्तभूतं देवस्य[2]) मार्त्यं[3]) बहुयुगं विभोः[4]) ॥ 28 ॥

आजगाम युवैवाथ[1]) स्वां पुरीं यादवैर्वृताम् ।
कृतां द्वारवतीं नाम[2]) बहुद्वारां मनोरमाम् ॥ 29 ॥

---

$24_{18}$ = Bḍ. II. 61.13$^b$, 14$^a$; Vā. 86.18. 1) Vā. T. –न्तरम् ।

$24_{19}$ = Bḍ. II. 61.14$^b$, 15$^a$; Vā. 86.19.

$24_{20}$ = Bḍ. II. 61.15$^b$, 16$^a$; Vā. 86.20.

$24_{21}$ = Bḍ. II. 61.16$^b$, 17$^a$; Vā. 86.21.

$24_{22}$ = Bḍ. II. 61.17$^b$, 18$^a$; Vā. 86.22. 1) Bḍ. प्रभावेन ।

25 = A. 273.(11$^b$); Bḍ. II. 61.18$^b$, 19$^a$; Br. 7.27$^b$, 28$^a$; H. 642$^b$, 643$^a$; L. 66.(47$^a$) = a$^{II}$b$^{I}$; Śidh. 60.20$^b$, 21$^a$; Vā. 86.23. 1) Vā. T. –दानार्तो । 2) L. शर्यातिः । 3) Br. कन्या सुकन्या च; H. कन्या सुकन्याख्या; L. सुकन्या नाम दारिका । 4) Bḍ. Vā. भार्या या । 5) Bḍ. च; Śidh. हि; Vā. तु; A. सुकन्यानर्तौ शर्यातेर्वैरो ह्यानर्तो नृपः ।

26 = A. 273.12$^a$ = b; Bḍ. II. 61.19$^b$, 20$^a$; Br. 7.28$^b$, 29$^a$; H. 643$^b$, 644$^a$; Śidh. 60.21$^b$, 22$^a$; Vā. 86.24. 1) Vā. आनार्तो आनार्तस्य । 2) Śidh. हि । 3) Br. रैवो । 4) Vā. नाम्ना । 5) Bḍ. सुवीर्यवान् ; Vā. तु वीर्यवान् । 6) Vā. आनार्तो विषयो; Śidh. विषये । 7) Bḍ. Vā. –यो यस्य; Br. –यश्चैव Śidh. –ये चैव । 8) A. चासीद; Bḍ. Vā. चापि; Śidh. नाम ।

27 = A. 273.12$^b$, 13$^a$; Bḍ. II. 61.20$^b$, 21$^a$; Br. 7.29$^b$, 30$^a$; H. 644$^b$, 645$^a$; Śidh. 60.22$^b$, 23$^a$; Vā. 86.25. 1) Br. रैवस्य । 2) Śidh. विश्रुतः । 3) Bḍ. Vā. –ष्ठो भ्रातृशतस्या–; Br. T. Śidh. पुत्रः स तस्या– । 4) Vā. राजा ।

28 = A. 273.13$^b$, 14$^a$; Bḍ. II. 61.21$^b$, 22$^a$; Br. 7.30$^b$, 31$^a$; H. 645$^b$, 646$^a$; Śidh. 60.23$^b$, 24$^a$; Vā. 86.26. 1) Bḍ. Vā. कन्यया सह श्रुत्वा च । 2) Bḍ. Vā. मुहूर्तं देवदेवस्य । 3) A. मर्त्ये; Br. तस्थौ; H. गतं; Śidh. जातं । 4) A. गतम् ; Bḍ. विभो; Br. द्विजाः; H. प्रभो; Śidh. तदा ।

29 = A. 273.14$^b$, 15$^a$; Bḍ. II. 61.22$^b$, 23$^a$; Br. 7.31$^b$, 32$^a$; H. 646$^b$, 647$^a$; Śidh. 60.24$^b$, 25$^a$; Vā. 86.27. 1) A. जवेनाथ; Bḍ. Vā. युवा चैव; Br. स चैवाथ । 2) H. नाम्ना ।

भोज-वृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ।
ततस्तद्[1]) रैवतो ज्ञात्वा
यथातत्त्वं *द्विजोत्तमाः*[2]) ॥ 30 ॥

| तां (कथां रैवतः[1]) श्रुत्वा
| यथातत्त्वमरिंदमः ॥ 30 ॥

कन्यां *तां*[1]) बलदेवाय सुव्रतां[2]) नाम[3]) रेवतीम् ।
दत्त्वा जगाम शिखरं[4]) मेरोस्तपसि संस्थितः[5]) ॥ 31 ॥

रेमे रामो*ऽपि*[1]) धर्मात्मा रेवत्या सहितः *सुखी*[2]) ।

| तां कथामृषयः श्रुत्वा
| पप्रच्छुस्तदनन्तरम् ॥ 32 ॥

ऋषय ऊचुः

कथं बहुयुगे काले समतीते[1]) *महामते*[2]) ।
न जरा[3]) रेवतीं[4]) प्राप्ता रैवतं[5]) *वा*[6]) ककुद्मिनम्[7]), ॥ 33 ॥

मेरुं गतस्य वा तस्य शर्यातेः संततिः कथम् ।
स्थिता पृथिव्यामद्यापि, श्रोतुमिच्छाम[1]) तत्त्वतः ! ॥ 34 ॥

सूत उवाच :

न जरा क्षुत्पिपासा[1]) वा न च मृत्यु*भयं ततः*[2]), ।
ऋतुचक्रं न भवति[1])
ब्रह्मलोके सदानघाः[2]) ॥ 35 ॥

| न च रोगः प्रभवति
| ब्रह्मलोक[1]गतस्य ह[2]) ॥ 35 ॥

ककुद्मिनस्तु तं लोकं[1]) रैवतस्य गतस्य ह[2]) ।
हृता[3]) पुण्यजनैः *सर्वाः*[4]) राक्षसैः सा कुशस्थली ॥ 36 ॥

---

30a = A. 273.15b; Bḍ. II. 61.23b; Br. 7.32b; H. 647b; Śidh. 60.25b; Vā. 86.28a.

30b = Br. 7.33a; H. 648a; Śidh. 60.26a. 1) Br. तत्रैव । 2) H. अरिंदमः; Śidh. गतान् बहुयुगांस्तदा ।
| 30b = Bḍ. II. 61.24a; Vā. 86.28b. 1) Bḍ. रेवतः ।

31 = Bḍ. II. 61.24bc; Br. 7.33b, 34a; H. 648b, 649a; Śidh. 60.26b, 27a; Vā. 86.29. 1) Bḍ. Vā. तु । 2) Br. सुभद्रां । 3) Śidh. प्रादात् तत्र स । 4) Śidh. शिखरे । 5) H. संश्रितः ।

32a = Bḍ. II. 61.25a; Br. 7.34b; H. 649b; Vā. 86.30a. 1) Bḍ. Vā. रामश्च । 2) Bḍ. Vā. किल ।

| 32b = Bḍ. II. 61.25b; Vā. 86.30b.

33 = Bḍ. II. 61.26; Br. 7.35; H. 650; Vā. 86.31. 1) Vā. व्यतीते । 2) H. द्विजोत्तम; Vā. सूतनन्दन । 3) Vā. जरां । 4) Vā. रेवती । 5) Vā. पलितं । 6) Br. Vā. च । 7) Vā. T. कुतः प्रभो ।

34 = Br. 7.36; H. 651; Vā. 86.32. 1) Vā. -मिच्छामि ।

35a = Bḍ. II. 61.27a; Br. 7.37a; H. 652a; Śidh. 60.27b; Vā. 86.34a. 1) Bḍ. Vā. क्षुत्पिपासे । 2) Br. न मृत्युर्मुनिसत्तमाः; H. न मृत्युर्भरतर्षभ; Śidh. न मृत्युर्ब्रह्मणोऽन्तिके ।

35b = Br. 7.37b; H. 652b. 1) Br. प्रभवति । 2) H. -नघ ।
| 38b = Bḍ. II. 61.27b; Vā. 86.34b. 1) Bḍ. ब्रह्मलोकं । 2) Vā. हि ।

[ Bḍ. II. 61.28—62.44; Vā. 86.35—87.46. ]

36 = 63.1; Br. 7.37c, 38a; H. 653; Śidh. 60.28; Vā. 88.1. 1) Br. -नः स्वर्लोकं तु; Śidh. -नश्च तत्रैव । 2) Śidh. गतस्य रैवतस्य हि । 3) Bḍ. हृता । 4) Br. -नैर्विप्राः; H. -नैस्तात; Śidh. -नैस्तीव्र- ।

तस्य[1]) भ्रातृ[2]शतं त्वासीद्[3]) धार्मिकस्य महात्मनः[4]), ।
तद्बध्यमानं[5]) रक्षोभि[6]दिशः[7]) संप्राद्रवद्[8]) भयात्[9]) ॥ 37 ॥

विद्रुतस्य च विप्रेन्द्रास्[1])
तस्य भ्रातृशतस्य वै ।

तेषां तु ते[1]) भयाक्रान्ताः[2]) क्षत्रियास्तत्र तत्र ह[3]) ।
अन्ववायस्तु सुमहां[1]स्तत्र[2]) तत्र[3]) द्विजोत्तमाः[4]), ॥ 38 ॥

| | |
|---|---|
| येषां[1]) ह्येते मुनिश्रेष्ठाः[2]) | |
| शार्याता[3]) इति विश्रुताः । | |
| क्षत्रिया गुणसंपन्ना[1]) | शार्याता[1]) इति विख्याता |
| दिक्षु सर्वासु विश्रुताः[2]), ॥ 39 ॥ | दिक्षु सर्वासु धार्मिकाः ॥ 39 ॥ |
| सर्वशः सर्वगहनं[1]) | धृष्टस्य धार्ष्ट[1]कं सर्वं |
| प्रविष्टास्ते महौजसः[2]) । | रणदृप्तं बभूव ह, । |
| नाभागा[3]रिष्टपुत्रौ[4]) द्वौ | त्रिसहस्रं तु स गणः |
| वैश्यौ[5]) ब्राह्मणतां गतौ[6]) ॥ 40 ॥ | क्षत्रियाणां महात्मनाम् ॥ 40 ॥ |
| क[1]रूषस्य तु कारूषाः | नभगस्य च दायादो |
| क्षत्रिया युद्धदुर्मदाः । | नाभागो नाम वीर्यवान् , । |

---

37 = Bḍ. II. 63.2; Br. 7.38b, 39a; H. 654; Śidh. 60.29a = a; Vā. 88.2. 1) Bḍ. Vā. तद्वै । 2) Śidh. पुत्र- । 3) Bḍ. Vā. तस्य । 4) Śidh. ययौ दिशः । 5) Bḍ. निबध्यमानं; Vā. निबध्यमाना । 6) Bḍ. नाराचै- । 7) Bḍ. -र्विदिशः । 8) Bḍ. H. प्राद्रवद् ; Br. प्राक्रामद् ; Vā. -वन् । 9) Br. अच्युताः; H. अच्युत ।°

38a = Br. 7.39b; H. 655a. 1) H. तु राजेन्द्र ।

38b = Bḍ. II. 63.3a; H. 655b; Vā. 88.3a. 1) Bḍ. तद् । 2) Bḍ. -क्रान्त- । 3) Bḍ. क्षत्रियाणां च विद्रुताम् ; Vā. हि ।

38c = Bḍ. II. 63.3b; Br. 7.40a; H. 656a; Śidh. 60.29b; Vā. 88.3b. 1) Vā. -हान् । 2) Vā. महांस्- । 3) Śidh. तस्य । 4) H. विशांपते; Śidh. महात्मनः ।

39a = Br. 7.40b; H. 656b. 1) Br. तेषां । 2) H. एते महाराज । 3) Br. शर्याता ।

39b = Br. 7.41a; H. 657a; Śidh. 60.(30a). 1) H. भरतश्रेष्ठ; Śidh. दिक्षु सर्वासु । 2) Śidh. गताः सर्वत्र धार्मिकाः ।

40 = A. 273.17a = b; Br. 7.41b, 42a; H. 657b, 658a; Śidh. 60.30b = b. 1) H. पर्वतगणान् । 2) H. -ष्टाः कुरुनन्दन । 3) A. -गस्य च पुत्रौ; Br. Śidh. नाभाग- । 4) Śidh. -रिष्टस्य । 5) Śidh. श्रुतौ यौ तौ । 6) Śidh. -णसंगतौ ।

39 = Bḍ. II. 63.4a; Vā. 88.4a. 1) Vā. प्रयता ।

40 = Bḍ. II. 63.4b, 5a; Vā. 88.4b, 5a. 1) Bḍ. -र्ष्टि- ।

पृषध्रो हिंसयित्वा तु
गुरोर्गां *द्विजसत्तमाः*[2]) ॥ 41 ॥
शापाच्छूद्रत्वमापन्नो,
नवैते[1]) परिकीर्तिताः ।
वैवस्वतस्य तनया
मनो[2]र्वै *मुनिसत्तमाः*[3]) ॥ 42 ॥

अम्बरीषस्तु नाभागि-
र्विरूपस्तस्य चात्मजः ॥ 41 ॥
पृषदश्वो विरूपस्य,
तस्य पुत्रो रथीतरः ।
एते क्षत्रप्रसूता वै
पुनश्चाङ्गिरसः स्मृताः, ।
रथीतराणां प्रवराः
क्षा[1]त्रोपेता द्विजातयः ॥ 42 ॥

क्षुवत[1]स्तु मनोः *पूर्वमि*[2]क्ष्वाकुरभवत् *सुतः*[3]) ।
तस्य पुत्रशतं त्वासी[4]दिक्ष्वाकोर्भूरिदक्षिणम् ॥ 43 ॥

तेषां ज्येष्ठो विकुक्षि[1]स्तु
विकुक्षित्वादयोधताम्[2]) ।
प्राप्तः परमधर्मज्ञः[1]),
सोऽयोध्याधिपतिः प्रभुः ।

तेषां ज्येष्ठो विकुक्षिस्तु[1])
निमि[2]र्दण्डश्च ते त्रयः ।

शकुनिप्रमुखास्तस्य पुत्राः पञ्चशतं[1]) *स्मृताः*[2]) ॥ 44 ॥

उत्तरापथदेशस्य[1]) रक्षितारो मही*क्षितः*[2]), ।
चत्वारिंशत् *तथाष्टौ*[3]) च दक्षिणस्यां[4]) तु वै[5]) दिशि ॥ 45 ॥

*वशाति*[1]प्रमुखास्ते तु[2]) *दक्षिणापथरक्षिणः*[3]) ।
इक्ष्वाकुस्तु विकुक्षिं वै[4]) अष्टकायामथादिशत् ॥ 46 ॥

---

41 = A. 273.17$^b$ = a; Br. 7.42$^b$, 43$^a$; H. 658$^b$, 659$^a$; Śidh. 60.31$^a$, 32$^a$. 1) Śidh. का– । 2) H. जन-मेजय; Śidh. मुनिसत्तम ।

42 = Br. 7.43$^b$, 44$^a$; H. 659$^b$, 660$^a$; Śidh. 60.32$^b$ = a. 1) H. नव ते । 2) Br. मुने– । 3) H. भरतर्षभ ।

41 = Bḍ. II. 63.5$^b$, 6$^a$; Vā. 88.5$^b$, 6$^a$.

42 = Bḍ. II. 63.6$^b$, 7; Vā. 88.6$^b$, 7. 1) Bḍ. –क्षे ।

43 = Bḍ. II. 63.8; Br. 7.44$^b$, 45$^a$; H. 660$^b$, 661$^a$; Śidh. 60.33; Vā. 88.8. 1) Śidh. पूर्वज– । 2) Br. –नोर्विप्रा इ–; H. –नोः पुत्र इ–; Śidh. –नोर्विप्र इ– । 3) Bḍ. Vā. –रभिनिःसृतः; H. ततः । 4) H. चासी– ।

44$^a$ = Br. 7.45$^b$; H. 661$^b$; Śidh. 60.34$^a$. 1) Br. Śidh. विकुक्षिर्ज्येष्ठ– । 2) Śidh. सोऽयोध्याममवन् नृपः ।

44$^b$ = Br. 7.46$^a$; H. 662$^a$. 1) Br. –मंज्ञ ।

44$^a$ = Bḍ. II. 63.9$^a$; Vā. 88.9$^a$. 1) Vā. –क्षिश्च । 2) Vā. नेमि– ।

44$^c$ = Bḍ. II. 63.9$^b$; Br. 7.46$^b$; H. 662$^b$; Śidh. 60.34$^b$; Vā. 88.9$^b$. 1) Bḍ. –शतस् ; H. पञ्चाशद् ; Śidh. पञ्चदश । 2) Bḍ. Vā. तु ते; H. उत्तमाः ।

45 = Bḍ. II. 63.10; Br. 7.47; H. 663; Śidh. 60.35$^a$ = a; Vā. 88.10. 1) H. –देशस्था । 2) Br. महाबलाः; H. विशांपते । 3) Br. दशाष्टौ; H. अथाष्टौ । 4) Vā. दक्षिणायां । 5) Br. H. तथा; Vā. च ते ।

46 = Bḍ. II. 63.11; Br. 7.48; H. 664; Vā. 88.11. 1) Bḍ. विराट–; Vā. विंशति– । 2) Bḍ. ते च; Br. H. चान्ये । 3) Br. रक्षितारो द्विजोत्तमाः; H. रक्षितारो विशांपते । 4) Br. वा ।

मांसमानय श्राद्धार्थं[1]) मृगान्[2]) हत्वा महाबल ।
श्राद्धकर्मणि चोद्दिष्ट-
अ[1]कृते श्राद्धकर्मणि ! ॥ 47 ॥

श्राद्धमद्य नु[1]) कर्तव्य-
मष्टकायां[2]) न संशयः ॥ 47 ॥
स गतो[1]) मृगयां चैव[2])
वचनात् तस्य धीमतः ।
मृगान् सहस्रशो[3]) हत्वा
परिश्रान्तश्च वीर्यवान् ।

भक्षयित्वा शशं विप्राः[1])
शशादो मृगयां[2]) गतः ॥ 48 ॥

भक्षयच्छशकं तत्र
विकुक्षिर्मृगयां गतः ॥ 48 ॥

आगते हि[1]) विकुक्षौ तु समांसे सहसैनिके ।
वसिष्ठं चोदयामास मांसं प्रोक्षयतामिति ॥ $48_1$ ॥
तथेति चोदितो राज्ञा विधिवत् समुपस्थितः[1]), ।
स दृष्ट्वोपहृतं मांसं क्रुद्धो राजानमब्रवीत् ॥ $48_2$ ॥
क्षुद्रेणो[1]पहृतं मांसं पुत्रेण तव पार्थिव, ।
शशभक्षादभोज्यं[2]) वै तव[3]) मांसं महाद्युते ॥ $48_3$ ॥
शशो दुरात्मना पूर्वमरण्ये[1]) भक्षितोऽनघ, ।
तेन मांसमिदं दुष्टं पितॄणां नृपसत्तम ॥ $48_4$ ॥
इक्ष्वाकुस्तु ततः क्रुद्धो विकुक्षिमिदमब्रवीत् ।
पितृकर्मणि निर्दिष्टो मया त्वं[1]) मृगयां गतः ॥ $48_5$ ॥
शशं भक्षयसेऽरण्ये निर्घृणः पूर्वमद्य तु[1]), ।
तस्मात् परित्यजामि त्वां गच्छ त्वं स्वेन कर्मणा ! ॥ $48_6$ ॥

इक्ष्वाकुणा परित्यक्तो
वसिष्ठवचनात् प्रभुः ।

एवमिक्ष्वाकुणा त्यक्तो
वसिष्ठवचनात् सुतः ।

---

$47^a$ = Bḍ. II. 63.12ᵃ; Br. 7.49ᵃ; H. 665ᵃ; Vā. 88.12ᵃ. 1) Bḍ. श्राद्धे त्वं; Vā. श्राद्धेयं । 2) H. मृगं ।

$47^b$ = Br. 7.49ᵇ; H. 665ᵇ; Śidh. 60.35ᵇ. 1) Br. चोद्दिष्टो अ–; Śidh. चोद्दिष्टे ह्य– ।

48 = Br. 7.50ᵃ; H. 666ᵃ; Śidh. 60.36ᵃ. 1) H. तात; Śidh. शीघ्रं । 2) Śidh. शशादस्त्वं ततो ।

$47^b$ = Bḍ. II. 63.12ᵇ; Vā. 88.12ᵇ. 1) Bḍ. –द्यं मम तु । 2) Bḍ. –ष्टकानां ।

$48^{ab}$ = Bḍ. II. 63.13; Vā. 88.13ᵃᵇ. 1) Vā. गतस्तु । 2) Vā. –र्यां वै । 3) Bḍ. सहस्रकान् ।

$48^c$ = Bḍ. II. 63.14ᵃ; Vā. 88.13ᶜ.

$48_1$ = Bḍ. II. 63.14ᵇ, 15ᵃ; Vā. 88.14. 1) Vā. स ।
$48_2$ = Bḍ. II. 63.15ᵇ, 16ᵃ; Vā. 88.15. 1) Bḍ. तदुपस्थितम् ।
$48_3$ = Bḍ. II. 63.16ᵇ, 17ᵃ; Vā. 88.16. 1) Bḍ. अनेनो– । 2) Bḍ. –द् दुष्टं । 3) Bḍ. नैव ।
$48_4$ = Bḍ. II. 63.17ᵇ, 18ᵃ; Vā. 88.17. 1) Bḍ. –मना ।
$48_5$ = Bḍ. II. 63.18ᵇ, 19ᵃ; Vā. 88.18ᵃᵇ. 1) Bḍ. च ।
$46_6$ = Bḍ. II. 63.19ᵇ, 20ᵃ; Vā. 88.18ᶜ, 19ᵃ. 1) Vā. तु ।

इक्ष्वाकौ[1]) संस्थिते[2]) *विप्राः*[3])
शशादस्तु नृपोऽभवत्[4]) ॥ 49 ॥

इक्ष्वाकौ संस्थिते तस्मि-
ञ्शशास[1]) पृथिवीमिमाम् ॥ 49 ॥

प्राप्तः परमधर्मात्मा स चायोध्याधिपोऽभवत् ।
तदाकरोत् स राज्यं वै वसिष्ठपरिनोदितः ॥ $49_1$ ॥

ततस्तेनैनसा पूर्णो राज्यावस्थो महीपतिः ।
कालेन गतवांस्तत्र *स च न्यूनतरां गतिम्*[1]) ॥ $49_2$ ॥

ज्ञात्वैवमेतदाख्यानं नाविधिर्भक्षयेत् तु वै[1]), ।
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ॥ $49_3$ ॥

एतन् मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ।
शशादस्य[1]) तु दायादः ककुत्स्थो नाम वीर्यवान् ॥ 50 ॥

इन्द्रस्य वृषभूतस्य ककुत्स्थोऽजायतासुरान्[1]) ।
पूर्वमाडीवके युद्धे, ककुत्स्थस्तेन स[2]) स्मृतः ॥ 51 ॥

अनेनास्तु[1]) ककुत्स्थस्य पृथुश्चानेनसः[2]) स्मृतः, ।
*विष्टराश्वः*[3]) पृथोः पुत्रस्तस्मादाद्रस्त्व*जायत*[4]) ॥ 52 ॥

*आर्द्रस्य*[1]) युवनाश्वस्तु, श्रावस्तस्तस्य[2]) चात्मजः[3]) ।
जज्ञे श्रावस्तको राजा[4]), श्रावस्ती येन निर्मिता ॥ 53 ॥

श्रावस्तस्य तु दायादो बृहदश्वो मही*पतिः*[1]), ।
कुवलाश्वः सुतस्तस्य
राजा परमधार्मिकः, ॥ 54 ॥

बृहदश्वसुतश्चापि
कुवलाश्व इति श्रुतः[1]), ॥ 54 ॥

---

49 = Br. 7.50[b]. 51[a]; H. 666[b], 667[a]; Śidh. 60.36[b], 37[a]. 1) Śidh. इक्ष्वाकुः । 2) Śidh. –स्थितो । 3) H. तात; Śidh. राजा । 4) H. –स्तमथावसत् ; Śidh. –वो वनमाविशत् ।

49 = Bḍ. II. 63.20[b], 21[a]; Vā. 88.19[b], 20[a]. 1) Bḍ. शशादः ।

$49_1$ = Bḍ. II. 63.21[b], 22[a]; Vā. 88.20[b], 21[a].
$49_2$ = Bḍ. II. 63.22[b], 23[a]; Vā. 88.21[b], 22[a]. 1) Bḍ. –वान् सोऽथ शकृन्मूत्रतरङ्गितम् ।
$49_3$ = Bḍ. II. 63.23[b], 24[a]; Vā. 88.22[b], 23[a]. 1) Bḍ. –द्बुधः ।
50[a] = Bḍ. II. 63.24[b]; Vā. 88.23[b].

50[b] = Bḍ. II. 63.25[a]; Br. 7.51[b]; H. 667[b]; Śidh. 60.37[b]; Vā. 88.24[a]. 1) Śidh. अयोधस्य ।

51 = Bḍ. II. 63.25[b], 26[a]; H. 668; Vā. 88.24[b], 25[a]. 1) Bḍ. Vā. जायते पुरा । 2) Bḍ. सं– ।

52 = Bḍ. II. 63.26[b], 27[a]; Br. 7.52; H. 669; Śidh. 60.38; Vā. 88.25[b], 26[a]. 1) Śidh. अरिनामः । 2) Bḍ. H. Vā. –श्चुरानेनसः; Śidh. –श्चुररिनमः सुतः । 3) Bḍ. वृषदश्वः; Vā. वृषदश्वः । 4) Bḍ. Vā. –दन्ध्रस्तु वीर्यवान् Śidh. –दिन्द्रो व्यजायत ।

53 = Bḍ. II. 63.27[b], 28[a]; Br. 7.53; H. 670; Śidh. 60.39; Vā. 88.26[b], 27[a]. 1) Bḍ. अन्ध्रात् तु; Śidh. इन्द्रस्य; Vā. आन्ध्रस्तु । 2) Śidh. श्रावस्तस्य । 3) Br. –वस्तत्सुतो द्विजाः; Śidh. व्यजायत । 4) Śidh. –ज्ञः ।

54[a] = Bḍ. II. 63.28[b]; Br. 7.54[a]; H. 671[a]; Śidh. 60.40[a]; Vā. 88.27[b]. 1) Bḍ. Śidh. Vā. महायशाः ।

54[b] = Br. 7.54[b]; H. 671[b]; Śidh. 60.40[b].

54[b] = Bḍ. II. 63.29[a]; Vā. 88.28[a]. 1) Vā. –तिः ।

य: स[1]) धुन्धुवधाद् राजा[2]) धुन्धुमारत्वमागत:[3]) ॥ 55 ॥

ऋषय ऊचु:

धुन्धोर्वधं[1]) महाप्राज्ञ[2]) श्रोतुमिच्छाम[3]) तत्त्वत:[4]); ।
यदर्थं[5]) कुवलाश्व: स[6]) धुन्धुमारत्वमागत:[7]) ॥ 56 ॥

सूत ( लोमहर्षण ) उवाच :

कुवलाश्वस्य[1]) पुत्राणां शतमुत्तमधन्विनाम्[2]) ।
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदा: ॥ 57 ॥

बभूवुर्धार्मिका: सर्वे यज्वानो भूरिदक्षिणा: ।
कुवलाश्वं[1]) पिता राज्ये
बृहदश्वो[2]) न्ययोजयत् ॥ 58 ॥

| कुवलाश्वं महावीर्यं
| शूरमुत्तमधार्मिकम् ।
| बृहदश्वोऽभ्यषिञ्चत् तम्[1])
| तस्मिन् राज्ये[2]) नराधिप: ॥ 58 ॥

पुत्रसंक्रामितश्रीस्तु[1]) वनं राजा विवेश ह[2]); ।
तमुत्तङ्कोऽथ विप्रर्षि:
प्रयान्तं प्रत्यवारयत् ॥ 59 ॥

| प्रयातं त[1]मुत्तङ्कस्तु
| ब्रह्मर्षि: प्रत्यवारयत् ॥ 59 ॥

उत्तङ्क उवाच :

भवता रक्षणं कार्यं, तत् तावत्[1]) कर्तुमर्हसि[2]), ।
निरुद्विग्नस्तपश्चर्तुं[3]) न हि शक्नोमि[4]) पार्थिव[5]) ॥ 60 ॥

ममाश्रमसमीपे वै[1]) समेषु मरुधन्वसु[2]) ।
समुद्रो वालुकापूर्ण उज्जानक[3]) इति श्रुत:[4]) ॥ 61 ॥

---

55 = Bd. II. 63.29[b]; Br. 7.55; H. 672; Śidh. 60.41[a]; Vā. 88.28[b]. 1) Bd. यस्तु । 2) Śidh. सूतो । 3) Śidh. –मारो नृपोत्तम: ।

56 = Bd. II. 63.30; Br. 7.56; H. 673; Vā. 88.29. 1) Vā. –वीर्यं । 2) H. अहं ब्रह्मन् । 3) H. Vā. –मिच्छामि । 4) Bd. Vā. विस्तरात् । 5) Br. यद्वधात् । 6) Bd. –लाश्वस्य; Br. –लाश्वोऽसौ । 7) Bd. –गतम् ।

57 = Bd. II. 63.31; Br. 7.57; H. 674; Śidh. 60.41[b] = a; Vā. 88.30. 1) Vā. बृहदश्वस्य । 2) Bd. Vā. सहस्राण्येकविंशति: ।

58[a] = Bd. II. 63.32[a]; Br. 7.58[a]; H. 675[a]; Vā. 88.31[a].

58[b] = Br. 7.58[b]; H. 675[b]; Śidh. 60.42[a].
1) Śidh. बभूवाथ । 2) Śidh. कुवलाश्वो ।

| 58[bc] = Bd. II. 63.32[b], 33[a]; Vā. 88.31[b], 32[a].
| 1) Bd. ह्यभ्यषिञ्चत् । 2) Vā. –ष्ट्रे ।

59[a] = Bd. 63.33[b]; Br. 7.59[a]; H. 676[a]; Śidh. 60.42[b]; Vā. 88.32[b]. 1) Śidh. –क्रामितश्रीको । 2) H. Śidh. समाविशत् ।

59[b] = Br. 7.34[a]; Br. 7.59[b]; H. 676[b].

| 59[b] = Bd. II. 63.34[a]; Vā. 88.33[b]. 1) Bd. प्रयास्यन्त– ।

60 = Bd. II. 63.35; Br. 7.60; H. 677; Śidh. 60.43[b], (44); Vā. 88.34. 1) Br. तच्च; Śidh. पृथिव्या । 2) Bd. Vā. T. –मर्हति; Br. कर्तुं त्वमर्हसि; Śidh. धर्मत: शृणु । 3) Vā. –प: कर्तुं । 4) Bd. H. शक्नोषि । 5) Śidh. त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना । भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ।

61 = Bd. II. 63.36; Br. 7.61; H. 678; Śidh. 60.45; Vā. 88.35. 1) Bd. Vā. –समीपेषु; Śidh. –समीपे तु । 2) Bd. मेरोर्हि परितस्तु वै । 3) Bd. Vā. –णोस्तत्र तिष्ठति; Br. T. उद्दालक; Śidh. –र्णे दानवो । 4) Bd. Vā. भूपते; Br. स्मृत:; Śidh. बलदर्पित: ।

देवतानामवध्यश्च[1]) महाकायो महाबलः ।
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान्[2]) ॥ 62 ॥

राक्षसस्य मधोः पुत्रो[1]) धुन्धु[2]र्नाम[3]) *महासुरः*[4]) ।
शेते[5]) लोकविनाशाय तप आस्थाय दारुणम् ॥ 63 ॥

संवत्सरस्य पर्यन्ते स निश्वासं विमुञ्चति[1]) ।
यदा, तदा मही तत्र[2]) चलति स्म सकानना[3]) ॥ 64 ॥

तस्य निश्वासवातेन रज उद्धूयते महत् ।
आदित्यपथमावृत्य[1]) सप्ताहं भूमिकम्पनम् ॥ 65 ॥

सविस्फुलिङ्गं *साङ्गारं*[1]) सधूममति[2]दारुणम् ।
तेन *राजन्*[3]) न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे ॥ 66 ॥

तं *मारय*[1]) महाबाहो[2]) लोकानां हितकाम्यया ! ।
लोकाः स्वस्था[3]) भवन्त्यद्य तस्मिन् विनिहते त्वया[4]) ॥ 67 ॥

त्वं हि तस्य वधायैकः[1]) समर्थः पृथिवीपते, ।
विष्णुना च वरो दत्तो मह्यं[2]) पूर्वयुगे[3]) ऽनघ[4]) ॥ 68 ॥

| | |
|---|---|
| यस्तं महासुरं रौद्रं<br>हनिष्यति महाबलम् ।<br>तस्य त्वं वरदानेन<br>तेज आप्याययिष्यसि[1]) ॥ 69 ॥ | तेज[1]स्ते सुमहद्[2]) विष्णु-<br>स्तेजसाप्याययिष्यति ॥ 69 ॥ |

न हि धुन्धुर्महावीर्य[1]स्तेजसाल्पेन शक्यते ।

---

62 = Bḍ. II. 63.37; Br. 7.62; H. 679; Śidh. 60.46; Vā. 88.36. 1) Bḍ. Vā. –घ्यस्तु; Śidh. –घ्यो हि । 2) Śidh. –तः स्थितः ।

63 = Bḍ. II. 63.38; Br. 7.63; H. 680; Śidh. 60.47; Vā. 88.37. 1) Vā. स मनोस्तनयः क्रूरो । 2) Śidh. –न्धु– । 3) Śidh. –नामा । 4) Śidh. Vā. सुदारुणः । 5) Vā. शतं ।

64 = Bḍ. 63.39; Br. 7.64; H. 681; Śidh. 60.48; Vā. 88.38. 1) Vā. प्रमुञ्चति । 2) H. भूश्चलति; Śidh. सा चलति । 3) Br. स्म नराधिप; H. Śidh. सशैलवनकानना ।

65 = Bḍ. II. 63.40; Br. 7.65; H. 682; Śidh. 60.49; Vā. 88.38. 1) Śidh. –पूर्वं ।

66 = Bḍ. II. 63.41; Br. 7.66; H. 683; Śidh. 60.50; Vā. 88.40. 1) Bḍ. Vā. सज्वालं । 2) Śidh. –मपि । 3) Br. H. तात ।

67 = Bḍ. II. 63.42[a], 43[a]; Br. 7.67; H. 684; Śidh. 60.51; Vā. 88.41[a], 42[b]. 1) Bḍ. Śidh. Vā. वारय । 2) Br. H. महाकायं । 3) H. सुस्था । 4) Bḍ. Vā. –ऽसुरे ।

68 = Bḍ. II. 63.43[b], 44[a]; Br. 7.68; H. 685; Śidh. 60.52; Vā. 88.42[b], 43[a]. 1) Bḍ. वधार्थाय; Śidh. वधायैव; Vā. वधायाथ । 2) Bḍ. Vā. मम । 3) Bḍ. पूर्वं यतो; Vā. पूर्वं ततो । 4) Br. नृप ।

69 = Br. 7.69; H. 686. 1) Br. तेजश्चाप्यापयिष्यसि ।

69 = Bḍ. II. 63.42[b]; Śidh. 60.53[a]; Vā. 88.41[b]. 1) Śidh. तेजसा । 2) Śidh. स्वेन ते; Vā. T. सुमहा– । 3) Śidh. –स्तेज आप्यायिष्यति ।

70 = Bḍ. II. 63.44[b], 45[a]; Br. 7.70; H. 687; Vā. 88.43[b], 44[a]. 1) Br. H. –तेज– । 2) Bḍ. –पालेर् ।

निर्दग्धुं पृथिवीपाल[2]) *दिव्य*[3]वर्ष[4]शतैरपि[5]) ॥ 70 ॥
वीर्यं हि[1]) सुमहत् तस्य देवैरपि दुरासदम्[2]) ॥ 71 ॥
स एवमुक्तो[1]) राजर्षिरुत्तङ्केन महात्मना ।

बृहदश्व उवाच :

कुवलाश्वं[2]) सुतं[3]) प्रादात् तस्मै[4]) धुन्धुनिबर्हणे[5]) ॥ 72 ॥
भगवान्[1]) न्यस्तशस्त्रोऽहमयं तु तनयो मम ।
भविष्यति द्विजश्रेष्ठ धुन्धुमारो न संशयः ॥ 73 ॥
स तं व्यादिश्य तनयं *राजर्षिर्धुन्धुमारणे*[1]) ।
जगाम पर्वतायैव[2]) तपसे[3]) संशितव्रतः[4]) ॥ 74 ॥
कुवलाश्वस्तु[1]) पुत्राणां
शतेन सह *पार्थिवः*[2]) ।

| कुवलाश्वस्तु धर्मात्मा
| पितुर्वचनमाश्रितः[1]) ।
| सहस्रैरेकविंशत्या
| पुत्राणां सह पार्थिवः ।

प्रायादुत्तङ्कसहितो धुन्धोस्तस्य निबर्हणे[1]) ॥ 75 ॥
तमाविशत् तदा[1]) विष्णुस्तेजसा भगवान्[2]) *प्रभुः*[3]) ।
उत्तङ्कस्य नियोगाद् वै[4]) लोकानां हितकाम्यया ॥ 76 ॥
तस्मिन् प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् ।
एष *श्रीमानवध्योऽद्य*[1]) धुन्धुमारो भविष्यति ! ॥ 77 ॥
दिव्यैर्माल्यै[1]श्च तं देवाः[2]) समन्तात्[3]) समवाकिरन्[4]) ।
देवदुन्दुभयश्चैव प्रणेदुर्हि तदा भृशम्[5]) ॥ 78 ॥

---

3) Bḍ. Vā. अपि; Br. चिरं । 4) Br. युग– । 5) Vā. –रपि ।
71 = Bḍ. II. 63.45$^{b}$; Br. 7.71$^{a}$; H. 688$^{a}$; Vā. 88.44$^{b}$. 1) Br. च । 2) Vā. T. –सहन् ।
72 = Bḍ. II. 63.46; Br. 7.71$^{bc}$; H. 688$^{b}$, 689; Śidh, 60.55$^{b}$, 56$^{a}$; Vā. II. 63.45. 1) Bḍ. Vā. एवमुक्तस्तु ।
2) Śidh. –लश्वः । 3) Bḍ. तु तं । 4) Bḍ. H. Vā. तस्मिन् । 5) Bḍ. Vā. Śidh. –निवारणे ।
73 = Bḍ. II. 63.47; Br. 7.72; H. 690; Śidh. 60.56$^{b}$, 57$^{a}$; Vā. 88.46. 1) Vā. राजा सं– ।
74 = Bḍ. II. 63.48; Br. 7.73; H. 691; Śidh. 60.(57$^{b}$); Vā. 88.47. 1) Bḍ. आदिश्य तनयं धुन्धुमारणमुद्युतम् ; Vā. धुन्धुमारणमुद्यतम् । 2) Bḍ. स वनायैव । 3) Br. नृपतिः । 4) Śidh. इत्युक्त्वा पुत्रमादिश्य ययौ स तपसे नृपः ।
75$^{a}$ = Br. 7.74$^{a}$; H. 692$^{a}$. 1) Śidh. –श्च । 2) Br. भो द्विजाः ।
| 75$^{ab}$ = Bḍ. II. 63.49; Vā. 88.18$^{ab}$. 1) Vā. –मास्थितः ।
75b(c) = Bḍ. II. 63.50$^{a}$; Br. 7.74$^{b}$; H. 692$^{b}$; Śidh. 60.(58$^{a}$); Vā. 88.48$^{c}$. 1) Bḍ. Vā. निवारणे; Śidh. कुवलाश्वश्च सोत्तङ्को ययौ धुन्धुविनिग्रहे ।
76 = Bḍ. II. 63.50$^{b}$, 51$^{a}$; Br. 7.75; H. 693; Śidh. 60.58$^{b}$, 59$^{a}$; Vā. 88.49. 1) Bḍ. Vā. ततो । 2) Śidh. –ष्णुर्भगवान् तेजसा । 3) Bḍ. Vā. –ष्णुर्भगवान् स्वेन तेजसा । 4) Bḍ. Vā. –त्तु ।
77 = Bḍ. II. 63.51$^{b}$, 52$^{a}$; Br. 7.76; H. 694; Śidh. 60.59$^{b}$, 60$^{a}$; Vā. 88.50. 1) Bḍ. Vā. अयमद्यत्यैष नृपो; Śidh. एष श्रीमान् नृपसुतो ।
78 = Bḍ. II. 63.52$^{b}$, 53$^{a}$; Br. 7.77; H. 695; Śidh. 60.60$^{b}$ = a; Vā. 88.51$^{a}$ = a. 1) Bḍ. Vā. पुष्पै–; Br. गन्धै– । 2) Br. माल्यैश्च । 3) Br. तं देवाः । 4) Śidh. समवारयन् ; Vā. समभंसत अद्भुतन् । 5) Br. –दुर्द्विजसत्तमाः; H. –दुर्भरतर्षभ ।

स गत्वा जयतां श्रेष्ठ[1]स्तनयैः सह वीर्यवान्[2]) ।
समुद्रं खानयामास वालुकापूर्ण[3]मव्ययम्[4]) ॥ 79 ॥

नारायणेन विप्रर्षिस्ते[1]जसाप्यायितस्तु[2]) सः[3]) ।
बभूव सुमहातेजा[4]) भूयो बलसमन्वितः[5]) ॥ 80 ॥

तस्य पुत्रैः खनद्भिश्च[1]) वालुकान्तर्हितस्तदा[2]) ।
धुन्धुरासादितस्तत्र[3]) दिशमाश्रित्य[4]) पश्चिमाम् ॥ 81 ॥

मुखजेनाग्निना क्रोधाल्लो[1]कानुद्वर्तयन्निव ।
वारि सुस्राव वेगेन[2]) महोदधिरिवोदये ॥ 82 ॥

सोमस्य[1]), सोऽसुरश्रेष्ठो[2]) धारोर्मिकलिलो[3]) महान्[4]) ।

तस्य पुत्रशतं दग्धं
त्रिभिरूनं तु रक्षसा[1]) ॥ 83 ॥

| तस्य पुत्रास्तु[1]निर्दग्धा-
त्रिभिरूनास्तु रक्षसा[1]) ॥ 83 ॥

ततः स राजा द्युतिमान्[1]) राक्षसं तं महाबलम् ।
आससाद महातेजा धुन्धुं[2]) धुन्धुनिबर्हणः[3]) ॥ 84 ॥

तस्य वारिमयं वेगमपिबत्[1]) स नराधिपः ।
योगी योगेन[2]) बह्निं च[3]) शमयामास वारिणा ॥ 85 ॥

---

79 = Bḍ. II. 63.53b, 54a; Br. 7.78; H. 696; Śidh. 60.61; Vā. 88.51b, 52a. 1) Bḍ. Vā. पुरुषव्याघ्र– । 2) Śidh. पार्थिवः । 3) Br. वालुकान्तर–; Śidh. Vā. वालुकार्णव– । 4) Śidh. –मध्यगः ।

80 = H. 697; Śidh. 60.62; Vā. 88.53b,c). 1) H. कौरव्य ते–; Śidh. –णस्य विप्रर्षेस्ते–; Vā. राजर्षेस्ते– । 2) Vā. –तो हि । 3) H. –तस्तदा । 4) H. स बभूव महातेजा; Vā. बभूवातिबलो भूय । 5) Vā. उत्तङ्कस्य वशे स्थितः ।

81 = Bḍ. II. 63.54b, 55a; Br. 7.79; H. 698; Śidh. 60.63; Vā. 88.54. 1) Śidh. –द्भिस्तु । 2) Śidh. –र्गतस्तु सः । 3) Br. –तो विप्राः; H. –तो राजन् ; Śidh. –तो ब्रह्मन् । 4) Br. H. –मावृत्य ।

82 = Bḍ. II. 63.55b, 56a; Br. 7.80; H. 699; Śidh. 60.64; Vā. 88.55. 1) Bḍ. Vā. क्रुद्धो लो– । 2) Bḍ. Vā. योगेन ।

83a = Bḍ. II. 63.56b; Br. 7.81a; H. 700a; Vā. 88.56a. 1) Br. सौमस्य । 2) Br. मुनिशार्दूला; H. भरतश्रेष्ठ; Vā. सोमपश्रेष्ठ । 3) Br. वरोर्मिकलिलो; H. कलिलं । 4) H. महत् ।

83b = Br. 7.81b; H. 700b; Śidh. 60.(65a).
1) Śidh. सोमस्य च त्रिभिरूनं दग्धं पुत्रशतं हि तत् ।

| 83b = Bḍ. II. 63.57a; Vā. 88.56b. 1) Bḍ. –स्त्रय उर्वरिता मृधे; Vā. राक्षसाः ।

84 = Bḍ. II. 63.57b, 58a; Br. 7.82; H. 701; Śidh. 60.65b, 66a; Vā. 88.57a = aIbII. 1) Bḍ. Vā. –ज्ञातिबलो; H. कौरव्य; Śidh. विप्रेन्द्र । 2) Vā. धुन्धु– । 3) Bḍ. –बर्हणम् ; Br. –विनाशनः; Śidh. विप्रविनाशनम् ; Vā. बन्धुनिबर्हणः ।

85 = Bḍ. II. 63.58b, 59a; Br. 7.83; H. 702; Śidh, 60.66b, 67a; Vā. 88.57b, 58a. 1) Br. Śidh. –मापीय । 2) Śidh. वह्निबाणेन । 3) Śidh. तु; Vā. व ।

निहत्य[1]) तं[2]) महाकायं बलेनोदकराक्षसम् ।
उत्तङ्कं दर्शयामास कृतकर्मा[3]) नराधिपः ॥ 86 ॥

उत्तङ्कस्तु[1]) वरं प्रादात् तस्मै राज्ञे महात्मने[2]) ।
ददौ[3]) तस्याक्षयं[4]) वित्तं शत्रुभिश्चापराजयम्[5]) ॥ 87 ॥

धर्मे रतिं[1]) च सततं स्वर्गे वासं तथाक्षयम् ।
पुत्राणां चाक्षयाँल्लो[2]कान् स्वर्गे, ये[3]) रक्षसा हताः ॥ 88 ॥

तस्य पुत्रास्त्रयः शिष्टा, दृढाश्वो ज्ये[1]ष्ठ उच्यते, ।
चन्द्राश्व[2]-कपिलाश्वौ च[3]) कुमारौ द्वौ[4]) कनीयसौ[5]) ॥ 89 ॥

धौन्धुमारि[1]र्दृढाश्वश्च[2]), हर्यश्वस्तस्य चात्मजः[3]), ।
हर्यश्वस्य निकुम्भोऽभूत् क्षत्र[4]धर्मरतः सदा ॥ 90 ॥

संहताश्वो निकुम्भस्य सुतो[1]) रणविशारदः, ।
अकृशाश्व-कृशाश्वौ च[2]) संहताश्वसुता[3]वुभौ[4]) ॥ 91 ॥

तस्य हैमवती कन्या[1]) सतां[2]) माता[3]) दृषद्वती ।
विख्याता त्रिषु लोकेषु, पुत्रश्चास्याः[4]) प्रसेनजित् ॥ 92 ॥

---

86 = Bḍ. II. 63.59$^{b}$, 60$^{a}$; Br. 7.84; H. 703; Śidh. 60.67$^{b}$, 68$^{a}$; Vā. 88.58$^{b}$, 59$^{a}$. 1) Vā. निरस्यत् । 2) Bḍ. निरस्यन्तं; Śidh. तं निहत्य । 3) Śidh. उत्तङ्कस्येक्षयामास कृतं कर्म ।

87 = Bḍ. II. 63.60$^{b}$, 61$^{a}$; Br. 7.85; H. 704; Śidh. 60.68$^{b}$, 69$^{a}$; Vā. 88.59$^{b}$, 60$^{a}$. 1) Bḍ. Vā. –ङ्कश्च । 2) Śidh. –मुने । 3) Bḍ. ददतश् ; Śidh. अददच् ; Vā. अदात् । 4) Bḍ. Śidh. चाक्षयं; H. तस्याक्षयं ददौ । 5) Bḍ. Vā. –श्चाप्यधृष्यताम् ; Br. –श्चापराजितम् ।

88 = Bḍ. II. 63.61$^{b}$, 62$^{a}$; Br. 7.86; H. 705; Śidh. 60.69$^{b}$, 70$^{a}$; Vā. 88.60$^{bc}$. 1) Śidh. मतिं । 2) Śidh. पुत्रांस्तथाक्षयां लो– । 3) Śidh. ये चैव ।

89 = Bḍ. II. 63.62$^{b}$, 63$^{a}$; Br. 7.87; H. 706; Śidh. 60.70$^{b}$, 71$^{a}$; Vā. 88.61. 1) Śidh. –श्वः श्रे– । 2) Bḍ. Vā. भद्राश्वः; Śidh. हंसाश्व– । 3) Bḍ. Vā. –श्वश्च; Br. H. –श्वौ तु । 4) Śidh. च । 5) Bḍ. Vā. कनीयांसौ तु तौ स्मृतौ; Br. कनीयांसौ कुमारकौ ।

90 = Bḍ. II. 63.63$^{b}$, 64$^{a}$; Br. 7.88; H. 707; Śidh. 60.71$^{b}$. 72$^{a}$; Vā. 88.62. 1) Br. धौन्धुमारे– । 2) Br. र्दृढाश्वस्य; Śidh. –र्दृढाश्वो यो; Vā. –र्दृढाश्वस्तु । 3) Br. –श्चात्मजः स्मृतः । 4) Bḍ. क्षात्र–; Śidh. पुत्रो ।

91 = Bḍ. II. 63.64$^{b}$, 65$^{a}$; Br. 7.89; H. 708; Kū. 20.23$^{a}$ = b; L. 65.38$^{a}$ = b; Śidh. 60.72$^{b}$, 73$^{a}$; Vā. 88.63. 1) H. Śidh. पुत्रो; Vā. श्रुतो । 2) Bḍ. कृशाश्वश्चाकृताश्वश्च; Kū. कृताश्वोऽथ रणाश्वश्च; L. कृशाश्वोऽथ रणाश्वश्च; Śidh. अक्षाश्वश्च कृताश्वश्च; Vā. T. कृशाश्वश्चाक्षयाश्वश्च; Br. H. –श्वौ तु । 3) Kū. संहिताश्वस्य वै; L. –श्वात्मजा–; Śidh. संहताश्वसुतो । 4) Br. –तौ द्विजाः; H. –तौ नृप; Kū. सुतौ; Śidh. ऽभवत् ।

92 = Bḍ. II. 63.65$^{b}$, 66$^{a}$; Br. 7.90; H. 709; Śidh. 60.73$^{b}$, 74$^{a}$; Vā. 88.64. 1) Bḍ. Vā. पत्नी हैमवती । 2) Bḍ. सती । 3) Br. भर्ता; Vā. T. मातिः । 4) Bḍ. –श्चास्य; Śidh. Vā. –स्तस्याः ।

लेभे प्रसेनजिद्भार्यां
गौरीं नाम पतिव्रताम् , ।

| युवनाश्वः[1]) सुतस्तस्य
| त्रिषु लोकेषु विश्रुतः[2]) ।
| अत्यन्तधार्मिका[3]) गौरी
| तस्य पत्नी पतिव्रता ।

अभिशस्ता[1]) तु सा भर्त्रा नदी वै[2]) बाहुदाभवत्[3]) ॥ 93 ॥

तस्याः[1]) पुत्रो महानासीद्
युवनाश्वो महीपतिः[2]) ।

| तस्यास्तु गौरिकः पुत्र-
| श्चक्रवर्ती बभूव ह ।

मान्धाता युवनाश्वस्य[1]) त्रिलोकविजयी[2]) सुतः[3]) ॥ 94 ॥

| अत्राप्युदाहरन्तीमं[1]) श्लोकं[2]) पौराणिका द्विजाः ।
| यावत् सूर्य उदयति[3]) यावच्च प्रतितिष्ठति, ।
| सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ $94_1$ ॥

तस्य चैत्ररथी भार्या शशबिन्दोः[1]) सुताभवत् ।
साध्वी बिन्दुमती[2]) नाम रूपेणा*प्रतिमा* भुवि[3]) ॥ 95 ॥

पतिव्रता च ज्येष्ठा च भ्रातॄणामयुतस्य *सा*[1]) ।

तस्यामुत्पादयामास
मान्धाता द्वौ सुतौ *तदा*[1]) ॥ 96 ॥
पुरुकुत्सं च धर्मज्ञं
मुचुकुन्दं च *धार्मिकम्*[1]) ।

| तस्यामुत्पादयामास
| मान्धाता त्रीन् सुतान् प्रभुः ॥ 96 ॥
| पुरुकुत्समम्बरीषं
| मुचुकुन्दं च विश्रुतम् ।

| अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ॥ $96_1$ ॥
| हरितो युवनाश्वस्य हारितास्तु यतः[1]) स्मृताः[2]) ।
| एते ह्यङ्गिरसः पुत्राः क्षा[3]त्रोपेता द्विजातयः ।

---

$93^{a}$ = Br. 7.91$^{a}$; H. 710$^{a}$; Śidh. 60.74$^{b}$.

| $93^{ab}$ = Bḍ. II. 63.66$^{b}$, 67$^{a}$; Vā. 88.65. 1) Bḍ. युवनाश्व- । 2) Vā. -केष्वतिद्युतिः । 3) Vā. -धार्मिको ।

$93^{b(c)}$ = Bḍ. II. 63.67$^{b}$; Br. 7.91$^{b}$; H. 710$^{b}$; Śidh. 60.75$^{a}$; Vā. 88.66$^{a}$. 1) H. Śidh. अभिशप्ता । 2) Bḍ. Śidh. Vā. सा । 3) Bḍ. Śidh. Vā. -दा कृता ।

$94^{a}$ = Br. 7.92$^{a}$; H. 711$^{a}$; Śidh. 60.75$^{b}$. 1) Br. T. तस्य । 2) Br. नराधिपः ।

| $94^{a}$ = Bḍ. II. 63.68$^{a}$; Vā. 88.66$^{b}$.

$94^{b}$ = Bḍ. II. 63.68$^{b}$; Br. 7.92$^{b}$; H. 711$^{b}$; Śidh. 60.76$^{a}$; Vā. 88.67$^{a}$. 1) Bḍ. Vā. यौवनाश्वो वै । 2) Bḍ. Vā. त्रैलोक्यविजयी; Śidh. त्रिषु लोकेषु । 3) Bḍ. Vā. नृपः; Śidh. विश्रुतः ।

| $94_1$ = Bḍ. II. 63.69, 70$^{a}$; Bhg. IX. 6.37; Vā. 88.67$^{b}$, 68$^{a}$; Vi. IV. 2.18$^{bc}$. 1) Vā. -न्तीमौ । 2) Vā. श्लोकौ । 3) Bḍ. उदयते; Bhg. Vi. उदेति स्म ।

95 = Bḍ. II. 63.70$^{b}$, 71$^{a}$; Br. 7.93; H. 712; Śidh. 60.76$^{b}$, 77$^{a}$; Vā. 88.70. 1) Śidh. शशबिन्दु- । 2) Śidh. शश- बिन्दोर्मती । 3) Br. H. रूपेणासदृशी भुवि; Śidh. रूपेणाप्रतिमाभवत् ।

$96^{a}$ = Bḍ. II. 63.71$^{b}$; Br. 7.94$^{a}$; H. 713$^{a}$; Śidh. 60.77$^{b}$; Vā. 88.71$^{a}$. 1) Br. वै; Śidh. च ।

$96^{b}$ = Br. 7.94$^{a}$; H. 713$^{b}$; Śidh. 60.78$^{a}$. 1) Br. द्विजाः; H. नृप ।

$97^{a}$ = Br. 7.95$^{a}$; H. 714$^{a}$; Śidh. 60.78$^{b}$. 1) Br. पार्थि- वम् ।

| $96^{b}$ = Bḍ. II. 63.72$^{a}$; Vā. 88.71$^{b}$.

| $96_1{}^{a}$ = Bḍ. II. 63.72$^{b}$; Vā. 88.72$^{a}$.

देवमीढस्य विबुधो, विबुधस्य *महाधृतिः*[1]) ॥ $98_{12}$ ॥
महाधृतिसुतो राजा कीर्तिरातः[1]) प्रतापवान् , ।
कीर्तिराता[2]त्मजो विद्वान् महारोमेति विश्रुतः ॥ $98_{13}$ ॥
महारोम्णस्तु विख्यातः स्वर्णरोमा व्यजायत, ।
स्वर्णरोमात्मजश्चापि ह्रस्वरोमाभवन् नृपः ॥ $98_{14}$ ॥
ह्रस्वरोमात्मजो विद्वान् *सीरध्वज*[1]) इति *श्रुतः*[2]), ।
उद्भिन्ना कर्षता[3]) येन सीता राज्ञा यशस्विनी ।
रामस्य महिषी साध्वी सुव्रता*तिपति*व्रता[4]) ॥ $98_{15}$ ॥

वैशम्पायन ( शांशपायन ) उवाच :

कथं सीता समुत्पन्ना कृष्यमाणा यशस्विनी ।
किमर्थं चा[1]कृषद् राजा क्षेत्रं यस्मिन् बभूव ह ? ॥ $98_{16}$ ॥

सूत उवाच :

अग्निक्षेत्रे कृष्यमाणे अश्वमेधे महात्मनः ।
विधिना *सुप्रयुक्तेन*[1]) तस्मात् सा तु समुत्थिता ॥ $98_{17}$ ॥
सीरध्वजानु*जात*[1]स्तु भानुमान् नाम मैथिलः ।
भ्राता कुशध्वजस्तस्य, स काश्य[2]धिपतिर्नृपः ॥ $98_{18}$ ॥
तस्य भानुमतः पुत्रः प्रद्युम्नश्च प्रतापवान्, ।
मुनिस्तस्य सुतश्चापि, तस्मादूर्जवहः स्मृतः ॥ $98_{19}$ ॥
ऊर्जवा(!)*हात्*[1]) *सनद्वाजः*[2]) शकुनिस्तस्य चात्मजः, ।
स्वागतः शकुनेः पुत्रः, सुवर्चास्तत्सुतः स्मृतः ॥ $98_{20}$ ॥
श्रुतो[1]) यस्तस्य दायादः, सुश्रुतस्तस्य चात्मजः, ।
सुश्रुतस्य जयः पुत्रो, जयस्य विजयः श्रुतः ॥ $98_{21}$ ॥
विजयस्य *ऋतः*[1]) पुत्र *ऋतस्य*[2]) सुनयः स्मृतः, ।
सुनयाद् वीतहव्यस्तु, वीतहव्यात्मजो धृतिः ॥ $98_{22}$ ॥
धृतेस्तु बहुलाश्वोऽभूद्, बहुलाश्वसुतः कृतिः, ।
तस्मिन् संतिष्ठते वंशो जनकानां महात्मनाम् ।
इत्येते मैथिलाः प्रोक्ताः, सोमस्यापि निबोधत ! ॥ $98_{23}$ ॥

[ H. 835—1310. ]

---

$98_{12}$ = Bḍ. II. 64.12; Vā. 89.12. 1) Vā. सुतो धृतिः ।
$98_{13}$ = Bḍ. II. 64.13; Vā. 89.13. 1) Vā. T. कीर्तिराजः । 2) Vā. T. -राजा- ।
$98_{14}$ = Bḍ. II. 64.14; Vā. 89.14.
$98_{15}$ = Bḍ. II. 64.15, $16^{a}$; Vā. 89.15. 1) Bḍ. सरिद्ध्वज । 2) Vā. श्रुतिः । 3) Vā. कृपता । 4) Bḍ. -नियत-व्रता ।
$98_{16}$ = Bḍ. II. $64.16^{b}$, $17^{a}$; Vā. 89.16. 1) Bḍ. वा- ।
$98_{17}$ = Bḍ. II. $64.17^{b}$, $18^{a}$; Vā. 89.17. 1) Bḍ. सुप्रयत्नेन ।
$98_{18}$ = Bḍ. II. $64.18^{b}$, $19^{a}$; Vā. 89.18. 1) Vā. सीरध्वजात् तु जात- । 2) Vā. काश्या- ।
$98_{19}$ = Bḍ. II. $64.19^{b}$, $20^{a}$; Vā. 89.19.
$98_{20}$ = Bḍ. II. $64.20^{b}$, $21^{a}$; Vā. 89.20. 1) Bḍ. -वहात् । 2) Vā. सुतद्राजः ।
$98_{21}$ = Bḍ. II. $64.21^{b}$, $22^{a}$; Vā. 89.21. 1) Bḍ. सुतो ।
$98_{22}$ = Bḍ. II. $64.22^{b}$, $23^{a}$; Vā. 89.22. 1) Bḍ. ऋतुः । 2) Bḍ. -त्रः कृतोश्च ।
$98_{23}$ = Bḍ. II. $64.23^{b}$, 24; Vā. 89.23.

## सन्दर्भस्तवकः 11

( Mt. 11.40—12.57; P.1 I. 8.75[b]—163; P.2 V. 8.75—162; Cp. Kū. 20.19—25, 21.1—61; L. 65.22—39, 66.14—42. )

मनोर्वैवस्वतस्यासन्[1]) दश पुत्रा महाबलाः ।
इलस्तु प्रथमस्तेषां पुत्रेष्ट्यां समजायत[2]), ॥ 1 ॥
इक्ष्वाकुः कुशनाभश्च अरिष्टो धृष्ट एव च ।
नरिष्यन्तः करूषश्च शर्यातिश्च महाबलाः[1]) ॥ 2 ॥
पृषध्रश्चाथ नाभागः सर्वे ते दिव्यमानुषाः ।
अभिषिच्य मनुः पुत्र[1]मिलं ज्येष्ठं[2]) स धार्मिकम्[3]) ॥ 3 ॥

| जगाम तपसे भूयः स महेन्द्रवनालयम् । | जगाम तपसे भूयः स पुष्कर[1]तपोवनम् । |
|---|---|

अथाजगाम सिद्ध्यर्थं तस्य ब्रह्मा वरप्रदः ॥ $3_1$ ॥
वरं वरय भद्रं ते मानवेय[1]) यथेप्सितम् ।
उवाच स तदा देवं पद्माक्षं पद्मजं विभुम् ॥ $3_2$ ॥
वशे[1]) मे धर्मसंयुक्ताः पृथिव्यां सर्वपार्थिवाः ।
भवेयुरी[2]श्वराः, स्वामिन्, प्रसादात् तव कञ्जज ! ॥ $3_3$ ॥
तथेत्युक्त्वा च[1]) देवेशस्तत्रैवान्तरधीयत ।
ततोऽयोध्यां समागत्य[2]) समतिष्ठद् यथा पुरा ॥ $3_4$ ॥
अथैकदा रथारूढ इलो निजसुतो मनोः ।

| अथ दिग्जयसिद्ध्यर्थम् इलः प्रायान् महीमिमाम् ॥ 4 ॥ | निर्जगामाथ[1]) सिद्ध्यर्थम् इलः[2]) प्रायान् महीमिमाम् ॥ 4 ॥ |
|---|---|

भ्रमन् द्वीपानि सर्वाणि क्ष्माभृतः सम्प्रसाधयन्[1]) ।
जगामोपवनं शम्भोरश्वाकृष्टः[2]) प्रतापवान् ॥ 5 ॥
कल्पद्रुमलताकीर्णं नाम्ना शरवणं महत्, ।
रमते यत्र देवेशः शम्भुः[1]) सोमार्धशेखरः ॥ 6 ॥

---

1 = Mt. 11.40; P.1 I. 8.75[b], 76[a]; P.2 V. 8.75. 1) P.1 -स्यापि । 2) P.1 पुत्रेष्ट्या समकल्पि यः; P.2 पुत्रेषु समजायत ।
2 = Mt. 11.41[ab]; P.1 I. 8.76[b], 77[a]; P.2 V. 8.76. 1) P.1 P.2 महाबलः ।
3 = Mt. 11.41[c], 42[a]; P.1 I. 8.77[b], 78[a]; P.2 V. 8.77. 1) P.1 पूर्व- । 2) P.2 पुत्रम् । 3) Mt. धार्मिकः ।
4[a] = Mt. 11.42[b]. | $3_1$[a] = P.1 I. 8.78[b]; P.2 V. 8.78[a]. 1) P.1 पुष्करं स ।
$3_1$[b] = P.1 I. 8.79[a]; P.2 V. 8.78[b].
$3_2$ = P.1 I. 8.79[b], 80[a]; P.2 V. 8.79. 1) P.2 मनवे यद् ।
$3_3$ = P.1 I. 8.80[b], 81[a]; P.2 V. 8.80. 1) P.2 दशे । 2) P.2 भवन्तु ई- ।
$3_4$ = P.1 I. 8.81[b], 82[a]; P.2 V. 8.81. 1) P.1 तु । 2) P.2 ततश्च स्वयमागम्य ।
4[b] = Mt. 11.43[a]. | 4 = P.1 I. 8.82[b], 83[a]; P.2 V. 8.82[a] = b. 1) P.1 निर्जगामार्थं- । 2) P.2 इन- ।
5 = Mt. 11.43[b], 44[a]; P.1 I. 8.83[b], 84[a]; P.2 V. 8.82[b], 83[a]. 1) Mt. संप्रधर्पयन् ; P.2 क्ष्माभृतः प्रसाधयन् । 2) P.1 -रथाकृष्टः; P.2 रथाकृष्टः ।
6 = Mt. 11.44[b], 45[a]; P.1 I. 8.84[b], 85[a]; P.2 V. 8.83[b], 84[a]. 1) P.1 P.2 सोमः ।

उमया समयस्तत्र पुरा शरवणे कृतः ।
पुंनाम सत्त्वं[1]) यत्किञ्चिदागमिष्यति नो[2]) वनम्[3]), ॥ 7 ॥
स्त्रीत्वमेष्यति तत् सर्वं दशयोजनमण्डले ।
अज्ञातसमयो राजा इलः शरवणं *गतः*[1]) ॥ 8 ॥

| | |
|---|---|
| स्त्रीत्वमाप विशन्नेव<br>वडवात्वं हयस्तदा, ।<br>पुरुषत्वं हृतं सर्वं,<br>स्त्रीरूपे विस्मितो नृपः ॥ 9 ॥ | स्त्रीत्वं जगाम सहसा<br>वडवाश्वोऽभवत् क्षणात्, ।<br>पुरुषत्वे कृतं सर्वं<br>स्त्रीकार्ये विस्मृतं ततः[1]) ॥ 9 ॥ |

इलेति साभवन्नारी पीनोन्नतघनस्तनी ।
उन्नतश्रोणिजघना पद्मपत्रायतेक्षणा ॥ 10 ॥
पूर्णेन्दुवदना तन्वी[1]) विलासोल्लासिते[2]क्षणा ।
मूलो[3]न्नतायतभुजा नीलकुञ्चितमूर्धजा ॥ 11 ॥
तनुलोमा सु*व*दना[1]) मृदु*गद्गद*[2]भाषिणी ।
श्यामगौरेण[3]) वर्णेन हंसवारणगामिनी ॥ 12 ॥
कार्मुकभ्रूयुगोपेता तनुताम्रनखाङ्कुरा ।
भ्रममाणा[1]) वने तस्मिंश्चिन्तयामास भामिनी ॥ 13 ॥
को मे पिता *वा* भ्राता *वा*[1]), का मे *माता*[2]) भवेदिह, ।
कस्य भर्तुरहं दत्ता, कियद् वत्स्यामि[3]) भूतले ॥ 14 ॥
चिन्तयन्ती च[1]) ददृशे सोमपुत्रेण साङ्गना ।
इला रूपसमाक्षिप्तमनसा वरवर्णिनी ॥ 15 ॥
बुधस्तदाप्तये यत्नमकरोत् कामपीडितः ।
विशिष्टाकारवान् दण्डी[1]) सकमण्डलुपुस्तकः ॥ 16 ॥
वेणुदण्डकृता*वेशः*[1]) पवित्रक*खनि*त्रकः[2]) ।
द्विजरूपः[3]) शिखी ब्रह्म निगदन् कर्णकुण्डलः[4]) ॥ 17 ॥

---

7 = Mt. 11.45b, 46a; P.1 I. 8.85b, 86a; P.2 V. 8.84b, 85a. 1) P.1 पुंनामसंज्ञं । 2) Mt. T. ते । 3) Mt. P.2 वने ।

8 = Mt. 11.46b, 47a; P.1 I. 8.86b, 87a; P.2 V. 8.85b, 86a. 1) Mt. –वणे पुरा ।

9 = Mt. 11.47b, 48a.

9 = P.1 I. 8.87b, 88a; P.2 V. 8.86b, 87a. 1) P.2 यत् किंचित् पुरुषाकारं स्त्र्यभवद् विस्मितो नृपः ।

10 = Mt. 11.48b, 49a; P.1 I. 8.88b, 89a; P.2 V. 8.87b, 88a.

11 = Mt. 11.49b, 50a; P.1 I. 8.89b, 90a; P.2 V. 8.88b, 89a. 1) P.2 नारी । 2) P.1 विलासिन्यसिते–; P.2 विशालोल्लासिते– । 3) P.1 P.2 पीन्नो– ।

12 = Mt. 11.50b, 51a; P.1 I. 8.90b, 91aI, 91bII; P.2 V. 8.89b, 90a. 1) Mt. सुदशना । 2) Mt. मृदुगम्भीर– । 3) P.1 श्यामागोरेण; P.2 स्या( श्या ? )मा गौरेण ।

13 = Mt. 11.51b, 52a; P.1 I. 8.91bI, 91aII, 92a; P.2 V. 8.90b, 91a. 1) Mt. T. भ्रमन्ती च ।

14 = Mt. 11.52b, 53a; P.1 I. 8.92b, 93a; P.2 V. 8.91b, 92a. 1) Mt. पिताथवा भ्राता; P.2 पिता च माता च । 2) P.1 को मे त्राता; P.2 को मे भ्राता । 3) Mt. V. कियद्वर्णस्य; P.1 कियद्वर्षोस्मि; P.2 –यद्वर्णोऽस्य ।

15 = Mt. 11.53b, 54a; P.1 I. 8.93b, 94a; P.2 V. 8.92b, 93a. 1) Mt. चिन्तयन्तीति ।

16 = Mt. 11.54b, 55a; P.1 I. 8.94b, 95a; P.2 V. 8.93b, 94a. 1) P.1 मुण्डी; P.2 मुण्डः ।

17 = Mt. 11.55b, 56a; P.1 I. 8.95b, 96a; P.2 V. 8.94b, 95a. 1) Mt. वेणुदण्डकृतानेक– । 2) Mt. –गणत्रिकः । 3) P.2 –प– । 4) P.1 –कुण्डली; P.2 रुक्मकुण्डलः ।

बटुभिश्चान्वितो युक्तः[1]) समित्पुष्पकुशोदकैः ।
किलान्विषन् वने[2]) त[3]स्मिनाजुहाव स तामिलाम् ॥ 18 ॥
बहिर्वनस्यान्तरितः किल पादपमण्डले[1]) ।
ससंभ्रममकस्माच्च[2]) सोपालम्भमिवावदत्[3]) ॥ 19 ॥
त्यक्त्वाग्निहोत्रशुश्रूषां क्व गता मन्दिरान् मम, ।
इयं विहारवेला ते ह्यति[1]क्रामति सांप्रतम् ॥ 20 ॥
एह्येहि पृथुसुश्रोणि संभ्रान्ता केन हेतुना ? ।
इयं सायन्तनी वेला विहारस्येह[1]) वर्तते, ॥ 21 ॥
कृत्वोपलेपनं पुष्पैरलंकुरु गृहं मम ! ।
साब्रवीद्[1]) विस्मृताहं च स[2]र्वमेतत् तपोधन ॥ 22 ॥
आत्मानं त्वां च भर्तारं कुलं च वद मेऽनघ ! ।
बुधः प्रोवाच तां तन्वीमिला त्वं वरवर्णिनि ॥ 23 ॥
अहं च कामुको नाम बहुविद्यो बुधः स्मृतः, ।
तेजस्विनः कुले जातः पिता मे ब्राह्मणाधिपः ॥ 24 ॥
इति सा तस्य वचनात् प्रविष्टा बुधमन्दिरम् ।
रत्नस्तम्भसमाकीर्ण[1]) दिव्यमायाविनिर्मितम् ॥ 25 ॥
इला कृतार्थमात्मानं मेने तद्भवने[1]) स्थिता ।
अहो वृत्तमहो रूपमहो धनमहो कुलम् ॥ 26 ॥
मम चास्य च भर्तुर्न[1]) अहो लावण्यमुत्तमम् ! ।
रेमे च सा तेन सममतिकालमिला वने[2]) ।
सर्वभोगमये गेहे यथेन्द्रभवने तथा ॥ 27 ॥
अथान्विषन्तो राजानं भ्रातरस्तस्य मानवाः ।
इक्ष्वाकुप्रमुखा जग्मुस्तदा शरवणान्तिकम् ॥ 28 ॥
ततस्ते ददृशुः सर्वे वडवामग्रतः स्थिताम् ।
रत्नपर्याणकिरण[1]दीप्यमाना[2]मनुत्तमाम् ॥ 29 ॥
पर्याण[1]प्रत्यभिज्ञानात् सर्वे विस्मयमागताः ।
अयं चन्द्रप्रभो नाम वाजी तस्य महात्मनः ! ॥ 30 ॥

---

18 = Mt. 11.56$^{b}$, 57$^{a}$; P.1 I. 8.96$^{b}$, 97$^{a}$; P.2 V. 8.95$^{b}$, 96$^{a}$. 1) Mt. T. –क्तैः; P.1 –श्चार्थैभिर्युक्तः । 2) P.1 कालेऽन्विष्यां ततस्; P.2 किलान्वेषी वने । 3) P.2 त्व– ।
19 = Mt. 11.57$^{b}$, 58$^{a}$; P.1 I. 8.97$^{b}$, 98$^{a}$; P.2 V. 8.96$^{b}$, 97$^{a}$. 1) P.1 –मण्डपे । 2) Mt. –मकस्मात् तां । 3) P.1 –मिवाभवत् ।
20 = Mt. 11.58$^{b}$, 59$^{a}$; P.1 I. 8.98$^{b}$, 99$^{a}$; P.2 V. 8.97$^{b}$, 98$^{a}$. 1) P.1 P.2 ते अति– ।
21 = Mt. 11.59$^{b}$, 60$^{a}$; P.1 I. 8.99$^{b}$, 100$^{a}$; P.2 V. 8.98$^{b}$, 99$^{a}$. 1) P.2 विहारस्याति– ।
22 = Mt. 11.60$^{b}$, 61$^{a}$; P.1 I. 8.100$^{b}$, 101$^{a}$; P.2 V. 8.99$^{b}$, 100$^{a}$. 1) Mt. सा त्वब्रवीद् । 2) Mt. –हं स– ।
23 = Mt. 11.61$^{b}$, 62$^{a}$; P.1 I. 8.101$^{b}$, 102$^{a}$; P.2 V. 8.100$^{b}$, 101$^{a}$.
24 = Mt. 11.62$^{b}$, 63$^{a}$; P.1 I. 8.102$^{b}$, 103$^{a}$; P.2 V. 8.101$^{b}$, 102$^{a}$.
25 = Mt. 11.63$^{b}$, 64$^{a}$; P.1 I. 8.103$^{b}$, 104$^{a}$; P.2 V. 8.102$^{b}$, 103$^{a}$. 1) Mt. T. –समायुक्तं ।
26 = Mt. 11.64$^{b}$, 65$^{a}$; P.1 I. 8.104$^{b}$, 105$^{a}$; P.2 V. 8.103$^{b}$, 104$^{a}$. 1) Mt. –न– ।
27 = Mt. 11.65$^{b}$, 66; P.1 I. 8.105$^{b}$, 106; P.2 V. 104$^{b}$, 105. 1) Mt. च मे भर्तुर्; P.2 भर्तुर्वै । 2) Mt. ततः ।
28 = Mt. 12.1; P.1 I. 8.107; P.2 V. 8.106.
29 = Mt. 12.2; P.1 I. 8.108; P.2 V. 8.107. 1) P.1 रत्नपर्यन्तकिरण–; P.2 रत्नपर्याप्तकिरणां । 2) Mt. –दीप्तकाया– ।
30 = Mt. 12.3; P.1 I. 8.109; P.2 V. 8.108. 1) P.1 P.2 संप्राप्य ।

अगमद् वडवारूप[1]मुत्तमं केन हेतुना ? ।
ततस्तु मैत्रावरुणिं पप्रच्छुस्ते पुरोधसम्[2]) ॥ 31 ॥
किमित्येतद[1]भूच्चित्रं, वद योगविदां वर ! ।
वसिष्ठोऽप्य[2]ब्रवीत् सर्वं दृष्ट्वा तद्[3]) ध्यानचक्षुषा ॥ 32 ॥
समयः शम्भुदयिताकृतः शरवणे पुरा ।
यः पुमान् प्रविशेदत्र[1]), स नारीत्वमवाप्स्यति ॥ 33 ॥
अयमश्वोऽपि नारीत्वमगाद् राज्ञा सहैव तु ।
इलः[1]) पुरुषतामेति यथासी धनदोपमः, ॥ 34 ॥
तथैव यत्नः कर्तव्य आ[1]राध्यैव[2]) पिनाकिनम् ।
ततस्ते मनवा जग्मुर्यत्र देवो महेश्वरः, ॥ 35 ॥
तुष्टुवुर्विविधैः स्तोत्रैः पार्वती-परमेश्वरी ।
तावूचतुरलङ्घ्योऽयं[1]) समयः, किं तु सांप्रतम् ॥ 36 ॥
इक्ष्वाकोरश्वमेधेन यत् फलं स्यात् तदावयोः ।
दत्त्वा किंपुरुषो वीरः स भविष्यत्यसंशयम् ॥ 37 ॥
तथेत्युक्त्वा त[1]तस्ते तु[2]) जग्मुर्वैवस्वतात्मजाः; ।

इक्ष्वाकोश्चा[1]श्वमेधेन
चेलः[2]) किंपुरुषोऽभवत् ॥ 38 ॥

इष्ट्वाश्वमेधेन तत
इला किंपुरुषोऽभवत् ॥ 38 ॥

मासमेकं पुमान् वीरः स्त्री च[1]) मासमभूत् पुनः[2]) ।
बुधस्य भवने तिष्ठन्निलो गर्भधरोऽभवत्[3]), ॥ 39 ॥
अजीजनत् पुत्रमेकमनेकगुणसंयुतम् ।
बुध उत्पाद्य[1]) तं पुत्रं[2]) स्वर्लोक[3]मगमत् ततः[4]) ॥ 40 ॥
इलस्य नाम्ना तद् वर्षमिलावृतमभूत् तदा, ।
सोमार्कवंशजो राजा[1]) इलो[2]ऽभून् मनुनन्दनः[3]) ॥ 41 ॥
एवं पुरूरवाः पूरो[1]रभवद् वंशवर्धनः, ।
इक्ष्वाकुरर्कवंशस्य तथैवोक्तो नरेश्वरः[2]) ॥ 42 ॥

---

31 = Mt. 12.4; P.1 I. 8.110; P.2 V. 8.109. 1) P.2 वाडवं रूप- । 2) P.1 -च्छुः स्वपुरोहितम् ।
32 = Mt. 12.5; P.1 I. 8.111; P.2 V. 8.110. 1) P.1 किमेतदित्य- । 2) Mt. वसिष्ठश्चा- । 3) P.1 तं ।
33 = Mt. 12.6; P.1 I. 8.112; P.2 V. 8.111. 1) P.1 -शेच्चात्र ।
34 = Mt. 12.7; P.1 I. 8.113; P.2 V. 8.112. 1) Mt. पुनः ।
35 = Mt. 12.8; P.1 I. 8.114; P.2 V. 8.113. 1) Mt. कर्तव्यश्चा- । 2) P.1 आराध्य च ।
36 = Mt. 12.9; P.1 I. 8.115; P.2 V. 8.114. 1) P.1 P.2 -रलं चैप ।
37 = Mt. 12.10; P.1 I. 8.116; P.2 V. 8.115.
38ᵃ = Mt. 12.11ᵃ; P.1 I. 8.117ᵃ; P.2 V. 8.116ᵃ. 1) Mt. -त्कास्त- । 2) P.1 तु ते सर्वे ।
38ᵇ = L. 65.22ᵃ; Mt. 12.11ᵇ. 1) L. -कोर- । 2) L. इला ।
38ᵇ = P.1 I. 8.117ᵇ; P.2 V. 8.116ᵇ.
39 = L. 65.23ᵃ(ᵇ); Mt. 12.12; P.1 I. 8.118; P.2 V. 8.117. 1) L. P.1 स्त्रीत्वं । 2) P.2 -मभून् नृप । 3) L. इला बुधस्य भवनं सोमपुत्रस्य चाश्रिता ।
40 = Mt. 12.13; P.1 I. 8.119; P.2 V. 8.118. 1) Mt. बुधश्चोद्पाद्य । 2) P.1 P.2 पूर्वं । 3) P.1 स स्वर्ग-; P.2 -गार्थं- । 4) P.1 पुनः ।
41 = Mt. 12.14; P.1 I. 8.120; P.2 V. 8.119. 1) Mt. -शयोरादा-; P.2 सोमस्य वंशजो राजा । 2) Mt. -विलो; P.2 ऐलो । 3) P.1 P.2 -द्वंशवर्धनः ।
42 = Mt. 12.15; P.1 I. 8.121; P.2 V. 8.120. 1) Mt. पुंसो- । 2) Mt. तथैवोक्तस्तपोधनाः ।

इलः[1]) किंपुरुषत्वे च सुद्युम्न इति चोच्यते, ।
पुनः पुत्रत्रयमभूत्[2]) सुद्युम्नस्यापराजितम्[3]) ॥ 43 ॥

उत्कलोऽथ[1]) गयस्तद्वद् धरिताश्वश्च वीर्यवान् ।
उत्कलस्योत्कला नाम, गयस्य तु गया पुरी[2]), ॥ 44 ॥

हरिताश्वस्य दिक् पूर्वा विज्ञाता[1]) कुरुभिः सह ।
प्रतिष्ठानेऽभिषिच्याथ स पुरूरवसं सुतम् ॥ 45 ॥

जगामेलावृतं भोक्तुं दिव्यवर्षं फलाशनः[1]) ।
इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ 46 ॥

नरिष्यन्तस्य पुत्रोऽभूच्छुको नाम[1]) महाबलः[2]), ।
नाभागस्या[3]म्बरीषस्तु, धृष्टस्य तु[4]) सुतत्रयम्[5]) ॥ 47 ॥

धृष्टकेतुः स्वधर्माथो[1]) रणधृष्टश्च[2]) वीर्यवान्[3]) ।
आनर्तो नाम शर्यातिः सुकन्या चैव दारिका ॥ 48 ॥

आनर्तस्याभवत् पुत्रो रोचमानः प्रतापवान्, ।
आनर्तो नाम देशोऽभून् नगरी च कुशस्थली ॥ 49 ॥

रोचमानस्य रेवो[1]ऽभूद् रेवाद् रैवत[2]) एव च, ।
ककुद्मी चापरं[3]) नाम, ज्येष्ठः[4]) पुत्रशतस्य च[5]) ॥ 50 ॥

रेवती तस्य[1]) सा कन्या भार्या[2]) रामस्य विश्रुता ।
करूषस्य तु कारूषा[3]) बहवः प्रथिता भुवि[4]) ॥ 51 ॥

पृषध्रो गोवधाच्छूद्रो गुरुशापादजायत[1]) ।
इक्ष्वाकुवंशं वक्ष्यामि,
शृणुध्वम् ऋषिसत्तमाः ! ।

---

43 = L. 65.22[b], 26[a]; Mt. 12.16; P.1 I. 8.122; P.2 V. 8.121. 1) L. इला । 2) L. पुत्रत्रयमभूत् तस्य । 3) L. सुद्युम्नस्य द्विजोत्तमाः ।

44 = Mt. 12.17; P.1 I. 8.123; P.2 V. 8.122. 1) Mt. वै । 2) Mt. T. P.2 T. मता ।

45 = Mt. 12.18; P.1 I. 8.124; P.2 V. 8.123. 1) Mt. विश्रुता; P.1 दिग्याम्या संज्ञाता ।

46 = L. 65.28[b] = b; Mt. 12.19; P.1 I. 8.125; P.2 V. 8.124. 1) Mt. वर्षं दिव्यफलाशनम् ; P.1 दिव्यं वर्षं फलाशनः ।

47 = L. 66.49[b], 50[a]; Mt. 12.20; P.1 I. 8.126; P.2 V. 8.125. 1) Mt. T. –च्छुचोनाम; L. –ज्जितात्मा तु । 2) L. महाबली । 3) L. P.1 नाभागाद– । 4) Mt. च । 5) L. विष्णुभक्तः प्रतापवान् ।

48 = L. 66.(46[a]), 47[a]; Mt. 12.21; P.1 I. 8.127; P.2 V. 8.126. 1) L. धृष्टश्च धृष्टकेतुश्च; Mt. धृष्टकेतुश्चित्रनाथो; P.2 छत्रनाथो । 2) L. यमवालश्च । 3) L. रणधृष्टश्च ते पुत्रास्त्रयः परमधार्मिकाः ।

49 = L. 66.47[b] = a; Mt. 12.22; P.1 I. 8.128; P.2 V. 8.127.

50 = L. 66.48; Mt. 12.23; P.1 I. 8.129; P.2 V. 8.128. 1) Mt. पुत्रो । 2) Mt. रेवो रैवत; P.2 रेवत । 3) L. चापरो । 4) L. ज्येष्ठपुत्रः । 5) L. तु; P.2 वै ।

51 = L. 66.49[a], 51[b]; Mt. 12.24; P.1 I. 8.130; P.2 V. 8.129. 1) L. P.2 यस्य । 2) L. पत्नी । 3) P.1 करूषाच्चैव कारूषा; P.2 कारूषास्तु करूषप्य । 4) L. सर्वे प्रख्यातकीर्तयः ।

52[a] = L. 66.(52[abI]); Mt. 12.25[a]; P.1 I. 8.131[a]; P.2 V. 8.130[a]. 1) Cp. L. पृषतो हिंसयित्वा गां गुरोः प्राप सुकल्मषम् शापाच्छूद्रत्वमापन्नः ।

52[b] = Mt. 12.25[b].

इक्ष्वाकोः पुत्रतामाप[1])
विकुक्षिर्नाम देवराट्[2]), ॥ 57 ॥
ज्येष्ठः पुत्रशतस्यासीद्,
दश पञ्च च तत्सुताः, ।

इक्ष्वाकुपुत्रा नाम्नाथ
विकुक्षि-निमि-दण्डकाः, ॥ 52 ॥
श्रेष्ठाः पुत्रशतस्यासन्,
दश पञ्च च[1]) तत्सुताः, ।

मेरोरुत्तरतस्ते तु[1]) जाताः पार्थिवसत्तमाः ॥ 53 ॥

चतुर्दशोत्तरं चान्यच्छतमस्य तथाभवत्[1]) ।
मेरोर्दक्षिणतश्चैव[2]) राजानः सं[3]प्रकीर्तिताः ॥ 54 ॥

ज्येष्ठः[1]) ककुत्स्थनामाभूत्[2]), तत्सुतस्तु[3]) सुयोधनः, ।
तस्य पुत्रः पृथुर्नाम विश्वकश्च[4]) पृथोः सुतः ॥ 55 ॥

आर्द्र[1]स्तस्य च पुत्रोऽभूद्, युवनाश्वस्ततोऽभवत्, ।
श्रावस्त[2]श्च महातेजा वत्सक[3]स्तत्सुतो[4]ऽभवत्[5]), ॥ 56 ॥

निर्मिता येन श्रावस्ती[1]) गौडदेशे[2]) द्विजोत्तमाः[3]), ।
श्रावस्ताद्[4]) बृहदश्वो[5]ऽभूत्, कुवलाश्वस्ततोऽभवत्[6]); ॥ 57 ॥

धुन्धुमारत्वमगमद्[1]) धुन्धुं हत्वासुरं पुरा[2]) ।
तस्य पुत्रास्त्रयो जाता दृढाश्वो दण्ड[3]) एव च[4]) ॥ 58 ॥

कपिलाश्वश्च विख्यातो धौन्धुमारिः प्रतापवान्[1]) ।
दृढाश्वस्य प्रमोदस्तु[2]) हर्यश्वस्तस्य चात्मजः[3]), ॥ 59 ॥

---

$52^{c}$ = L. 65.($31^{b}$); Mt. $12.26^{a}$. 1) L. –कोरभवद्वीरो । 2) L. –र्धर्मवित्तमः ।
$53^{a}$ = L. $65.32^{a}$; Mt. $12.26^{b}$.

$52^{b}$ = P.1 I. $8.131^{b}$; P.2 V. $8.130^{b}$.
$53^{a}$ = P.1 $8.132^{a}$; P.2 V. 8 $131^{a}$. 1) P.1 पञ्चाशच्चाथ ।

$53^{b}$ = Mt. $12.27^{a}$; P.1 I. $8.132^{b}$; P.2 V. $8.131^{b}$. 1) P.2 –स्तेऽपि ।

54 = Mt. $12.27^{b}$, $28^{a}$; P.1 I. 8.133; P.2 V. 8.132. 1) P.1 P.2 V. चत्वारिंशत् तथाष्टान्ये शतमध्ये च येऽभवन् । 2) Mt. –तो ये ये; P.2 –श्चैते । 3) P.1 –नस्ते ।

55 = Mt. $12.28^{b}$, $29^{a}$; P.1 I. 8.134; P.2 V. 8.133. 1) P.1 P.2 –ष्ठात् । 2) Mt. –त्स्थो नाम्नाभूत् । 3) P.1 सुतस्तस्य । 4) Mt. विश्वगश्च; P.1 विश्वस्तस्य; P.2 विश्वावस्वः (सुः); Cp. L. $65.33^{a}$ ततः पृथुर्मुनिश्रेष्ठा विश्वकः पार्थिवस्तथा ।

56 = L. $65.34^{a}$ = b; Mt. $12.29^{b}$, $30^{a}$; P.1 I. 8.135; P.2 V. 8.134. 1) Mt. T. इन्द्र– । 2) P.2 शावस्त–; L. शावस्ति– । 3) L. वंशक–; P.2 वत्सुक– । 4) L. –स्तु ततो । 5) P.1 युवनाश्वस्य पुत्रोऽभूच्छावस्तो नाम वीर्यवान् ।

57 = Kū. $20.19^{b}$ = a; L. $65.34^{b}$, $35^{a}$; Mt. $12.30^{b}$, $31^{a}$; P.1 I. 8.136; P.2 V. 8.135. 1) L. P.1 P.2 शावस्ती; Kū. T. सावस्तिः । 2) P.1 ह्यङ्गदेशे । 3) Kū. महापुरीं; P.1 P.2 नराधिप । 4) L. वंशाच्च; P.1 P.2 शावास्ताद् । 5) P.1 –दश्वो– । 6) L. –स्तु तत्सुतः ।

58 = L. $65.35^{b}$, ($36^{a}$); Mt. $12.31^{b}$, $32^{a}$; P.1 I. 8.137; P.2 V. 8.136. 1) L. –मापन्नो । 2) L. हत्वा महाबलम्; Mt. धुन्धुनाम्ना हतः पुरा; P.2 धुन्धुनाशे च यः पुमान् । 3) P.1 P.2 V. घृणिर् । 4) L. धुन्धुमारस्य तनयास्त्रयस्त्रैलोक्य-विश्रुताः ।

59 = Kū. $20.22^{a}$ = b; L. 65.($36^{b}$), $37^{a}$; Mt. $12.32^{b}$, $33^{a}$; P.1 I. 8.139; P.2 V. 8.137. 1) L. दृढाश्वश्चैव चण्डाश्वः कपिलाश्वश्च ते स्मृताः । 2) Mt. P.2 T. –दश्व । 3) L. वै सुतः ।

हर्यश्वस्य निकुम्भोऽभूत्[1]), संहताश्वस्ततोऽभवत्[2]), ।
अकृताश्वो[3]) रणाश्वश्च संहताश्वसुतावुभौ[4]) ॥ 60 ॥

युवनाश्वो रणाश्वस्य मान्धाता च ततोऽभवत्[1]), ।
मान्धातुः पुरुकुत्सोऽभूद् धर्मसेतुश्च पार्थिवः[2]) ॥ 61 ॥

मुचुकुन्दश्च विख्यातः शक्रमित्रः[1]) प्रतापवान् ।
पुरुकुत्सस्य पुत्रोऽभूद् दुस्सहो[2]) नर्मदापतिः, ॥ 62 ॥

संभूतिस्तस्य पुत्रोऽभूत्, त्रिधन्वा च ततोऽभवत् ।
त्रिधन्वनः सुतो जातस्त्रय्यारुण[1]) इति स्मृतः[2]), ॥ 63 ॥

तस्य[1]) सत्यव्रतो नाम, तस्मात् सत्यरथः स्मृतः[2]) ।
तस्य पुत्रो हरिश्चन्द्रो, हरिश्चन्द्राच्च रोहितः, ॥ 64 ॥

रोहिताच्च वृको जातो, वृकाद्[1]) बाहुरजायत ।
सगरस्तस्य पुत्रोऽभूद् राजा परमधार्मिकः ॥ 65 ॥

द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा, ।
ताभ्यामाराधितः पूर्वमौर्वोऽग्निः[1]) पुत्रकाम्यया[2]) ॥ 66 ॥

और्वस्तुष्टस्तयोः प्रादाद् यथेष्टं वरमुत्तमम् ।
एका[1]) षष्टिसहस्राणि, सुतमेकं तथापरा[2]) ॥ 67 ॥

गृह्णातु[1]) वंशकर्तारं; प्रभागृह्णाद् बहून् सुतान्[2]), ।
एकं भानुमती[3]) पुत्रमगृह्णादसमञ्जसम् ॥ 68

ततः षष्टिसहस्राणि सुषुवे यादवी[1]) प्रभा[2]), ।
खनन्तः पृथिवीं दग्धा विष्णुना येऽश्वमार्गणे[3]) ॥ 69 ॥

---

60 = Kū. $20.22^{b}$, $23^{a}$; L. $65.37^{b}$, $38^{a}$; Mt. $12.33^{b}$, $34^{a}$; P.1 I. 8.139; P.2 V. 8.138. 1) Kū. L. –कुम्भस्तु । 2) Kū. निकुम्भात् संहताश्वकः; L. –श्वस्तु तत्सुतः । 3) Kū. कृताश्वो; L. कृपाश्वोऽथ । 4) Kū. संहिताश्वस्य वै सुतौ L. –हताश्वात्मजावुभौ ।

61 = Kū. $20.23^{b}$, $25^{b}$; L. $65.38^{b}$, $39^{a}$; Mt. $12.34^{b}$, $35^{a}$; P.1 I. 8.140; P.2 V. 8.139. 1) Kū. शक्रतुल्यबलो युधि; L. तस्य वै सुतः । 2) Kū. L. –भूदम्बरीपश्च वीर्यवान् ; Mt. धर्मसेनश्च पार्थिवः ।

62 = Mt. $12.35^{b}$, $36^{a}$; P.1 I. 8.141; P.2 V. 8.140. 1) Mt. T. शत्रुजिच्च । 2) Mt. वसुदो; P.2 संभूतो ।

63 = Kū. 21.($1^{b}$) = b; Mt. $12.36^{b}$, $37^{a}$; P.1 I. 8.142; P.2 V. 8.141. 1) P.2 स्त्रैयारुण । 2) Kū. तस्य पुत्रोऽभवद्विद्वान् त्रय्यारुण इति श्रुतः ।

64 = Kū. 21.($2^{a}$), Cp. $2^{b}$, $3^{a}$; Mt. $12.37^{b}$, $38^{a}$; P.1 I. 8.143; P.2 V. 8.142. 1) Mt. तस्मात् । 2) Kū. कुमारोऽभून् महाबलः ।

65 = Kū. 21.($3^{b}$), $4^{a}$; L. $66.14^{b}$ = b; Mt. $12.38^{b}$, $39^{a}$; P.1 I. 8.144; P.2 V. 8.143. 1) Kū. रोहितस्य वृकः पुत्रस्तस्माद् ।

66 = Kū. $21.4^{b}$, 5; L. 66.15; Mt. $12.39^{b}$, $40^{a}$; P.1 I. 8.145; P.2 V. 8.144. 1) P.1 –मौर्वाग्निः । 2) Kū. –माराधितो वह्निः प्रददौ वरमुत्तमम् ।

67 = L. 66.16; Mr. $12.40^{b}$, $41^{a}$; P.1 I. 8.146; P.2 V. 8.145. 1) P.2 एक– । 2) L. परा तथा ।

68 = Kū. $21.6^{a}$ = b; L. 66.17; Mt. $12.41^{b}$, $42^{a}$; P.1 I. 8.147; P.2 V. 8.146. 1) L. P.1 अगृह्णाद् । 2) L. सुतान् बहून् ; Mt. –हूंस्तदा; P.2 –हूंस्तथा । 3) L. भानुमतिः ।

69 = Kū. 21.($6^{b}$) = a; L. 66.18; Mt. $12.42^{b}$, $43^{a}$; P.1 I. 8.148; P.2 V. 8.147. 1) L. सा तु वै । 2) Kū. प्रभा षष्टिसहस्रं तु पुत्राणां जगृहे शुभा । 3) L. विष्णुहुंकारमार्गणैः ।

असमञ्जस[1]स्तु तनयो ह्यं[2]शुमान्[3]) नाम विश्रुतः[4]), ।
तस्य पुत्रो दिलीपस्तु, दिलीपात् तु भगीरथः, ॥ 70 ॥
येन भागीरथी गङ्गा तपः कृत्वावतारिता ।

भगीरथसुतश्चापि
श्रुतो नाम बभूव ह ॥ 71 ॥

| भगीरथस्य तनयो
| नाभाग इति विश्रुतः ॥ 71 ॥

नाभागस्याम्बरीषोऽभूत्[1]), सिन्धुद्वीपस्ततोऽभवत्, ।
तस्यायुतायुः पुत्रोऽभूद् ऋतुपर्णस्ततोऽभवत् ॥ 72 ॥
तस्य कल्माषपादस्तु, सर्वकर्मा ततः स्मृतः ।
तस्यानरण्यः[1]) पुत्रोऽभून् निघ्नस्तस्य सुतोऽभवत्, ॥ 73 ॥
निघ्नपुत्रावुभौ जातावनमित्र-रघूत्तमौ[1]) ।
अनमित्रो वनमगादरिनाशकृते[2]) नृपः[3]) ॥ 74 ॥
रघोरभूद् दिलीपस्तु दिलीपाच्चाप्यज[1]स्तथा, ।
दीर्घबाहुरजाज्जातः प्रजापालस्ततोऽभवत्[2]) ॥ 75 ॥
ततो[1]) दशरथो जातस्तस्य पुत्रचतुष्टयम् ।
नारायणात्मकाः सर्वे, रामस्तस्याग्रजो[2])ऽभवत् ॥ 76 ॥
रावणान्तकरस्तद्वद् रघूणां वंशवर्धनः, ।
वाल्मीकिर्यस्य[1]) चरितं चक्रे भार्गवसत्तमः ॥ 77 ॥
तस्य पुत्रौ कुशलवावि[1]क्ष्वाकुकुलवर्धनौ[2]), ।
अतिथिस्तु कुशाज्जज्ञे[3]), निषधस्तस्य चात्मजः ॥ 78 ॥
नलस्तु निषधाज्जातो[1]), नभास्तस्मादजायत, ।
नभसः पुण्डरीकोऽभूत्, क्षेमधन्वा ततः स्मृतः[2]) ॥ 79 ॥
तस्य पुत्रोऽभवद् वीरो देवानीकः प्रतापवान्, ।
अहीनगु[1]स्तस्य सुतः[2]), सहस्राश्वस्ततः परः[3]) ॥ 80 ॥

---

70 = Kū. 21.7; L. 66.19; Mt. 12.43[b], 44[a]; P.1 I. 8.149; P.2 V. 8.148. 1) Kū. असमञ्जस–; L. असमञ्जस्य; P.1 असमञ्जस्तु; P.2 असमञ्जसस् । 2) Kū. –पुत्रोऽभूद्; L. तनयः । 3) L. सोंऽशुमान्; Mt. योंऽशुमान्; P.2 –यो अंशुमान् । 4) Kū. पार्थिवः ।

71[a] = Kū. 21.8[a]; L. 66.20[a]; Mt. 12.44[b]; P.1 I. 8.150[a]; P.2 V. 8.149[a].

71[b] = Kū. 21.10[a]. | 71[b] = Mt. 12.45[a]; P.1 I. 8.150[b]; P.2 V. 8.149[b].

72 = Mt. 12.45[b], 46[a]; P.1 I. 8.151; P.2 V. 8.150. 1) P.2 –म्बरीषस्तु ।

73 = Mt. 12.46[b], 47[a]; P.1 I. 8.152; P.2 V. 8.151. 1) P.2 तस्मादारण्यः ।

74 = Mt. 12.47[b], 48[a]; P.1 I. 8.153; P.2 V. 8.152. 1) Mt. –रघू नृपौ । 2) Mt. भविता स कृते । 3) P.1 नृप ।

75 = Mt. 12.48[b], 49[a]; P.1 I. 8.154; P.2 V. 8.153. 1) Mt. दिलीपादजक– । 2) Mt. T. चाजपालस्ततो नृपः ।

76 = Mt. 12.49[b], 50[a]; P.1 I. 8.155; P.2 V. 8.154. 1) Mt. तस्माद् । 2) Mt. –स्तेष्वग्रजो; P.2 –स्तस्याग्रतो ।

77 = Mt. 12.50[b], 51[a]; P.1 I. 8.156; P.2 V. 8.155. 1) Mt. –स्तस्य ।

78 = Mt. 12.51[b], 52[a]; P.1 I. 8.157; P.2 V. 8.156. 1) P.1 –त्रो कुशो नाम इ– । 2) P.1 –नः । 3) P.1 P.2 –ज्जातो ।

79 = Mt. 12.52[b], 53[a]; P.1 I. 8.158; P.2 V. 8.157. 1) Mt. नैषधस्तस्मान् । 2) P.2 ततः परम् ।

80 = Kū. 21.58[b], 59[a]; L. 66.40; Mt. 12.53[b], 54[a]; P.1 I. 8.159; P. V.2 8.158. 1) L. अहीनरः । 2) L. सुतस्तस्य । 3) Kū. T. –तो महस्वांस्तत्सुतोऽभवत; V. सहस्वान्, सहस्रांशुः सुतोऽभवत् ।

ततश्च[1]न्द्रावलोकस्तु[2]), तारापीड[3]स्ततोऽभवत्[4]), ।
तस्यात्मजश्च[5]न्द्रगिरिर्भानुचन्द्र[6]स्ततो[7]ऽभवत्, ।
श्रुतायुरभवत् तस्माद् भारते यो निपातितः[8]) ॥ 81 ॥

नलौ द्वावेव[1]) विख्यातौ वंशे काश्यपसम्भवे[2]) ।
वीरसेनसुतस्तद्वन् नैषधश्च नराधिपः ॥ 82 ॥

एते विवस्वतो वंशे[1]) राजानो भूरिदक्षिणाः ।
इक्ष्वाकु-वंशप्रभवाः प्राधान्येन प्रकीर्तिताः ॥ 83 ॥

---

81 = Kū. 21.59[b], 60; L. 66.41, 42[a]; Mt. 12.54[b], 55; P.1 I. 8.160, 161[a]; P.2 V. 8.159, 160[a]. 1) Kū. तस्माच्च–; L. शुभश्च– । 2) L. –लोकश्च । 3) Kū. T. ताराधीश– । 4) Kū. –श्च तत्सुतः । 5) Kū. ताराधीशाच्च– । 6) Mt. –र्भानुश्चन्द्र–; Kū. –र्भानुवित्त–; P.1 P.2 –रिश्चन्द्रस्तस्य । 7) P.1 P.2 सुतो । 8) Kū. –देते चेक्ष्वाकुवंशजाः; L. बृहद्वल इति स्मृतः ।

82 = Mt. 12.56; P.1 I. 8.161[b], 162[a]; P.2 V. 8.160[b], 161[a]. 1) P.2 –वपि । 2) P.2 यस्य विशेषतः; P.2 वंशौ काश्यप-संभवौ ।

83 = Mt. 12.57; P.1 I. 8.162[b], 163; P.2 V. 8.161[b], 162. 1) Mt. वैवस्वते वंशे; P.2 T. एते चैव समाख्याता ।

[ Mt. 13.1—22.94; P.1 I. 9.1—11.95; P.2 V. 9.1—11.97. ]

---

## तृतीयोऽध्यायः

### सन्दर्भस्तवकः I

### A.

( Bḍ. II. 65.1—50; Br. 9.1—36; H. 1311—1362; Vā. 90.1—49; Cp. A. 274.1—12[a]; Bhg. IX. 14.1—14; Ga. 139.1—2[a]; Vi. IV. 6.1—19. )

पिता सोमस्य वै[1]) विप्रा[2]) जज्ञेऽत्रिर्भगवान् ऋषिः ।
ब्रह्मणो मानसात् पूर्वं
प्रजासर्गं विधित्सतः ॥ 1 ॥

तत्रात्रिः सर्वभूतानां[1]) तस्थौ स्वतनयैर्वृ[2]तः[3]) ।
कर्मणा मनसा वाचा शुभान्येव समाचरन्[4]) ।
काष्ठकुड्याशिलाभूत ऊर्ध्वबाहुर्महाद्युतिः, ॥ 2 ॥

अनुत्तरं[1]) नाम तपो येन तप्तं महत् पुरा[2]) ।
त्रीणि वर्षसहस्राणि दिव्यानीति हि[3]) नः श्रुतम् ॥ 3 ॥

तस्यो[1]र्ध्वं रेतसस्तत्र[2]) स्थितस्यानिमिषस्य ह[3]) ।
सोमत्वं तनुरापेदे महासत्त्वस्य[4]) वै द्विजाः[5]) ॥ 4 ॥

ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः[1]), ।
नेत्राभ्यां वारि सुस्राव[2]) दशधा[3]) द्योतयन् दिशः ॥ 5 ॥

तं गर्भं[1]) विधिनादिष्टा[2]) दश देव्यो दधुस्तदा[3]), ।
समेत्य धारयामासुर्न च ताः स[4]मशक्नुवन् ॥ 6 ॥

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः[1]) ।
पपात भासय[2]ल्लोकान् शीतांशुः सर्वभावनः ॥ 7 ॥

---

1[a] = Bḍ. II. 65.1[a]; Br. 9.1[a]; H. 1311[a]; Vā. 90.1[a]. 1) Br. भो । 2) H. राजन् ।

1[b] = Br. 9.1[b]; H. 1311[b].

2 = Bḍ. II. 65.1[b], 2; H. 1312, 1313[b]; Vā. 90.1[b], 2. 1) Bḍ. Vā. सर्वलोकानां । 2) Bḍ. स्वेनौजसा वृ–; Vā. स्वेनमये । 3) Vā. धृतः । 4) H. चचार सः ।

3 = Bḍ. II. 65.3; Br. 9.2; H. 1314; Vā. 90.3. 1) Bḍ. Vā. सुदुश्चरं । 2) Br. T. हि तत्पुरा । 3) H. ह ।

4 = Bḍ. II. 65.4; H. 1315; Vā. 90.4. 1) Vā. तत्रो– । 2) H. –स्तस्य । 3) Vā. –निमिषस्पृहा । 4) Bḍ. Vā. महाबुद्धिः स । 5) H. भारत ।

5 = Bḍ. II. 65.5; Br. 9.3; H. 1316; Vā. 65.5. 1) Br. रेतः सोमत्वमीयिवत् । 2) Bḍ. –म्यामस्रवत् सोमो; Vā. T. सोमः सुस्राव नेत्राभ्यां । 3) Vā. T. दश वा ।

6 = Bḍ. II. 65.6; Br. 9.4; H. 1317; Vā. 65.6. 1) H. गर्भ– । 2) Bḍ. H. विधिना हृष्टा । 3) Br. –स्ततः । 4) Vā. तास्त– ।

7 = Bḍ. II. 65.7; H. 1318; Vā. 65.7. 1) Bḍ. प्रसाधितः । 2) Vā. यथावभासय– ।

यदा न धारणे शक्तास्तस्य गर्भस्य ता *दिशः*[1]), ।
ततस्ताभिः *सहैवाशु*[2]) निपपात वसुंधराम् ॥ 8 ॥

*पतितं*[1]) सोममालोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकानां हितकाम्यया ॥ 9 ॥

स हि वेदमयो[1]) *विप्रा*[2]) धर्मात्मा[3]) सत्यसंगरः ।
युक्तो[4]) वाजिसहस्रेण सितेनेति हि[5]) नः श्रुतम् ॥ 10 ॥

तस्मिन् निपतिते देवाः पुत्रेऽत्रेः परमात्मनि[1]) ।
तुष्टुवुर्ब्रह्मणः पुत्रा मानसाः सप्त *विश्रुताः*[2]) ॥ 11 ॥

तत्रै[1]वाङ्गिरसस्तस्य[2]) भृगोश्चैवात्मजास्तथा[3]) ।
ऋग्भिर्यजुर्भिः सामभि[4]रथर्वाङ्गिरसैरपि ॥ 12 ॥

*तस्य*[1]) संस्तूयमानस्य तेजः सोमस्य भास्वतः ।
आप्यायमानं लोकांस्त्रीन्[2]) भाव[3]यामास सर्वतः[4]) ॥ 13 ॥

स तेन रथमुख्येन सागरान्तां वसुंधराम् ।
त्रिः सप्तकृत्वोऽतियशा[1]श्चकाराभिप्रदक्षिणम्[2]) ॥ 14 ॥

तस्य *यच्च्यावितं*[1]) तेजः पृथिवीमन्वपद्यत, ।
ओषध्यस्ताः समुद्भूता[2]स्तेजसा[3]) *प्रज्वलन्त्युत*[4]) ॥ 15 ॥

ताभिर्धार्या[1]स्त्रयो[2]) लोकाः[3]) प्रजाश्चापि[4]) चतुर्विधाः, ।
पोष्टा हि भगवान् सोमो जगतो हि *द्विजोत्तमाः*[5]) ॥ 16 ॥

स लब्धतेजा *भगवान्*[1]) संस्तवैस्तैश्च[2]) कर्मभिः ।
तपस्तेपे महाभागः[3]) पद्मानां[4]) दशती[5]र्दश[6]) ॥ 17 ॥

---

8 = Bḍ. II. 65.8; Br. 9.5; H. 1319; Vā. 65.8. 1) Bḍ. Vā. ताः स्त्रियः । 2) Bḍ. –तः सहाभिः सीतांशुर् ; Br. T. [?]स्ताभिः स त्यक्तस्तु; Vā. –तः सा ताभिः शीतांशुर् ।
9 = Bḍ. II. 65.9; Br. 9.6; H. 1320; Vā. 90.9. 1) Bḍ. Vā. पतन्तं ।
10 = Bḍ. II. 65.10; H. 1321; Vā. 90.10. 1) Vā. T. देवमयो । 2) H. –यस्तात । 3) Vā. धर्मार्थी । 4) Bḍ. युक्ते । 5) Bḍ. रथेऽध्यास्तेति ।
11 = Bḍ. II. 65.11; Br. 9.7; H. 1322; Vā. 90.11. 1) Bḍ. परमात्मनः । 2) Br. पुत्रास्तथान्ये मुनिसत्तमाः; H. ये श्रुताः ।
12 = Bḍ. II. 65.12; H. 1323; Vā. 90.12. 1) H. तथै– । 2) H. –स्तत्र । 3) H. –गोरेवात्मजैः सह; Vā. –जस्तथा । 4) Bḍ. Vā. –र्भिर्बहुभि– ।
13 = Bḍ. II. 65.13; Br. 9.8; H. 1324; Vā. 90.13. 1) Bḍ. Vā. ततः । 2) Br. आप्यायनाय लोकानां त्रीन् । 3) H. भास– । 4) Bḍ. Vā. सर्वशः ।
14 = Bḍ. II. 65.14; Br. 9.9; H. 1325; Vā. 90.14. 1) Vā. विपुल– । 2) Br. –णाम् ।
15 = Bḍ. II. 65.15; Br. 9.10; H. 1326; Vā. 90.15. 1) Bḍ. यद् वर्धितं; Vā. यच्चरितं; Br. यच्चापि तत् । 2) H. समुत्पन्ना– । 3) Br. –स्ता याभिः । 4) Bḍ. खं ज्वलत्युत; Br. संधार्यते जगत् ; Vā. संज्वलन्त्युत ।
16 = Bḍ. II. 65.16; H. 1327; Vā. 90.16. 1) Bḍ. –भिः पुष्णा–; Vā. धार्य– । 2) Bḍ. Vā. –त्स्वयं । 3) Bḍ. Vā. लोकान् । 4) H. –श्चैव । 5) H. जगतोपते ।
17 = Bḍ. II. 65.17; Br. 9.11; H. 1328; Vā. 90.17. 1) Bḍ. Vā. –जास्तपसा । 2) Bḍ. –स्तैः स्व–; Br. –वैश्च स्व– । 3) H. –भाग । 4) Bḍ. समानां । 5) Bḍ. नवती– । 6) Br. T. दर्शनाय सः ।

हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत्, ।
विभु[1]स्तासामभूत्[2]) सोमः[3]) प्रख्यातः स्वेन कर्मणा ॥ 18 ॥

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ।
बीजौषधीनां[1]) विप्राणामपां च द्विजसत्तमाः[2]) ॥ 19 ॥

सोऽभिषिक्तो महातेजा[1]) महा[2]राज्येन राजराट् ।
त्रीन् लोकान्[3]) भासयामास[4]) स्वभासा[5]) भास्वतां[6]) वरः ॥ 20 ॥

सप्तविंशतिरिन्दोस्तु दाक्षायण्यो[1]) महाव्रताः ।
ददौ प्राचेतसो दक्षो, नक्षत्राणीति या विदुः ॥ 21 ॥

स तत् प्राप्य महद्रा[1]ज्यं सोमः सोमवतां[2]) वरः[3]) ।
समाजह्रे[4]) राजसूयं सहस्रशतदक्षिणम् ॥ 22 ॥

| होतास्य भगवानत्रिरध्वर्युरभवद् भृगुः ।
हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमीयवान्[1]) ॥ 23 ॥

सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः[1]) ।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥ 24 ॥

दक्षिणामददत्[1]) सोमस्त्रीँल्लोकानिति नः श्रुतम्, ।
तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च वै द्विजाः[2]) ॥ 25 ॥

तं सिनी च कुहूश्चैव द्युतिः[1]) पुष्टिः प्रभा वसुः ।
कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ॥ 26 ॥

प्राप्यावभृथमव्यग्रः[1]) सर्वदेवर्षिपूजितः ।
विरराजाधिराजेन्द्रो[2]) दशधा भासयन्[3]) दिशः ॥ 27 ॥

---

18 = Bḍ. II. 65.18; H. 1329; Vā. 90.18. 1) H. विधि- । 2) Bḍ. -सां मुदा; Vā. -सां भवेत् । 3) H. -भूद्देव ।

19 = Bḍ. II. 65.19; Br. 9.12; H. 1330; Vā. 90.19. 1) Vā. -षधिषु । 2) Br. मुनिसत्तमाः; H. जनमेजय ।

20 = Bḍ. II. 65.20; H. 1331; Vā. 90.20. 1) H. महाराज । 2) H. राज- । 3) Bḍ. लोकान् वै; Vā. लोकानां । 4) Bḍ. Vā. भावयामास । 5) Bḍ. तेजस्वी; Vā. स्वभावात् । 6) Bḍ. Vā. तपतां ।

21 = Bḍ. II. 65.21; H. 1332; Vā. 90.21. 1) H. दाक्षायिण्यो ।

22 = Bḍ. II. 65.22; Br. 9.13; H. 1333; Vā. 90.22. 1) Br. महारा- । 2) Br. सौम्यवतां । 3) Bḍ. Vā. प्रभुः । 4) Bḍ. समारेभे; Vā. समाजह्रे ।

23 = Bḍ. II. 65.23a = b; Br. 9.(15a) = b; H. 1334; Vā. 90.23a = b. 1) Vā.-मेयिवान् ; Br. हिरण्यगर्भो ब्रह्मात्रिर्भृगुश्च ऋत्विजोऽभवत् ।

24 = Bḍ. II. 65.23b, 24a; Br. 9.(15b); H. 1335; Vā. 90.23bc. 1) Br. सदस्योऽभूद्धरिस्तत्र मुनिभिर्बहुभिर्वृतः ।

25 = Bḍ. II. 65.25; Br. 9.14; H. 1336; Vā. 90.24. 1) Bḍ. Br. -दात् । 2) Br. भो द्विजाः; H. भारत ।

26 = Bḍ. II. 65.26; Br. 9.16; H. 1337; Vā. 90.25. 1) Bḍ. Vā. वपुः ।

27 = Bḍ. II. 65.27; Br. 9.17; H. 1338; Vā. 90.26. 1) Br. -मप्यग्र्यं । 2) Bḍ. अतिरेजे हि राजेन्द्रो; Vā. अतिराजाति-राजेन्द्रो । 3) Vā. -धातपयद् ।

तस्य[1]) तत्प्राप्य दुष्प्राप[2]मैश्वर्यमृषिसंस्तुतम्[3]) ।
विबभ्राम[4]) मतिर्विप्रा[5]) विनया[6]दनयाहृता[7]) ॥ 28 ॥

बृहस्पतेः स वै भार्यां तारां नाम यशस्विनीम्[1]) ।
जहार *तरसा*[2]) सर्वो[3]नवमत्याङ्गिरः[4]सुतान्[5]) ॥ 29 ॥

स याच्यमानो देवैश्च तथा देवर्षिभिः सह[1]) ।
नैव व्यसर्जयत् तारां तस्माया[2]ङ्गिरसे तदा ॥ 30 ॥

उशना[1]) तस्य जग्राह पार्ष्णिमङ्गिरसस्त*था*[2]), ।
स हि शिष्यो महातेजाः पितुः पूर्वं[3]) बृहस्पतेः ॥ 31 ॥

तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः ।
पार्ष्णिग्राहोऽभवद्देवः प्रगृह्याजगवं[1]) धनुः ॥ 32 ॥

तेन ब्रह्मशिरो नाम[1]) परमास्त्रं महात्मना ।
उद्दिश्य देवा[2]नुत्सृष्टं, येनैषां नाशितं यशः ॥ 33 ॥

तत्र[1]) तद् युद्धमभवत् प्रख्यातं[2]) तारकामयम् ।
देवानां दानवानां च लोकक्षयकरं महत् ॥ 34 ॥

तत्र शिष्टास्तु ये[1]) देवास्तुषिताश्चैव ये *स्मृताः*[2]) ।
ब्रह्माणं शरणं जग्मुरादिदेवं *सनातनम्*[3]) ॥ 35 ॥

ततो[1]) निवार्योशनसं तं वै रुद्रं[2]) च शङ्करम् ।
ददाव[3]ङ्गिरसे तारां[4]) स्वयमेव[5]) पितामहः ॥ 36 ॥

| | |
|---|---|
| तामन्तःप्रसवां दृष्ट्वा<br>*तारां*[1]) प्राह बृहस्पतिः । | अन्तर्वत्नीं च तां दृष्ट्वा<br>तारां ताराधिपाननाम् । |

---

28 = A. 274.8[a] = b; Bḍ. II. 65.28; Br. 9.18; H. 1339; Vā. 90.27. 1) Vā. T. तदा । 2) Br. दुष्प्राप्य- । 3) Br. -सत्कृतम् । 4) Vā. स विभ्रम- । 5) A. -तिस्तस्य; Br. H. -तिस्तात । 6) Vā. विनयो । 7) Bḍ. -दनयावृता; Br. -दनयाहृता; Vā. -ऽविनयाहृताः ।

29 = A. 274.8[b], 9[a]; Bḍ. II. 65.29; Br. 9.19; H. 1340; Vā. 90.28. 1) Br. -र्यामैश्वर्यमदमोहितः । 2) Bḍ. Vā. सहसा । 3) A. Br. सोमो । 4) A. ह्यवमन्याङ्गिरः-; Br. विमत्याङ्गिरसः- । 5) Br. -सुतम् ।

30 = Bḍ. II. 65.30; Br. 9.20; H. 1341; Vā. 90.29. 1) Bḍ. Vā. T. -भिश्च ह; Br. T. -भिर्मुहुः । 2) Bḍ. Br. तस्मा अ- ।

31 = Bḍ. II. 65.31; Br. 9.21[a] = a; H. 1342[b], 1343[a]; Vā. 90.30. 1) Bḍ. H. -नास् । 2) Bḍ. -रसो भवः; Vā. -रसो द्विजाः; H. -स्तदा । 3) H. Vā. -र्वो बृहस्पतेः ।

32 = Bḍ. II. 65.32; Br. 9.(21[b]) = b; H. 1343[b], 1344[a]; Vā. 90.31. 1) Br. रुद्रश्च पार्ष्णि जग्राह गृहीत्वाजगवं ।

33 = Bḍ. II. 65.33; Br. 9.22; H. 1344[b], 1345[a]; Vā. 90.32. 1) Vā. ब्रह्मर्षिमुख्येभ्यः । 2) H. दैत्या- ।

34 = A. 274.9[b], 10[a]; Bḍ. II. 65.34; Br. 9.23; H. 1345[b], 1346[a]; Vā. 90.33. 1) A. ततस् । 2) Vā. प्रत्यक्षं ।

35 = Bḍ. II. 65.35; Br. 9.24; H. 1346[b], 1347[a]; Vā. 90.34. 1) Vā. -स्त्रयो । 2) Bḍ. ते स्मृताः; Br. ये द्विजाः; H. भारत । 3) Bḍ. Vā. पितामहम् ।

36 = A. 274.10[b] = a[I]b[I]; Bḍ. II. 65.36; Br. 9.25; H. 1347[b], 1348[a]; Vā. 90.35. 1) A. ब्रह्मा; Br. तदा । 2) Bḍ. Vā. रुद्रं ज्येष्ठं । 3) Bḍ. Vā. -वा- । 4) A. तारामाङ्गिरसे ददौ । 5) Bḍ. -मेत्य ।

गर्भमुत्सृज सद्यस्त्वं[1])
विप्रः प्राह बृहस्पतिः ॥ 37 ॥

नदोयायां न ते[1]) योनौ गर्भो धार्यः कथंचन ! ।
अथो[2]) तारासृजत्[3]) तं वै[4]) कुमारं दस्युहन्तमम्[5]) ॥ 38 ॥

इषिकास्तम्बमासाद्य ज्वलन्तमिव पावकम्[1]) ।
जातमात्रोऽथ[2]) भगवान् देवानामाक्षिपद् वपुः, ॥ 39 ॥

ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः[1]) ।
सत्यं ब्रूहि, सुतः कस्य सोमस्याथ बृहस्पतेः ? ॥ 40 ॥

पृच्छयमाना[1]) यदा देवैर्नाह[2]) सा साध्वसाधु वा[3]), ।
तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ॥ 41 ॥

तं निवार्य ततो[1]) ब्रह्मा तारां पप्रच्छ संशयम्[2]) ।
यदत्र तथ्यं, तद् ब्रूहि तारे, कस्य सुतस्त्व[3]यम् ! ॥ 42 ॥

सा प्राञ्जलिरुवाचेदं[1]) ब्रह्माणं वरदं प्रभुम्[2]) ।
सोमस्येति महात्मानं[3]); कुमारं दस्युहन्तमम् ॥ 43 ॥

ततः सुतमुपाघ्राय[1]) सोमो राजा[2]) प्रजापतिः[3]) ।
बुध इत्यकरोन्नाम तस्य[4]) पुत्रस्य[5]) धीमतः, ॥ 44 ॥

प्रतिकूलं[1]) च गगने समभ्युत्तिष्ठते बुधः[2]) ।
उत्पादयामास तदा पुत्रं वै राजपुत्रिका[3]) ॥ 45 ॥

---

37 = A. 274.11[aI] = I; Br. 9.26[a]; H. 1348[b].
1) Br. क्रुद्धः ।

37 = A. 274.11[aII] = b[I]; Bḍ. II. 65.37; Vā. 90.36.
1) Vā. -मुत्सृजसे न त्वं; A. त्यजात्रवीद् गुरुः ।

38 = Bḍ. II. 65.38[abI] = a[bI]; Br. 9.26[b]; H. 1349; Vā. 90.37. 1) Vā. तनौ । 2) H. अयोना- । 3) H. -वुत्सृजत ; Vā. नावसृजत्- । 4) Bḍ. गर्भं; Vā. तं तु । 5) Vā. -हन्तमः ।

39 = Bḍ. II. 65.38[bII], 39[a] = a[II]b; Br. 9.27; H. 1350; Vā. 90.38. 1) Br. गर्भं सा चोत्ससर्ज ह । 2) Br. H. जातमात्रः स ।

40 = Bḍ. II. 65.39[b], 40[a]; Br. 9.28; H. 1351; Vā. 90.39. 1) Bḍ. Vā. -रामकथयन् सुराः ।

41 = Bḍ. II. 65.40[b], 41[a]; Br. 9.29; H. 1352; Vā. 90.40. 1) Bḍ. Vā. ह्रीयमाणा । 2) Bḍ. Vā. देवान्नाह । 3) Br. विबुधान् किल ।

42 = Bḍ. II. 65.41[b], 42[a]; Br. 9.30; H. 1353; Vā. 90.41. 1) Bḍ. Vā. तदा । 2) Vā. चन्द्रस्य शंस यः । 3) H. -तो ह्य- ।

43 = Bḍ. II. 65.42[b], 43[a]; Br. 9.(31[a]) = a[IbI]; H. 1354; Vā. 90.42. 1) Br. उवाच प्राञ्जलिः सा तं । 2) H. शनैः । 3) Br. पितामहं ।

44 = Bḍ. II. 65.43[b], 44[a]; Br. 9.(31[b]), 32[a]; H. 1355; Vā. 90.43. 1) Br. तदा तं मूर्ध्नि चाघ्राय; H. तं मूर्ध्न्याघ्राय तनयं । 2) H. धाता; Vā. दाता । 3) Br. T. सुतं प्रति । 4) H. स्वस्य । 5) Br. बालस्य ।

45 = Bḍ. II. 65.44[b], 45[a]; Br. 9.32[b], 33[a]; H. 1356; Vā. 90.44. 1) Bḍ. प्रतिषस्तं; H. प्रतिकूलश् ; Vā. प्रतिपूर्वं । 2) Vā. T. बुधैः । 3) Br. राजपुत्रिकम् ; V. -कः ।

तस्यापत्यं[1]) महातेजा[2]) बभूवैलः पुरूरवाः ।
उर्वश्यां जज्ञिरे तस्य[1])
पुत्राः सप्त महात्मनः ॥ 46 ॥

| उर्वश्यां जज्ञिरे तस्य
| पुत्राः षट् सुमहौजसः ॥ 46 ॥

प्रसह्य धर्षितस्तत्र *विवशो*[1]) राजयक्ष्मणा, ।
ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ॥ 47 ॥

जगाम शरणायाथ पितरं सोऽत्रिमेव तु[1]) ।
तस्य तत् पापशमनं चकारात्रिर्महा*यशाः*[2]) ।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्वशः ॥ 48 ॥

एतत् सोमस्य वै जन्म कीर्तितं *कीर्तिवर्धनम्*[1]) ।
वंशं *तस्य*[2]) *द्विजश्रेष्ठाः*[3]) कीर्त्यमानं निबोधत[4]) ! ॥ 49 ॥

धन्यमारोग्यमायुष्यं[1]) पुण्यं *संकल्पसाधनम्*[2]) ।
सोमस्य[3]) जन्म श्रुत्वैव *पापेभ्यो वि*[4]प्रमुच्यते ॥ 50 ॥

---

46[a] = Bḍ. II. 65.45[b]; Br. 9.33[b]; H. 1357[a]; Vā. 90.45[a]. 1) Bḍ. Vā. तस्य पुत्रो । 2) H. महाराजो ।

46[b] = Br. 9.34[a]; H. 1357[b]. 1) H. यस्य । | 46[b] = Bḍ. II. 65.46[a]; Vā. 90.45[b].

47 = Bḍ. II. 65.46[b], 47[a]; H. 1358; Vā. 90.46[ab]. 1) H. सोमो वै ।

48 = Bḍ. II. 65.47[b], 48; H. 1359, 1360[a]; Vā. 90.46[c], 47. 1) H. च । 2) H. महातपः ।

49 = Bḍ. II. 65.49; Br. 9.34[b], 35[a]; H. 1360[b], 1361[a]; Vā. 90.48. 1) Bḍ. Vā. द्विजसत्तमाः । 2) Br. H. -शमस्य । 3) Br. मुनिश्रेष्ठाः; H. महाराज । 4) H. -नमतः शृणु ।

50 = Bḍ. II. 65.50; Br. 9.35[b], 36; H. 1361[b], 1362; Vā. 90.49. 1) Br. -मायुष्यमारोग्यं । 2) Bḍ. Vā. T. कल्मषशोधनम् ; H. -साधके । 3) Bḍ. सौम्यस्य । 4) Bḍ. Vā. सर्वपापैः प्र- ।

---

## B.

( Bḍ. II. 66.1—90; Br. 10.1—68, 13.83—91[a]; H. 1363—1424, 1757—1765; Vā. 91.1—118; Cp. A. 274.12[b]—15; Bhg. IX. 14.15—16.37; Ga. 139.2[b]—7[a]; Kū. 22.1—2; L. 66.55—58; Vi. IV. 6.20—7.18. )

बुधस्य तु *मुनिश्रेष्ठा*[1])
विद्वान् पुत्रः पुरूरवाः, ।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥ 1 ॥

| सोमस्य तु[1]) बुधः पुत्रो,
बुधस्य तु[2]) पुरूरवाः, ।

ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्जयः[1]) ।
आहर्ता चाग्निहोत्रस्य यज्ञानां[2]) च महीपतिः[3]) ॥ 2 ॥

सत्यवादी[1]) *पुण्यमतिः*[2]) कान्तः[3]) संवृतमैथुनः ।
अतीव त्रिषु[4]) लोकेषु रूपेणा[5]प्रतिमोऽ*भवत्*[6]) ॥ 3 ॥

तं ब्रह्मवादिनं दान्तं[1]) धर्मज्ञं सत्यवादिनम् ।
उर्वशी वरयामास हित्वा मानं यशस्विनी ॥ 4 ॥

तया सहावसद् राजा दश वर्षाणि पञ्च[1]) च ।
पञ्च[2]) षट्[3]) सप्त चाष्टौ च दश चाष्टौ च *वीर्यवान्*[4]) ॥ 5 ॥

वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे ।
अलकायां विशालायां नन्दने च वनोत्तमे ॥ 6 ॥

उत्तरान् स कुरून् प्राप्य
मनोरथ[1]फलद्रुमान् ।
गन्धमादनपादेषु मेरुशृङ्गे *तथोत्तरे*[1]) ॥ 7 ॥

| उत्तरांश्च कुरून् प्राप्य
कलापग्राममेव च ।

---

1a = Br. 10.1a; H. 1363a. 1) H. महाराज ।

| 1a = A. 274.12a; Bḍ. II. 66.1a; Vā. 91.1a. 1) A. एवं सोमाद् । 2) A. पुत्रः पुत्रस्तस्य ।

1b = Bḍ. II. 66.1b; Br. 10.1b; H. 1363b; Vā. 91.1b.

2 = Bḍ. II. 66.2; Br. 10.2; H. 1364; Vā. 91.2. 1) Br. दुर्दमः । 2) Vā. यज्वनां । 3) Vā. ददौ महीम् ।

3 = Bḍ. II. 66.3; Br. 10.3; H. 1365; Vā. 91.3. 1) Bḍ. Vā. V. सत्यवाग् । 2) Bḍ. Vā. V. धर्मबुद्धिश्च; Vā. T. –वाक् कर्मबुद्धिश्च । 3) Br. सम्यक् ; H. काम्यः । 4) Vā. पुत्रो । 5) Br. H. यशसा– । 6) Br. –मः सदा; H. –मस्तदा ।

4 = Bḍ. II. 66.4; Br. 10.4; H. 1366; Vā. 91.4. 1) Br. शान्तं; H. क्षन्तं ।

5 = A. 274.13; Bḍ. II. 66.5; Br. 10.5; H. 1367; Vā. 91.5. 1) Bḍ. Vā. चाष्ट । 2) Bḍ. Vā. T. सप्त । 3) Br. प पञ्च । 4) A. महामुने; Br. भो द्विजाः; H. भारत ।

6 = Bḍ. II. 66.6; Br. 10.6; H. 1368; Vā. 91.6.

7a = Br. 10.7a; H. 1369a. 1) Br. T. मनोरम– ।

| 7a = Bḍ. II. 66.7b; Vā. 91.7b.

7b = Bḍ. II. 66.7a; Br. 10.7b; H. 1369b; Vā. 91.7a. 1) Bḍ. Vā. नगोत्तमे ।

एतेषु वनमुख्येषु सुरैराचरितेषु च ।
उर्वश्या सहितो राजा रेमे परमया मुदा ॥ 8 ॥

---

ऋषय ऊचुः ( जनमेजय उवाच ) :

गन्धर्वी चो[1]र्वशी देवी राजानं मानुषं कथम् ।
देवानुत्सृज्य[2]) संप्राप्ता, तन् नो[3]) ब्रूहि बहुश्रुत[4]) ! ॥ 9 ॥

सूत ( वैशम्पायन ) उवाच :

ब्रह्मशापाभिभूता सा मानुषं समपद्यत[1]), ।
ऐलं तु सा[2]) वरारोहा समयात् समुपस्थिता[3]) ॥ 10 ॥

आत्मनः शापमोक्षार्थं *समयं*[1]) सा चकार तु[2]) ।
अनग्नदर्शनं चैव *सकामायां* च मैथुनम्[3]) ॥ 11 ॥

द्वौ मेषौ शयनाभ्यासे[1]) *तदा बद्धौ* च तिष्ठतः[2]), ।
घृतमात्रा[3]) तथाहारः कालमेकं तु पार्थिव ॥ 12 ॥

यद्येष समयो राजन् यावत्कालं च[1]) ते दृढः[2]), ।
तावत्कालं तु वत्स्यामि, *कृतः समय एव नः*[3]) ॥ 13 ॥

तस्यास्तं समयं सर्वं स राजा पर्यपालयत्[1]) ।
एवं सा चावसत्[2]) तत्र[3]) पुरूरवसि भाविनी[4]) ॥ 14 ॥

वर्षाण्येकोनषष्टिं तु[1]) तत्सक्ता[2]) शापमोहिता ।
उर्वश्यां *मानुपस्थायां*[3]) गन्धर्वाश्चिन्तयान्विताः ॥ 15 ॥

गन्धर्वा ऊचुः

चिन्तयध्वं महाभागा, यथा सा तु वराङ्गना ।
समागच्छेत्[1]) पुनर्देवान् उर्वशी स्वर्गभूषणम्[2]) ॥ 16 ॥

---

8 = Bḍ. II. 66.8; Br. 10.8; H. 1370; Vā. 91.8.

---

9 = Bḍ. II. 66.9; H. 1374; Vā. 91.9. 1) H. उ– । 2) Bḍ. उत्सृज्य तं च । 3) H. –न्मे । 4) Bḍ. च दुष्कृतम् ।

10 = Bḍ. II. $66.10^{a}$ = a; H. 1375; Vā. $91.10^{ab}$. 1) Bḍ. Vā. समुपस्थिता । 2) Vā. तं । 3) Vā. समयेन व्यवस्थिता ।

11 = Bḍ. II. $66.10^{b}$, $11^{a}$; H. 1376; Vā. $91.10^{cd}$. 1) Bḍ. Vā. नियमं । 2) H. ह । 3) Bḍ. Vā. अकामात् सह मैथुनम् ।

12 = Bḍ. II. $66.11^{b}$, $12^{a}$; H. 1377; Vā. 91.11. 1) Bḍ. –भ्याशे । 2) Bḍ. सा तावद्ध्यवतिष्ठते; Vā. स तावद् व्यवतिष्ठते । 3) Bḍ. Vā. –मात्रं ।

13 = Bḍ. II. $66.12^{b}$, $13^{a}$; H. 1378; Vā. 91.12. 1) Bḍ. Vā. यावत्कालश्च । 2) Vā. दृढम् । 3) Bḍ. Vā. एष नः समयः कृतः ।

14 = Bḍ. II. $66.13^{b}$, $14^{a}$; H. 1379; Vā. 91.13. 1) H. समपालयत् । 2) H. सा वसते । 3) Bḍ. Vā. तस्मिन् । 4) Bḍ. तेन सहैलेनाभिगामिनी; Vā. भामिनी ।

15 = Bḍ. II. $66.14^{b}$, $15^{a}$; H. 1380; Vā. 91.14. 1) Bḍ. Vā. –ण्यथ चतुःषष्टिं । 2) Bḍ. Vā. तद्भक्त्या । 3) Bḍ. Vā. उर्वशी मानुषं-प्राप्ता ।

16 = Bḍ. II. $66.15^{b}$, $16^{a}$; H. 1381; Vā. 91.15. 1) Bḍ. Vā. आगच्छेत् तु । 2) Vā. –भुषणा ।

ततो विश्वावसुर्नाम तत्राह वदतां वरः[1]) ।
मया[2]) तु समयस्ताभ्यां[3]) क्रियमाणः श्रुतः पुरा[4]) ॥ 17 ॥

व्युत्क्रान्तसमयं[1]) सा वै राजानं त्यक्ष्यते यथा, ।
तदहं वेद्म्यशेषेण[2]); यथा भेत्स्यत्यसौ नृपः[3]), ॥ 18 ॥

ससहायो गमिष्यामि युष्माकं कार्यसिद्धये ।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ॥ 19 ॥

स निशायामथागम्य[1]) मेषमेकं जहार वै[2]), ।
मातृवद् वर्तते सा तु मेषयोश्चारुहासिनी ॥ 20 ॥

गन्धर्वागमनं ज्ञात्वा शापान्तं च[1]) यशस्विनी ।
राजानमब्रवीत् तत्र[2]) पुत्रो मेऽह्रियतेति सा[3]) ! ॥ 21 ॥

एवमुक्तो विनिश्चित्य नग्नो नैवोदतिष्ठत[1]) ।
नग्नं मां द्रक्ष्यते[2]) देवी, समयो वितथो भवेत् ॥ 22 ॥

ततो भूयस्तु गन्धर्वा द्वितीयं मेषमाददुः[1]), ।
द्वितीये तु हृते[2]) मेषे ऐलं देव्यब्रवीदिदम्[3]) ॥ 23 ॥

पुत्रौ मम हृतौ[1]) राजन्ननाथाया इव प्रभो ! ।
एवमुक्तस्तदोत्थाय नग्नो राजा प्रधावितः ॥ 24 ॥

मेषयोः पदमन्विच्छन्[1]); गन्धर्वैर्विद्युदप्य[2]थ ।
उत्पादिता सु[3]महती ययौ[4]); तद् भवनं महत् ॥ 25 ॥

प्रकाशितं तु[1]) सहसा, ततो नग्नमवैक्षत[2]) ।
नग्नं दृष्ट्वा तिरोभूता[3]) साप्सराः[4]) कामरूपिणी ॥ 26 ॥

तिरोभूतां तु तां दृष्ट्वा गन्धर्वा ह्यगमन् दिवम्[1]) ।
उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतो गृहम्[2]) ॥ 27 ॥

अपश्यन्नुर्वशीं तत्र[1]) विललाप सुदुःखितः ।

---

17 = Bḍ. II. 66.16$^{b}$ = a; H. 1382; Vā. 91.16. 1) Bḍ. गन्धर्वः सुमहामतिः । 2) Vā. तया । 3) Vā. –स्तत्र । 4) Vā. –माणो मतोऽनघः ।

18 = H. 1383; Vā. 91.17. 1) Vā. समयव्युत्क्रमात् । 2) Vā. वच्मि वः सर्वं । 3) Vā. त्यक्ष्यति सा नृपम् ।

19 = H. 1384; Vā. 91.18.

20 = H. 1385; Vā. 91.19. 1) H. निशायामथ चागम्य । 2) H. सः ।

21 = H. 1386; Vā. 91.20. 1) Vā. शयनस्था । 2) Vā. सा तु । 3) Vā. वै ।

22 = H. 1387; Vā. 91.21. 1) Vā. नग्नस्तिष्ठति वै नृपः । 2) Vā. द्रक्ष्यति मां ।

23 = H. 1388; Vā. 91.22. 1) H. –माजह्रुः । 2) Vā. –ऽपहृते । 3) Vā. देवी तमब्रवीत् ।

24 = H. 1389; Vā. 91.23. 1) H. पुत्रो मे ह्रियते ।

25 = H. 1390; Vā. 91.24. 1) Vā. मेषाभ्यां पदवीं राजन् । 2) Vā. –र्युत्थिताम– । 3) Vā. तु । 4) Vā. माया ।

26 = H. 1391; Vā. 91.25. 1) H. वै । 2) Vā. –मवेक्ष्य सा । 3) Vā. तिरोऽभूत् सा । 4) Vā. –प्सरा ।

27 = H. 1392; Vā. 91.26$^{a}$, 27$^{a}$. 1) Vā. ज्ञात्वा गन्धर्वास्तत्र तावुभौ । 2) Vā. –तः प्रभुः ।

चचार पृथिवीं चैव[2]) मार्गमाण इत[3]स्ततः ॥ 28 ॥

अथापश्यच्च तां राजा कुरुक्षेत्रे महाबलः ।
प्लक्षतीर्थे पुष्करिण्यां *हैमवत्यां समाप्लुताम्*[1]) ॥ 29 ॥

क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनाम् ।
*तां क्रीडन्तीं ततो दृष्ट्वा विललाप सुदुःखितः*[1]) ॥ 30 ॥

उर्वशी ताः। सखीः प्राह *स एष*[1]) पुरुषोत्तमः, ।
*यस्मिन्नहमवात्सं वै*[2]), दर्शयामास तं नृपम् ॥ 31 ॥

समाविग्नास्तु ताः सर्वाः पुनरेव *नराधिपः*[1]) ।
*जाये हो*[2]) तिष्ठ *मनसा*[3]) घोरे वचसि तिष्ठ *हे*[4]) ! ॥ 32 ॥

एवमादीनि *सूक्तानि*[1]) परस्परमभाषत ।
उर्वशी *त्व*[2]ब्रवीदै[3]लं सगर्भाहं त्वया *प्रभो*[4]), ॥ 33 ॥

संवत्सरात् कुमारास्ते *भविष्यन्ति न*[1]) संशयः, ।
निशामेकां च *नृपते*[2]) *निवत्स्यसि मया*[3]) सह ॥ 34 ॥

हृष्टो जगाम *राजाथ*[1]) स्वपुरं *सु*[2]महायशाः ।
गते संवत्सरे *भूय*[3]) *उर्वशी*[4]) पुनरागमत् ॥ 35 ॥

उषित्वा *तु*[1]) तया सार्धमेकरात्रं *महामनाः*[2]) ।
कामार्तश्चाब्रवीद् दीनो भव नित्यं ममेति वै ! ॥ 36 ॥

उर्वश्यथाब्रवीदैलं[1]) गन्धर्वा *वरदास्तव*[2]); ।
*तं*[3]) वृणीष्व महाराज, ब्रूहि चैतांस्त्वमेव हि ! ॥ 37 ॥

*वृणीष्व समतां राजन्*[1]) गन्धर्वाणां महात्मनाम् ।
तथेत्युक्त्वा वरं वव्रे, गन्धर्वाश्च तथास्त्विति ! ॥ 38 ॥

पूरयित्वाग्निना *स्थालीं*[1]) *गन्धर्वाश्च*[2]) तमब्रुवन् ।

---

28 = H. 1393; Vā. 91.27[b], 28[a]. 1) Vā. अपश्यंस्तां तु वै राजा । 2) H. चापि । 3) Vā. –णस्तत– ।
29 = H. 1394; Vā. 91.31[c], 32[a]. 1) Vā. विगाढेनाम्बुनाप्लुताम् ।
30 = H. 1395; Vā. 91.32[b], 33[a]. 1) Vā. अपश्यत् सा ततः सुभ्रू राजानं अविदूरतः ।
31 = H. 1396[b], 1397[a]; Vā. 91.33[b], 34[a]. 1) Vā. अयं स । 2) Vā. –मवासीति ।
32 = H. 1397[b], 1398[a]; Vā. 91.35[b] = b. 1) H. –धिप । 2) Vā. आयाहि । 3) H. मनसि ( cf. Ṛ.V. X. 95.1 ). 4) H. ह ।
33 = H. 1398[b], 1399[a]; Vā. 91.36. 1) Vā. सूक्ष्माणि । 2) H. चा– । 3) Vā. –दब्रवीच्चै– । 4) H. विभो ।
34 = H. 1399[b], 1400[a]; Vā. 91.37. 1) Vā. –रस्ते भविता नैव । 2) Vā. तु वै राजा । 3) Vā. अवसत् तु तथा ।
35 = H. 1400[b], 1401[a]; Vā. 91.38. 1) Vā. संप्रहृष्टो जगामाथ । 2) Vā. तु । 3) Vā. राजा । 4) Vā. –शीं ।
36 = H. 1401[b] = a; Vā. 91.39. 1) H. उषितश्च । 2) H. महायशाः ।
37 = H. 1402; Vā. 91.40. 1) Vā. –वीच्चैनं । 2) Vā. –र्वास्ते वरं ददुः । 3) H. तान् ।
38 = H. 1403; Vā. 91.41. 1) Vā. [illegible] नित्यं हि सालोक्यं ।

अनेनेष्ट्वा हि[3]) लोकान् नः[4]) प्राप्स्यसि त्वं नराधिप ॥ 39 ॥

तानादाय कुमारांस्तु[1]) नगरायोपचक्रमे ।
निक्षिप्याग्निमरण्यां[2]) च[3]) सपुत्रस्तु गृहं[4]) ययौ ॥ 40 ॥

| | |
|---|---|
| अभ्येत्याग्निं तु नापश्यद्,<br>अश्वत्त्थं तत्र दृष्टवान्, ।<br>शमीजातं तु तं दृष्ट्वा<br>अश्वत्त्थं विस्मितस्ततः ॥ 41 ॥<br>गन्धर्वेभ्यस्तदाशंसद्<br>अग्निनाशं ततस्तु सः । | पुनरादाय दृश्याग्नि-<br>मश्वत्थं तत्र दृष्टवान्, ।<br>समीपतस्तु तं दृष्ट्वा ह्य-<br>श्वत्थं तत्र विस्मितः ॥ 41 ॥<br>गन्धर्वेभ्यस्तथाख्यातु-<br>मग्निना गां गतस्तु सः । |

श्रुत्वा तमर्थमखिलमरणीं[1]) तु समादिशन्[2]) ॥ 42 ॥

अश्वत्त्थादरणीं[1]) कृत्वा मथित्वाग्निं यथाविधि ।
तेनेष्ट्वा तु सलोकं नः प्राप्स्यसि त्वं नराधिप ॥ 43 ॥

मथित्वाग्निं त्रिधा कृत्वा ह्ययजत्[1]) स नराधिपः, ।
इष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकताम् ॥ 44 ॥

| | |
|---|---|
| गन्धर्वेभ्यो वरं लब्ध्वा<br>त्रेताग्निं समकारयत्, । | वासाय च स गन्धर्वः<br>त्रेतायां स महारथः । |

एक ऽग्निः पूर्वमासीद् वै[1]), ऐलस्त्रींस्ता[2]नकल्पयत्[3]) ॥ 45 ॥

---

एवंप्रभावो राजासीदैलस्तु नरसत्तमः[1]), ।
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते[2]) ॥ 46 ॥

राज्यं स कारयामास प्रयागे पृथिवीपतिः[1]) ।
उत्तरे जाह्नवीतीरे[2]) प्रतिष्ठाने महायशाः[3]) ॥ 47 ॥

---

39 = H. 1404; Vā. 91.42. 1) Vā. स्थालीमग्नेः पूरयित्वा । 2) Vā. –र्वां च । 3) Vā. अनेन इष्ट्वा । 4) Vā. लोकं तं ।

40 = H. 1405; Vā. 91.43. 1) Vā. तमादाय कुमारं तु । 2) H. –ण्ये; Vā. निक्षिप्य तमरण्यां । 3) H. तु । 4) Vā. T. गृहान् ।

| | |
|---|---|
| 41 = H. 1406.<br>42[a] = H. 1407[a]. | 41 = Vā. 91.44.<br>42[a] = Vā. 91.45[a]. |

42[b] = H. 1407[b]; Vā. 91.45[b]. 1) Vā. -मरणिं । 2) Vā. -शत् ।

43 = H. 1408[a] = a; Vā. 91.46. 1) Vā. –दरणिं ।

44 = H. 1408[b], 1409[a]; Vā. 91.47. 1) H. अयजत् ।

| | |
|---|---|
| 45[a] = H. 1409[b]. | 45[a] = Vā. 91.48[a]. |

45[b] = Bḍ. II. 66.19[b]; H. 1410[a]; Vā. 91.48[b]. 1) H. –मेवासीद् । 2) Bḍ. –स्तं त्री– । 3) H. –स्त्रेतामकारयत् ।

---

46 = Bḍ. II. 66.20; Br. 10.10[a], 9[a]; H. 1410[b], 1371[a] = 1411[a]; L. 66.(55[b]); Vā. 91.49. 1) Bḍ. Vā. द्विजसत्तमाः; H. पुरुषोत्तम । 2) Bḍ. Vā. –रलंकृते; L. चक्रे त्वकण्टकं राज्यं देशे पुण्यतमे द्विजाः ।

47 = Bḍ. II. 66.21; Br. 10.9[b], 10[b]; H. 1371[b] = 1411[b], 1412; L. 66.56 = b; Vā. 91.50. 1) L. 66.56[a] प्रयागे मुनिसेविते; 56[b] प्रतिष्ठाने प्रतिष्ठितः । 2) Bḍ. Vā. यामुने तीरे; L. यमुनातीरे ।

ऐलपुत्रा[1]) बभूवुस्ते
सप्त देवसुतोपमाः ।
दिवि जाता महात्मान
आयुर्धीमानमावसुः ॥ 48 ॥
विश्वायुश्चैव धर्मात्मा
श्रुतायुश्च तथा परः ।
दृढायुश्च वनायुश्च
शतायु[1]श्चोर्वशीसुताः ॥ 49 ॥

तस्य पुत्रा बभूवुर्हि
षडिन्द्रोपम[1]तेजसः ।
गन्धर्वलोके विदिता
आयुर्धीमानमावसुः[2]) ॥ 48 ॥
विश्वायुश्च[1]) श्रुतायु[2]श्च
शतायु[3]श्चोर्वशीसुताः ॥ 49 ॥

अमावसोस्तु *दायादो*[1]) भीमो राजाथ *विश्वजित्*[2]), ।
श्रीमान् भीमस्य दायादो राजासीत् काञ्चनप्रभः ॥ 50 ॥

विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून् महाबलः, ।
सुहोत्रस्याभव[1]ज्जह्नुः केशिन्या[2]) गर्भसम्भवः, ॥ 51 ॥

आजह्रे यो महासत्रं[1])
सर्व[2]मेधं महामखम्[3]), ।
पतिलोभेन यं गङ्गा
पतित्वेऽ*भिससार*[4]) ह; ॥ 52 ॥
नेच्छतः प्लावयामास
तस्य गङ्गाथ तत् सदः ।

प्रतिगत्य ततो गङ्गा
वितते यज्ञकर्मणि ॥ 52 ॥
प्ला*व*यामास[1]) तं देशं
भाविनोऽर्थस्य दर्शनात् ।

स[1]) तया[2]) प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ॥ 53 ॥

---

48 = Br. $10.11^{a}$ = a, $11^{b}$V = b; H. 1312, 1413. 1) H. 1312 तस्य पुत्रा ।

49 = Br. 10.12; H. 1313, 1414. 1) Br. वह्रायु- ।

48 = Bd. II. 66.22; Br. $10.11^{b}$T = b; L. 66.57; Va. 91.51. 1) L. सप्ताभवन् सर्वे वितत- । 2) L. भवभक्ता महाबलाः ।

49 = Bd. II. $66.23^{a}$; Va. $91.52^{a}$. 1) Bd. विश्वावसुः । 2) Va. शतायु- । 3) Bd. घृतायु-; Va. गतायु- ।

50 = Bd. II. $66.23^{b}$, $24^{a}$; Br. 10.13; H. 1415; Va. $91.52^{b}$, $53^{a}$. 1) Bd. Va. वै जातो । 2) Br. राजराट्; H. नग्नजित् ।

51 = Bd. II. $66.24^{b}$, $25^{a}$; Br. 10.14; H. 1416; Va. $91.53^{b}$, $54^{a}$. 1) H. सौहोत्रिरभव- । 2) Bd. केशिनी-; Va. V. कौशिक्या-; T. कंशिका- ।

52 = Br. 10.15; 13.83; H. 1417, 1757. 1) Br. 10.15 महत् सत्रं । 2) Br. 10.15 सर्प- । 3) Br. 13.83 -मेधमखं विभुम् । 4) Br. 10.15 पतित्वेन ससार; 13.83 विनीतेव ससार; H. 1757 पतिं त्वभिससार ।

$53^{a}$ = Br. $10.16^{a}$; $13.84^{a}$; H. $1418^{a}$, $1758^{a}$. 1) Br. $10.16^{a}$ तदा; $13.84^{a}$ च तत् ।

52 = Bd. II. $66.25^{b}$; Vā. $91.54^{b}$.

$53^{a}$ = Bd. II. $66.26^{a}$; Va. $91.55^{a}$. 1) Bd. सादयामास ।

$53^{b}$ = Bd. II. $66.26^{b}$; Br. $10.16^{b}$; $13.84^{b}$; H. $1418^{b}$, $1758^{b}$; Va. $91.55^{b}$. 1) Br. $13.84^{b}$; H. $1758^{b}$ तत् । 2) Bd. Va. [illegible] ।

सौहोत्रिर[1]ब्रवीद्[2]) गङ्गां क्रुद्धो[3]) राजा द्विजोत्तमाः[4]) ।
एष[5]) ते विफलं यत्नं[6]) पिबन्न[7]म्भः करोम्यहम्[8]) ॥ 54 ॥

अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ! ।
राजर्षिणा ततः[1]) पीतां गङ्गां दृष्ट्वा महर्षयः[2]) ॥ 55 ॥

उपनिन्युर्महाभागा[1]) दुहितृत्वेन जाह्नवीम् ।
यु[2]वनाश्वस्य पुत्रीं[3]) तु कावेरीं जह्नुरावहत् ; ॥ 56 ॥

युवनाश्वस्य शापेन गङ्गार्धेन[1]) विनिर्ममे[2]) ।
कावेरीं सरितां श्रेष्ठां जह्नोर्भा[3]र्यामनिन्दिताम् ॥ 57 ॥

जह्नुस्तु[1]) दयितं पुत्रं सुनहं[2]) नाम धार्मिकम्[3]) ।
कावेर्यां जनयामास, अजकस्तस्य चात्मजः ॥ 58 ॥

अजकस्य तु दायादो बलाकाश्वो महीपतिः[1]) ।
बभूव मृगयाशीलः[2]), कुशास्तस्यात्मजोऽभवत्[3]) ॥ 59 ॥

कुशापुत्रा बभूवुर्हि[1]) चत्वारो धर्म[2]वर्चसः ।
कुशिकः[3]) कुशनाभश्च कुशाम्बो मूर्तिमांस्तथा[4]) ॥ 60 ॥

पह्लवैः[1]) सह संवृद्धो
राजा वनचरैस्तदा[2]) ।

---

54 = Bḍ. II. 66.27[a] = a; Br. 10.17; 13.85[ab]; H. 1419, 1759; Va. 91.56[a], 57[a]. 1) Br. 13.85[a]; H. 1759[a] जह्नुरप्य– । 2) Bḍ. –रपि सं–; Br. 10.17[a] T. –रशपद् ; V. –रवदत् ; Va. –वैरदः । 3) Bḍ. Va. (-) क्रुद्धो गङ्गाम् । 4) Br. विप्रास्तदा नृपः; H. भरतसत्तम; Va. संरक्तलोचनः । 5) Va. एतत् । 6) Va. सर्वं । 7) Va. T. पीतम– । 8) Br. 13.85[b]; H. 1759[b] एष ते त्रिषु लोकेषु संक्षिप्यापः पिबाम्यहम् ।

55 = Bḍ. II. 66.27[b] = b; Br. 10.18; 13.85[c], 86[a]; H. 1420, 1760; Va. 91.56[b], 57[b]. 1) Bḍ. तदा राजर्षिणा; Br. जह्नुराजर्षिणा । 2) Bḍ. Va. सुरर्षयः; Br. 13.86[a]; H. 1760[b] ततः पीतां महात्मानो दृष्ट्वा गङ्गां महर्षयः ।

56 = Bḍ. II. 66.28; Br. 10.19; 13.86[b], 87[a]; H. 1421, 1761; Va. 91.58. 1) Br. 10.19 T. H. –र्महाभागां । 2) Bḍ. यौ– । 3) Bḍ. Va. पौत्रीं ।

57 = Bḍ. II. 66.29; Br. 10.20; 13.87[b] = bI; H. 1422, 1762[a] = a; Va. 91.59. 1) Va. –ङ्गा येन । 2) Br. विनिर्गता; V. विनिर्मिते; Br. 13.87[b]; H. 1762[a] गङ्गाशापेन देहार्धं यस्याः पश्चान्नदीकृतम् । 3) Bḍ. जह्नुभा– ।

58 = Bḍ. II. 66.30; Br. 10.21; 13.88[a] = a; H. 1423; 1762[b] = a; Va. 91.60. 1) Va. –ह्नुश्च । 2) Br. सुनधं; Va. सुहोत्रं । 3) Br. 13.88[a]; H. 1762[b] जह्नोस्तु दयितः पुत्रो अजको नाम वीर्यवान् ।

59 = Bḍ. II. 66.31; Br. 10.22; 13.88[b], 89[a]; H. 1424, 1763; Va. 91.61. 1) Bḍ. Va. महायशाः । 2) Va. बभूवुश्च गयः शीलः । 3) Bḍ. Va. –त्मजः स्मृतः; Br. 13.89[a]; H. 1763[b] कुशिकस्तस्य चात्मजः ।

60 = Bḍ. II. 66.32; Br. 10.23; H. 1425; Va. 91.62. 1) Bḍ. Va. –वुश्च । 2) Bḍ. देव– । 3) Bḍ. कुशाम्बः; Va. कुशाश्वः । 4) Bḍ. Va. V. अमूर्तरयसो वसुः; Va. T. अमूर्तारयशो वसुः ।

कुशिकस्तु तपस्तेपे
पुत्रमिन्द्रसमं विभुम्[3]) ॥ $60_1$ ॥
लभेयमि[1]ति तं शक्र-
स्त्रासादभ्येत्य जज्ञिवान् ।
पूर्णे वर्षसहस्रे वै तं तु शक्रो ह्य[1]पश्यत ॥ 61 ॥

कुशिकस्तु त[1]पस्तेपे
पुत्रार्थी राजसत्तमः ।

अत्युग्रतपसं[1]) दृष्ट्वा सहस्राक्षः पुरंदरः ।
समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः[2]) ॥ 62 ॥

पुत्रत्वे[1]) कल्पयामास
स देवेन्द्रः सुरोत्तमः[2]) ।
स गाधिरभवद्राजा
मघवान्[3]) कौशिकः स्वयम् ॥ 63 ॥

पुत्रत्वं कल्पयामास
स्वयमेव पुरंदरः ।
गाधिर्नामाभवत्पुत्रः
कौशिकः पाकशासनः ॥ 63 ॥

पौरुकुत्स्य[1]भवद्भार्या, गाधिस्त[2]स्यामजायत ।
गाधेः कन्या[3]) महाभागा[4]) नाम्ना सत्यवती शुभा[5]) ॥ 64 ॥

तां गाधिः काव्यपुत्राय[1]) ऋ[2]चीकाय ददौ प्रभुः ।
तस्याः[3]) प्रीतास्तु वै[4]) भर्ता भार्गवो भृगुनन्दनः ॥ 65 ॥

पुत्रार्थे[1]) साधयामास[2]) चरुं, गाधेस्तथैव च ।
उवाचाहूय तां भार्यामृ[3]चीको भार्गवस्तदा ॥ 66 ॥

उपयोज्य[1]श्चरुरयं त्वया, मात्रा त्वयं[2]) शुभे[3]), ।
तस्यां[4]) जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः ॥ 67 ॥

---

$60_1$ = Br. 10.24; 13.89[b], 90[a]; H. 1426, 1764. 1) Br. 10.24 वल्लभैः । 2) Br. 10.24 –चरः सदा; Br. 13.89[b] –चरैः सह । 3) Br. 10.24 प्रभुः; V. –भुम् ; H. 1426[b] विभुः; H. 1764[b] –मप्रभम् ।

61[a] = Br. 10.25[a]; 13.90[b]; H. 1427[a], 1765[a].

61[a] = Bḍ. II. 66.33[a]; Vā. 91.63[a]. 1) Vā. कुशस्तम्बस्त– ।

61[b] = Bḍ. II. 66.33[b]; Br. 10.25[b]; H. 1927[b]; Vā. 91.63[b]. 1) Bḍ. शतक्रतुर–; Br. ततः शक्रो ह्य–; Vā. शतक्रतुम– ।

62 = Bḍ. II. 66.34; Br. 10.26; H. 1428; Vā. 91.64. 1) Bḍ. तमुग्रतपसं; Vā. सुदुर्गं तापसं । 2) H. स्वमेवांशमवासयत् ।

63 = Br. 10.27; 13.91[a] = b; H. 1429, 1765[b] = b. 1) Br. पुत्रार्थं । 2) Br. देवेन्द्रः सुरसत्तमः । 3) Br. 13.91[a] मघवा ।

63 = Bḍ. II. 66.35; Vā. 91.65.

64 = Bḍ. II. 66.36; Br. 10.28; H. 1430; Vā. 91.66[ab]. 1) Br. T. पुरा यस्या–; Br. V. Vā. –कुत्सा– । 2) Bḍ. ग(गा)धेस्त– । 3) Bḍ. पूर्वं कन्या; Vā. पूर्वकन्यां । 4) Vā. –भागां । 5) Vā. –वतीं शुभाम् ।

65 = Bḍ. II. 66.37; Br. 10.29; H. 1431; Vā. 91.66[c], 67[a]. 1) Bḍ. पुत्रकामाय; H. –धिर्भृगुपुत्राय; Vā. पुत्रः काव्याय । 2) Vā. रु– । 3) Vā. तस्यां । 4) Br. प्रीतः स वै; H. प्रीतोऽभवद्; Vā. पुत्रस्तु वै ।

66 = Bḍ. II. 66.38; Br. 10.30; H. 1432; Vā. 91.67[b], 68[a]. 1) Bḍ. Vā. पुत्रार्थे । 2) H. कल्पयामास । 3) Bḍ. अथावोचत् प्रियं तत्र ऋ–; H. u. t. भर्ता ऋ ; Vā. तथा चाहूय निधृतिमृ– ।

67 = Bḍ. II. 66.39; Br. 10.31; H. 1433; Vā. 91.68[b], 69[a]. 1) Bḍ. उपभोज्य– । 2) Bḍ. Vā. च ते; Br. स्वयं । 3) Bḍ. शुभाः; H. तव । 4) Bḍ. तस्या ।

अजेयः क्षत्रियैर्लोके[1]) क्षत्रियर्षभसूदनः ।
तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनम् ॥ 68 ॥

शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ।
एवमुक्त्वा तु तां भार्यामृचीको भृगुनन्दनः ॥ 69 ॥

तपस्य[1]भिरतो नित्यमरण्यं प्रविवेश ह ।
गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् ॥ 70 ॥

तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः[1]) ।
चरुद्वयं गृहीत्वा तु[2]) ऋषेः सत्यवती तदा ॥ 71 ॥

| | |
|---|---|
| चरुमादाय यत्नेन<br>सा तु मात्रे न्यवेदयत् । | भर्तुर्वचनमव्यग्रा<br>हृष्टा मात्रे न्यवेदयत् । |

माता तु तस्यै[1]) दैवेन दुहित्रे स्वं[2]) चरुं ददौ, ॥ 72 ॥

तस्याश्चरुमथाज्ञानादात्मसंस्थां[1]) चकार ह ।
अथ सत्यवती गर्भं[2]) क्षत्रियान्तकरं तदा[3]) ॥ 73 ॥

धारयामास दीप्तेन वपुषा घोरदर्शना[1]) ।
ता[2]मृचीकस्ततो दृष्ट्वा योगेनाभ्यनुसृत्य[3]) च ॥ 74 ॥

तदा[1]ब्रवीद् द्विजश्रेष्ठः स्वां भार्यां वरवर्णिनीम् ।
मात्रासि वञ्चिता भद्रे चरुव्यत्यासहेतुना, ॥ 75 ॥

जनिष्यति हि पुत्रस्ते क्रूरकर्मातिदारुणः ।

| | |
|---|---|
| भ्राता जनिष्यते चापि<br>ब्रह्मभूतस्तपोधनः; ॥ 76 ॥ | माता जनिष्यते चापि[1])<br>तथाभूतं तपोधनम्; ॥ 76 ॥ |

विश्वं हि ब्रह्म तपसा मया तस्मिन्[1]) समर्पितम् ।
एवमुक्ता[2]) महाभागा भर्त्रा सत्यवती तदा ॥ 77 ॥

---

68 = Bḍ. II. 66.40; Br. 10.32; H. 1434; Vā. 91.69$^{b}$, 70$^{a}$. 1) Bḍ. Vā. -र्युद्धे ।

69 = Bḍ. II. 66.41; Br. 10.33; H. 1435; Vā. 91.70$^{b}$, 71$^{a}$.

70 = Bḍ. II. 66.42; Br. 10.34; H. 1436; Vā. 91.71$^{b}$, 72$^{a}$. 1) Vā. T. -स्या- ।

71 = Bḍ. II. 66.43; Br. 10.35; H. 1437; Vā. 91.72$^{b}$, 73$^{a}$. 1) H. नरेश्वर । 2) Br. सा; H. तद् ।

72$^{a}$ = Br. 10.36$^{a}$; H. 1438$^{a}$. | 72$^{a}$ = Bḍ. II. 66.44$^{a}$; Vā. 91.73$^{b}$.

72$^{b}$ = Bḍ. II. 66.44$^{b}$; Br. 10.36$^{b}$; H. 1438$^{b}$; Vā. 91.74$^{a}$. 1) Br. तु तस्या; H. व्यत्यस्य । 2) Bḍ. स्व- ।

73 = Bḍ. II. 66.45; Br. 10.37; H. 1439; Vā. 91.74$^{b}$, 75$^{a}$. 1) Bḍ. Vā. -त्मनः सा । 2) Br. सर्दे । 3) Bḍ. Vā. शुभम् ।

74 = Bḍ. II. 66.46; Br. 10.38; H. 1440; Vā. 91.75$^{b}$, 76$^{a}$. 1) H. -दर्शनम् । 2) Vā. त- । 3) Bḍ. -नाप्यवमृश्य; Br. -नाभ्युपसृत्य; Vā. -नाप्यनुमृश्य ।

75 = Bḍ. II. 66.47; Br. 10.39; H. 1441; Vā. 91.76$^{b}$, 77$^{a}$. 1) Br. ततो-; H. ताम- ।

76$^{a}$ = Bḍ. II. 66.48$^{a}$; Br. 10.40$^{a}$; H. 1442$^{a}$; Vā. 91.77$^{b}$.

76$^{b}$ = Br. 10.40$^{b}$; H. 1442$^{b}$. | 76$^{b}$ = Bḍ. II. 66.48$^{b}$; Vā. 91.78$^{a}$. 1) Vā. चापि ।

77 = Bḍ. II. 66.49; Br. 10.41; H. 1443; Vā. 91.78$^{b}$, 79$^{a}$. 1) Bḍ. Vā. तत्र । 2) H. Vā. -मुक्त्वा ।

प्रसादयामास पतिं पुत्रो[1]) मे नेदृशो भवेत्।
ब्राह्मणापसद[2]स्त्वत्त[3]) ! इत्युक्तो मुनिरब्रवीत्॥ 78॥

नैष[1]) संकल्पितः कामो मया भद्रे तथास्त्विति[2])।
उग्रकर्मा भवेत् पुत्रः पितुर्मातुश्च कारणात्॥ 79॥

पुनः सत्यवती वाक्यमेवमुक्त्वा[1]ब्रवीदिदम्!
इच्छँल्लोकानपि मुने सृजेथाः, किं पुनः सुतम्!॥ 80॥

शमात्मकमृजुं त्वं मे[1]) पुत्रं[2]) दातुमिहार्हसि[3]),।
काममेवंविधः पौत्रो[4]) मम स्यात् तव च[5]) प्रभो[6]),॥ 81॥

यद्य[1]न्यथा न शक्यं वै कर्तुमेतद्[2]) द्विजोत्तम।
ततः प्रसादमकरोत् स तस्यास्तपसो बलात्॥ 82॥

पुत्रे[1]) नास्ति विशेषो मे पौत्रे वा[2]) वरवर्णिनी;।
त्वया यथोक्तं वचनं, तथा भद्रे भविष्यति॥ 83॥

ततः[1]) सत्यवती पुत्रं जनयामास भार्गवम्।
तपस्यभिरतं दान्तं जमदग्निं शमा[2]त्मकम्॥ 84॥

भृगोश्चरुविपर्यासे रौद्र-वैष्णवयोः पुरा[1])।
यजनाद् वैष्णवेऽथांशे[1]) जमदग्निरजायत॥ 85॥ | जमनाद् वैष्णवस्याग्नेर्जमदग्निरजायत॥ 85॥

सा हि सत्यवती पुण्या सत्यधर्म[1]परायणा।
कौशिकीति[2]) समाख्याता प्रवृत्तेयं महानदी॥ 86॥

| [परिश्रुता[1]) महाभागा कौशिकी सरितां वरा।]

इक्ष्वाकुवंशप्रभवो[1]) रेणुर्नाम[2] नराधिपः[3])।

---

78 = Bḍ. II. 66.50; Br. 10.42; H. 1444; Vā. 91.79bc. 1) Bḍ. Vā. सुतो। 2) Bḍ. –णापशदा–। 3) Vā. –स्तन्य।
79 = Bḍ. II. 66.51; Br. 10.43; H. 1445; Vā. 91.80. 1) Bḍ. Vā. V. नैव। 2) Bḍ. Vā. तथा त्वया।
80 = Bḍ. II. 66.52; Br. 10.44; H. 1446; Vā. 91.81. 1) Br. Vā. –मुक्ता–।
81 = Bḍ. II. 66.53; Br. 10.45; H. 1447; Vā. 91.82. 1) Bḍ. Vā. भर्तः। 2) Bḍ. Vā. पुत्रं मे। 3) Bḍ. Vā. –मुर्हसि। 4) Vā. T. पुत्रो। 5) Vā. तु वद। 6) Bḍ. सुव्रत।
82 = Bḍ. II. 66.54; Br. 10.46; H. 1448; Vā. 91.83. 1) Vā. T. मय्य–। 2) Bḍ. –मेवं; Vā. –मेव।
83 = Bḍ. II. 66.55; Br. 10.47; H. 1449; Vā. 91.84. 1) Bḍ. V. H. भद्रे। 2) H. च।
84 = Bḍ. II. 66.56; Br. 10.48; H. 1450; Vā. 91.85. 1) Bḍ. Vā. तस्मात्। 2) Br. समा–।
85ᵃ = Bḍ. II. 66.57ᵃ; Br. 10.49ᵃ( ); H. 1451ᵃ; Vā. 91.86ᵃ. 1) Br. T. भृगोर्जगत्यां वंशेऽस्मिन् जमदग्निरजायत।
85ᵇ = Br. 10.49ᵃ( ); H. 1451ᵇ. 1) Br. चांशे। | 85ᵇ = Bḍ. II. 66.57ᵇ; Vā. 91.86ᵇ.
86 = Bḍ. II. 66.59; Br. 10.49ᵇ, 50ᵃ; H. 1452; Vā. 91.88. 1) Bḍ. Vā. सत्यव्रत–। 2) Bḍ. –की तु।
| [ ] = Bḍ. II. 66.60ᵃ; Vā. 91.89ᵃ. 1) Bḍ. –स्रुता।

तस्य कन्या महाभागा का[4]मली नाम रेणुका ॥ 87 ॥

रेणुकायां तु कामल्यां[1]) तपोविद्या[2]समन्वितः[3]) ।
आर्चिको जनयामास जामदग्न्यं[4]) सुदारुणम् ॥ 88 ॥

सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥ 89 ॥

और्वस्यैवमृ[1]चीकस्य सत्यवत्यां महायशाः[2]) ।
जमदग्निस्तपोवीर्याज्जज्ञे ब्रह्मविदां वरः ॥ 90 ॥

मध्यमश्च शुनःशेफः शुनःपुच्छः कनिष्ठकः ।
विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः ॥ 91 ॥

| जनयामास पुत्रं तु तपोविद्याशमात्मकम्, ।

प्राप्य ब्रह्मर्षिसमतां योऽयं[1]) ब्रह्म[2]र्षितां गतः[3]) ॥ 92 ॥

विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ।
जज्ञे भृगुप्रसादेन कौशिकाद्वंश[1]वर्धनः ॥ 93 ॥

विश्वामित्रस्य पुत्रस्तु शुनःशेफो[1]ऽभवत् किल[2]) ।
हरिदश्वस्य[2]) यज्ञे तु पशुत्वे विनियोजितः[4]) ॥ 94 ॥

देवैर्दत्तः शुनःशेफो[1]) विश्वामित्राय वै पुनः, ।
देवैर्दत्तः स वै यस्माद्, देवरातस्ततोऽभवत् ॥ 95 ॥

| विश्वामित्रस्य च सुता देवरातादयः स्मृताः[1]) ।
| प्र[2]ख्यातास्त्रिषु लोकेषु, तेषां नामान्यतः परम्[3]) ॥ $95_1$ ॥
| देवरातः[1]) कतिश्चैव, यस्मात् कात्यायनाः स्मृताः; ।
| शालावत्यां हिरण्याक्षो, रेणुर्जज्ञे[2]ऽथ रेणुकः[3]) ॥ $95_2$ ॥

---

87 = Bḍ. II. 66.60$^b$, 61$^a$; Br. 10.50$^b$, 51$^a$; H. 1453; Vā. 91.89$^b$, 90$^a$. 1) Vā. –वंशे त्वभवत् । 2) Bḍ. रेणुको ना–; Vā. सुवेणुर्ना– । 3) Bḍ. Vā. पार्थिवः । 4) Bḍ. क– ।

88 = Bḍ. II. 66.61$^b$, 62$^a$; Br. 10.51$^b$, 52$^a$; H. 1454; Vā. 91.90$^{bc}$. 1) Bḍ. R. कमल्यां तु । 2) Bḍ. Vā. तपोधृति– । 3) Bḍ. –समाधिना । 4) Bḍ. Vā. जमदग्निः ।

89 = Bḍ. II. 66.62$^b$, 63$^a$; Br. 10.52$^b$, 53$^a$; H. 1455; Vā. 91.91.

90 = Bḍ. II. 66.63$^b$, 64$^a$; Br. 10.53$^b$, 54$^a$; H. 1456; Vā. 91.92$^{ab}$. 1) H. –स्येवमृ– । 2) Bḍ. Vā. –मनाः ।

91 = Bḍ. II. 66.64$^b$, 58$^a$; Br. 1.54$^b$, 55$^a$; H. 1457; Vā. 91.92$^c$, 87$^a$.

| 92$^a$ = Br. 10.55$^b$; H. 1458$^a$.

92$^b$ = Bḍ. II. 66.58$^b$; Br. 10.56$^a$; H. 1458$^b$; Vā. 91.87$^b$. 1) Bḍ. Vā. य( ज )गाम । 2) H. सस– । 3) Bḍ. Vā. –ह्मणा वृतः ।

93 = Bḍ. II. 66.65; Br. 10.56$^b$, 57$^a$; H. 1459; Vā. 91.93. 1) Bḍ. कौशिकान्वय– ।

94 = Bḍ. II. 66.66; Br. 10.65; H. 1470$^b$, 1471$^a$; Vā. 91.94. 1) Vā. T. –शेपो । 2) Bḍ. Vā. –वन्मुनिः । 3) Bḍ. Vā. हरिश्चन्द्रस्य । 4) Bḍ. Vā. नियतः स वै ।

95 = Bḍ. II. 66.67; Br. 10.66; H. 1471$^b$, 1472$^a$; Vā. 91.95. 1) Vā. –शेपो ।

| $95_1$ = Br. 10.57$^b$, 58$^a$, 13.91$^b$( ); H. 1460, 1775$^a$ = a. 1) Br. 13.( ), H. 1775$^a$ देवरातादयश्चापि ( H. –श्चान्ये ) विश्वामित्रस्य वै सुताः । 2) H. वि– । 3) H. –मानि मे शृणु ।

| $95_2$ = Br. 10.58$^b$, 59$^a$; H. 1461. 1) H. देवश्रवाः । 2) H. रेणोर्ज– । 3) H. रेणुमान् ।

| सांकृतिर्गालवश्चैव मुद्गलश्चैव[1]) विश्रुताः ।

मधुच्छन्दो जयश्चैव
देवलश्च तथाष्टकः ॥ 96 ॥

मधुच्छन्दो जय[1]श्चैव
कृतदेवौ ध्रुवाष्टकौ ॥ 96 ॥

कच्छपो *हारित*[1]श्चैव विश्वामित्रस्य *ते सुताः*[2]), ।
तेषां *ख्यातानि गोत्राणि*[3]) कौशिकानां महात्मनाम् ॥ 97 ॥

पाणिनो बभ्रवश्चैव
ध्यानजप्यास्तथैव च ।
पार्थिवा देवराताश्च
शालङ्कायन-बाष्कलाः[1]) ॥ 98 ॥
लोहिता[1]) यामदूता[2]श्च
तथा कारीषयाः[3]) स्मृताः ।
सौश्रुताः[4]) कौशिकाश्चैव
त[5]थान्ये सिन्धवायनाः ॥ 99 ॥
देवला रेणवश्चैव
याज्ञवल्क्याः[1]) स[2]मर्षणाः[3]) ।
औदुम्बरा *ह्यभिष्णाता*[4])-
स्तारकायण-चुञ्चुलाः[5]) ॥ 100 ॥
शालावत्या हिरण्याक्षाः
सांकृत्या गालवास्तथा ।

पार्थिवा देवराताश्च
याज्ञवल्क्याः समर्षणाः ।
उदुम्बराश्च *वातध्या*-
*स्तालकायन-चान्द्रवाः*[1]) ॥ 98 ॥
लोहिण्या[1]) रेणवश्चैव
तथा कारीषवः स्मृताः ।
बभ्रवः पाणिनश्चैव
ध्यानजप्यास्तथैव च ॥ 99 ॥
*शालावत्या*[1]) हिरण्याक्षाः
सांकृता[2]) गालवाः स्मृताः ।
देवला यामदूताश्च
शा[3]लङ्कायन-बाष्कलाः ॥ 100 ॥
*लालाट्या*[1]) बादराश्चान्ये
विश्वामित्रस्य धीमतः ।

---

96[a] = Br. 10.59[b]; H. 1462[a]. 1) H. –श्चेति ।
96[b] = Br. 10.60[a]; H. 1462[b].

96 = Bḍ. II. 66.68[b]; Vā. 91.96[b]. 1) Bḍ. –न्दादय–; Vā. T. नय– ।

97 = Bḍ. II. 66.69; Br. 10.60[b], 61[a]; 13.91[b]( ) = b; H. 1463, 1770[a] = b; Vā. 91.97. 1) Bḍ. Vā. –पः पूरण– । 2) Bḍ. Vā. –मित्रसुतास्तु वै । 3) Bḍ. Vā. तेषां गोत्राणि बहुधा ।

98 = Br. 10.61[b], 62[a]; 13.91[b]( ); H. 1464, 1770[b], 1771[a]. 1) Br. ( ); H. –सौश्रवाः ।

99 = Br. 10.62[b], V. ( ); 13.91[b]( ); H. 1465, 1771[b], 1772[a]. 1) H. 1771[b] लौहित्या । 2) Br. 10.62 यमदूता–; 13. ( ), 10.62[b] V. यामभूता– । 3) Br. कारूपकाः; V. कारीकयः; H. 1471 –कयः । 4) Br. 10.62 V. सौश्रवाः; Br. 13. ( ); H. 1772[a] विश्रुताः । 5) Br. 13. ( ) –का विप्रास्त–; H. –का राजंस्त– ।

100 = Br. 10.62[b] ( ); H. 1466. 1) Br. –क्या– । 2) Br. –क्याच्च; H. –घ– । 3) Br. ( ) –णः । 4) Br. ( ) –[illegible] 5) Br. ( ) –[illegible] ।

98 = Bḍ. II. 66.70; Vā. 91.98. 1) Vā. –म्बरा उदुम्लाना-स्तारका यमुञ्चताः ।

99 = Bḍ. II. 66.71; Vā. 91.99. 1) Bḍ. –ण्यो ।

100 = Bḍ. II. 66.72; Vā. 91.100. 1) Bḍ. श्यामायाना । 2) Vā. T. स्यङ्कता । 3) Vā. स– ।

नारायणिर्नरश्चान्यो
विश्वामित्रस्य धीमतः ॥ 101 ॥
ऋष्यन्तर-विवाह्या[1]श्च
कौशिका बहवः स्मृताः ।
पौरवस्य (!) मुनिश्रेष्ठा[2])
ब्रह्मर्षेः कौशिकस्य च; ॥ 102 ॥
सम्बन्धोऽप्यस्य[1]) वंशेऽस्मिन्
ब्रह्मक्षत्रस्य विश्रुतः ॥ $102_1$ ॥

ऋष्यन्तर-विवाह्यास्ते
बहवः कौशिकाः स्मृताः ॥ 101 ॥
कौशिकाः सौश्रुताश्चैव
तथान्ये सैन्धवायनाः ।
पौरोरवस्य[1]) पुण्यस्य
ब्रह्मर्षेः कौशिकस्य तु[2]) ॥ 102 ॥

विश्वामित्रात्मजानां तु[1]) शुनःशेफो[2]ऽग्रजः स्मृतः ।
| भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः[1]) ॥ 103 ॥
दृषद्वती-सुतश्चापि विश्वामित्रात् त[1]थाष्टकः, ।
अष्टकस्य सुतो लौहिः[2]) प्रोक्तो जह्नुगणो मया ॥ 104 ॥

| ऋषय ऊचुः
| किंलक्षणेन धर्मेण तपसेह श्रुतेन वा ।
| ब्राह्मण्यं समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ? ॥ $104_1$ ॥
| येन येनाभिधानेन ब्राह्मण्यं क्षत्रिया गताः ।
| विशेषं ज्ञातुमिच्छामस्त[1]पसो[2]) दानतस्तथा ! ॥ $104_2$ ॥
| एवमुक्तस्ततो वाक्यमब्रवीदिदमर्थवत् ।
| अन्यायोपगतैर्द्रव्यैराहूय द्विजसत्तमान् ।
| धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥ $104_3$ ॥
| धर्मं चैतं समास्थाय[1]) पापात्मा पुरुषपाधमः ।
| ददाति दानं विप्रेभ्यो लोकानां दम्भकारणात् ॥ $104_4$ ॥
| जपं कृत्वा तथा तीव्रं धनलोभान्निरङ्कुशः ।
| रागमोहान्वितो ह्यन्ते पावनार्थं ददाति यः, ॥ $104_5$ ॥
| तेन दत्तानि दानानि अ[1]फलानि भवन्त्युत ।
| तस्य धर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ॥ $104_6$ ॥

---

101 = Br. 10.62[b] ( ); H. 1467.
102 = Br. 10.62[b]( ), 63[a]; 13.91[b]( ); H. 1468, 1772[b], 1773[a]. 1) Br. 10. ( ) विरान्ता- । 2) H. महाराज ।
$102_1$ = Br. 10.63[b]; 13.91[b]( ); H. 1469, 1773[b]. 1) Br. 13. ( ) -न्धस्याथ; H. -न्धो ह्यस्य ।

101 = Bḍ. II. 66.73; Vā. 91.101. 1) Vā. ददाति- ।
102 = Bḍ. II. 66.74; Vā. 91.102. 1) Bḍ. योगेश्वरस्य । 2) Bḍ. वै ।

103[a] = Bḍ. II. 66.68[a]; Br. 10.64[a], 13.91[b]( ); H. 1469[b], 1774[a]; Vā. 91.96[a]. 1) Bḍ. Vā. -मित्रस्य पुत्राणां । 2) Vā. -शेपो ।
| 103[b] = Br. 10.964[b], 13.91[b]( ); H. 1470[a], 1774[b]. 1) Br. 13.( ); H. 1774 -पुङ्गवः ।
104 = Br. 10.67[b], 68[a]; 13.91[b]( ); Bḍ. II. 66.75; H. 1473, 1775[b], 1776[a]; Vā. 91.103. 1) Br. 10.67[b]. T. वैश्वामित्रस्त-; 13 ( ) विश्वामित्रस्त- । 2) Vā. यो हि ।
| $104_1$ = Bḍ. II. 66.76, 77[a]; Vā. 91.104.
| $104_2$ = Bḍ. II. 66.77[b], 78[a]; Vā. 91.105. 1) Bḍ. Vā. T. -मिच्छामि त- । 2) Vā. -सा ।
| $104_3$ = Bḍ. II. 66.78[b], 79; Vā. 91.106.
| $104_4$ = Vā. 91.107. 1) Vā. T. समाख्याय ।
| $104_5$ = Bḍ. II. 66.80; Vā. 91.108.
| $104_6$ = Bḍ. II. 66.81; Vā. 91.109. 1) Bḍ. ह्य- ।

एवं लब्ध्वा धनं मोहाद् ददतो यजतश्च ह ।
संक्लिष्टकर्मणो[1]) दानं न तिष्ठति दुरात्मनः ॥ $104_{7}$ ॥
न्यायागतानां द्रव्याणां तीर्थे[1]) संप्रतिपादनम् ।
कामाननभिसंधाय यजते च ददाति च, ॥ $104_{8}$ ॥
स दानफलमाप्नोति तच्च दानं सुखोदयम्, ।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ॥ $104_{9}$ ॥
तपसा तु सुतप्तेन[1]) लोकान् विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ॥ $104_{10}$ ॥
दानाच्छ्रेयस्तथा यज्ञो, यज्ञाच्छ्रेयस्तथा तपः, ।
सत्यं तु तपसः श्रेयस्त[1]स्माज्ज्ञानं गुरु स्मृतम् ॥ $104_{11}$ ॥
श्रूयन्ते[1]) हि तपःसिद्धाः क्ष[2]त्रोपेता द्विजातयः ।
विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः ॥ $104_{12}$ ॥
काश्य[1]श्चे पुरुकुत्सश्च शलो गृत्समदः प्रभुः[2]) ।
आर्ष्टिषेणोऽजमीढश्च भार्गव्योम[3]स्तथैव च ॥ $104_{13}$ ॥
काक्षीवां[1]श्चैवौशिजश्च[2]) *नृपाश्च शिशिरस्तथा*[3]) ।
रथान्तरः शौनक[4]श्च विष्णुवृद्धादयो नृपाः ॥ $104_{14}$ ॥
क्ष[1]त्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः, ।
एते राजर्षयः सर्वे सिद्धिं सु[2]महतीं गताः ॥ $104_{15}$ ॥

अत ऊर्ध्वं प्रवक्ष्यामि आयो[1]र्वंशं म[2]हात्मनः ॥ 105 ॥

---

$104_{7}$ = Bḍ. II. 66.82; Vā. 91.110. 1) Bḍ. -ष्टं कर्मणा ।
$104_{8}$ = Bḍ. II. 66.83; Vā. 91.111. 1) Bḍ. -र्थं- ।
$104_{9}$ = Bḍ. II. 66.84; Vā. 91.112.
$104_{10}$ = Bḍ. II. 66.85[a] = a; Vā. 91.113. 1) Vā. सुगुप्तेन ।
$104_{11}$ = Bḍ. II. 66.85[b] = b; Vā. 91.114. 1) Vā. संन्यासस्तपसः श्रेयांस्त- ।
$104_{12}$ = Bḍ. II. 66.86; Vā. 91.115. 1) Bḍ. श्रूयते । 2) Vā. क्षा- ।
$104_{13}$ = Bḍ. II. 66.87; Vā. 91.116. 1) Vā. कपे- । 2) Vā. सत्यश्चानृहवानृथुः । 3) Vā. भागान्योऽन्य- ।
$105_{14}$ = Bḍ. II. 66.88; Vā. 91.117. 1) Vā. कक्षीव- । 2) Vā. -श्चैव शिजय- । 3) Vā. -जस्तथान्ये च महारथाः । 4) Vā. रथीतरश्च रुद्र- ।
$104_{15}$ = Bḍ. II. 66.89; Vā. 91.118[b]. 1) Vā. क्षा- । 2) Bḍ. तु ।

105 = Bḍ. II. 66.90; Br. 10.68[b]; H. 1474; Vā. 91.118[c]. 1) Vā. अयो- । 2) Br. H. वंशमायोर्म- ।

## C.

( Bḍ. II. 67.1—105; Br. 11.1—26, 32—61; 13.64^b—79; H. 1475—1512, 1518—1598; 1734^b—1754^a; Vā. 92.1—99; Cp. A. 274.16—19; Bhg. IX. 17.1—16^a; Ga. 139.7^b—14; Kū. 22.3; L. 66.59—60^a; Vi. IV. 8.1—9.7. )

आयोः पुत्रास्तथा[1]) पञ्च
सर्वे वीरा महारथाः ।

| आयोः[1]) पुत्रा महात्मानः[2])
| पञ्चैवासन् महाबलाः[3]) ।

स्वर्भानुतनयायां च[1]) प्रभायां जज्ञिरे[2]) नृपाः[3]) ॥ 1 ॥

नहुषः प्रथमस्तेषां[1]), क्षत्रवृद्धस्त[2]तः स्मृतः[3]) ।
रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुताः ॥ 2 ॥

क्षत्र[1]वृद्धात्मजस्तत्र[2]) सुन[3]होत्रो महायशाः ।
सुन[3]होत्रस्य दायादास्त्रयः परमधार्मिकाः ॥ 3 ॥

काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः ।
पुत्रो गृत्समदस्यापि शुनको, यस्य शौनकः ॥ 4 ॥

ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ।

| एतस्य वंशे संभूता विचित्रैः कर्मभिर्द्विजाः ।

शलात्मजो ह्यार्ष्टिषेणस्त[1]नय[2]स्तस्य काश्यकः[3]) ॥ 5 ॥

| शौनकाश्चार्ष्टिषेणाश्च क्षत्रो[1]पेता द्विजातयः ।

काशस्य[1]) काशिपो[2]) राजा[3]) पुत्रो[4]) दीर्घतपास्तथा, ।
धन्व[5]स्तु[6]) दीर्घतपसो, विद्वान्[7]) धन्वन्तरिस्ततः[8]) ॥ 6 ॥

---

1^a = Br. 11.1^a; H. 1475^a. 1) Br. –त्राश्च ते ।

| 1^a = Bḍ. II. 67.1^a; Kū. 22.3^a; L. 66.59^a; Vā. 92.1^a. 1) Vā. एते । 2) Kū. L. आयुपस्तनया वीराः; Vā. –त्मनः । 3) Kū. L. महौजसः ।

1^b = Bḍ. II. 67.1^b; Br. 11.1^b; H. 1475^b; Kū. 22.3^b; L. 66.59^b; Vā. 92.1. 1) Bḍ. L. तें; Kū. वै; Vā. –तनया विप्राः । 2) Kū. –यामिति नः । 3) H. नृप; Kū. श्रुतम् ।

2 = Bḍ. II. 67.2; Br. 11.2; H. 1476; Kū. 22.4 = a; L. 66.60^a = a; Vā. 92.2^a = a. 1) Br. H. –मं जज्ञे । 2) Br. H. वृद्धशर्मा त–; Kū. L. धर्मज्ञो लोक–; Vā. पुत्रधर्मा त– । 3) Br. H. t. परम् ; Kū. L. –विश्रुतः ।

3 = Bḍ. II. 67.3; Br. 11.32; H. 1518; Vā. 92.2^b, 3^a. 1) Vā. धर्म– । 2) Bḍ. Vā. –जश्चैव । 3) Vā. T. सुत– ।

4 = Bḍ. II. 67.4; Br. 11.33; H. 1519; Vā. 92.3^b, 4^a.

5^a = Bḍ. II. 67.5^a; Br. 11.34^a; H. 1520^a; Vā. 92.4^b.

| 5^b = Bḍ. II. 67.5^b; Vā. 92.5^a.

5^b(c) = Bḍ. II. 67.6^a; Br. 11.34^b; H. 1520^b; Vā. 92.5^b. 1) Br. –ज आर्ष्टिसेनस्त–; H. –जश्चार्ष्टिषेण– । 2) Bḍ. –नः शिशिर–; Vā. –णश्चरन्त– । 3) Bḍ. Vā. चात्मनः; Br. काश्यपः ।

| 6^a = Bḍ. II. 67.6^b; Vā. 92.6^a. 1) Vā. क्षात्रो– ।

6^ab(bc) = Bḍ. II. 67.7; Br. 11.35; 13.64^b, 65^a; H. 1521, 1734^b, 1735^a; Vā. 92.6^b, 7^a. 1) Bḍ. H. 1521 काश्यस्य; H. 1734^b काशेस्तु; Br. 13.64^b काशिकस्य । 2) H. 1521 काश्यपः; H. 1734, Vā. काशयो । 3) Br. 13.64^b तु काशेयः; H. 1521 पुत्रो; H. 1734^b राजन् ; Vā. राष्टः । 4) H. 1521 राजा । 5) Br. 11.35 T. धनुस् ; Br. 13.65^a; H. 1735^a बभूव; Vā. धर्मश् । 6) Bḍ. Vā. च । 7) H. 1521 धन्वाद् । 8) Br. 13.63^a, H. –रिः सुतः ।

तपसोऽन्ते सुमहतो[1]) जातो वृद्धस्य[2]) धीमतः।
पुनर्धन्वन्तरिर्देवो
मानुष्वेष्विह जज्ञिवान्[1]) ॥ 7 ॥

अथैनं ऋषयः प्रोचुः
सूतं वाक्यमिदं[1]) पुनः ॥ 7 ॥

जनमेजय उवाच :

कथं[1]) धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान्,।
एतद्वेदितुमिच्छामस्त[2]न्नो[3]) ब्रूहि यथातथम्[4])!॥ 8 ॥

सूत ( वैशम्पायन ) उवाच :

धन्वन्तरेः संभवोऽयं श्रूयतामिह वै द्विजाः[1])!।
स सम्भूतः समुद्रात् तु[1]) मध्यमानेऽमृते पुरा ॥ 9 ॥

उत्पन्नः कलशात्[1]) पूर्वं सर्वतश्च[2]) श्रियावृतः।
अभ्यसन्[3]) सिद्धिकार्यं[4]) हि[5]) विष्णुं दृष्ट्वा हि तस्थिवान्[6])॥ 10 ॥

अब्ज[1]स्त्वमिति होवाच, तस्मादब्ज[2]स्तु स स्मृतः।
अब्जः[3]) प्रोवाच विष्णुं वै[4]) तनयोऽस्मि 'तव प्रभो,॥ 11 ॥

विधत्स्व भागं स्थानं च मम लोके सुरोत्तम[1])!।
एवमुक्तः स दृष्ट्वा तु[2]) तथ्यं प्रोवाच तं[3]) प्रभुः॥ 12 ॥

कृतो यज्ञविभागो हि[1]) यज्ञियै[2]र्हि सुरैः पुरा[3]),।
देवेषु[4]) विनि[5]युक्तं च विधिहोत्रं महर्षिभिः॥ 13 ॥

---

7[a] = Bd. II. 67.8[a]; Br. 11.36[a]; H. 1522[a]; Vā. 92.7[b]. 1) Bd. महातेजा; Vā. –सा सुमहातेजा। 2) H. धन्वस्य।
7[b] = Br. 11.36[b]; H. 1522[b]. 1) Br. जन्मनि।

| 7[b] = Bd. II. 67.8[b]; Vā. 92.7[c]. 1) Vā. T. –मिमं।

8 = Bd. II. 67.9; H. 1523; Vā. 92.8. 1) Bd. कश्च। 2) H. –च्छामि त–। 3) H. –न्मे; Vā. –स्ततो। 4) Bd. परंतप; Vā. प्रियं तथा।

9 = Bd. II. 67.10; H. 1524; Vā. 92.9. 1) H. –तां भरतर्षभ। 2) Bd. Vā. समुद्रान्ते।

10 = Bd. II. 67.11; H. 1525; Vā. 92.10[ab]. 1) H. कलसात्; Vā. सकलात्। 2) H. –तस्तु। 3) Bd. Vā. V. सद्यः Vā. T. सर्व–। 4) Bd. संसिद्धकार्यं; Vā. –सिद्धकार्यं। 5) Bd. Vā. तं। 6) Bd. दृष्ट्वा विष्णुरवस्थितः; Vā. दृष्ट्वा विष्टम्भितः स्थितः।

11 = Bd. II. 67.12; H. 1526; Vā. 92.10[c], 11[a]. 1) Vā. T. अज–। 2) T. –दज–। 3) Bd. अजः। 4) Vā. तं।

12 = Bd. II. 67.13, H. 1527; Vā. 92.11[b], 12[a]. 1) H. लोकेश्वरेश्वर। 2) H. वै। 3) Bd. Vā. स।

13 = Bd. II. 67.14; H. 1528; Vā. 92.12[b], 13[a]. 1) Bd. Vā. –गस्तु। 2) Bd. दैतेयै–। 3) Bd. Vā. –रैस्तथा। 4) Bd. Vā. वेदेषु। 5) Bd. Vā. विधि–।

न शक्यमिह होमं[1]) वै तुभ्यं[2]) कर्तुं कदाचन।
अर्वाग् भू[3]तोऽसि देवानां[4]) पुत्रस्त्वं हि महीश्वरः[5]), ॥ 14 ॥

द्वितीयायां तु संभूत्यां लोके ख्यातिं गमिष्यसि[1]), ।
अणिमादियुता सिद्धि[2]र्गर्भस्थस्य[3]) भविष्यति[4]) ॥ 15 ॥

तेनैव त्वं[1]) शरीरेण देवत्वं प्राप्स्यसि[2]) प्रभो, ।
चरुम[3]न्त्रैश्[4]तै[4]र्जप्यै[5]र्यक्ष्यन्ति[6]) त्वां द्विजातयः ॥ 16 ॥

अष्टधा[1]) त्वं पुनश्चैव आ[2]युर्वेदं विधास्यसि, ।
अवश्यम्भा[3]वी ह्यर्थोऽयं प्राग्दृष्ट[4]स्त्वब्जयोनिना ॥ 17 ॥

द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः ।
इमं[1]) तस्मै वरं दत्त्वा विष्णुरन्तर्दधे पुनः[2]) ॥ 18 ॥

द्वितीये द्वापरे प्राप्ते सौनहोत्रः[1]) स काशिराट्[2]) ।
पुत्रकामस्तपस्तेपे नृपो दीर्घतपस्तथा[3]) ॥ 19 ॥

| प्रपद्ये देवतां तां तु, यामे पुत्रं प्रदास्यति; ।

अब्जं[1]) देवं तु[2]) पुत्रार्थे ह्याराधयिषुर्नृ[3]पः ॥ 20 ॥

ततस्तुष्टः स भगवान्,
अब्जः प्रोवाच ते नृपम् ।
यदिच्छसि वरं, ब्रूहि,
तत्ते दास्यामि सुव्रत ! ॥ 21 ॥

वरेणच्छन्दयामास
प्रीतो[1]) धन्वन्तरिर्नृपम् ॥ 21 ॥

नृप उवाच :

भगवन्, यदि तुष्टस्त्वं, पुत्रो मे ख्यातिमान्[1]) भव[2]) ।
तथेति समनुज्ञाय तत्रैवान्तरधीयत[3]) ॥ 22 ॥

तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।

---

14 = Bḍ. II. 67.15; H. 1529; Vā. 92.13^b, 14^a. 1) H. -मुपह्योमो; Vā. -ह होमो । 2) Vā. तुल्यं । 3) Bḍ. Vā. -र्वाक् सू- । 4) Bḍ. Vā. हे देव । 5) Bḍ. तव मन्त्रं न वै प्रभो; Vā. नाममन्त्रोऽसि वै प्रभो ।

15 = Bḍ. II. 67.16; H. 1530; Vā. 92.14^b, 15^a. 1) H. -ष्यति । 2) Bḍ. -युतां सिद्धिं; H. -मादिश्च ते सिद्धि- । 3) Bḍ. गतस्तत्र । 4) Bḍ. -ष्यसि ।

16 = Bḍ. II. 67.17; H. 1531; Vā. 92.15^bc. 1) Bḍ. एतेनैव; Vā. तेनैव च । 2) H. -प्स्यसे । 3) Bḍ. चातुर्म- । 4) Bḍ. Vā. T. -र्घृतै- । 5) Bḍ. -र्गन्ध्यै-; Vā. T. -र्गन्धै-; V. -र्जम्मै- । 6) Bḍ. -न्ते ।

17 = Bḍ. II. 67.18; H. 1532; Vā. 92.16. 1) Bḍ. अथ वा; Vā. अथ च । 2) Bḍ. -श्च ह्या-; H. -श्चैवमा- । 3) Bḍ. अवश्यभा- । 4) Vā. T. प्राक्सृष्ट- ।

18 = Bḍ. II. 67.19; H. 1533; Vā. 92.17. 1) Bḍ. Vā. तस्मात् । 2) Bḍ. Vā. ततः ।

19 = Bḍ. II. 67.20; H. 1534; Vā. 92.18. 1) H. -त्रिः । 2) Vā. प्रकाशिराट् । 3) H. धान्वो दीर्घं महत्तदा ।

20 = Bḍ. II. 67.21^a = b; H. 1535; Vā. 92.19^a = b. 1) Vā. A. अजं । 2) H. स । 3) H. तदाराधितवान् नृ- ।

21 = H. 1536. | 21 = Bḍ. II. 67.21^b; Vā. 92.19^b. 1) Bḍ. ततो ।

22 = Bḍ. II. 67.22; H. 1537; Vā. 92.20. 1) Bḍ. गतिमान्; Vā. धृतिमान् । 2) Bḍ. भवेः । 3) Bḍ. -न्तरधात् प्रभुः ।

काशिराजो महाराजः सर्वरोगप्रणाशनः ॥ 23 ॥

आयुर्वेदं भरद्वाजात्[1]) प्राप्येह[2]) सभिषक्क्रियम्[3]) ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥ 24 ॥

धन्वन्तरेस्तु तनयः[1]) केतुमानिति विश्रुतः, ।
अथ[2]) केतुमतः पुत्रो *वीरो*[3]) भीमरथः *स्मृतः*[4]) ॥ 25 ॥

पुत्रो भीमरथस्यापि
दिवोदासः प्रजेश्वरः, ।
दिवोदासस्तु धर्मात्मा
वाराणस्यधिपोऽभवत्[1]) ॥ 26 ॥

पुत्रो भीमरथस्यापि
जातो धीमान् प्रजेश्वरः ।
दिवोदास इति ख्यातो,
वाराणस्यधिपोऽभवत् ॥ 26 ॥

एतस्मिन्नेव काले तु पुरीं वाराणसीं *पुरा*[1]) ।
शून्यां निवेशयामास क्षेमको नाम राक्षसः ॥ 27 ॥

शप्ता हि सा *मतिमता*[1]) निकुम्भेन महात्मना ।
शून्या वर्षसहस्रं वै भवित्रीति[2]) न *संशयः*[3]) ! ॥ 28 ॥

तस्यां तु[1]) शप्तमात्रायां दिवोदासः प्रजेश्वरः ।
विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत् ॥ 29 ॥

---

ऋषय ऊचुः ( जनमेजय उवाच ) :

वाराणसीं निकुम्भस्तु किमर्थं[1]) शप्तवान् *पुरा*[2]) ।
निकुम्भः कश्च[3]) धर्मात्मा, सिद्धि[4]क्षेत्रं शशाप यः ? ॥ 30 ।

सूत ( वैशम्पायन ) उवाच :

दिवोदासस्तु राजर्षिर्नगरीं प्राप्य पार्थिवः ।
वसति *स्म*[1]) महातेजाः स्फीतायां वै[2]) नराधिपः ॥ 31 ॥

एतस्मिन्नेव काले तु कृतदारो महेश्वरः, ।

---

23 = Bḍ. II. 67.23; Br. 11.37; H. 1538; Vā. 92.21.

24 = Bḍ. II. 67.24; Br. 11.38; H. 1539; Vā. 92.22. 1) Vā. –द्वाज– । 2) Vā. –श्वकार । 3) Br. स भिषक्क्रियः ।

25 = Bḍ. II. 67.25; Br. 11.39, 13.65$^{b}$, 66$^{a}$; H. 1540, 1735$^{b}$, 1736$^{a}$; Vā. 92.23$^{ab}$. 1) Bḍ. Vā. –न्तरिसुतश्चापि । 2) Br. 13.66$^{a}$ T. तथा । 3) Bḍ. जज्ञे; Br. 13.66$^{a}$; H. 1736$^{a}$ विद्वान् ; Vā. विभो । 4) Bḍ. Vā. –थो नृपः ।

26 = Br. 11.40, 13.66$^{b}$=a$^{I}$b$^{II}$ (67$^{a}$); H. 1541, (1736$^{b}$). 1) Br. 13.67$^{a}$; H. 1736$^{b}$ दिवोदास इति ख्यातः सर्वक्षत्र– ( H. रक्षः ) –प्रणाशनः ।

26 = Bḍ. II. 67.26; Vā. 92.23$^{c}$ = b.

27 = Bḍ. II. 67.27; Br. 11.41; H. 1542, 1737; Vā. 92.24. 1) Br. द्विजः; H. नृप ।

28 = Bḍ. II. 67.28; Br. 11.42; H. 1543, 1738; Vā. 92.25. 1) Bḍ. Vā. पूरी पूर्वं । 2) Br. –त्री तु । 3) H. 1738$^{b}$ नराधिप; Bḍ. Va. पुनः पुनः ।

29 = Bḍ. II. 67.29; Br. 11.43; H. 1544, 1739; Vā. 92.26. 1) Br. हि ।

---

30 = Bḍ. II. 67.30; H. 1547; Va. 92.27. 1) Bḍ. Va. किमर्थं तां निकुम्भः । 2) H. प्रभुः । 3) Bḍ. Va. –श्चापि । 4) Bḍ. Va. –द्ध– ।

31 = Bḍ. II. 67.31; H. 1548; Va. 92.28. 1) Bḍ. Va. –तेस । 2) H. तु ।

देव्याः स प्रियकामस्तु न्यवसच्छ्व[1]शुरान्तिके ॥ 32 ॥

देवाज्ञया पार्षदा ये[1]) विश्व[2]रूपास्तपोधनाः ।
पूर्वोक्तैः रूपविशेषैस्तो[3]षयन्ति स्म पार्वतीम्[4]) ॥ 33 ॥

हृष्यते[1]) तैर्म[2]हादेवी[3]), मेना नैव तु हृष्यति[4]), ।
जुगुप्सते सा नित्यं[5]) वै[6]) देवं देवीं[7]) तथैव च[8]) ॥ 34 ॥

सपार्षदस्त्व[1]नाचारस्तव भर्ता महेश्वरः ।
दरिद्रः सर्वदैवासौ, शीलं तस्य न वर्तते[2]) ! ॥ 35 ॥

मात्रा तथोक्ता वचसा[1]) स्त्रीस्वभावान्न चक्षमे[2]), ।
स्मितं कृत्वा तु वरदा भव[3]पार्श्वमथागमत्, ॥ 36 ॥

विवर्ण[1]वदना देवी महादेवमभाषत ।
नेह वत्स्याम्यहं देव, नय मां स्वं निवेशनम् ! ॥ 37 ॥

तथा कर्तुं[1]) महादेवः सर्वाँल्लोकानवैक्षत[2]) ।
वासार्थं, रोचयामास पृथिव्यां तु द्विजोत्तमाः[3]) ॥ 38 ॥

वाराणस्यां महादेवः[1]) सिद्धि[2]क्षेत्रं महेश्वरः ।
दिवोदासेन तां ज्ञात्वा निविष्टां नगरीं भवः ॥ 39 ॥

पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत्[1]) ।
गणेश्वर[2]) पुरीं गत्वा शून्यां वाराणसीं कुरु ! ॥ 40 ॥

मृदुनैवा[1]भ्युपायेन, अतिवीर्यः स पार्थिवः !
ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं तदा[2]) ॥ 41 ॥

स्वप्ने सं[1]दर्शयामास मङ्कनं[2]) नाम नापितम्[3]) ।
श्रेयस्तेऽहं करिष्यामि, स्थानं मे रचया[4]नघ, ॥ 42 ॥

---

32 = Bḍ. II. 67.32; H. 1549; Vā. 92.29. 1) Bḍ. वसन् वै श्व–; Vā. वसानः श्व– ।

33 = Bḍ. II. 67.33; H. 1550; Vā. 92.30. 1) Bḍ. Vā. परिषदा । 2) H. त्वभि– । 3) Bḍ. पूर्वोक्तरूपसंवेषस्तो–; H. पूर्वोक्तैरुपदेशैश्च तो– । 4) Bḍ. Vā. महेश्वरीम् ।

34 = Bḍ. II. 67.34; H. 1551; Vā. 92.31. 1) Vā. T. –ति । 2) H. वै म– । 3) Bḍ. Vā. –देवो । 4) Bḍ. तुष्यति; H. प्रहृष्यति । 5) H. –प्सत्यसकृत् तां । 6) Vā. च । 7) H. देवीं देवं । 8) H. सा ।

35 = Bḍ. II. 67.35; H. 1552; Vā. 92.32. 1) Bḍ. Vā. मम पार्श्वे त्व– । 2) Bḍ. सर्वथैवेह हा कष्टं लज्जते न वै; Vā. सर्व एवेह अक्लिष्टं लडतेऽनघे ।

36 = Bḍ. II. 67.36; H. 1553; Vā. 92.33. 1) H. वरदा । 2) H. –वाच्च चुक्रुधे; Vā. –न्न चाक्षमत् । 3) Bḍ. हर–; Vā. हय– ।

37 = Bḍ. II. 67.37; H. 1554; Vā. 92.34. 1) Bḍ. Vā. विषण्ण– ।

38 = Bḍ. II. 67.38; H. 1555; Vā. 92.35[ab]. 1) Bḍ. Vā. तथोक्तस्तु । 2) Bḍ. –कान् निरीक्ष्य ह; Vā. –कानवेक्ष्य ह । 3) H. कुरुनन्दन ।

39 = Bḍ. II. 67.39; H. 1556; Vā. 92.35[c], 36[a]. 1) Bḍ. Vā. –णसीं महातेजाः । 2) Bḍ. Vā. –द्ध– ।

40 = Bḍ. II. 67.40; H. 1557; Vā. 92.36[b], 37[a]. 1) Bḍ Vā. पार्श्वस्थं स समाहूय गणेशं क्षेममब्रवीत् (Vā. क्षेमकं ब्रवीत्) । 2) H. राक्षसेश ।

41 = Bḍ. II. 67.41; H. 1558; Vā. 92.37[b], 38[a]. 1) Bḍ. Vā. मृदुना चा– । 2) H. पुरा ।

42 = Bḍ. II. 67.42; H. 1559; Vā. 92.38[b], 39[a]. 1) H. नि– । 2) H. कण्डुकं । 3) Bḍ. नामतो द्विजम् । 4) Bḍ. Vā. रोचया– ।

मद्रूपां प्रतिमां कृत्वा नगर्यन्ते *निवेशय*[1]) ! ।
ततः[2]) स्वप्ने *यथादृष्टं*[3]), सर्वं कारितवान् *द्विजाः*[4]) ॥ 43 ॥

*नगरीद्वार्यनुज्ञाप्य*[1]) राजानं तु[2]) यथाविधि ।
*पूजा तु महती चैव*[3]) नित्यमेव *प्रयुज्यते*[4]) ॥ 44 ॥

गन्धैर्धूपैश्च माल्यै[1]श्च प्रो[2]क्षणीयैस्तथैव च ।
अन्नपानप्रयोगै[3]श्च अ[4]त्यद्भुतमिवाभवत् ॥ 45 ॥

एवं संपूज्यते तत्र नित्यमेव गणेश्वरः, ।
ततो वर्षसहस्राणि *नागराणां*[1]) प्रयच्छति ॥ 46 ॥

पुत्रान् हिरण्य*मायूंषि*[1]) सर्व[2]कामांस्तथैव च ।
राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता, ॥ 47 ॥

पुत्रार्थमागता साध्वी राज्ञा देवी[1]) प्रचोदिता ।
पूजां तु विपुलां कृत्वा देवी पुत्रम[2]याचत ॥ 48 ॥

पुनः पुनर*थागत्य*[1]) बहुशः पुत्रकारणात् ।
न प्रयच्छति पुत्रांस्तु[2]) निकुम्भः कारणेन तु[3]) ॥ 49 ॥

| | |
|---|---|
| राजा तु यदि नः क्रुध्येत्, | राजा यदि तु क्रुध्येत[1]), |
| कार्यसिद्धिस्ततो भवेत्; । | ततः किञ्चित् प्रवर्तते ; । |

अथ दीर्घेण कालेन क्रोधो राजानमाविशत् ॥ 50 ॥

भूत एष महाद्वारि[1]) नागराणां प्रयच्छति ।
प्रीतो वरान् *वै*[2]) शतशो, *न किंचिन्नः*[3]) प्रयच्छति ! ॥ 51 ॥

मामकैः पूज्यते नित्यं नगर्यां *मम चैव तु*[1]) ।
*स याचितश्च बहुशो*[2]) देव्या मे पुत्र[3]कारणात् ॥ 52 ॥

---

43 = Bḍ. II. 67.43; H. 1560; Va. 92.39[b], 40[a]. 1) H. तथैव च । 2) Bḍ. Va. तथा । 3) H. यथोद्दिष्टं । 4) Bḍ. –जः H. नृप ।

44 = Bḍ. II. 67.44; H. 1561; Va. 92.40[b], 41[a]. 1) H. पुरीद्वारे तु विज्ञाप्य । 2) H. च । 3) H. पूजां च महतीं तत्र । 4) H. –मेवाप्रयोजयत् ।

45 = Bḍ. II. 67.45; H. 1562; Va. 92.41[b], 42[a]. 1) H. –न्धैश्च धूपमाल्यै– । 2) Bḍ. Va. प्रे– । 3) Bḍ. Va. अन्न-प्रदानयुक्तै– । 4) Bḍ. ह्य– ।

46 = Bḍ. II. 67.46; H. 1563; Va. 92.42[b], 43[a]. 1) H. –स्रं तु नगर्यां सं–; Va. नगराणां ।

47 = Bḍ. II. 67.47; H. 1564; Va. 92.43[b], 44[a]. 1) H. –मायुश्च । 2) H. सर्वान् ।

48 = Bḍ. II. 67.48; H. 1565; Va. 92.44[b], 45[a]. 1) H. देवी साध्वी राज्ञा । 2) Bḍ. Va. –त्रान– ।

49 = Bḍ. II. 67.49; H. 1566; Va. 92.45[b], 46[a]. 1) Va. –म्य । 2) H. –त्रं हि । 3) H. हि ।

50[a] = H. 1567[a].

50[a] = Bḍ. II. 67.50[a]; Va. 92.36[b]. 1) Bḍ. क्रुध्यते यदि राजा तु ।

50[b] = Bḍ. II. 67.50[b]; H. 1567[b]; Va. 92.47[a].

51 = Bḍ. II. 67.51; H. 1568; Va. 92.47[b], 48[a]. 1) Bḍ. Va. भूतं त्विदं महद् द्वारि; Va. T. महाद्वारि । 2) Bḍ. Va. प्रीत्या वरांश्च । 3) H. मम किं न; Va. –न्न ।

52 = Bḍ. II. 67.52; H. 1569; Va. 92.48[b], 49[a]. 1) H. –र्यां मे सदैव हि । 2) H. विज्ञापितो मयात्यर्थं; Va. तत्रार्चितश्च बहुशो । 3) Va. तत्र ।

न ददाति च पुत्रं मे कृतघ्नो बहुभोजनः[1]) ।
अतो[2]) नार्हति पूजां तु[3]) मत्सकाशाद् विशेषतः[4]), ॥ 53 ॥

तस्मात् तु नाशयिष्यामि तस्य स्थानं[1]) दुरात्मनः ।
एवं तु स[2]) विनिश्चित्य दुरात्मा राजकिल्बिषी ॥ 54 ॥

स्थानं गणपतेस्तस्य नाशयामास दुर्मतिः ।
भग्नमायतनं दृष्ट्वा राजानमशपत्[1]) प्रभुः ॥ 55 ॥

यस्मादनपराधं मे[1]) त्वया स्थानं विनाशितम् ।

पुरी शून्या तथाकस्मात्
तव नूनं भविष्यति ! ॥ 56 ॥

| अकस्मात् तु पुरी शून्या
| भवित्री ते नराधिप ॥ 56 ॥

ततस्तेन तु शापेन शून्या वाराणसी तदा ।
शप्त्वा पुरीं निकुम्भस्तु महादेवमथागमत्[1]) ॥ 57 ॥

| अकस्माच्च पुरी सा तु विद्रुता सर्वतोदिशम् ।

तस्यां पुर्यां ततो[1]) देवो निर्ममे पदमात्मनः[2]), ।

रमते तत्र वै देवो
रममाणो गिरेः सुताम् ॥ 58 ॥

| तुल्यां देवविभूत्या तु[1])
| देव्याश्चैव महामनाः[2]) ॥ 58 ॥
| रमते तत्र वै <देवी
| रममाणं[1]) महेश्वरम्[2]) ।
| न रतिं तत्र वै>देवी
| ऐ[3]श्वर्यात् सा तु विस्मिता[4]) ॥ $58_1$ ॥
| देव्याः[1]) क्रीडार्थमीशानो
| <देवारण्यमथानयत्, ।
| रमते तत्र वै देवी
| रममाणा महेश्वरम् ॥ $58_2$ ॥

---

53 = Bḍ. II. 67.53; H. 1570; Vā. 92.49[b], 50[a]. 1) H. –न्नः केन हेतुना । 2) H. ततो । 3) Bḍ. पूजा तु; H. सत्कारं । 4) Bḍ. Vā. कथंचन ।
54 = Bḍ. II. 67.54; H. 1571; Vā. 92.50[b], 51[a]. 1) H. स्थानमस्य । 2) H. स तु ।
55 = Bḍ. II. 67.55; H. 1572; Vā. 92.51[b], 52[a]. 1) Vā. –मगमत् ।
56[a] = Bḍ. II. 67.56[a]; H. 1573[a]; Vā. 92.52[b]. 1) Bḍ. –स्माद् विनापराधं मे; H. –स्मादनपराधस्य ।
56[b] = H. 1573[b].
| 56[b] = Bḍ. II. 67.56[b]; Vā. 92.53[a].
57 = Bḍ. II. 67.57; H. 1574; Vā. 92.53[b], 54[a]. 1) Bḍ. Vā. –मथानयत् ।
| 58[a] = H. 1575[a].
58[a](b) = Bḍ. II. 67.58[a]; H. 1575[b]; Vā. 92.54[b]. 1) Bḍ. Vā. शून्यां पुरीं महा– । 2) Vā. T. परमात्मना; V. –नः ।
58[c] = H. 1576[a].
| 58[b] = Bḍ. II. 67.58[b]; Vā. 92.55[a]. 1) Vā. –त्यास्तु । 2) Vā. –हात्मनः ।
| $58_1$ = Bḍ. II. 67.59[a]; Vā. 92.55[b], 56[a]. 1) Vā. –णो । 2) Vā. –रः । 3) Bḍ. ह्रै– । 4) Vā. T. लभते गृहविस्मजा(या)त् ।
| $58_2$ = Bḍ. II. 67.59[bI=aI]; Vā. 92.56[bI]( ). 1) Bḍ. –व्या ।

न रतिं तत्र वै देवो
लभते गृहविस्मयात् ।
वसाम्यत्र न पुर्यां तु
देवी देवमथाब्रवीत् ॥ 59 ॥

| न रतिं तत्र वै देवी
| लभते गृहविस्मयात् , ।
| पुनर्यामीति तां देवीं>
| देवो वाक्यमथाब्रवीत् ॥ 59 ॥

नाहं वेश्म विमोक्ष्यामि अ[1]विमुक्तं हि मे गृहम् ।

| प्रहस्यैनामथोवाच
| अ[1]विमुक्तं हि मे गृहम् ।
| नाहं देवि गमिष्यामि
| त्वन्यत्रेदं विहाय वै[2]) ॥ 60 ॥
| [ मया सह रमस्वेह
| क्षेत्रे भामिन्यनुत्तमे । ]

नाहं तत्र गमिष्यामि
गच्छ देवि गृहं प्रति ! ।
प्रहस्योवाच भगवांस्
त्र्यम्बकस्त्रिपुरान्तकः ॥ 60 ॥

तस्मात् तद[1]विमुक्तं हि प्रोक्तं देवेन वै स्वयम् ।
एवं वाराणसी शप्ता अ[2]विमुक्तं च कीर्तितम्[3]) ॥ 61 ॥

यस्मिन् वसति वै[1]) देवः सर्वदेवनमस्कृतः ।
योगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ॥ 62 ॥

अन्तर्धानं कलौ याति तत्पुरं तु[1]) महात्मनः ।
अन्तर्हिते पुरे तस्मिन् पुरी सा[2]) वसते पुनः ।
एवं वाराणसी शप्ता निवेशं पुनरागता ॥ 63 ॥

---

| भद्रश्रेण्यस्य पूर्वं तु पुरी वाराणसी अ[1]भूत् ।
भद्रश्रेण्यस्य[2]) पुत्राणां शतमुत्तमधन्विनाम् ॥ 64 ॥
हत्वा निवेशयामास दिवोदासो नराधिपः[1]), ।
भद्रश्रेण्यस्य[2]) राज्यं तु[3]) हृतं[4]) ते[5]न बलीयसा ॥ 65 ॥

---

59 = H. 1576[b], 1577.

| 59 = Bḍ. II. 67.59[bII] = b[II]; Vā. 92( ), 56[bII].

60[a] = Bḍ. II. 67.60[a]; H. 1578[a]; Vā. 92.57[a]. 1) Bḍ. ह्य- ।

60[bc] = H. 1578[b], 1579[a].

| 60[bc] = Bḍ. II. 67.60[bc]; Vā. 92.57[b], 58[a]. 1) Bḍ. ह्य- ।
| 2) Vā. गच्छस्वेह वसाम्यहम् ।
| [ ] = Bḍ. 67.61[a].

61 = Bḍ. II. 67.61[b], 62[a]; H. 1579[b], 1580[a]; Vā. 92.58[b], 59[a]. 1) Bḍ. तद् ह्य- । 2) ह्य- । 3) Bḍ. कीर्तिता ।

62 = Bḍ. II. 67.62[b], 63[a]; H. 1580[b], 1581[a]; Vā. 92.59[bc]. 1) Bḍ. वसेद् भवो ।

63 = Bḍ. II. 67.63[b], 64; H. 1581[b], 1582; Vā. 92.60, 61[a]. 1) H. हि । 2) H. तु ।

---

64 = Bḍ. II. 67.65[a] = b; Br. 11.44; H. 1545, 1740[a] = b; Vā. 92.61[b]=b. 1) H. 1545 ह्य- । 2) Bḍ. -सेनस्य ।

65 = Bḍ. II. 67.65[b], 66[a]; Br. 11.45; H. 1546, 1740[b] = a; Vā. 92.62. 1) H. 1740[b] = -सः प्रजेश्वरः । 2) Bḍ. -सेनस्य । 3) Br. H. तद्राज्यं । 4) Bḍ. हृतं । 5) H. 1546 ये- ।

भद्रश्रेण्यस्य[1]) पुत्रस्तु दुर्दमो[2]) नाम विश्रुतः[3]) ।
दिवोदासेन बालेति घृणया स[4]) विसर्जितः ॥ 66 ॥

| हैहयस्य तु दायाद्यं हृ[1]तवान् वै महीपतिः, ।
| आजह्रे पितृदायाद्यं दिवोदास-हृतं बलात् ।
| भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ॥ $66_1$ ॥

दिवोदासाद् दृष[1]द्वत्यां[2]) वीरो जज्ञे[3]) प्रतर्दनः, ।
तेन पुत्रेण बालेन[4]) प्रहृतं तस्य वै पुनः[5]) ॥ 67 ॥

वैरस्यान्तं[1]) महाभागाः[2]) क्षत्रियेण[3]) विधित्सता[4]) ।
प्रतर्दनस्य पुत्रौ द्वौ वत्स-भर्गौ[5]) सुविश्रुतौ[6]) ॥ 68 ॥

वत्सपुत्रो ह्य[1]लर्कस्तु, संनतिस्तस्य चात्मजः ।

| अलर्कः काशिराज[1]स्तु ब्रह्मण्यः सत्यसंगरः, ।

अलर्कं प्रति राजर्षिं श्लोको गीतः[1]) पुरातनैः ॥ 69 ॥

षष्टिं[1]) वर्षसहस्राणि षष्टिं[1]) वर्षशतानि च ।
युवा रूपेण संपन्न आसीत् काशिकुलोद्वहः[2]) ॥ 70 ॥

लोपामुद्रा-प्रसादेन परमायुरवाप्तवान्[1]) ।

---

66 = Bḍ. II. 67.$66^{b}$, $67^{a}$; Br. 11.46; 13.$70^{b}$ = b; H. 1583; $1744^{a}$ = b; Vā. 92.63. 1) Bḍ. –सेनस्य । 2) Bḍ. दुर्मदो । 3) Bḍ. Vā. D. नामतः । 4) Br. 13.70 घृणयासौ; H. $1744^{a}$ सा ।

| $66_1$ = Br. 11.47, $48^{a}$; 13.69, $70^{a}$; H. 1584, $1585^{a}$, $1742^{b}$, 1743. 1) H. $1584^{a}$ कृ– ।

67 = Bḍ. II. 67.$67^{b}$, $68^{a}$; Br. 11.49; 13.$67^{b}$, $71^{b}$; H. 1586; $1741^{a}$, $1745^{a}$; Vā. 92.64. 1) H. दृश– । 2) Br. 13.$67^{b}$, H. $1741^{a}$ दिवोदासस्य पुत्रस्तु । 3) Br. 13.$67^{b}$; H. $1741^{a}$ राजा । 4) Br. 11.49 बालेन पुत्रेण; Br. 13.$71^{b}$ वालस्य; H. $1745^{a}$ –पु वालेपु । 5) Br. 11.49 p. तु पुनर्बलम् ; Br. 13.$71^{b}$ तस्य भो द्विजाः; H. $1745^{a}$ तस्य भारत ।

68 = Bḍ. II. 67.$68^{b}$, $69^{a}$; Br. 11.$48^{b}$, $50^{a}$; 13.$72^{a}$, $68^{a}$; H. $1587^{a}$, $1585^{b}$, $1745^{b}$, $1741^{b}$; Vā. 92.65. 1) Br. 11.$48^{b}$ –स्यान्तो । 2) Bḍ. H. महाराजा; Vā. महाराज्ञा; Br. 13.$72^{a}$ मुनिश्रेष्ठाः । 3) Bḍ. Vā. तदा तेन । 4) Br. 11.$48^{b}$ कृतश्चात्मीयतेजसा । 5) Bḍ. Vā. वत्सो गर्ग–; Br. 13.$68^{a}$, H. $1741^{b}$ वत्सो भार्गव; H. $1585^{b}$ –भार्गौ । 6) Bḍ. –श्च विश्रुतौ; Vā. –श्च विश्रुतः; Br. 13.$68^{a}$; H. $1741^{b}$ एव च ।

$69^{a}$ = Bḍ. II. 67.$69^{b}$; Br. 11.$50^{b}$; H. $1587^{b}$; Vā. 92.$66^{a}$. 1) H. –पुत्रस्त्व– ।

| $69^{b}$ = Br. 11.$51^{a}$; 13.$72^{b}$; H. $1588^{a}$, $1746^{a}$. 1) Br. 11.$51^{a}$. –र्पिस्तस्य पुत्रः ।

$69^{c}$ = Bḍ. II. 67.$70^{a}$; Br. 11.$51^{b}$; H. $1588^{b}$; Vā. 92.$66^{b}$. 1) Vā. T. –र्षीं( र्पिं )गीत श्लोकौ; V. श्लोकौ गीतौ । 2) Vā. पुरातनौ ।

70 = Bḍ. II. 67.$70^{b}$, $71^{a}$; Br. 11.52; 13.73; H. 1589; $1746^{b}$, $1747^{b}$; Vā. 92.$67^{ab}$; Vi. IV. $8^{a}$(b). 1) Bḍ. Br. 11.$52^{a}$; Vā. षष्टि– । 2) Bḍ. Vā. ह्यलर्कः काशिसत्तमः; Br. 11.$52^{b}$ –न्नः प्रागासीच्च कुलोद्वहः; Vi. अलर्कादपरो नान्यो बुभुजे मेदिनीं पुरा ।

$71^{a}$ = Bḍ. II. 67.$71^{b}$; Br. 11.$53^{a}$; 13.$74^{a}$; H. $1590^{a}$; $1748^{a}$; Vā. 92.$67^{c}$. 1) Br. 13.$74^{a}$, H. –रवाप सः ।

| तस्यासीत् सुमहद्राज्यं रूपयौवनशालिनः ॥ 71 ॥

शापस्यान्ते[1]) महाबाहुर्हं[2]त्वा क्षेमक-राक्षसम् ।
रम्यां *निवेशयामास*[3]) पुरीं वाराणसीं नृपः[4]) ॥ 72 ॥

संनतेरपि दायादः सुनीथो नाम धार्मिकः[1]) ।
सुनीथस्य तु दायादः क्षेमो नाम[2]) महा*यशाः*[3]) ॥ 73 ॥

क्षेमस्य[1]) केतुमान् पुत्रः[2]), सुकेतुस्तस्य चात्मजः[3]), ।
सुकेतु[4]तनयश्चापि धर्मकेतुरिति श्रुतः[5]) ॥ 74 ॥

धर्मकेतोस्तु[1]) दायादः सत्यकेतुर्महारथः, ।
सत्यकेतु-सुतश्चापि[2]) विभुर्नाम प्रजेश्वरः ॥ 75 ॥

*सुविभु*[1]स्तु विभोः पुत्रः, सुकुमारश्च *तत्सुतः*[2]), ।
सुकुमारस्य पुत्रस्तु धृष्टकेतुः[3]) सुधार्मिकः[4]), ॥ 76 ॥

धृष्टकेतोस्तु[1]) दायादो वेणुहोत्रः प्रजेश्वरः, ।
वेणुहोत्रसुतश्चापि *भार्गो*[2]) नाम प्रजेश्वरः[3]) ॥ 77 ॥

वत्सस्य[1]) वत्स[2]भूमिस्तु, *भार्गभूमि*[3]स्तु *भार्गवात्*[4]) ।
एते त्वङ्गिरसः पुत्रा |
जाता वंशेऽथ भार्गवे[1]), ॥ 78 ॥

---

| $71^b$ = Br. $11.53^b$; H. $1590^b$, $1747^a$.

72 = Bḍ. II. 67.72; Br. 11.54, $13.74^b$, $75^a$; H. 1591, $1748^b$, $1749^a$; Vā. 92.68. 1) Br. $13.74^b$, H. $1748^b$ वयसोऽन्ते । 2) Br. $13.74^b$ मुनिश्रेष्ठा ह्- । 3) Bḍ. Vā. –म्यामावासयामास । 4) Br. $11.54^b$, H. $1591^b$ पुनः ।

73 = Bḍ. II. 67.73; Br. 11.55, 13.($75^b$); H. 1592; (1749), $1750^a$; Vā. 92.69. 1) Br. $13.75^b$, H. $1749^b$ अलर्कस्य तु दायादः क्षेमको नाम धार्मिकः ( H. पार्थिवः ) । 2) Bḍ. क्षेमाख्यो नाम; H. क्षेम्यो नाम; Vā. सुकेतुर्नाम धार्मिकः । 3) Bḍ. धार्मिकः ।

74 = Bḍ. II. 67.74; Br. 11.56; $13.76^a$ = a; H. 1593, $1750^b$ = a; Vā. $92.70^a$ = b. 1) Br. $13.76^a$ क्षेमकस्य; H. $1650^b$ क्षेम्यस्य । 2) Br. $13.76^a$ तु पुत्रो वै । 3) Br. $13.76^a$, H. $1750^b$ –त्रो वर्षकेतुस्ततोऽभवत् । 4) Br. –तोस्त– । 5) Br. स्मृतः; Vā. श्रुतिः ।

75 = Bḍ. II. 67.75; Br. 11.57, $13.76^b$ = b; H. 1594, $1751^a$ = b; Vā. $92.70^b$, $71^a$. 1) H. –तोश्च । 2) Br. $13.76^b$ वर्षकेतोश्च दायादो; H. $1751^a$ –तोस्तु दायादो ।

76 = Bḍ. II. 67.76; Br. 11.58; 13.77; H. 1595, $1751^b$, $1752^a$; Vā. $92.71^b$, $72^a$. 1) Br. H. $1751^b$ आनर्त– । 2) Bḍ. Vā. –रस्ततः स्मृतः; Br. 13.77, H. $1751^b$ –रस्ततोऽभवत् । 3) Br. 13.77, H. $1752^a$ सत्यकेतु– । 4) Br. 13.77, H. $1752^a$ –र्महारथः; Vā. स धार्मिकः ।

77 = Bḍ. II. 67.77; Br. 11.59; H. 1596; Vā. $92.72^b$, $73^a$. 1) H. –तोश्च । 2) Bḍ. Vā. गार्ग्यो वै; Br. V. H. भर्गो । 3) Bḍ. Vā. विश्रुतः ।

$78^a$ = Bḍ. II. $67.78^a$; Br. $11.60^a$, $13.78^b$; H. $1597^a$, $1753^a$; Vā. $92.73^b$. 1) Bḍ. Vā. गार्ग्यस्य । 2) Bḍ. गर्ग–; Vā. गर्भ– । 3) Bḍ. वंशौ वत्सस्य; Vā. वत्स्यो वत्सस्य; Br. $13.78^b$ भर्ग–; H. $1597^a$ भृगु– । 4) Bḍ. Vā. धीमतः; Br. $11.60^a$ T. भार्गजः ।

$78^b$ = Br. $11.60^b$, $13.79^a$; H. $1597^b$, $1753^b$. 1) Br. |
11.60 भार्गव[illegible]

ब्राह्मणाः क्षत्रिया वैश्या-
स्त्रयः[1]) पुत्राः सहस्रशः[2]) ।

ब्राह्मणाः क्षत्रियाश्चैव
तयोः पुत्राः सुधार्मिकाः ।
विक्रान्ता बलवन्तश्च
सिंहतुल्य-पराक्रमाः ।

इत्येते काश्यपाः[1]) प्रोक्ता, रजेरपि[2]) निबोधत[3]) ! ॥ 79 ॥

रजिः पुत्रशतानीह
जनयामास पञ्च वै ।
राजेयमिति विख्यातं क्षत्रमिन्द्रभयावहम् ॥ 80 ॥

रजेः पुत्रशतान्यासन्
पञ्च वीर्यवतो भुवि ।

तदा[1]) दै[2]वासुरे युद्धे समुत्पन्ने[3]) सुदारुणे ।
देवाश्चैवासुराश्चैव पितामहमथाब्रुवन् ॥ 81 ॥

आवयोर्भगवान् युद्धे को विजेता[1]) भविष्यति, ।
ब्रूहि नः सर्वभूतेश[2]) श्रोतुमिच्छामहे[3]) वयम्[4]) ॥ 82 ॥

ब्रह्मोवाच :

येषामर्थाय संग्रामे रजिरात्तायुधः प्रभुः ।
योत्स्यते, ते विजेष्यन्ति[1]) त्रीँल्लोकान्, नात्र संशयः ॥ 83 ॥

यतो रजिर्धृतिस्तत्र,
श्रीश्च तत्र, यतो धृतिः, ।
यतो धृतिश्च श्रीश्चैव,
धर्मस्तत्र जयस्तथा ॥ 84 ॥
ते देवा[1]) दानवाः प्रीता
देवेनोक्ता रजिं तदा[2]) ।
अभ्ययुर्जयमिच्छन्तो
वृण्वानास्तं नरर्षभम् ; ॥ 85 ॥

रजिर्यतस्ततो लक्ष्मी-
र्यतो लक्ष्मीस्ततो धृतिः, ।
यतो धृतिस्ततो धर्मो,
यतो धर्मस्ततो जयः ॥ 84 ॥
ते[1]) देवा दानवाः सर्वे
ततः श्रुत्वा रजेर्जयम् ।
अभ्ययुर्जयमिच्छन्तः
स्तुवन्तो राजसत्तमम् ॥ 85 ॥

---

79[a] = Br. 11.61[a], 13.79[b]; H. 1598[a], 1754[a]. 1) Br. 13.79[b], H. 1754[a] –श्याः शूद्राश्च । 2) Br. 13.79[b] मुनिसत्तमः; H. 1754[a] भरतर्षभ ।

79[ab] = Bḍ. II. 67.78[b], 79[a]; Vā. 92.74.

79[b(c)] = Bḍ. II. 67.79[b]; Br. 11.61[b]; H. 1598[b]; Vā. 92.75[a]. 1) H. काशयः; Vā. कापा( श्य )पाः । 2) Br. H. नहुषस्य । 3) H. निबोध च ।

80[a] = Br. 11.3[a]; H. 1477[a].

80[a] = Bḍ. II. 67.80[a]; Vā. 92.75[b].

80[b] = Bḍ. II. 67.80[b]; Br. 11.3[b]; H. 1477[b]; Vā. 92.75[c].

81 = Bḍ. II. 67.81; Br. 11.4; H. 1478; Vā. 92.76. 1) Br. H. यत्र । 2) Br. H. दे– । 3) H. समुपोढे ।

82 = Bḍ. II. 67.82; Br. 11.5; H. 1479; Vā. 92.77. 1) Bḍ. Vā. विजेता को । 2) Bḍ. Vā. –लोकेश । 3) Br. H. –मिच्छाम । 4) Br. तत्त्वतः; H. ते वचः ।

83 = Bḍ. II. 67.83; Br. 11.6; H. 1480; Vā. 92.78. 1) Bḍ. –ष्यन्ते ।

84 = Br. 11.7; H. 1481.
85 = Br. 11.8; H. 1482. 1) H. देव– । 2) H. रजेर्जये ।

84 = Bḍ. II. 67.84; Vā. 92.79.
85 = Bḍ. II. 67.85; Vā. 92.80. 1) Vā. तद् ।

स हि स्वर्भानुदौहित्रः
प्रभायां समपद्यत ।
राजा परमतेजस्वी
सोमवंशविवर्धनः ॥ $85_1$ ॥

ते हृष्टमनसः सर्वे *रजिं वै*[1]) देवदानवाः[2]) ।
ऊचुरस्मज्जयाय त्वं गृहाण वरकार्मुकम् ! ॥ 86 ॥

अथोवाच रजिस्तत्र
तयोर्वै देवदैत्ययोः ।
अर्थज्ञः स्वार्थमुद्दिश्य
यशः स्वं च प्रकाशयन् ॥ $86_1$ ॥
यदि दैत्यगणान् सर्वा-
ञ्जित्वा वीर्येण वासवः[1]) ।
इन्द्रो भवामि धर्मेण[1]), ततो योत्स्यामि संयुगे[2]) ॥ 87 ॥

रजिरुवाच :
अहं जेष्यामि *भो दैत्या*[1])
देवान् शक्रपुरोगमान्, ।

देवाः प्रथमतो *भूयः*[1]) प्रतीयुर्हृष्टमानसाः ।
एवं यथेष्टं नृपते कामः संपद्यतां तव ! ॥ $87_1$ ॥
श्रुत्वासुरगणानां तु वाक्यं राजा रजिस्तदा ।
पप्रच्छासुरमुख्यांस्तु, यथा देवानपृच्छत ॥ $87_2$ ॥
दानवा दर्पसंपूर्णाः[1]) स्वार्थमेवावगम्य ह ।
प्रत्यूचुस्तं नृपवरं साभिमानमिदं वचः ॥ $87_3$ ॥

अस्माकमिन्द्रः प्रह्लादो, य[1]स्यार्थे विजयामहे, ।
अस्मिंस्तु समये[2]) राजंस्तिष्ठेथा[3]) देवनोदिते[4]) ॥ 88 ॥

स तथेति ब्रुवन्नेव देवैरप्यभिचोदितः[1]) ।
भविष्यसीन्द्रो जित्वेति[2]) देवैरुक्तस्तु *पार्थिवः*[3]) ॥ 89 ॥

जघान दानवान् सर्वान्, येऽवध्या[1]) वज्रपाणिनः[2]) ।

---

$85_1$ = Br. 11.9; H. 1483.

86 = Bḍ. II. 67.86; Br. 11.10; H. 1484; Vā. 92.81. 1) Bḍ. Vā. राजानं । 2) H. दैतेय-दानवाः ।

$86_1$ = Br. 11.11; H. 1485.

87[a] = Br. 11.12[a]; H. 1486[a]. 1) H. वासव ।

87[a] = Bḍ. II. 67.87[a]; Vā. 92.82[a]. 1) Vā. वो युद्धे ।

87[b] = Bḍ. II. 67.87[b]; Br. 11.12[b]; H. 1486[b]; Vā. 92.82[b]. 1) Bḍ. Vā. धर्मात्मा; H. धर्मेश । 2) Bḍ. योत्स्ये रणाजिरे ।

$87_1$ = Br. 11.13; H. 1487. 1) Br. विप्राः ।
$87_2$ = Br. 11.14; H. 1488.
$87_3$ = Br. 11.15; H. 1489. 1) H. दर्पपूर्णास्तु ।

88 = Bḍ. II. 67.88; Br. 11.16; H. 1490; Vā. 92.83. 1) Bḍ. Vā. –दस्त- । 2) Br. –रे । 3) Br. तिष्ठ त्वं । 4) Br. H. राजसत्तम ।

89 = Bḍ. II. 67.89; Br. 11.17; H. 1491; Vā. 92.84. 1) Bḍ. –भिनोदितः; Br. –तिचोदितः । 2) Br. जित्वैनं; H. जित्वैवं । 3) Bḍ. Vā. –रपि निमन्त्रितः ।

90 = Bḍ. II. 67.90; Br. 11.18; H. 1492; Vā. 92.85. 1) Vā. समक्षं । 2) Bḍ. –पाणयः ।

स विप्रनष्टां देवानां परमश्रीः श्रियं वशी ॥ 90 ॥

निहत्य दानवान् सर्वानाजहार रजिः प्रभुः ।
ततो[1]) रजि महावीर्यं[2]) देवैः सह शतक्रतुः ॥ 91 ॥

रजि[1]पुत्रोऽहमित्युक्त्वा पुनरेवात्रवीद् वचः ।
इन्द्रोऽसि तात[2]) देवानां सर्वेषां नात्र संशयः, ॥ 92 ॥

यस्याहमिन्द्रः[1]) पुत्रस्ते ख्यातिं यास्यामि कर्मभिः[2]) ।
स तु शक्र[3]वचः श्रुत्वा वञ्चितस्तेन मायया ॥ 93 ॥

तथेत्येवा[1]ब्रवीद्[2]) राजा प्रीयमाणः शतक्रतुम् ।
तस्मिंस्तु देव[3]सदृशे दिवं प्राप्ते महीपतौ ॥ 94 ॥

दायाद्यमिन्द्रादाजह्रु[1]राचारात्[2]) तनया रजेः ।
पञ्च[3]) पुत्रशतान्यस्य तद् वै[4]) स्थानं शतक्रतोः[5]) ।
समा[6]क्रामन्त बहुधा स्वर्गलोकं त्रिविष्टपम् ॥ 95 ॥

ततो बहुतिथे काले[1]) समतीते महाबलः[2]) ।
हृत[3]राज्योऽब्रवीच्छक्रो हृत[4]भागो बृहस्पतिम् ॥ 96 ॥

बदरीफलमात्रं वै पुरोडाशं विधत्स्व मे ।
ब्रह्मर्षे, येन तिष्ठेय तेजसाप्यायितस्ततः[1]) ॥ 97 ॥

ब्रह्मन्, कृशोऽहं[1]) विमना हृतराज्यो हृताश[2]नः ।
हृतौजा दुर्बलो मूढो[3]) रजि[4]पुत्रैः प्रसीद मे[5]) ! ॥ 98 ॥

बृहस्पतिरुवाच :

यद्येवं चोदितः शक्र त्वया स्यां पूर्वमेव हि, ।
नाभविष्यत् त्वत्प्रियार्थम[1]कर्त्तव्यं ममानघ ॥ 99 ॥

प्रयतिष्यामि देवेन्द्र त्वद्धिता[1]र्थं महाद्युते[2]) ।
यथा[3]) भागं च राज्यं च अ[4]चिरात् प्रतिपत्स्यसे[5]), ।
तथा तात[6]) करि[7]ष्यामि मा भूत् ते[8]) विक्लवं मनः ! ॥ 100 ॥

---

91 = Bḍ. II. 67.91; Br. 11.19; H. 1493; Vā. 92.86. 1) Vā. तथा तु । 2) Bḍ. Vā. तं तथाथ राजि तत्र ।
92 = Bḍ. II. 67.92; Br. 11.20; H. 1494; Vā. 92.87ab. 1) H. रजेः । 2) Bḍ. Vā. राजन् ।
93 = Bḍ. II. 67.93; Br. 11.21; H. 1495; Vā. 92.87c, 88a. 1) Vā. –मिन्द्र । 2) Bḍ. Vā. शत्रुहन् । 3) H. शतक्रतु– ।
94 = Bḍ. II. 67.94; Br. 11.22; H. 1496; Vā. 92.88b, 89a. 1) Br. तथैवेत्य– । 2) Bḍ. तथेत्येवाह वै । 3) Br. देवैः ।
95 = Bḍ. II. 67.95, 96a; Br. 11.23, 24a; H. 1497, 1498a; Vā. 92.89b, 90. 1) Br. –ह्रू । 2) Bḍ. –राचार्यं–; Br. राज्यं तत्–; Vā. –राचारं । 3) Bḍ. Vā. तानि । 4) Bḍ. Vā. तच्च । 5) Bḍ. Vā. शचीपतेः । 6) Vā. सम– ।
96 = Bḍ. II. 67.96b, 97a; H. 1498b, 1499; Vā. 92.91. 1) Bḍ. Vā. –तः काले बहुतिथे । 2) H. –बलम् । 3) Bḍ. H. हृत– । 4) Bḍ. Vā. हृत– ।
97 = Bḍ. II. 67.97b, 98a; H. 1500; Vā. 92.92. 1) H. –तः सदा ।
98 = Bḍ. II. 67.98b, 99a; H. 1501; Vā. 92.93. 1) Vā. –शोऽयं । 2) Bḍ. –स– । 3) Bḍ. युद्धे । 4) H. रजेः । 5) H. कृतः प्रभो ।
99 = Bḍ. II. 67.99b, 100a; H. 1502; Vā. 92.94. 1) Vā. T. –र्थं ना– ।
100 = Bḍ. II. 67.100b, 101; H. 1503, 1504a; Vā. 92.95, 96a. 1) H. त्वत्प्रिया– । 2) H. न संशयः । 3) Bḍ. यश– । 4) H. न– । 5) H. –लप्स्यसे । 6) Bḍ. Vā. शक्र । 7) Bḍ. Vā. गमि– । 8) H. ते भूद् ।

ततः कर्म चकारास्य तेजःसंवर्धनं महत्[1]) ।
तेषां च बुद्धिसंमोहमकरोद् बुद्धि[2]सत्तमः ॥ 101 ॥

ते यदा तु सुसं[1]मूढा रागोन्मत्ता[2]) विधर्मिणः ।
ब्रह्मद्विषश्च संवृत्ता हतवीर्यपराक्रमाः, ॥ 102 ॥

ततो लेभे सुरै[1]श्वर्यमिन्द्रः[2]) स्थानं तथोत्तमम् ।
हत्वा रजिसुतान् सर्वान् कामक्रोधपरायणान् ॥ 103 ॥

य इदं च्यावनं[1]) स्थानात्[2]) प्रतिष्ठां च[3]) शतक्रतोः ।
शृणुयाद् धारयेद् वा[4]ऽपि, न स दौरात्म्य[5]माप्नुयात् ॥ 104 ॥

---

101 = Bḍ. II. 67.102; H. 1504[b], 1505[a]; Vā. 92.96[b], 97[a]. 1) H. तेजसो वर्धनं तदा । 2) H. द्विज– ।

102 = Bḍ. II. 67.103; Br. 11.24[b], 25[a]; H. 1510; Vā. 92.97[b], 98[a]. 1) Br. तु स्वसं–; Vā. ससुता । 2) Bḍ. –न्मत्तो ।

103 = Bḍ. II. 67.104; Br. 11.25[b], 26[a]; H. 1511; Vā. 92.98[b], 99[a]. 1) Br. स्वमै– । 2) Bḍ. Vā. –मैन्द्र– ।

104 = Bḍ. II. 67.105; Br. 11.26[bc]; H. 1512; Vā. 92.99[bc]. 1) Vā. पावनं । 2) Vā. स्थानं । 3) Br. Vā. प्रतिष्ठानं । 4) Bḍ. –याच्छ्रावयेद् वा–; Vā. –याद् वा रजेर्वा– । 5) Br. दौर्गत्य– ।

---

## D.

( Bd. II. 68.1—107; Br. 11.27—31, 12.1—51; H. 1513—1517, 1599—1650; L. 66.60ᵇ—67.27; Mh. I. 3466—3531—Mhk. I. 78.1—79.32; Mt. 33.1—34.28; Va. 93.1—104; Cp. A. 274.20—23; Bhg. IX. 17.16ᵇ—19.29; Ga. 139.15—18; Kū. 22.4—12ᵃ; Mh. I. 3155—3177; Vi. IV. 9.8—10.18. )

ऋषय ऊचुः

मरुत्तेन[1]) कथं कन्या राज्ञे दत्ता महात्मना ।
किंवीर्याश्च महात्मानो जाता मरुतकन्यया[2]) ॥ $1_1$ ॥

सूत उवाच :

आहरत् ग[1]) मरुत्सोममन्नकामः प्रजेश्वरः[2]) ।
मासि मासि महातेजाः षष्टिसंवत्सरान् नृपः[3]) ॥ $1_2$ ॥
तेन ते मरुतस्तस्य मरुत्सोमेन तोषिताः ।
अक्षय्यान्नं ददुः प्रीताः सर्वकामपरिच्छदम् ॥ $1_3$ ॥
अन्नं तस्य सकृत् पक्व[1]महोरात्रं[2]) न क्षीयते ।
कोटिशो दीयमानं च सूर्यस्योदयनादपि ॥ $1_4$ ॥
मित्रज्योते[1]स्तु कन्यायां[2]) मरुतस्य[3]) च धीमतः ।
तस्माज्जाता महासत्त्वा धर्मज्ञा मोक्षदर्शिनः ॥ $1_5$ ॥
संन्यस्य गृहधर्माणि वैराग्यं समुपस्थिताः ।
यतिधर्ममवाप्येह ब्रह्मभूयाय ते गताः ॥ $1_6$ ॥

रम्भोऽनपत्यस्त्वा[1]सीच्च,
वंशं वक्ष्याम्यनेनसः ।
अनेनसः सुतो राजा
प्रतिक्षत्रो महायशाः ॥ 1 ॥

अनेनसः सुतो[1]) जातः
क्षत्रधर्मः[2]) प्रतापवान्[3]) ।
क्षत्रधर्मसुतो[4]) जातः
प्रतिपक्षो महातपाः ॥ 1 ॥

---

$1_1$ = Bd. II. 68.1; Va. 93.1. 1) Va. मरुत्तेन । 2) Va. T. मरुत्तकन्यकाः ।
$1_2$ = Bd. II. 68.2; Va. 93.2. 1) Va. आहृवन्तं । 2) Va. –रम् । 3) Bd. नप ।
$1_3$ = Bd. II. 68.3; Va. 93.3.
$1_4$ = Bd. II. 68.4; Va. 93.4. 1) Bd. –क्रुद् मुक्त– । 2) Va. T. –रात्रे ।
$1_5$ = Bd. II. 68.5; Va. 93.5. 1) Va. T. –ज्योति– । 2) Bd. –न्याया । 3) Va. मरुत्तस्य ।
$1_6$ = Bd. II. 68.6; Va. 93.6.

1 = Br. 11.27; H. 1513. 1) H. –पत्य आ– ।

1 = Bd. II. 68.7; Va. 93.7. 1) Va. अनपायस्ततो; V. अनपत्यस्ततो । 2) Va. तदा धर्म– । 3) Va. T. प्रदत्तवान् । 4) Va. –धर्मस्ततो ।

प्रतिक्षत्र[1]सुतश्चापि[2]) संज[3]यो नाम विश्रुतः ।
संज[3]यस्य जयः पुत्रो, विजयस्तस्य *चात्मजः*[4]) ॥ 2 ॥

विजयस्य *कृतिः*[1]) पुत्रस्तस्य *हर्यत्वतः*[2]) *सुतः*[3]), ।
*हर्यत्वतसुतो*[4]) राजा सहदेवः प्रतापवान् ॥ 3 ॥

सहदेवस्य धर्मात्मा *अदीन*[1]) इति विश्रुतः, ।
अदीन[1]स्य जयत्सेनो, *जयत्सेनस्य*[2]) संकृतिः ॥ 4 ॥

संकृतेरपि धर्मात्मा क्षत्रधर्मा[1]) महायशाः ।
अनेनसः समाख्याताः,
*नहुषस्य*[1]) *निबोधत*[2]) ! ॥ 5 ॥

| इत्येते क्षत्रधर्माणो,
| नहुषस्य निबोधत ! ॥ 5 ॥

नहुषस्य तु दायादाः षडिन्द्रो[1]पमतेजसः ।
उत्पन्नाः पितृकन्यायां विरजायां *महौजसः*[2]) ॥ 6 ॥

यति[1]*र्ययातिः*[1]) संयाति[1]रायाति[1]*र्वियतिः*[2]) *कृतिः*[3]) ।
यतिर्ज्येष्ठस्तु[4]) तेषां वै, ययातिस्तु *ततोऽवरः*[5]), ॥ 7 ॥

क[1]कुत्स्थकन्यां गां नाम लेभे *परमधार्मिकः*[2]); ।
यतिस्तु[3]) मोक्षमा[4]स्थाय[5]) ब्रह्मभूतोऽभवन्मुनिः[6]) ॥ 8 ॥

तेषां ययातिः पञ्चानां
विजित्य वसुधामिमाम्[1]) ।

| तेषां मध्ये तु पञ्चानां
| ययातिः पृथिवीपतिः ।

---

2 = Bd. II. 67.8; Br. 11.28; H. 1514; Va. 93.8. 1) Bd. Va. –पक्ष– । 2) Br. –श्वासीत् । 3) H. सृञ– । 4) Bd. Va. V. जज्ञिवान् ।

3 = Bd. II. 67.9; Br. 11.29; H. 1515; Va. 93.9. 1) Bd. Va. जयः । 2) Bd. हर्यश्वकः; Va. हर्यद्वतः । 3) Bd. Va. स्मृतः । 4) Bd. हर्यश्वस्य सुतो; Va. हर्यद्वतस्ततो ।

4 = Bd. II. 67.10; Br. 11.30; H. 1516; Va. 93.10. 1) Bd. Br. अहीन; H. नदीन । 2) Bd. Va. –स्सेनस्तस्य पुत्रोऽथ ।

5[a] = Bd. II. 67.11[a]; Br. 11.31[a]; H. 1517[a]; Va. 93.11[a]. 1) Bd. Va. T. कृतधर्मा; Va. V. क्षत्रधन्ना; Br. T. क्षत्रवृद्धो; V. कृतवर्मा ।

5[b] = Br. 11.31[b]; H. 1517[b]. 1) Br. H. क्षत्रवृद्धस्य । 2) Br. चापरः; H. मे शृणु ।

| 5[b] = Bd. II. 67.11[b]; Va. 93.11[b].

6 = Bd. II. 68.12[a] = a; Br. 12.1[ba]; H. 1599[ba]; Kū. 22.5; L. 66.60[b], 61[a]; Va. 93.12. 1) Kū. T. पञ्चेन्द्रो– । 2) Kū. महाबलाः ।

7 = Bd. II. 68.12[b], 13[a]; Bhg. IX. 18.1[a] = a; Br. 12.2; H. 1600[a](b), 1601[a]; Kū. 22.6[a]=a; L. 66.61[b], 62(a)[b]; Mh. I. 3155[a] = a; Va. 93.13. 1) Mh. –ति– । 2) Br. तिः पाश्र्वको; H. –तिः पञ्चमो; Kū. L. –मयतिं; Mh. –तिः; Va. पञ्च तु । 3) Br. –ऽभवत्; H. भवः सुयातिः पष्ठस्तेषां वै ययातिः पार्थिवोऽभवत् ; Kū. –ऽश्वकः; L. –ऽन्धकः; Mh. वियातिश्चेति षडिमे सर्वे प्रख्यातकीर्तयः; Va. ध्रुवम् ; द्वयः । 4) L. –ष्ठश्च । 5) Br. H. ततः परम् ।

8 = Bd. II. 68.13[b], 14[a]; Br. 12.3; H. 1601[b], 1602[a]; L. 66.63[a]; Mh. I. 3156[a] = b; Va. 93.14. 1) Bd. Va. का– । 2) Bd. Va. पत्नीं यतिस्तदा । 3) Bd. स यति–; L. ज्येष्ठस्तु; Va. संयाति– । 4) Mh. योगमा–; L. यति– । 5) L. –मोंक्षार्थी । 6) L. –वत् प्रभुः ।

9[a] = Br. 12.4[a]; H. 1602[b]; Kū. 22.6[b] L. 66.63[b]. 1) Kū. L. महाबलपराक्रमः ।

| 9[a] = Bd. II. 68.14[b]; Va. 93.15[a].

देवयानीमुशनसः सुतां भार्यामवाप सः[1]) ॥ 9 ॥

शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ।
यदुं च तुर्वसुं चैव देवयानी व्यजायत, ॥ 10 ॥

द्रुह्युं चानुं च पूरुं[1]) च शर्मिष्ठा वार्षपर्वणी[2]) ।

तस्मै शक्रो ददौ प्रीतो
रथं परमभास्वरम् ॥ 11 ॥

असङ्ग[1]) काञ्चनं दिव्यं
दव्यैः परमवाजिभिः ।
युक्तं मनोजवैः शुभ्रै-
र्येन कार्यं समुद्वहत् ) ॥ 12 ॥

स तेन रथमुख्येन
षड्रात्रेणा[1]जयन्महीम् ।
ययातिर्युधि दुर्धर्ष-
स्तथा देवान् सदानवान् ॥ 13 ॥

स रथः पौ[1]रवाणां तु
सर्वेषामभवत् तदा, ।
यावत् तु वसुनाम्नो वै[2])
कौरवाज्जनमेजयात् ॥ 14 ॥

अजीजनन्महावीर्यान्
सुतान् देव सुतोपमान् ।
रथं तस्मै ददौ शक्रः[1])
प्रीतः परमभास्वरम् ॥ 11 ॥

असङ्गं[1]) काञ्चनं दिव्य-
मक्षयौ[2]) च महेषुधी[3]) ।
युक्तं मनोजवैरश्वै-
र्येन कन्यां समुद्वहत्[4]) ॥ 12 ॥

स तेन रथमुख्येन
जिगाय च ततो[1]) महीम् ।
ययातिर्युधि दुर्धर्षो
देव-दानव-मानवैः[2]) ॥ 13 ॥

पौ[1]रवाणां नृपाणां च
सर्वेषां सोऽभवद् रथः[2]), ।
यावत् सुदेशप्रभवः[3])
कौरवो जनमेजयः ॥ 14 ॥

---

9$^{b}$ = Bḍ. II. 68.15$^{a}$; Br. 12.4$^{b}$; H. 1603$^{a}$; Kū. 22.7$^{a}$; L. 66.64$^{a}$; Vā. 93.15$^{b}$. 1) Bḍ. Vā. ह् ।

10 = A. 274.22$^{b}$ = b; Bḍ. II. 68.15$^{b}$, 16$^{a}$; Bh. IX. 18.33$^{a}$ = b; Br. 12.5; H. 1603$^{b}$, 1604$^{a}$; Kū. 22.7$^{b}$, 8$^{a}$; L. 66.64$^{b}$, 65$^{a}$; Vā. 93.16; Vi. IV. 10.2$^{a}$.

11$^{a}$ = A. 274.23$^{a}$; Bḍ. II. 68.16$^{b}$; Bh. IX. 18.33$^{b}$; Br. 12.6$^{a}$; H. 1604$^{b}$; Kū. 22.8$^{b}$; L. 66.66$^{a}$; Mh. I. 3160$^{a}$; Vā. 93.17$^{a}$; Vi. I. 10.2$^{b}$. 1) A. Bḍ. Br. Vā. पुरुं । 2) Kū. चाप्यजीजनत्; Mh. –ष्ठायां प्रजज्ञिरे ।

11$^{b}$ = Br. 12.6$^{b}$; H. 1605$^{a}$.

12 = Br. 12.7; H. 1605$^{b}$, 1606$^{a}$. 1) Br. अङ्गदं । 2) Br. –हन् ।

13 = Br. 12.8; H. 1606$^{b}$, 1607$^{a}$; L. 66.68$^{b}$=a. 1) L. षण्मासेना– ।

14 = Br. 12.9; H. 1607$^{b}$, 1608$^{a}$. 1) Br. T. कौ– । 2) Br. संवर्तवसुनाम्नस्तु ।

11$^{bc}$ = Bḍ. II. 68.17; L. 66.66(b), 67$^{a}$; Vā. 93.17$^{b}$, 18$^{a}$. 1) Vā. रुद्रः; L. ययातये रथं तस्मै ददौ शुक्रः प्रतापवान् । तोषितस्तेन विप्रेन्द्रः ।

12 = Bḍ. II. 68.18; L. 66.67$^{b}$, 68$^{a}$; Vā. 93.18$^{b}$, 19$^{a}$. 1) L. सुसङ्गं । 2) L. –मक्षये । 3) Vā. –पुवी । 4) Vā. –द्वहन् ।

13 = Bḍ. II. 68.19; L. 66.68$^{b}$, 69$^{a}$; Vā. 93.19$^{b}$, 20$^{a}$. 1) Bḍ. सततं; L. षण्मासेनाजयन् । 2) L. –मानुषैः ।

14 = Bḍ. I. 68.20; L. 66.(70$^{b}$), 71$^{a}$; Vā. 93.20$^{b}$, 21$^{a}$. 1) L. कौ– । 2) Bḍ. रथी; L. –णां च सर्वेषां स भवद् रथ उत्तमः । 3) L. –वन् नरेन्द्रप्रवरः ।

कुरोः[1]) पुत्रस्य[2]) राज्ञस्तु[3]) राज्ञः पारि[4]क्षितस्य ह[5]) ।
जगाम स रथो नाशं शापाद् गार्ग्यस्य[6]) धीमतः ॥ 15 ॥

गार्ग्यस्य[1]) हि सुतं बालं[2]) स राजा जनमेजयः ।

वाक्क्रूरं[1]) हिंसयामास,
ब्रह्महत्यामवाप सः ॥ 16 ॥

| दुर्बुद्धिर्हिंसयामास
| लोहगन्धं[1]) नराधिपः[2]) ॥ 16 ॥

स लोहगन्धो[1]) राजर्षिः परिधावन्नितस्ततः ।
पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित्, ॥ 17 ॥

ततः स दुःखसंतप्तो नालभत्[1]) संविदं क्वचित् ।

इन्द्रोतं[1]) शौनकं राजा
शरणं प्रत्यपद्यत ॥ 18 ॥

| स प्रायाच्छौ[1]न[2]कमृषिं
| शरण्यं[3]) व्यथितस्तदा, ।
| इन्द्रोतो ना[4]म विख्यातो
| योऽसौ मुनिरुदारधीः ॥ 18 ॥

या[1]जयामास चेन्द्रोतः[2]) शौनको[3]) जनमेजयम् ।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः[4]) ॥ 19 ॥

स लोहगन्धो व्यनशत्[1]) तस्यावभृथ[2]मेत्य ह[3]), ।
स च[4]) दिव्यो[5]) रथस्तस्माद्[6]) वसो[7]श्चेदिपतेस्तदा[8]) ।
दत्तः[9]) शक्रेण तुष्टेन, लेभे तस्माद् बृहद्रथः ॥ 20 ॥

---

15 = Bḍ. II. 68.21; Br. 12.10; H. 1608$^{b}$, 1609$^{a}$; L. 66.71$^{b}$, 72$^{a}$; Vā. 93.21$^{bc}$. 1) L. पुरो- । 2) Bḍ. पौत्रस्य; L. -वंशस्य । 3) Br. H. राजेन्द्र । 4) Bḍ. Br. पारी- । 5) L. तु । 6) Br. L. Vā. V. गर्गस्य ।

16$^{a}$ = Bḍ. 68.22$^{a}$; Br. 12.11$^{a}$; H. 1609$^{b}$; L. 66.72$^{b}$; Vā. 93.22$^{a}$. 1) Br. H. L. गर्गस्य । 2) Vā. T. बालः ।

16$^{b}$ = Br. 12.11$^{b}$; L. 66.73$^{a}$; H. 1610$^{a}$. 1) Br. T. कालेन; L. अक्रूरं ।

| 16$^{b}$ = Bḍ. II. 68.22$^{b}$; Vā. 93.22$^{b}$. 1) Bḍ. Vā. T. -गन्धी । 2) Vā. -पम् ।

17 = Bḍ. II. 68.23; Br. 12.12; H. 1610$^{b}$, 1611$^{a}$; L. 66.73$^{b}$, 74$^{a}$; Vā. 93.23. 1) Bḍ. Br. L. -गन्धी ।

18$^{a}$ = Bḍ. II. 68.24$^{a}$; Br. 12.13$^{a}$; H. 1611$^{b}$; L. 66.74$^{b}$; Vā. 93.24$^{a}$. 1) L. न लेभे ।

18$^{b}$ = Br. 12.13$^{b}$; H. 1612$^{a}$. 1) Br. T. विप्रेन्द्रं ।

| 18$^{bc}$ = Bḍ. II. 68.24$^{b}$, 25$^{a}$; L. 66.75; Vā. 93.24$^{b}$, 25$^{a}$. 1) L. जगाम शौ-; Vā. शशाप हे- । 2) Vā. -तुक- । 3) Bḍ. शरणं । 4) L. इन्द्रेतिर्ना- ।

19 = Bḍ. II. 68.25$^{b}$, 26$^{a}$; Br. 12.14; H. 1612$^{b}$, 1613$^{a}$; L. 66.76; Vā. 93.25$^{bc}$. 1) Bḍ. यो- । 2) Br. च ज्ञानी; V. चेन्द्रेण; H. चेन्द्रातः; L. चेन्द्रेति- । 3) L. -स्तं नृपं । 4) H. Vā. -त्तमः ।

20 = Bḍ. II. 68.26$^{b}$, 27; Br. 12.15, 16$^{a}$; H. 1613$^{b}$, 1614; L. 66.77$^{a}$, 78; Vā. 93.26, 27$^{a}$. 1) L. -न्धाग्निर्मुक्त । 2) L. एनसा च; Vā. तस्यावसथ- । 3) L. महायशाः । 4) Bḍ. स वै; L. तस्माद् । 5) Br. दिव्य-; L. वंशात् । 6) Br. -थो राज्ञो; H. -थो राजन्; L. परिभ्रष्टो । 7) Br. T. वश- । 8) Bḍ. Vā. -स्तथा; L. -तेः पुनः । 9) Vā. ततः ।

बृंहद्रथात् क्रमेणैव
प्राप्तो[1]) बार्हद्रथं नृपम् ।

ततो हत्वा जरासन्धं भीमस्तं[1]) रथमुत्तमम् ।
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः[2]) ॥ 21 ॥

---

जरां प्राप्य ययातिस्तु
स्वपुरं प्राप्य चैव हि ।

| स जरां प्राप्य राजर्षि-
| र्ययातिर्नहुपात्मजः ।

पुत्रं ज्येष्ठं[1]) वरिष्ठं च यदुमित्यब्रवीद् वचः[2]) ॥ 22 ॥

Cp. Śl. 49b, 50a. { जरा वली[1]) च मां तात पलितानि च पर्यगुः[2]), ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ 23 ॥

त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह, ।

यौवनेन त्वदीयेन
चरेयं विषयानहम् ॥ 24 ॥

| जरां मे प्रतिगृह्णीष्व !
| तं यदुः प्रत्युवाच ह ॥

पूर्णे वर्षसहस्रे तु
त्वदीयं[1]) यौवनं त्वहम् ।
दत्त्वा स्वं[2]) प्रतिपत्स्यामि ।
पाप्मानं जरया सह ॥ $24_1$ ॥

यदुरुवाच :

अनिर्दिष्टा मया[1]) भिक्षा ब्राह्मणस्य प्रतिश्रुता, ।

अनपाकृत्य तां राजन्
न ग्रहीष्यामि ते जराम् ॥ 25 ॥

| सा तु[1]) व्यायामसाध्या वै,
| न ग्रहीष्यामि ते जराम् ॥ 25 ॥

जरायां[1]) बहवो दोषाः पान[2]भोजनकारिताः[3]), ।
तस्माज्जरां न ते राजन् ग्रहीतुमहमुत्सहे[4]) ॥ 26 ॥

---

21ᵃ = Br. 12.16ᵇ; H. 1615ᵃ. 1) Br. गतो ।

21ᵇᶜ = Bḍ. II. 68.28; Br. 12.17; H. 1615ᵇ, 1616ᵃ; L. 66.79; Vā. 93.27ᵇᶜ. 1) H. –स्तु । 2) H. –नन्दन ।

---

22ᵃ = Mh. I. 3466ᵃ; Mhk. I. 78.1ᵃ; Mt. 33.1ᵃ. | 22ᵃ = Bḍ. II. 68.29ᵃ; Vā. 93.28ᵃ.

22ᵇ = Bḍ. II. 68.29ᵇ; Mh. I. 3466ᵇ; Mhk. I. 78.1ᵇ; Mt. 33.1ᵇ; Vā. 93.28ᵇ. 1) Bḍ. श्रेष्ठं । 2) Mt. द्विजः ।

23 = Bḍ. II. 68.30; Mh. I. 3467; Mhk. I. 78.2; Mt. 33.2; Vā. 93.29. 1) Mhk. जरावली । 2) Bḍ. –युः ।

24ᵃ = Bḍ. II. 68.31ᵃ; Mh. I. 3468ᵃ; Mhk. I. 78.3ᵃ; Mt. 33.3ᵃ; Vā. 93.30ᵃ.

24ᵇ = Mh. I. 3468ᵇ; Mhk. I. 78.3ᵇ; Mt. 33.3ᵇ. | 24ᵇ = Bḍ. II. 68.31ᵇ; Vā. 93.30ᵇ.

$24_1$ = Mh. I. 3469; Mhk. I. 78.4; Mt. 33.4. 1) Mh. Mhk. पुनस्ते । 2) Mt. सं– ।

25ᵃ = Bḍ. II. 68.32ᵃ; Br. 12.26ᵃ; H. 1625ᵃ; Vā. 93.31ᵃ. 1) Bḍ. हि मे ।

25ᵇ = Br. 12.26ᵇ; H. 1625ᵇ. | 25ᵇ = Bḍ. II. 68.32ᵇ; Vā. 93.31ᵇ. 1) Vā. च ।

26 = Bḍ. II. 68.33; Br. 12.27; H. 1626; Mh. I. 3470; Mhk. I. 78.5; Vā. 93.32. 1) Vā. T. –राया । 2) Vā. –पा यान– । 3) Vā. –कारिणः । 4) Mh. Mhk. ग्रहीष्य इति मे मतिः ।

सितश्मश्रुधरो दीनो[1]) जरया[2]) शिथिलीकृतः ।
वलीसंतत[3]गात्रश्च[4]) दुर्दर्शो[5]) दुर्बलाकृतिः[6]) ॥ 27 ॥

अशक्तः कार्यकरणे परिभूतस्तु[1]) यौवने[2]) ।
सहो[3]पजीवि[4]भिश्चैव, तां ज[5]रां नाभिकामये ॥ 28 ॥

सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप, ।
प्रति[1]ग्रहीतुं[2]) धर्मज्ञ, पुत्रम[3]न्यं वृणीष्व[4]) वै ! ॥ 29 ॥

स एवमुक्तो यदुना *राजा*[1]) कोपसमन्वितः ।
उवाच वदतां श्रेष्ठो *ययातिर्ग*[2]*र्हयन्* सुतम् ॥ 30 ॥

क आश्रमस्तवान्यो[1]ऽस्ति को वा धर्मो *विधीयते*[2]), ।
मामनादृत्य दुर्बुद्धे यदहं[3]) तव देशिकः[4]) ॥ 31 ॥

एवमुक्त्वा यदुं *राजा*[1]) शशापैनं स मन्युमान् ।
यस्त्वं[2]) मे हृदयाज्जातो वयः स्वं न प्रयच्छसि, ।

अराज्या ते प्रजा मूढा
भवित्रीति न *संशयः*[1])

| तस्मान् न[1]) राज्यभाङ्मूढ[2])
| प्रजा ते वै[3]) भविष्यति ॥ 32 ॥

---

| स तुर्वसुं च द्रुह्युं चाप्य[1]नुं च *द्विजसत्तमाः*[2]) ।
| एवमेवाब्रवीद् राजा प्रत्याख्यातश्च[3]) तैरपि ॥ $32_1$ ॥

---

27 = Bḍ. II. 68.34; Mh. I. 3471; Mhk. I. 78.6; Mt. 33.5; Vā. 93.33. 1) Mh. Mhk. –श्रुर्निरानन्दो । 2) Mh. रजया; Mt. जरसा । 3) Mh. Mhk. –संगत– । 4) Mh. Mhk. –त्रस्तु । 5) Bḍ. निराशो । 6) Mh. Mk. Mt. –लः कृशः ।

28 = Bḍ. II. 68.35; Mh. I. 3472; Mhk. I. 78.7; Mt. 33.6; Vā. 93.34. 1) Mh. Mhk. Mt. –तः स । 2) Mh. यौवनैः; Mhk. यौवतैः । 3) Vā. मह्यो– । 4) Bḍ. –पवीति–; Vā. –पमीति– । 5) Mt. तज्ज– ।

29 = Bḍ. II. 68.36; Br. 12.28; H. 1627; Mh. I. 3473; Mhk. I. 78.8; Mt. 33.7; Vā. 93.35. 1) Mh. Mhk. Mt. जरां । 2) Bḍ. Vā. गृह्णन्तु । 3) Mh. Mhk. तस्माद्– । 4) Mt. वृषीष्व ।

30 = Bḍ. II. 68.37; Br. 12.29; H. 1628; Vā. 93.36. 1) Bḍ. Vā. तीव्र– । 2) Bḍ. Vā. ज्येष्ठं तं ग– ।

31 = Bḍ. II. 68.38; Br. 12.30; H. 1629; Vā. 93.37. 1) Bḍ. Vā. आश्रमः कस्तवान्यो ( कश्च वान्यो) । 2) Bḍ. Vā. धर्मविधिस्तव । 3) Vā. T. –दात्थ । 4) Vā. नवदेशिक ।

$32^{ab}$ = Bḍ. II. 68.39; Br. $12.31^a$ = a; H. $1630^a$ = a; Mh. I. $3474^a$ = b; Mhk. I. $78.9^a$ = b; Mt. $33.8^a$ = b; Vā. 93.38. 1) Br. विप्राः; H. तात । 2) Mh. Mhk. यत् त्वं ।

$32^c$ = Br. $12.31^b$; H. $1630^b$. 1) H. नराधिपः ।

| $32^c$ = Bḍ. II. $68.40^a$; Mh. I. $3474^b$; Mhk. I. $78.9^b$; Mt. 33.($8^b$); Vā. $93.39^a$. 1) Mh. Mhk. –स्माद्– । 2) Mh. Mhk. –भाक् तात; Vā. –भाग् मूढ । 3) Mh. Mhk. तव; Mt. पापान् मातुलसम्बन्धाद् दुष्प्रजा ते ।

---

| $32_1$ = Br. 12.32; H. 1631. 1) Br. द्रुह्युं च तुर्वसुं चैवाप्य– । 2) H. [illegible] । 3) H. –तस्तु ।

शशाप तानति[1]क्रुद्धो ययातिरपराजितः ।
यथावद्[2]) कथितं पूर्वं[3]) मयास्य द्विजसत्तमाः[4]) ॥ $32_2$ ॥
एवं शप्त्वा सुतान् सर्वांश्चतुरः पूरु[1]पूर्वजान् ।
तदेव वचनं राजा पूरु[1]मप्याह भो द्विजाः[2]) ॥ $32_3$ ॥
तरुणस्तव रूपेण चरेयं[1]) पृथिवीमिमाम् ।
जरां त्वयि समाधाय, त्वं पूरो[2]) यदि मन्यसे ॥ $32_4$ ॥
स जरां प्रतिजग्राह पितुः पूरुः[1]) प्रतापवान्, ।
ययातिरपि रूपेण पूरोः[1]) पर्यचरत् महीम् ॥ $32_5$ ॥

---

तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह, ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ 33 ॥

पूर्णे वर्षसहस्रे तु पुनर्दा[1]स्यामि यौवनम् ।
स्वं चैव[2]) प्रतिपत्स्यामि पाप्मानं जरया सह ॥ 34 ॥

तुर्वसुरुवाच :

न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं
बुद्धिप्राणप्रणा[1]शिनीम् ॥ 35 ॥

| जराया[1]) बह्वो दोषाः
| पानभोजनकारिताः[2]), ।
| तस्माज्जरां न ते राजन्
| ग्रहीतुमहमुत्सहे ॥ 35 ॥

ययातिरुवाच :

यस्त्वं[1]) मे हृदयाज् जातो वयः स्वं न प्रयच्छसि, ।
तस्माद् प्रजा समुच्छेदं[2]) तुर्वसो तव यास्यति ॥ 36 ॥

संकीर्णचोरधर्मेषु[1]) प्रतिलोमच[2]रेषु च ।
पिशिताशिषु चान्येषु[3]) मूढ[4]) राजा भविष्यसि ॥ 37 ॥

---

| $32_2$ = Br. 12.33; H. 1632. 1) H. –नपि । 2) H. –था ते । 3) Br. सर्वं । 4) H. मया राजर्षिसत्तम ।
| $32_3$ = Br. 12.34; H. 1633. 1) Br. पुरु–; H. पूर्व– । 2) H. भारत ।
| $32_4$ = Br. 12.35; H. 1634. 1) H. चरये । 2) Br. पुरो ।
| $32_5$ = Br. 12.36; H. 1635. 1) Br. पुरुः ( –रोः ) ।

---

33 = Bḍ. II. 68.40[b] = a; Mh. I. 3475; Mhk. I. 78.10[bc]; Mt. 33.9; Vā. 93.39[b], 40[a].

34 = Mh. I. 3476; Mhk. I. 78.11; Mt. 33.10; Vā. 93.40[bc]. 1) Vā. ते प्रतिदा– । 2) Mt. तथैव ।

35[a] = Bḍ. II. 68.41[a]; Mh. I. 3477[a]; Mhk. I. 78.12[a]; Mt. 33.11[a]; Vā. 93.41[a].

35[b] = Mh. I. 3477[b]; Mhk. I. 78.12[b]; Mt. 33.11[b]. 1) Mt. –मानविना– ।

| 35[bc] = Bḍ. II. 68.41[b], 42[a]; Vā. 93.41[bc]. 1) Bḍ. –यां । 2) Vā. –कारिणः ।

36 = Bḍ. II. 68.42[b], 43[a]; Mh. I. 3478; Mhk. I. 78.13; Mt. 33.12; Vā. 99.42. 1) Mh. Mhk. यत् त्वं । 2) Bḍ. तु विच्छेदं ।

37 = Bḍ. II. 68.43[b], 44[a]; Mh. I. 3479; Mhk. I. 78.14; Mt. 33.13; Vā. 99.43. 1) Bḍ. संकीर्णेषु च धर्मेण; Mt. संकीर्णाश्चोरधर्मेषु; Mh. Mhk. संकीर्णाचारधर्मेषु; Vā. असंकीर्णा च धर्मेण । 2) Bḍ. –न–; Vā. T. –व– । 3) Mh. Mhk. चान्त्येषु; Mt. लोकेषु । 4) Mt. नूनं ।

गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु[1]) च[2]) ।
पशुधर्मेषु[3]) म्लेच्छेषु भविष्यसि[4]) न संशयः[5]) ॥ 38 ॥
एवं स[1]) तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं[2]) वचनमब्रवीत् ॥ 39 ॥
द्रुह्यो[1]), त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं वै[2]), यौवनं स्वं ददस्व मे[3]) ! ॥ 40 ॥
पूर्णे वर्षसहस्रे ते प्रतिदा[1]स्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ॥ 41 ॥

द्रुह्युरुवाच :
न गजं[1]) न[2]) रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
न सङ्गश्चा[3]स्य भवति, न[4]) जरां तेन[5]) कामये ॥ 42 ॥

ययातिरुवाच :
यस्त्वं[1]) मे हृदयाज्जातो वयः स्वं न प्रयच्छसि, ।
तस्माद् द्रुह्यो[2]) प्रियः कामो न ते संपत्स्यते क्वचित् ॥ 43 ॥
नौप्लवोत्तरसंचार[1]स्तत्र[2]) नित्यं भविष्यति ।

| | |
|---|---|
| अराज[1]भोज[2]शब्दं त्वं[3]) तत्र प्राप्स्यसि सान्वयः ॥ 44 ॥ | अराजभोज[1]वंशस्त्वं तत्र नित्यं वसि[2]ष्यसि ॥ 44 ॥ |

अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह, ।
एकं[1]) वर्षसहस्रं तु चरेयं यौवनेन ते ! ॥ 45 ॥

अनुरुवाच :

| | |
|---|---|
| जीर्णः शिशुरिवा[1]दत्ते कालेऽन्नमशुचिर्यथा, । | जीर्णः शिशुरिवाशक्तो[1]) जरया ह्यशुचिः सदा । |

---

38 = Bḍ. II. 68.44[bc]; Mh. I. 3480; Mhk. I. 78.15; Mt. 33.14; Vā. 99.44. 1) Mt. –रतेषु । 2) Bḍ. Vā. वा । 3) Bḍ. वासरते पाप; Mh. Mhk. T. Mt. –धर्मिषु । 4) Bḍ. –ति । 5) Mh. Mhk. पापेषु म्लेच्छेषु त्वं भविष्यसि; Mt. पापेषु प्रभविष्यसि ।

39 = Bḍ. II. 68.45, 46[a]; Mh. I. 3481; Mhk. I. 78.16; Mt. 33.15; Vā. 99.45. 1) Bḍ. Vā. तु । 2) Mt. ज्येष्ठं द्रुह्युं ।

40 = Bḍ. II. 68.46[b], 47[a]; Mh. I. 3482; Mhk. I. 78.17; Mt. 33.16; Vā. 99.46. 1) Vā. द्रुह्य । 2) Mh. Mhk. Mt. मे । 3) Mt. प्रयच्छताम्; Mh. Mhk. च ।

41 = Bḍ. II. 68.47[b], 48[a]; Mh. I. 3483; Mhk. I. 78.18; Mt. 33.17; Vā. 99.47. 1) Mh. Mhk. तु पुनर्दा–; Mt. T. तु ते प्रदा– ।

42 = Bḍ. II. 68.48[b], 49[a]; Mh. I. 3484; Mhk. I. 78.19; Mt. 33.18; Vā. 99.48. 1) Mt. T. राज्यं । 2) Bḍ. नारोहेत । 3) Bḍ. न सुखं चा–; Mh. Mhk. वाग्भङ्गश्चा–; Mt. न रागश्चा– । 4) Mh. Mhk. तां; Mt. तज् । 5) Mh. Mhk. नाभि–; Mt. ते न ।

43 = Bḍ. II. 68.49[b], 50[a]; Mh. I. 3485; Mhk. I. 78.20; Mt. 33.19; Vā. 93.49. 1) Mh. Mhk. यत् त्वं । 2) Vā. द्रुह्य; Mt. तद् द्रुह्यो वै ।

44[a] = Bḍ. II. 68.50[b]; Mh. I. 3487[a]; Mhk. I. 78.22[b]; Mt. 33.20[a]; Vā. 93.50[a]. 1) Mh. Mhk. उडुपप्लवसंतारो; Mt. नौरूपप्लवसंचारो । 2) Bḍ. –स्तव; Mh. Mhk. Mt. यत्र ।

| | |
|---|---|
| 44[b] = Mh. I. 3487[b]; Mhk. I. 78.22[c]; Mt. 33.20[b]. 1) Mhk. T. अराजा; Mt. अराज्य– । 2) Mh. –भाज– । 3) Mh. तं । | 44[b] = Bḍ. II. 68.51[a]; Vā. 93.50[b]. 1) Bḍ. –राजा–; Vā. T. –भाज– । 2) Vā. भवि– । |

45 = Bḍ. II. 68.51[b], 52[a]; Mh. I. 3488; Mhk. I. 78.23; Mt. 33.21; Vā. 93.51. 1) Bḍ. Vā. एवं ।

| | |
|---|---|
| 46[a] = Mh. I. 3489[a]; Mhk. I. 78.24[a]; Mt. 33.22[a]. 1) Mh. Mhk. शिशुवदा– । | 46[a] = Bḍ. II. 68.52[b]; Vā. 93.52[a]. 1) Vā. शिशुरहं तात । |

न जुहोति[1]) स[2]) कालेऽग्निं[3]), तां जरां नाभिकामये ॥ 46 ॥

ययातिरुवाच :

यस्त्वं[1]) मे हृदयाज्जातो वयः स्वं न प्रयच्छसि, ।
जरादोषस्त्वयोक्तोऽयं त[2]स्मात् त्वं[3]) प्रतिपत्स्यसे[4]) ॥ 47 ॥

प्रजा च[1]) यौवनं[2]) प्राप्ता विनशिष्यत्य[3]नो त[4]व ।
अग्निप्रस्कन्दनपर[5]स्त्वं चाप्ये[6]वं[7]) भविष्यसि ॥ 48 ॥

पूरो[1]) त्वं प्रतिपद्यस्व पाप्मानं जरया सह, ।
Cf. Śl. 23. { जरा वली[2]) च मां तात पलितानि च पर्यगुः ॥ 49 ॥
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने, ।
कं[1]चित् कालं चरेयं वै विषयान् वयसा तव ॥ 50 ॥

पूर्णे वर्षसहस्रे तु[1]) प्रतिदा[2]स्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि[3]) पाप्मानं जरया सह ॥ 51 ॥

एवमुक्तः प्रत्युवाच पूरुः[1]) पितरमञ्जसा ।

| | |
|---|---|
| यथात्थ[1]) त्वं[2]) महाराज, तद् करिष्यामि ते वचः ॥ 52 ॥ | यथा तु[1]) मन्यसे, तात, करिष्यामि तथैव च, ॥ 52 ॥ |

प्रतिपत्स्यामि[1]) ते राजन् पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान् यथेप्सितान्, ॥ 53 ॥

जरयाऽहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथार्थवत्[1]) ॥ 54 ॥

---

$46^{b}$ = Bḍ. II. 68.$53^{a}$; Mh. I. $3489^{b}$; Mhk. I. 78.$24^{b}$; Mt. 33.$22^{b}$; Vā. 93.$52^{b}$. 1) Bḍ. जुहोमि; Vā. T. भजामि । 2) Mh. Mhk. Mt. च । 3) Vā. T. महाराज ।

47 = Bḍ. II. 68.$53^{b}$, $54^{a}$; Mh. I. 3490; Mhk. 78.25; Mt. 33.23; Vā. 93.53. 1) Mh. Mhk. यत् त्वं । 2) Mh. Mhk. –स्त्वया प्रोक्तस्त–; Mt. –स्त्वयोक्तो यस्त– । 3) Vā. T. ते । 4) Mh. Mhk. –लप्स्यसे; Mt. –पद्यसे; Vā. –पत्स्यते ।

48 = Bḍ. II. 68.$54^{b}$, $55^{a}$; Mh. I. 3491; Mhk. I. 78.26; Mt. 33.24; Vā. 93.54. 1) Mh. Mhk. V. Mt. प्रजाश्च । 2) Mhk. –वन– । 3) Mh. Mhk. –ष्यन्त्य–; Mt. विनश्यन्ति ह्य– । 4) Vā. –तस्त– । 5) Mt. –गत– । 6) Bḍ. वाप्ये– । 7) Vā. –प्येव ।

49 = Bḍ. II. 68.$55^{b}$, $56^{a}$; Mh. I. $3493^{b}$, $3492^{b}$; Mhk. I. 78.$29^{b}$, $28^{b}$; Mt. 33.$25^{a}$, $26^{a}$; Vā. 93.55. 1) Vā. पुरो । 2) Bḍ. Mhk. Vā. जरावली । 3) Bḍ. –युः ।

50 = Bḍ. II. 68.$56^{b}$, $57^{a}$; Mh. I. 349 $3^{ac}$; Mhk. I. 78.$29^{ac}$; Mt. 33.$26^{b}$, $27^{a}$. Vā. 93.56. 1) Mt. किं– ।

51 = Bḍ. II. 68.$57^{b}$, $58^{a}$; Mh. I. 3494; Mhk. I. 78.30; Mt. 33.$28^{bc}$; Vā. 93.57. 1) Bḍ. Vā. ते । 2) Mh. Mhk. पुनर्दा– । 3) Bḍ. Mt. T. –पत्स्येऽहं ।

$52^{a}$ = Bḍ. II. 68.$58^{b}$; Mh. I. $3495^{a}$; Mhk. I. 78.$31^{a}$; Mt. 33.$28^{a}$; Vā. 93.$58^{a}$. 1) Bḍ. Vā. पुत्रः ।

$52^{b}$ = Mh. I. $3495^{b}$; Mhk. I. 78.$31^{b}$; Mt. 33.$28^{b}$. 1) Mhk. V. यदात्थ । 2) Mh. Mhk. मां ।

$52^{b}$ = Bḍ. II. 58.$59^{a}$; Vā. 93.$58^{b}$. 1) Vā. यथानु– ।

53 = Bḍ. II. 68.$59^{b}$, $60^{a}$; Mh. I. 3496; Mhk. I. 78.34; Mt. 33.29; Vā. 93.59. 1) Bḍ. प्रतिपत्स्ये च ।

54 = Bḍ. II. 68.$60^{b}$, $61^{a}$; Mh. I. 3497; Mhk. I. 78.35; Mt. 33.30; Vā. 93.60. 1) Mh. Mhk. यथात्थ मां; Mt. यथेच्छया ।

ययातिरुवाच :

पूरो[1]) प्रीतोऽस्मि, भद्रं ते[2]), प्रीतश्चेदं[3]) ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति[4]) ॥ 55 ॥

एवमुक्त्वा[1]) ययातिस्तु[2])
स्मृत्वा काव्यं[3]) महाव्रतम्[4]) ।
संक्रामयामास जरां
तदा पूरौ[5]) महात्मनि ॥ 56 ॥

पूरो[1]रनुमतो राजा
ययातिः स्व[2]जरां ततः
संक्रामयामास तदा
प्रसादाद् भार्गवस्य तु ॥ 56 ॥

पौरवेणा[1]थ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नर[2]श्रेष्ठश्चचार विषयान् स्वकान्[3]) ॥ 57 ॥

यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरोधी[1]) राजेन्द्रो[2]) यथार्हति[3]) स एव हि[4]) ॥ 58 ॥

देवानतर्पयद् यज्ञैः पितृन्श्राद्धैस्तथैव च[1]) ।
दीना[2]ननु[3]ग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ 59 ॥

अतिथीनन्नपानैश्च वैश्यांश्च[1]) परि[2]पालनैः ।
आनृशंस्येन शूद्रांश्च दस्यून् संनिग्रहेण[3]) च ॥ 60 ॥

धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ 61 ॥

स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम्, ॥ 62 ॥

स मार्गमाणः कामानामन्तं[1]) नृपतिसत्तमः[2]) ।
विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः[3]) ॥ 63 ॥

---

55 = Bd. II. 68.61[b], 62[a]; Mh. I. 3498; Mhk. I. 78.36; Mt. 33.31; Va. 93.61. 1) Va. पुरो । 2) Mh. Mhk. ते वत्स । 3) Mt. वरं चेमं । 4) Mt. T. –समृद्धार्था भविष्यति तव प्रजा ।

56 = Mh. I. 3499; Mhk. I. 78.37; Mt. 34.1. 1) Mt. –मुक्तः । 2) Mt. स राजर्षिः । 3) Mt. काव्यं स्मृत्वा । 4) Mh, Mhk. –तपाः । 5) Mt. पुत्रे ।

56 = Bd. II. 68.62[b], 63[a]; Va. 93.62. 1) Va. पुरो– । 2) Va. T. स्वां ।

57 = Bd. II. 68.63[b], 64[a]; Mh. I. 3500; Mhk. I. 79.1[ac]; Mt. 34.2; Va. 93.63. 1) Bd. गौरवेणा–; Va. T. यौवनेना– । 2) Mh. Mhk. नृप– । 3) Mh. Mhk. Mt. प्रियान् ।

58 = Bd. II. 68.64[b], 65[a]; Mh. I. 3501; Mhk. I. 79.2; Mt. 34.3; Va. 93.64. 1) Mh. Mhk. –विरुद्धं; Mt. विरुद्धान् ; Va. –विरोधाद् । 2) Mh. –न्द्र । 3) Bd. यथाशक्ति । 4) Mhk. यथा भवति सोऽन्वभूत् ।

59 = Bd. II. 68.65[b], 66[a]; Mh. I. 3502; Mhk. I. 79.3; Mt. 34.4; Va. 93.65. 1) Mh. Mhk. श्राद्धैस्तद्वत् पितृनपि; Mt. श्राद्धैरपि पितामहान् । 2) Bd. दारा– । 3) Va. –नांश्चानु– ।

60 = Bd. II. 68.66[b], 67[a]; Mh. I. 3503; Mhk. I. 79.4; Mt. 34.5; Va. 93.66. 1) Mh. Mhk. Mt. विशश्च । 2) Mt. प्रति– । 3) Mt. निग्रहणेन ।

61 = Bd. II. 68.67[b], 68[a]; Mh. I. 3504; Mhk. I. 79.5; Mt. 34.6; Va. 93.67.

62 = Bd. II. 68.68[b], 69[a]; Mh. I. 3505; Mhk. I. 79.6; Mt. 34.7; Va. 93.68.

63 = Bd. II. 68.69[b], 70[a]; Br. 12.37; H. 1636; Mh. I. 3508[a] = b; Mhk. I. 79.9[a] = b; Va. 93.69. 1) Bd. –मतद्–; Va. –मन्त– । 2) Bd. Va. –दोषनिदर्शनात् ; H. भरतसत्तम । 3) Bd. Va. वैभ्राजे नन्दने वने; Mh. Mhk. व्यभ्राजन् नन्दने वने ।

| | |
|---|---|
| यदा त्व[1]तृप्तः कामेषु[2]) | अपश्यत् स यदा तान्[1]) वै |
| भोगेषु च नराधिपः, । | वर्धमानान्[2]) नृपस्तदा । |
| तदा पूरोः[3]) सकाशाद् वै | गत्वा पूरोः[3]) सकाशं वै |
| स्वां जरां प्रत्यपद्यत ॥ 64 ॥ | स्वां जरां प्रत्यपद्यत ॥ 64 ॥ |

स संप्राप्य[1]) तु तान्[2]) कामांस्तृप्तः खिन्नश्च पार्थिवः ।
कालं वर्षसहस्रं वै[3]) सस्मार मनुजाधिपः ॥ 65 ॥

परिसंख्याय[1]) कालज्ञः[2]) कलाः[3]) काष्ठास्तथैव च[4]) ।
पूर्णं मत्वा ततः कालं पुरुं[5]) पुत्रमुवाच ह ॥ 66 ॥

यथासुखं[1]) यथोत्साहं यथाकाल[2]मरिंदम ।
सेविता विषयाः पुत्र यौवनेन मया तव ॥ 67 ॥

पूरो[1]) प्रीतोऽस्मि, भद्रं ते, गृहाण त्वं[2]) स्वयौवनम् ।
राज्यं च त्वं[3]) गृहाणेदं[4]) त्वं हि मे प्रियकृत् सुतः ॥ 68 ॥

प्रतिपेदे जरां राजा ययातिर्नहुषात्मजः[1]), ।
यौवनं प्रतिपेदे च[2]) पू[3]रुः स्वं पुनरात्मनः ॥ 69 ॥

अभिषेक्तुकामं च नृपं[1]) पू[2]रुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥ 70 ॥

कथं शुक्रस्य नप्तारं[1]) देवयान्याः सुतं प्रभो ।
ज्येष्ठं[2]) यदुमतिक्रम्य राज्यं[3]) पूरोः[4]) प्रदास्यसि[5]) ? ॥ 71 ॥

यदुर्ज्येष्ठ[1]स्तव सुतो, जातस्तमनु तुर्वसुः[2]), ।
शर्मिष्ठायाः सुतो द्रुह्यु[3]स्ततोऽनुः[4]) पूरु[5]रेव च ॥ 72 ॥

---

64 = Br. 12.38; H. 1637. 1) Br. –द्रा च । 2) H. कामानां । 3) Br. T. पुरोः ।

64 = Bḍ. II. 68.70$^{b}$, 71$^{a}$; Vā. 93.70. 1) Vā. तां । 2) Vā. –मानां । 3) Vā. पुरोः ।

65 = Bḍ. II. 68.71$^{b}$, 72$^{a}$; Mh. I. 3506; Mhk. I. 79.7; Mt. 34.8; Vā. 93.71. 1) Bḍ. संप्राप्य स । 2) Mh. Mhk. Mt. शुभान् । 3) Mh. Mhk. Mt. –ह्स्रान्तं ।

66 = Bḍ. II. 68.72$^{b}$, 73$^{a}$; Mh. I. 3507$^{a}$, 3509$^{b}$; Mhk. I. 79.8$^{a}$, 10$^{b}$; Mt. 34.9; Vā. 93.72. 1) Mt. परिचिन्त्य स । 2) Bḍ. काले च; Vā. कालं च । 3) Mt. Vā. कला– । 4) Mh. Mhk. Mt. –ष्ठाश्च वीर्यवान् । 5) Vā. पुरुं ।

67 = Bḍ. II. 68.73$^{b}$, 74$^{a}$; Mh. I. 3510; Mhk. I. 79.11; Mt. 34.12; Vā. 93.73. 1) Mh. Mhk. –कामं । 2) Mt. –काम– ।

68 = Bḍ. II. 68.74$^{b}$, 75$^{a}$; Mh. I. 3516; Mhk. I. 79.17; Mt. 34.13; Vā. 93.74. 1) Vā. पुरो । 2) Mh. Mhk. Mt. गृह्णाणेदं । 3) Mh. Mhk. चेदं; Mt. चैव । 4) Mh. Mhk. गृहाण त्वं ।

69 = Bḍ. II. 68.75$^{b}$, 76$^{a}$; Mh. I. 3517; Mhk. I. 79.18; Mt. 34.14; Vā. 93.75. 1) Mh. Mhk. Mt. –षस्तदा । 2) Mt. स । 3) Vā. पु– ।

70 = Bḍ. II. 68.76$^{b}$, 77$^{a}$; L. 66.81; Mh. I. 3518; Mhk. I. 79.19; Mt. 34.15; Vā. 93.76. 1) Mh. Mhk. –मं नृपतिं । 2) Vā. पु– ।

71 = Bḍ. II. 68.77$^{b}$, 78$^{a}$; L. 66.82; Mh. I. 3519; Mhk. I. 79.20; Mt. 34.16; Vā. 93.77. 1) Mt. दौहित्रं । 2) Vā. श्रेष्ठं । 3) L. कनीयान् ; Vā. पुरो । 4) L. Vā. राज्यम्; Bḍ. दास्यसि । 5) Bḍ. पूरवे; L. अर्हति; Mh. Mhk. प्रयच्छसि ।

72 = Bḍ. II. 68.78$^{b}$, 79$^{a}$; Mh. I. 3520; Mhk. I. 79.21; Mt. 34.17; Vā. 93.78. 1) Mt. ज्येष्ठो यदु– । 2) Mt. सुतस्तुर्वसुस्तदनन्तरम् । 3) Vā. द्रुह्य– । 4) Mt. –स्तथानुः । 5) Vā. पुरु– ।

कथं ज्येष्ठान्[1]तिक्रम्य कनीयान् राज्यमर्हति, ।
एतत्[2]) संबोधयामस्त्वां[3]), धर्मं *समनुपालय*[4]) ! ॥ 73 ॥

ययातिरुवाच :

ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः, ।
ज्येष्ठं प्रति यथा[1]) राज्यं न देयं मे कथंचन ॥ 74 ॥

मातापित्रोर्वचनकृद्धितः[1]) पुत्रः[2]) *प्रशस्यते*[3]), ।
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ॥ 75 ॥

प्रतिकूलः पितुर्यश्च[1]), न स[2]) पुत्रः सतां मतः, ।
स पुत्रः, पुत्रवद् यश्च[3]) वर्तते पितृमातृषु[4]) ॥ 76 ॥

यदुनाऽहमवज्ञातस्तथा तुर्वसुनाऽपि च[1]) ।
द्रुह्युणा[2]) चानुना चैव[3]) *मय्य*[4]वज्ञा कृता भृशम् ॥ 77 ॥

पू[1]रुणा तु[2]) कृतं वाक्यं मानितं च[3]) विशेषतः, ।
कनीयान् मम दायादो, जरा येन धृता[4]) मम ॥ 78 ॥

*सर्वे*[1]) *कामा*[2]) *मम*[3]) कृताः पू[4]रुणा पुत्ररू*पिणा*[5]), ।
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ॥ 79 ॥

पुत्रो यस्त्वाऽनुवर्तेत, स राजा *पृथिवीपते*[1]) ।
भवतोऽनु*मतोऽप्येवं*[2]) पूरू राज्येऽभिषिच्यताम्[3]) ॥ 80 ॥

प्रजा ( प्रकृतय ) ऊचुः :

यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा, ।

---

73 = Bḍ. II. 68.79$^{b}$, 80$^{a}$; L. 66.83 = b; Mh. I. 3521; Mhk. I. 79.22; Mt. 34.18; Vā. 93.79. 1) Mt. –ष्ठम– । 2) Bḍ. सुतः; L. एते; Vā. T. धर्मतो; V. अतः । 3) Vā. T. बोधयाभि त्वां; V. संबोधयामि त्वां । 4) L. च अनुपालय; Mh. त्वं प्रतिपालय; Mt. स्वधर्ममनुपालय ।

74 = Bḍ. II. 68.80$^{b}$, 81$^{a}$; L. 67.1; Mh. I. 3522; Mhk. I. 79.23; Mt. 34.19; Vā. 93.80. 1) Mt. T. यतो ।

75 = Bḍ. II. 68.81$^{b}$, 82$^{a}$; L. 67.3$^{a}$, 2$^{a}$; Mh. I. 3524$^{a}$, 3523$^{a}$; Mhk. I. 79.25$^{a}$, 24$^{a}$; Mt. 34.21$^{a}$, 20$^{a}$; Vā. 93.81. 1) Bḍ. –वीरः; L. –कृत् सद्भिः; Vā. –द्धित– । 2) Mh. Mhk. Mt. पथ्य– । 3) Mh. Mhk. Mt. –श्च यः सुतः ।

76 = Bḍ. II. 68.82$^{b}$, 83$^{a}$; L. 67.2$^{b}$, 3$^{b}$; Mh. I. 3523$^{b}$, 3524$^{b}$; Mhk. I. 79.24$^{b}$, 25$^{b}$; Mt. 34.20$^{b}$, 21$^{b}$; Vā. 93.82. 1) L. –लमतिश्चैव । 2) L. स्व– । 3) L. यस्तु । 4) L. मातृपितृषु ।

77 = Bḍ. II. 68.83$^{b}$, 84$^{a}$; L. 67.4; Mh. I. 3525; Mhk. I. 79.26; Mt. 34.22; Vā. 93.83. 1) Mt. वा । 2) L. Vā. द्रुह्येण । 3) L. Mt. Vā. चैव– । 4) L. Mt. T. Vā. –प्य– ।

78 = Bḍ. II. 68.84$^{b}$, 85$^{a}$; L. 67.5; Mh. I. 3526; Mhk. I. 79.27; Mt. 34.23; Vā. 93.84$^{ab}$. 1) Vā. पु– । 2) L. च; Mt. मे । 3) Bḍ. L. Vā. मानितश्च । 4) Mh. Mhk. धृना येन जरा ।

79 = Bḍ. II. 68.85$^{b}$, 86$^{a}$; L. 67.7$^{a}$ = b; Mh. I. 3527; Mhk. I. 79.28; Mt. 34.24; Vā. 93.84$^{c}$, 85$^{a}$. 1) Mh. Mhk. Mt. मम; Vā. सर्वे– । 2) Mh. Mhk. Mt. कामः; Vā. –कामः । 3) Mh. Mhk. Mt. स च कृतः; Vā. सर्वं– । 4) Vā. –तः पु– । 5) Bḍ. पुण्यकारिणा; Mh. Mhk. मित्ररूपिणा; Vā. पुत्रकारिणा ।

80 = Bḍ. II. 68.86$^{b}$, 87$^{a}$; L. 67.7$^{bc}$; Mh. I. 3528; Mhk. I. 79.29; Mt. 34.25; Vā. 93.85$^{b}$, 86$^{a}$. 1) Bḍ. तु महामते; L. स ते राज्यधरस्त्विति; Mt. –पतिः; Vā. ते महामते । 2) L. –वन्तोऽप्यनुजानन्तु; Mh. –वतोऽनुनयाम्येवं; Mt. –वन्तः प्रतिजानन्तु । 3) L. –षिच्यते ।

सर्वमर्हति[1]) कल्याणं कनीयानपि स प्रभुः[2]) ॥ 81 ॥
अर्हः[1]) पूरु[2]रिदं राज्यं[3]), यः प्रियः[4]) प्रियकृत्[5]) तव, ।
वरदानेन शुक्रस्य न शक्यं वक्तु[6]मुत्तरम्[7]) ॥ 82 ॥
पौर[1]जानपदैस्तुष्टैरित्युक्तो[2]) नाहुषस्तदा ।
अभिषिच्य[3]) ततः[4]) पूरुं[5]) राज्ये स्वे[6]) सुतमात्मनः[7]) ॥ 83 ॥

दिशि दक्षिणपूर्वस्यां तुर्वसुं तु न्यवेशयत्[1]), ।
*दिशि पूर्वोत्तरस्यां तु*[1])
यदुं ज्ये[2]ष्ठं न्ययोजयत् , ।
[ मध्ये पू[3]रुं च राजान-
मभ्यषिञ्चत् स नाहुषः ] ॥ 84 ॥

दक्षिणापरतो[1]) राजा
यदुं ज्ये[2]ष्ठं न्यवेशयत्[3]), ॥ 84 ॥

प्रतीच्यामुत्तरस्यां च[1]) द्रुह्युं[2]) चानुं च तावुभौ[3]) ।
सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ।
व्यभजत्[4]) पञ्चधा राजा[5]) पुत्रेभ्यो[6]) नाहुषस्तदा ॥ 85 ॥

तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना[1]) ।
यथाप्रदेशं धर्मज्ञैर्ध[2]र्मेण प्रति[3]पाल्यते ॥ 86 ॥

[ प्रजास्तेषां पुरस्तात् तु
वक्ष्यामि *मुनिसत्तमाः*[1]) ।

एवं विभज्य पृथिवीं
पुत्रेभ्यो नाहुषस्तदा
पुत्रसंक्रामितश्रीस्तु
प्रीतिमानभवत् नृपः[1]) ॥ $86_1$ ॥

---

81 = Bḍ. II. 68.87$^{b}$, 88$^{a}$; L. 67.8; Mh. I. 3529; Mhk. I. 79.30; Mt. 34.26; Vā. 93.86$^{bc}$. 1) Mt. –वंसोऽर्हति । 2) Mh. Mhk. सत्तमः ।

82 = Bḍ. II. 68.88$^{b}$, 89$^{a}$; L. 67.9; Mh. I. 3530; Mhk. I. 79.31; Mt. 34.27; Vā. 93.87. 1) Bḍ. अर्होऽस्य; L. Mt. अर्हं ! 2) Bḍ. पूरू; Mt. पूरो–; Vā. पुरु– । 3) Bḍ. –रू राज्यस्य । 4) L. सुतो; Mh. Mhk. सुतः । 5) L. वाक्यकृत् । 6) L. कर्तुं– । 7) L. –मन्यथा ।

83 = Bḍ. II. 68.89$^{b}$, 90$^{a}$; L. 67.10; Mh. I. 3531; Mhk. I. 79.32; Mt. 34.28; Vā. 93.88. 1) L. एवं । 2) Bḍ. –त्युक्ते । 3) Mh. अभ्यषिञ्चत् । 4) L. ततो । 5) L. राज्ये; Vā. पुरुं । 6) Bḍ. स राज्ये; L. पूरुं स; Mt. T. स्व–; 7) Mt. –मात्मजम् ।

84$^{a}$ = Bḍ. II. 68.90$^{b}$; Br. 12.20$^{a}$; H. 1617$^{b}$; Kū. 22.10$^{a}$; L. 67.11$^{a}$; Vā. 93.89$^{a}$; Vi. IV. 10.17$^{a}$. 1) Br. H. मतिमान् नृपः; Kū. L. पुत्रमादिशत् ; Vi. प्रत्यथादिशत् ।

84$^{bc}$ = Br. 12.19; H. 1618$^{b}$, 1619$^{a}$. 1) Br. ययातिर्दिशि पूर्वस्यां । 2) H. श्रे– । 3) Br. पु– ।

84$^{b}$ = Bḍ. II. 68.91$^{a}$; Kū. 22.10$^{b}$; L. 67.11$^{b}$; Vā. 93.89$^{b}$. 1) Kū. –परयो; L. –गायामथो । 2) Kū. Vā. T. श्रे– । 3) Kū. L. न्ययोजयत् ।

85 = Bḍ. II. 68.91$^{b}$, 92; Br. 12.18 = bc; H. 1618$^{a}$, 1616$^{b}$, 1617$^{a}$; Kū. 22.11$^{a}$ = a; L. 67.12, 13$^{a}$; Vā. 93.90; Vi. IV. 10.17$^{b}$ = a. 1) Kū. –रायां च; L. तु । 2) L. –ह्युं; Vi. –च्यां च तया द्रुह्युं । 3) H. च नाहुषः; Kū. –णुम· कल्पयत् ; Vi. दक्षिणापथतो यदुम् । 4) Br. विभज्य । 5) Br. राज्यं; L. –जश्च त्रिधा राज्यं । 6) Br. H. पुत्राणां ।

86 = Bḍ. II. 68.93; Br. 12.20$^{b}$, 21$^{a}$; H. 1619$^{b}$, 1620$^{a}$; Kū. 22.11$^{b}$ = a; Vā. 93.91. 1) Kū. धर्मतः परिपालिता । 2) Br. H. –शमचापि ध– । 3) H. परि– ।

[ ] = Br. 12.21$^{b}$; H. 1620$^{b}$. 1) H. नृपसत्तम ।

$86_1$ = Bḍ. II. 68.94; L. 67.13$^{b}$ = b; Vā. 93.92. 1) L. हर्षनिर्भरमानसः ।

धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः[1]) ।
जरावान्[2]भवद् राजा भारमावेश्य बन्धुषु ॥ 87 ॥

| निक्षिप्तशस्त्रः पृथिवीं निरीक्ष्य[1]) पृथिवीपतिः ।
| प्रीतिमानभवद् राजा ययातिरपराजितः ॥ $87_1$ ॥

अत्र[1]) गाथा महाराज्ञा[2]) पुरा[3]) गीता[4]) ययातिना, ।
याभिः प्रत्याहरेत्[5]) कामान्[6]) सर्वशोऽङ्गानि[7]) कूर्मवत्[8]) ॥ 88 ॥

न जातु कामः कामानामुपभोगेन शाम्यति, ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ 89 ॥

यत् पृथिव्यां[1]) व्रीहियवं[2]) हिरण्यं पशवः स्त्रियः, ।
नालमेकस्य तत्सर्व[3]मिति कृत्वा[4]) न मुह्यति[5]) ॥ 90 ॥

यदा न कुरुते भावं[1]) सर्वभूतेषु पापकम्[2]) ।
कर्मणा मनसा वाचा, ब्रह्म संपद्यते तदा[3]) ॥ 91 ॥

यदा परान्[1]) न बिभेति, यदा[2]) चास्मान्[3]) न बिभ्यति, ।
यदा नेच्छति[4]), न द्वेष्टि, ब्रह्म संपद्यते तदा ॥ 92 ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः, ।
योऽसौ[1]) प्राणान्तिको रोग[2]स्तां तृष्णां त्यजतः सुखम्[3]) ॥ 93 ॥

जीर्यन्ति जीर्यतः केशा, दन्ता जीर्यन्ति जीर्यतः, ।

---

87 = Bḍ. II. 68.95; Br. 12.22; L. 67.14[a] = b; H. 1621; Vā. 93.93. 1) Bḍ. Vā. राज्यं चैव सुतेषु तु । 2) Bḍ. L. Vā. प्रीतिमान- ।

| $87_1$ = Br. 12.23; H. 1622. 1) Br. चचार ।

88 = Bḍ. II. 68.96; Br. 12.39; H. 1638; L. 67.14[b], 15[a]; Vā. 93.94. 1) Br. यत्र; H. तत्र । 2) Br. मुनिश्रेष्ठा; H. महाराज । 3) Br. गीताः; H. शृणु । 4) Br. किल । 5) Vā. योऽभिप्रत्याहरन् । 6) Bḍ. -मात् । 7) Bḍ. Vā. कूर्मोऽङ्गानीव; L. -तोऽङ्गानि । 8) Bḍ. Vā. सर्वशः ।

89 = Bḍ. II. 68.97; Br. 12.40; H. 1639; L. 8.25, 67.16; Mh. I. 3174, 3511; Mhk. I. 79.12; Mt. 34.10; Vā. 93.95; Vi. IV. 10.9.

90 = Bḍ. II. 68.98; Br. 12.41; H. 1640; L. 67.17; Mh. I. 3175, 3512; Mhk. I. 79.13; Mt. 34.11; Vā. 93.96; Vi. IV. 10.10. 1) H. पृथिव्या । 2) Mh. I. 3175[a] पृथिवी रत्नसंपूर्णा । 3) Mh. I. 3512; Mhk. Vi. एकस्यापि न पर्याप्तं । 4) Bḍ. Vā. -मिति पश्यन् ; L. Mh. I. 3175[b] Mt. -मिति मत्वा; Mh. I. 3512[b], Mhk. तस्मात् तृष्णां; Vi. तदित्यतितृपं । 5) L. Mh. I. 3175[b] Mt. शमं व्रजेत्; Mh. I. 3512 परित्यजेत्; Vi. त्यजेत् ।

91 = Bḍ. II. 68.99; Br. 12.42; H. 1641; L. 67.18; Mh. I. 3176; Vā. 93.97; Vi. IV. 10.11[a](b). 1) Br. H. यदा भावं न कुरुते; Mh. पापं; Vā. यदा तु कुरुते भावं । 2) Bḍ. -तेष्वमङ्गलम् ; Mh. कर्हिचित् । 3) Vi. समदृष्टेस्तदा पुंसः सर्वा एव सुखा दिशः ।

92 = Bḍ. II. 68.100; Br. 12.43; H. 1642; L. 67.19; Mh. I. 3177; Vā. 93.98. 1) Br. तेभ्यो; H. -दान्येभ्यो; Mh. चायं । 2) L. परे । 3) Bḍ. -दान्यस्मान् ; Vā. त्वस्मिन् । 4) L. न निन्देन् ।

93 = Bḍ. II. 68.101; Br. 12.44; H. 1643; L. 67.20; Mh. I. 3513; Mhk. I. 79.14; Vā. 93.99; Vi. IV. 10.12[a](b). 1) Bḍ. यैषा; Vā. दोषः । 2) Vā. राग- । 3) Vi. तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाभिपूर्यते ।

धनाशा जीविताशा[1]) च जीर्यतोऽपि न जीर्यति ॥ 94 ॥

यच्च कामसुखं लोके, यच्च दिव्यं महत् सुखम्, ।
तृष्णा[1]क्षयसुखस्यैतत्[2]) कलां नार्हति षोडशीम्[3]) ॥ 95 ॥

> [ पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः, ।
> तथाप्यनुदिनं तृष्णा ममैतेष्वभि[1]जायते ॥ $95_1$ ॥
> तस्मादेना[1]महं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
> निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ] ॥ $95_2$ ॥

एवमुक्त्वा स राजर्षिः सदारः प्राविशद्[1]) वनम् ।

कालेन महता चापि[1])
चचार विपुलं तपः ॥ 96 ॥
भृगुतुङ्गे तप[1]स्तीर्त्वा[2])
तपसोऽन्ते महायशाः ।
अनश्नन् देहमुत्सृज्य
सदारः स्वर्गमाप्तवान् ॥ 97 ॥
तस्य वंशे मुनिश्रेष्ठाः[1])
पञ्च राजर्षिसत्तमाः ।

भृगुतुङ्गे तपस्तप्त्वा
तत्रैव च महायशाः ।
पालयित्वा व्रतं चार्षं[1])
तत्रैव[2]) स्वर्गमाप्तवान् ॥ 97 ॥
तस्य वंशास्तु पञ्चैते
पुण्या देवर्षिसत्कृताः, ।

यैर्व्याप्ता पृथिवी कृत्स्ना[1]) सूर्यस्येव गभस्तिभिः[2]) ॥ 98 ॥

धन्यः[1]) प्रजावान् आयुष्मान् कीर्तिमांश्च भवेन् नरः ।
ययातेश्च[2]रितं पुण्यं[3]) पठन्[4]) शृण्वन् द्विजोतमाः[5]) ॥ 99 ॥

---

94 = Bḍ. II. 68.102; Br. 12.45; H. 1644; L. 67.21[a], 22[b]; Vā. 93.100; Vi. IV. 10.13. 1) Bḍ. L. Vā. Vi. जीविताशा धनाशा ।

95 = Bḍ. II. 68.103; Br. 12.46; H. 1645; L. 67.23; Vā. 93.101. 1) Bḍ. कृष्णा- । 2) Br. H. -स्यैते । 3) Br. नार्हन्ति षोडशीं कलाम् ; H. नार्हतः षोडशीं कलाम् ।

> $95_1$ = Mh. I. 3514; Mhk. I. 79.15; Vi. IV. 10.14. 1) Vi. -तेष्वेव ।
> $95_2$ = Mh. I. 3515; Mhk. I. 79.16; Vi. IV. 10.15. 1) Vi. -देता- ।

96[a] = Bḍ. II. 68.104[a]; Br. 12.47[a]; H. 1646[a]; L. 67.24[a]; Vā. 93.102[a]. 1) Bḍ. Vā. प्रस्थितो ।

96[b] = Br. 12.47[b]; H. 1646[b] 1) Br. चार्यं ।
97 = Br. 12.48; H. 1647. 1) Br. T. गतिं । 2) Br. T. प्राप; V. -श्चीर्त्वा ।
98[a] = Br. 12.49[a]; H. 1648[a]. 1) H. महाराज ।

97 = Bḍ. II. 68.104[b], 105[a]; L. 67.24[b], 25[a]; Vā. 93.102[bc]. 1) L. साधयित्वा त्वनाशनं; Vā. व्रतशतं । 2) L. सदारः ।
98[a] = Bḍ. II. 68.105[b]; L. 67.25[b]; Vā. 93.103[a].

98[b] = Bḍ. II. 68.106[a]; Br. 12.49[b]; H. 1648[b]; L. 67.26[a]; Vā. 93.103[b]. 1) Br. H. सर्वा । 2) L. मरीचिभिः ।

99 = Bḍ. II. 68.106[b], 107; Br. 12.51; H. 1650; L. 67.26[b], 27[a]; Vā. 93.104. 1) Br. सुस्थः; H. स्वस्थः; L. धनी । 2) Br. L. ययातिच- । 3) Bḍ. Vā. सर्वं; Br. नित्यं- । 4) Br. -मिदं । 5) H. नराधिप; L. -ण्वंश्च बुद्धिमान् ; Vā. -मः ।

---

## सन्दर्भस्तवकः II

### A.

( Mt. 23.1—47; P.1 I. 12.1—42; P.2 V. 12.1—51. )

| | |
|---|---|
| सोमः पितॄणामधिपः,<br>कथं शास्त्रविशारद । | सोमवंशः कथं जातः<br>सर्वशास्त्र[1]विशारद, । |

तद्वंशे के तु[1]) राजानो बभूवुः कीर्तिवर्धनाः ? ॥ 1 ॥

सूत ( पुलस्त्य उवाच ) :

आदिष्टो ब्रह्मणा पूर्वमत्रिः सर्ग[1]विधौ पुरा ।
अनुत्तरं[2]) नाम तपः सृष्टचर्थं तप्तवान् प्र[3]भुः ॥ 2 ॥

यदानन्दकरं ब्रह्म जगत्क्लेशवि[1]नाशनम् ।
ब्रह्मविष्ण्वर्करुद्राणा[3]मभ्यन्तरमतीन्द्रियम्, ॥ 3 ॥

| | |
|---|---|
| शान्तिकृच्छान्तमनस-<br>स्तदन्तर्नयने स्थितम् ।<br>माहात्म्यात् तपसा विप्राः<br>परमानन्दकारकम् ॥ 4 ॥ | शान्तिं कृत्वा तु[1]) मनसा<br>तदात्रिः[2]) संयमे स्थितः ।<br>माहात्म्यं तपसो वापि<br>परमानन्दकारकम् ॥ 4 ॥ |
| यस्मादुमापतिः सार्ध-<br>मु[3]मया तमधिष्ठितः ।<br>तं दृष्ट्वा चाष्टमांशेन,<br>तस्मात् सोमोऽभवच्छिशुः ॥ 5 ॥ | यस्माद् वंशपतिः सार्धं<br>समये तदधिष्ठितम्[1]) ।<br>तं दृष्ट्वा चेष्टमानेन[2]),<br>तस्मात् सोमोऽभवद् विभुः ॥ 5 ॥ |
| अधः सुस्राव नेत्राभ्यां<br>धाम तच्चाम्बुसंभवम् । | अथ सुस्राव नेत्राभ्यां<br>जलं तत्रात्रिसंभवम् । |

द्योतयद्[1]) विश्वमखिलं ज्योत्स्नया सचराचरम् ॥ 6 ॥

तद् दिशो जगृहुस्तत्र[1]) स्त्रीरूपेण सुतेच्छया[2]), ।

---

| | |
|---|---|
| 1ᵃ = Mt. 23.1ᵃ. | 1ᵃ = P.1 I. 12.1ᵃ; P.2 V. 12.1ᵃ. 1) P.1 कथयात्र । |

1ᵇ = Mt. 23.1ᵇ; P.1 I. 12.1ᵇ; P.2 V. 12.1ᵇ. 1) Mt. T. –द्वंश्या ये च ।

2 = Mt. 23.2; P.1 I. 12.2; P.2 V. 12.2. 1) P.2 सर्वे– । 2) Mt. अनुत्तमं; P.1 अनन्तरं । 3) P.1 P.2 वि– ।

3 = Mt. 23.3; P.1 I. 12.3; P.2 V. 12.3. 1) P.1 भगवन् क्लेश–; P.2 भगवान् क्लेश– ।

| | |
|---|---|
| 4 = Mt. 23.4. | 4 = P.1 I. 12.4; P.2 V. 12.4. 1) P.1 कृत्वात्म– । 2) P.1 तदत्रिः । |
| 5 = Mt. 23.5. | 5 = P.1 I. 12.5; P.2 V. 12.5. 1) P.1 –ष्ठितः । 2) P.1 –सोमेन । |
| 6ᵃ = Mt. 23.6ᵃ. | 6ᵃ = P.1 I. 12.6ᵃ; P.2 V. 12.6ᵃ. |

6ᵇ = Mt. 23.6ᵇ; P.1 I. 12.6ᵇ; P.2 V. 12.6ᵇ. 1) Mt. दीपयन् ।

7ᵃ = Mt. 23.7ᵃ; P.1 I. 12.7ᵃ; P.2 V. 12.7ᵃ. 1) Mt. –ह्रुर्धाम । 2) P.1 –पेणासहच्छयाः ।

| | |
|---|---|
| गर्भो भूत्वोदरे तासा-<br>मास्थितोऽब्दशतत्रयम् ॥ 7 ॥ | गर्भोऽभूदु[1]दरे तासां<br>स्थितः सोऽप्यत्रिसंभवः ॥ 7 ॥ |

आशाश्च[1]) मुमुचुर्गर्भमशक्ता धारणे[2]), ततः ।
समादायाथ तं गर्भमेकीकृत्य चतुर्मुखः ॥ 8 ॥

युवानमकरोद् ब्रह्मा सर्वायुधधरं नरम् ।
स्यन्दनेऽथ सहस्राश्वे[1]) वेद[2]शक्तिमये प्रभुः ॥ 9 ॥

आरोप्य लोकमनयदात्मीयं स पितामहः ।
तत्र[1]) ब्रह्मर्षिभिः प्रोक्तम[2]स्मत्स्वामी भवत्वयम् ! ॥ 10 ॥

ऋषिभिर्देवगन्धर्वैरप्सरोभि[1]स्तथैव च ।
तुष्टुवे *साम*[2]दैवत्यैर्ब्रह्माद्यैर्वेदसंग्रहः[3]), ॥ 11 ॥

स्तूयमानस्य तस्याभूदधिको धामसंभवः[1]), ।
तेजोवितानादभवद् भुवि दिव्यौषधीगणः ॥ 12 ॥

तद्दीप्तिरधिका तस्माद् रात्रौ भवति सर्वदा, ।
तेनौषधीशः सोमोऽभूद् द्विजेशश्*चापि गद्यते*[1]) ॥ 13 ॥

| | |
|---|---|
| वेदधामरसं चापि<br>यदिदं चन्द्रमण्डलम्, । | वेदधामा रसश्चायं<br>यदिदं मण्डलं शुभम्, । |

क्षीयते वर्धते चैव शुक्ले कृष्णे च सर्वदा ॥ 14 ॥

विंशतिं च तथा सप्त दक्षः प्राचेतसो ददौ ।
रूपलावण्यसंयुक्तास्तस्मै कन्याः सुवर्चसः ॥ 15 ॥

ततः पद्म[1]सहस्राणां सहस्राणि दशैव तु ।
तपश्चचार[2]) शीतांशुर्विष्णुध्यानैकतत्परः ॥ 16 ॥

ततस्तुष्टस्तु[1]) भगवांस्तस्मै नारायणो हरिः ।
वरं वृणीष्व चो[2]वाच परमात्मा जनार्दनः ॥ 17 ॥

ततो वव्रे वरं[1]) सोमः शक्रलोकं[2]) *जया*[3]म्यहम्, ।
प्रत्यक्षमेव भोक्तारो भवन्तु मम मन्दिरे ॥ 18 ॥

---

7[b] = Mt. 23.7[b]. | 7[b] = P.1 I. 12.7[b]; P.2 V. 12.7[b]. 1) P.1 भूत्वो- ।

8 = Mt. 23.8; P.1 I. 12.8; P.2 V. 12.8. 1) Mt. आशास्तं । 2) P.2 धरणे ।

9 = Mt. 23.9; P.1 I. 12.9; P.2 V. 12.9. 1) P.1 सहस्तेन; P.2 सहस्राख्ये । 2) Mt. V. P.2 T. देव- ।

10 = Mt. 23.10; P.1 I. 12.10; P.2 V. 12.10. 1) P.1 P.2 ततो । 2) P.2 -क्तं ब्र- ।

11 = Mt. 23.11; P.1 I. 12.11[a] = a; P.2 V. 12.11. 1) Mt. -रोपधीभि- । 2) Mt. तुष्टुवुः सोम- । 3) Mt. -ह्याद्या मन्त्रसंग्रहैः ।

12 = Mt. 23.12; P.1 I. 12.11[b], 12[a]; P.2 V. 12.12. 1) P.1 P.2 -कं महदन्तरम् ।

13 = Mt. 23.13; P.1 I. 12.12[b], 13[a]; P.2 V. 12.13. 1) P.1 P.2 द्विजेष्वपि हि गण्यते ( P.2 V. गद्यते ) ।

14[a] = Mt. 23.14[a]. | 14[a] = P.1 I. 12.13[b]; P.2 V. 12.14[a].

14[b] = Mt. 23.14[b]; P.1 I. 12.14[a]; P.2 V. 12.14[b].

15 = Mt. 23.15; P.1 I. 12.14[b], 15[a]; P.2 V. 12.15.

16 = Mt. 23.16; P.1 I. 12.15[b], 16[a]; P.2 V. 12.16. 1) P.1 शक्ति- । 2) P.1 -श्चकार ।

17 = Mt. 23.17; P.1 I. 12.16[b], 17[a]; P.2 V. 12.17. 1) P.1 -ष्टश्च; P.2 -ष्टः स । 2) Mt. प्रो- ।

18 = Mt. 23.18; P.1 I. 12.17[b], 18[a]; P.2 V. 12.18. 1) Mt. वरान् । 2) P.1 P.2 -लोके । 3) P.1 P.2 यजा- ।

राजसूये सुरगणा ब्रह्माद्या ये चतुर्विधाः[1]), ।
रक्षपालः सुरो[2]ऽस्माकमास्तां शूलधरो हरः ॥ 19 ॥
तथेत्युक्तः समाजह्रे[1]) राजसूयं तु विष्णुना ।
होतात्रिर्भृगुरध्वर्युरुद्गाता च च[2]तुर्मुखः, ॥ 20 ॥
ब्रह्मत्वमगमत् तस्य उपद्रष्टा हरिः स्वयम् ।
सदस्याः सनकाद्या[1]स्तु राजसूयविधौ[2]) स्मृताः[3]) ॥ 21 ॥
वसवोऽध्वर्यवस्तद्वद्[1]) विश्वेदेवास्तथैव च[2]), ।
त्रैलोक्यं दक्षिणा तेन ऋत्विग्भ्यः प्रतिपादिता[3]) ॥ 22 ॥
ततः समाप्तेऽवभृथे तद्रूपालोकनेच्छवः[1]) ।
कामबाणाभितप्ताङ्ग्यो[2]) नव देव्यः सिषेविरे ॥ 23 ॥
लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च कर्दमम् ।
द्युतिर्विभावसुं त्यक्त्वा[1]), पु[2]ष्टिर्धातारमव्ययम्, ॥ 24 ॥
प्रभा प्रभाकरं त्यक्त्वा, हविष्मन्तं कुहूः स्वयम्, ।
कीर्तिर्जयन्तं भर्तारं, वसुर्मारीच[1]कश्यपम्, ॥ 25 ॥
धृतिस्त्यक्त्वा पतिं नन्दि[1]) सोममेवाभजंस्तदा; ।
स्वकीया इव सोमोऽपि कामयामास तास्तदा ॥ 26 ॥

| निर्वृत्तयज्ञकर्माणं दीक्षिताः वेदपारगाः ।
| तं वा वारयितुं शक्ता न ते देवैः सवासवैः ॥ $26_1$ ॥
| मुक्तभोगास्तु मुनयो जटाजिनधरास्तथा ।
| युवतीदर्शने क्षुब्धास्तत्क्षणे च मदं गताः ॥ $26_2$ ॥
| गम्यागम्याश्च युवतीः कामार्ताः पशवो यथा ।
| न ते धारयितुं शक्ता वर्षासु च यथापगाः ॥ $26_3$ ॥

एवं कृतापचारस्य
तासां भर्तृगणस्तदा ।
न शशाकापचाराय
शापैः शस्त्रादिभिः पुनः ॥ 27 ॥

| एवं कृतापचारास्ता-
| स्तासां भर्तृगणास्तथा ।
| न शेकुरपराधं ते
| शप्तुं शक्ता विधुं न च ॥ 27 ॥

तथाप्यराजत[1]) विधुर्दशधा भावयन् दिशः, ।
सोमः प्राप्याथ दुष्प्राप्यमैश्वर्यमृषिसंस्कृतम्[2]) ।

---

19 = Mt. 23.19; P.1 I. 12.18[b], 19[a]; P.2 V. 12.19. 1) Mt. –द्याः सन्तु मे द्विजाः । 2) Mt. –क्षःपालः शिवो ।
20 = Mt. 23.20; P.1 I. 12.19[b], 20[a]; P.2 V. 12.20. 1) Mt. T. स आजह्रे । 2) Mt. –भूच्च– ।
21 = Mt. 23.21; P.1 I. 12.20[b], 21[a]; P.2 V. 12.21. 1) P.1 P.2 V. सर्वदेवा– । 2) P.1 P.2 V. –धिः । 3) P.1 P.2 V. –तः ।
22 = Mt. 23.22; P.1 I. 12.21[b], 22[a]; P.2 V. 12.22. 1) Mt. चमसाध्वर्यवस्तत्र । 2) Mt. –द्देवा दशैव तु । 3) Mt. –तम् ।
23 = Mt. 23.23; P.2 V. 12.23. 1) P.2 –नेच्छया । 2) P.2 –साङ्गा ।
24 = Mt. 23.24; P.2 V. 12.24. 1) Mt. तद्वत् । 2) Mt. तु– ।
25 = Mt. 23.25; P.2 V. 12.25. 1) P.2 अंशुमाली च ।
26 = Mt. 23.26; P.2 V. 12.26. 1) P.2 –न्दं ।
| $26_1$ = P.2 V. 12.27.
| $26_2$ = P.2 V. 12.28.
| $26_3$ = P.2 V. 12.29.
| 27 = P.2 V. 12.30.
27 = Mt. 23.27.
28 = Mt. 23.28; P.1 I. 12.22[b], 23[a] –bc; P.2 V. 12.31, 32. 1) P.2 तथा व्यराजच्च । 2) P.1 P.2 सृष्टिसत्कृतम् ।

सप्तलोकैक[3]नाथत्वं प्राप्तः स[4]) तपसा तदा ॥ 28 ॥
कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणोप[1]शोभिताम्[2]) ।
बृहन्नितम्बस्तनभारखेदां[3]) पुष्पाव[4]भङ्गेऽप्यतिदुर्बलाङ्गीम् ॥ 29 ॥
भार्यां च तां देवगुरोरनङ्गबाणाभि[1]रामायतचारुनेत्राम् ।
तारां स ताराधिपतिः स्मरार्तः केशेषु जग्राह विविक्तभूमौ ॥ 30 ॥
सापि स्मरार्ता सह तेन रेमे तद्रूपकान्त्या हृतमानसैव[1]) ।
चिरं विहृत्याथ जगाम तारां विधुर्गृहीत्वा स्वगृहं ततोऽपि ॥ 31 ॥
न तृप्तिरासीत् स्व[1]गृहेऽपि तस्य तारानुरक्तस्य सुखागमेषु, ।
बृहस्पतिस्तद्विरहाग्निदग्धस्तद्ध्याननिष्ठैकमना बभूव ॥ 32 ॥
शशाक शापं न च दातुमस्मै, न मन्त्रशस्त्राग्निविषैरशेषैः[1]) ।
तस्यापकर्तुं विविधैरुपायैर्नैवाभिचारैरपि वागधीशः ॥ 33 ॥
स याचयामास ततस्तु दैवं[1]) सोमं स्वभार्यार्थमनङ्गतप्तः ।
स याच्यमानोऽपि ददौ न भार्यां[2]) बृहस्पतेस्तत्सुखपाशबद्धः[3]) ॥ 34 ॥
महेश्वरेणाथ चतुर्मुखेन साध्यैर्मरुद्भिः सह लोकपालैः ।
ददौ यदा तां न कथंचिदिन्दुस्तदा शिवः क्रोधपरो बभूव, ॥ 35 ॥
यो वामदेवः प्रथितः पृथिव्यामनेकरुद्रार्चित[1]पादपद्मः ।
ततः सशिष्यो गिरिशः पिनाकी बृहस्पतेः स्ने[2]हवशानु[3]बद्धः ॥ 36 ॥
धनुर्गृहीत्वाजगवं पुरारिर्जगाम भूतेश्वरसिद्धजुष्टः ।
युद्धाय सोमेन विशेषदीप्ततृ[1]तीयनेत्रानलभीमवक्त्रः ॥ 37 ॥

| | |
|---|---|
| सहैव जग्मुश्च गणेशकाद्या | सहैव जग्मुश्च गणेश्वराणां |
| विंशच्चतुःषष्टिगणास्त्रयुक्ताः । | विंशाधिका षष्टिरथोग्रमूर्तिः । |

यक्षेश्वराणां स गणै[1]रनेकैर्युतोऽन्वगात् स्यन्दनसंस्थितानाम् ॥ 38 ॥
वेतालयक्षोरगकिंनराणां पद्मेन चैकेन तथार्बुदेन[1]) ।
लक्षैस्त्रिभिर्द्वादशभी रथानां सोमोऽप्यगात्[2]) तत्र विवृद्धमन्युः ॥ 39 ॥
नक्षत्रदैत्यासुरसैन्ययुक्तः शनैश्चराङ्गारकवृद्धतेजाः, ।
जग्मुर्भयं सप्त तथैव लोका धरावनद्वी[1]पसमुद्रगर्भाः[2]) ॥ 40 ॥

---

3) P.2 –लोकेषु । 4) Mt. –अवाप; P.1 स्व– ।
29 = Mt. 23.29; P.1 I. 12.23$^{b}$, 24$^{a}$; P.2 V. 12.33. 1) Mt. T. –णैश्च । 2) P.1 –शोभाम् । 3) Mt. –खेदात् ।
4) Mt. –ष्पस्य ।
30 = Mt. 23.30; P.1 I. 12.24$^{b}$, 25$^{a}$; P.2 V. 12.34. 1) P.1 –बाणभि– ।
31 = Mt. 23.31; P.1 I. 12.25$^{b}$, 26$^{a}$; P.2 V. 12.35. 1) Mt. –मानसेन ।
32 = Mt. 23.32; P.1 I. 12.26$^{b}$, 27$^{a}$; P.2 V. 12.36. 1) Mt. –रासीच्च ।
33 = Mt. 23.33; P.1 I. 12.27$^{b}$, 28$^{a}$; P.2 V. 12.37. 1) P.1 –रनेकैः ।
34 = Mt. 23.34; P.1 I. 12.28$^{b}$, 29$^{a}$; P.2 V. 12.38. 1) Mt. दैन्यात । 2) Mt. तारां । 3) P.1 –तेः कामवशेन मोहितः; P.2 –पारबद्धः ।
35 = Mt. 23.35; P.1 I. 12.29$^{b}$, 30$^{a}$; P.2 V. 12.39.
36 = Mt. 23.36; P.1 I. 12.30$^{b}$. 31$^{a}$; P.2 V. 12.40. 1) P.2 –राञ्चित– । 2) Mt. –पतिस्ने– । 3) P.2 T. –नेस्नद्वत्रसापि ।
37 = Mt. 23.37; P.1 I. 12.31$^{b}$, 32$^{a}$; P.2 V. 12.41. 1) P.1 –दीप्तस्तृ– ।
38$^{a}$ = Mt. 23.38$^{a}$. | 38$^{a}$ = P.1 I. 12.32$^{b}$; P.2 V. 12.42$^{a}$.
38$^{b}$ = Mt. 23.38$^{b}$; P.1 I. 12.33$^{a}$; P.2 V. 12.42$^{b}$. 1) Mt. यक्षेश्वरः कोटिशतैर– ।
39 = Mt. 23.39; P.1 I. 12.33$^{b}$, 34$^{a}$; P.2 V. 12.43. 1) P.1 P.2 –र्बुदानाम् । 2) P.1 P.2 ऽभ्यगात् ।
40 = Mt. 23.40; P.1 I. 12.35$^{bII}$. $^{I}$, 35$^{a}$; P.2 V. 12.44. 1) Mt. T. –काश्चचाल भूर्द्वी–; V. –काश्चचाल द्वी– ।
2) Mt. –गर्भा ।

स सोममेवाभ्यगमत् पिनाकी गृहीतदीप्तास्त्रविशालवह्निः, ।
अथाभवद् भीषण-भीम-सोम[1]सैन्यद्वयस्यास्य[2]) महाहवोऽसौ ॥ 41 ॥

अशेषसत्त्वक्षयकृत् प्रवृद्धस्तीक्ष्णायुधास्त्र[1]ज्वलनैकरूपः ।
शस्त्रै[2]रथान्योन्यमशेषसैन्यं द्वयोर्जगाम क्षयमुग्रतीक्ष्णैः, ॥ 42 ॥

पतन्ति शस्त्राणि तयोज्ज्वलानि स्वर्भूमिपातालतलं[1]) दहन्ति ।
रुद्रः क्रोधाद्[2]) ब्रह्मशिरो[3]) मुमोच, सोमोऽपि सोमास्त्रममोघवीर्यम्, ॥ 43 ॥

तयोर्निपातेन समुद्रभूम्यो[1]रथान्तरिक्षस्य च भीतिरासीत् ।
तदस्त्रयुद्धं[2]) जगतां क्षयाय प्रवृद्धमालोक्य पितामहोऽपि ॥ 44 ॥

अन्तः[1]) प्रविष्याथ कथंचिदेव[2]) निवारयामास सुरैः सहैव ।
अकारणं किं क्षयकृज्जनानां सोम त्वयापीद[3]मकार्यकार्यम्[4]) ? ॥ 45 ॥

यस्मात् परस्त्रीहरणाय सोम त्वया कृतं युद्धमतीव भीमम्, ।
पापग्रहस्त्वं भविता जनेषु
शान्तोऽप्यलं नूनमथोऽसितान्ते, ।
भार्यामिमामर्पय वाक्पतेस्त्वं,
न चावमानोऽस्ति परस्वहारे ! ॥ 46 ॥

पापग्रह[1]स्त्वं भविता जनेषु[2]),
*शस्त्रोपलम्भे समयोऽपि नास्ति*[3]), ।
भार्यामिमामर्पय वाक्पतेस्त्वं,
*न मानमान्योऽस्ति परापहारे*[4]) ! ॥ 46 ॥

तथेति चोवाच हिमांशुमाली, युद्धादपाक्रामदतः प्रशान्तः ।
वृहस्पतिस्तामाथ गृह्य[1]) तारां हृष्टो जगाम स्वगृहं स[2]रुद्रः ॥ 47 ॥

---

41 = Mt. 23.41; P.1 I. 12.35$^{b}$, 36$^{a}$; P.2 V. 12.45. 1) Mt. –सेन– । 2) Mt. –यस्यापि; P.1 –यस्याथ ।

42 = Mt. 23.42; P.1 I. 12.36$^{b}$, 37$^{a}$; P.2 V. 12.46. 1) P.1 P.2 V. –स्तीक्ष्णप्रधानो– । 2) P.1 T. अस्त्रै– ।

43 = Mt. 23.43; P.1 I. 12.37$^{b}$, 38$^{a}$; P.2 V. 12.47. 1) Mt. T. –तालमथो; P.1 –तालमलं । 2) Mt. T. कोपाद् । 3) Mt. T. –शीर्षं ।

44 = Mt. 23.44; P.1 I. 12.38$^{b}$, 39$^{a}$; P.2 V. 12.48. 1) P.2 –भूमे– । 2) Mt. –स्त्रयुग्मं; P.1 –दासुयुद्धं ।

45 = Mt. 23.45; P.1 I. 12.39$^{b}$, 40$^{a}$; P.2 V. 12.49. 1) P.1 ततः । 2) Mt. –थ कथं कथंचिन् । 3) Mt. त्वयापीत्थ– । 4) Mt. –कारि कार्यम् ।

46$^{a}$ = Mt. 23.46$^{a}$; P.1 I. 12.40$^{b}$; P.2 V. 12.50$^{a}$.

46$^{bc}$ = Mt. 23.46$^{bc}$.

46$^{bc}$ = P.1 I. 12.41; P.2 V. 12.50$^{bc}$. 1) P.2 सापत्रप– । 2) P.2 निजेपु । 3) P.1 पापोऽस्यलं वह्निमुखाशिनां न्वम् । 4) P.1 प्रमाणयने(न्ने?)त्र मदीयवाचम् ।

47 = Mt. 23.47; P.1 I. 12.42; P.2 V. 12.51. 1) Mt. –तिः स्वामपगृह्य । 2) P.1 च ।

## B.

( Mt. 24.1—71; Mh. I. 3156$^{b}$—3182; P.1 I. 12.43—93$^{a}$; P.2 V. 12.52—109. )

ततः संवत्सरस्यान्ते द्वादशादित्यसंनिभः ।
दिव्यपीताम्बरधरो दिव्याभरण[1]भूषितः ॥ 1 ॥
तारोदरविनिष्क्रान्तः कुमारः सूर्य[1]संनिभः ।
सर्वार्थशास्त्रविद् विद्वान्[2]) हस्तिशास्त्रप्रवर्तकः ॥ 2 ॥
नाम यद् राजपुत्रीयं[1]) विश्रुतं[2]) राजवैद्यकम्[3]) ।
राज्ञः सोमस्य पुत्रत्वाद् राजपुत्रो बुधः स्मृतः ॥ 3 ॥
जातमात्रः स[1]) तेजांसि सर्वाण्येवाक्षिपद्[2]) बली, ।
ब्रह्माद्यास्तत्र चाजग्मुर्देवा देवर्षिभिः[3]) सह ॥ 4 ॥
बृहस्पतिगृहे सर्वे जातकर्मोत्सवे तदा ।
प्रप्रच्छु[1]स्ते सुरास्ता[2]रां केन जातः कुमारकः ? ॥ 5 ॥
ततः सा लज्जिता तेषां न किंचिदवदत् तदा ।
पुनः पुनस्तदा पृष्टा लज्जयन्ती वराङ्गना ॥ 6 ॥
सोमस्येति चिरादाह[1]), ततोऽगृह्णाद् विधुः सुतम्, ।
बुध इत्यकरोन् नाम[2]) प्रादाद् राज्यं च भूतले ॥ 7 ॥
अभिषेकं ततः कृत्वा प्रदानमकरोद् विभुः, ।
ग्रह[1]साम्यं[2]) प्रदायाथ ब्रह्मा ब्रह्मर्षिसंयु[3]तः ॥ 8 ॥
पश्यतां सर्वभूतानां[1]) तत्रैवान्तरधीयत ।
इलोदरे च धर्मिष्ठं बुधः पुत्रमजीजनत्, ॥ 9 ॥
अश्वमेधशतं साग्रमकरोद् यः स्वतेजसा, ।
पुरूरवा इति ख्यातः सर्वलोकनमस्कृतः ॥ 10 ॥

| | |
|---|---|
| हिमवच्छिखरे रम्ये<br>समाराध्य जनार्दनम् | हिमवच्छि[1]खरे रम्ये[2])<br>समाराध्य[3]) पितामहम् । |

---

1 = Mt. 24.1; P.1 I. 12.43; P.2 V. 12.52. 1) P.2 –रः पीताम्बरवि– ।
2 = Mt. 24.2; P.1 I. 12.44; P.2 V. 12.53. 1) Mt. T. –रश्चन्द्र– । 2) Mt. T. –र्द्धीमान् ।
3 = Mt. 24.3; P.1 I. 12.45; P.2 V. 12.54. 1) P.1 P.2 T. –पुत्रोऽयं । 2) P.1 P.2 T. –श्रुतो । 3) P.1 P.2 T. –द्यकः ।
4 = Mt. 24.4; P.1 I. 12.46; P.2 V. 12.55. 1) P.1 जनानां तु स; P.2 जनानामुग्र– । 2) Mt. T. –ण्येवाजयद् । 3) P.2 ब्रह्मर्षिभिः ।
5 = Mt. 24.5; P.1 I. 12.47; P.2 V. 12.56. 1) Mt. अपृच्छं– । 2) P.2 तदा ता– ।
6 = Mt. 24.6; P.1 I. 12.48; P.2 V. 12.57.
7 = Mt. 24.7; P.1 I. 12.49; P.2 V. 12.58. 1) P.2 –रात् प्राह । 2) Mt. नाम्ना ।
8 = Mt. 24.8; P.1 I. 12.50; P.2 V. 12.59. 1) Mt. गृह– । 2) P.1 –मघ्यं । 3) P.1 –र्षिभिर्युं– ।
9 = Mt. 24.9; P.1 I. 12.51; P.2 V. 12.60. 1) Mt. –देवानां ।
10 = Mt. 24.10; P.1 I. 12.52; P.2 V. 12.61$^{b}$, 62$^{a}$.
11$^{a}$ = Mt. 24.11$^{a}$.
| 11$^{a}$ = P.1 I. 12.53$^{a}$; P.2 V. 12.62$^{b}$. 1) P.2 हिमाद्रिशि । 2) P.2 T. रम्य । 3) P.2 आराध्य स ।

लोकैश्वर्यमगाद् राजा[1]) सप्तद्वीपपतिस्तदा ॥ 11 ॥

केशि-प्रभृतयो दैत्याः
कोटिशो येन दारिताः, ।

| केशि-प्रभृतयो दैत्या-
| स्तद्भृत्यत्वमुपागताः[1]), ।

उर्वशी यस्य पत्नीत्वमगमद् रूपमोहिता, ॥ 12 ॥
सप्तद्वीपा वसुमती सशैलवनकानना ।
धर्मेण पालिता तेन सर्वलोकहितैषिणा ॥ 13 ॥
चामरग्राहिणी[1]) कीर्तिः स्वयं[2]) चैवाङ्गवाहिका ।

विष्णोः प्रसादाद् देवेन्द्रो
ददावर्धासनं तदा ॥ 14 ॥

| ब्रह्मप्रसादाद् देवेन्द्रो
| ददावर्धासनं तदा ॥ 14 ॥

धर्मार्थकामान् धर्मेण समवेतोऽभ्य[1]पालयत् ; ।
धर्मार्थ-कामास्तं[2]) द्रष्टुमाजग्मुः[3]) कौतुकान्विताः[4]) ॥ 15 ॥
जिज्ञासवस्तच्चरितंः कथं पश्यति नः समम् ? ।
भक्त्या चक्रे ततस्तेषामर्घ्यं[1]पाद्यादिकं नृपः[2]) ॥ 16 ॥
आसनत्रयमानीय[1]) दिव्यं कनकभूषणम्[2]) ।
निवेश्याथाकरोत् पूजामीषद्. धर्मेऽधिकां[3]) पुनः ॥ 17 ॥
जग्मतुस्तौ च[1]) कामार्थावतिकोपं नृपं प्रति; ।
अर्थः शापमदात् तस्मै लोभात् त्वं नाशमेष्यसि ! ॥ 18 ॥
कामोऽप्याह तवोन्मादो भविता गन्धमादने ।
कुमारवनमाश्रित्य[1]) वियोगाच्चोर्व[2]शीभवत् ॥ 19 ॥
धर्मोऽप्याह, चिरायुस्त्वं धार्मिकश्च भविष्यसि, ।
संततिस्तव राजेन्द्र यावचन्द्रार्कतारकम्[1]) ॥ 20 ॥
शतशो[1]) वृद्धिमायाति[2]), न नाशं भुवि यास्यति ।

| षष्टि[1]वर्षाणि चोन्माद उर्वशीकामसंभवः, ॥ 20₁ ॥
| अचिरादेव भार्यापि[1]) वशमेष्यति चाप्सराः[2]) ।

---

$11^b$ = Mt. $24.11^b$; P.1 I. $12.53^b$; P.2 V. $12.63^a$. 1) P.1 P.2 राजन् ।

$12^a$ = Mt. $24.12^a$.

| $12^a$ = P.1 I. $12.54^a$; P.1 V. $12.63^b$. 1) P.1 –त्वं समागताः ।

$12^b$ = Mt. $24.12^b$; P.1 I. $12.54^b$; P.2 V. $12.64^a$.

13 = Mt. 24.13; P.1 I. 12.55; P.2 V. $12.64^b$, $65^a$.

$14^a$ = Mt. $24.14^a$; P.1 I. $12.56^a$; P.2 V. $12.65^b$. 1) P.1 –ग्रहणा । 2) Mt. सदा ।

$14^b$ = Mt. $24.14^b$.

| $14^b$ = P.1 I. $12.56^b$; P.2 V. $12.66^a$.

15 = Mt. 24.15; P.1 I. 12.57; P.2 V. $12.66^b$, $67^a$. 1) Mt. सममेवाभ्य– । 2) Mt. –माः सं– । 3) P.2 –मागताः । 4) Mt. –तुकात् पुरा ।

16 = Mt. 24.16; P.1 I. 12.58; P.2 V. $12.67^b$, $68^a$. 1) P.2 –र्घं– । 2) P.1 P.2 V. ततः; P.2 T. तथा ।

17 = Mt. 24.17; P.1 I. 12.59; P.2 V. $12.68^b$, $69^a$. 1) P.2 –मादाय । 2) Mt. –भूपितम् । 3) P.2 –र्मोधिकां ।

18 = Mt. 24.18; P.1 I. 12.60; P.2 V. $12.69^b$, $70^a$. 1) Mt. –स्तेन ।

19 = Mt. 24.19; P.1 I. 12.61; P.2 V. $12.70^b$, $71^a$. 1) P.2 –मागत्य । 2) Mt. –गादुर्व– ।

20 = Mt. 24.20; P.1 I. 12.62; P.2 V. $12.71^b$, $72^a$. 1) P.1 P.2 –वदाचन्द्रतारकम् ।

$21^a$ = Mt. $24.21^a$; P.1 I. $12.63^a$; P.2 V. $12.72^b$. 1) P.2 T. सततं । 2) Mt. –मायातु ।

| $20_1{}^b$ = P.1 I. $12.63^b$; P.2 V. $12.73^a$. 1) P.1 –ष्ठि ।
| $21^a$ = P.1 I. $12.64^a$; P.2 V. $12.73^b$. 1) P.2 तेनाशं ( शु ) । 2) P.2 तेऽप्सरा ।

इत्युक्त्वान्तर्दधुः सर्वे; राजा राज्यं तदन्व[1]भूत्, ॥ 21 ॥
अहन्यहनि देवेन्द्रं द्रष्टुं याति पुरूरवाः[1]) ।
कदाचिदारुह्य रथं दक्षिणाम्बरचारिणम्[2]) ॥ 22 ॥
सार्धं शक्रेण[1]) सोऽपश्यन्नीयमानामथाम्बरे ।
केशिना दानवेन्द्रेण चित्रलेखामथोर्वशीम् ॥ 23 ॥
तं विनिर्जित्य समरे विविधायुधपातनैः[1]) ।
बुधपुत्रेण वायव्यमस्त्रं मुक्त्वा यशोर्थिना, ॥ 24 ॥
पुरा[1]) शक्रोऽपि समरे येन वज्री[2]) विनिर्जितः ।
मित्रत्वमगमत् तेन[3]) प्रादादि[4]न्द्राय चोर्वशीम् ॥ 25 ॥
ततः प्रभृति मित्रत्वमगमत् पाकशासनः ।

सर्वलोकातिशायित्वं
बलमूर्जो यशः श्रियम् ॥ 26 ॥
प्रादाद् वज्री तु[1]) संतुष्टो
गेयतां भरतेन च ।

सर्वलोकाति[1]शयितं
पुरूरवसमेव तम् ॥ 26 ॥
प्राह वज्री तु संतुष्टो
नीयतां नियमेन[1]) तु ।

सा पुरूरवसः प्रीत्यै[1]) गायन्ती च[2]रितं महत् ॥ 27 ॥
लक्ष्मीस्वयंवरं नाम भरतेन प्रवर्तितम् ।
मेनकामुर्वशीं[1]) रम्भां नृत्यध्वमिति चा[2]दिशत् ॥ 28 ॥
ननर्त सलयं तत्र लक्ष्मीरूपेण चोर्वशी; ।
सा पुरूरवसं दृष्ट्वा नृत्यन्ती[1]) कामपीडिता ॥ 29 ॥
विस्मृताभिनयं सर्वं, यत् पुरातनवे[1]दितम् ।
शशाप भरतः क्रोधाद्[2]) वियोगात् तस्य[3]) भूतले ॥ 30 ॥
पञ्चपञ्चाशदब्दानि लताभूता[1]) भविष्यति[2]), ।
पुरूरवाः पिशाचत्वं तत्रैवानु[3]भविष्यति ॥ 31 ॥
ततस्तमुर्वशी गत्वा भर्तारमकरोच्चिरम्, ।

---

$21^{b}$ = Mt. 24.21$^{b}$; P.1 I. 12.64$^{b}$; P.2 V. 12.74$^{b}$. 1) P.1 तदान्व- ।
22 = Mt. 24.22; P.1 I. 12.65; P.2 V. 12.75. 1) Mt. स राजराट् । 2) P.1 -रिणा; P.2 दक्षिणायुधधारिणा ।
23 = Mt. 24.23; P.1 I. 12.66; P.2 V. 12.76. 1) Mt. -धंर्मकेंण ।
24 = Mt. 24.24; P.1 I. 12.67$^{a}$ = a; P.2 T. 12.77. 1) Mt. -धपाणिना ।
25 = Mt. 24.25; P.1 I. 12.67$^{b}$, 68$^{a}$; P.2 V. 12.78. 1) Mt. P.2 V. तथा । 2) Mt. चैवं; P.2 T. चक्री । 3) Mt. -मद् देवै- । 4) Mt. -र्ददावि- ।
$26^{a}$ = Mt. 24.26$^{a}$; P.1 I. 12.68$^{b}$; P.2 V. 12.79$^{a}$.
$26^{b}$ = Mt. 24.26$^{b}$.
$27^{a}$ = Mt. 24.27$^{a}$. 1) Mt. -त्रीति ।
$26^{b}$ = P.1 I. 12.69$^{a}$; P.2 V. 12.79$^{b}$. 1) P.1 -लोकेऽति- ।
$27^{a}$ = P.1 I. 12.69$^{b}$; P.2 V. 12.80$^{a}$. 1) P.1 -तामियमेव ।
$27^{b}$ = Mt. 24.27$^{b}$; P.1 I. 12.70$^{a}$; P.2 V. 12.80$^{b}$. 1) Mt. प्रीत्या । 2) P.1 चागायच्च- ।
28 = Mt. 24.28; P.1 I. 12.70$^{b}$, 71$^{a}$; P.2 V. 12.81. 1) P.1 P.2 -कां चोर्वशीं । 2) Mt. नृत्यतेति तदा- ।
29 = Mt. 24.29; P.1 I. 12.71$^{b}$, 72$^{a}$; P.2 V. 12.82. 1) P.2 T. कामिनी ।
30 = Mt. 24.30; P.1 I. 12.72$^{b}$, 73$^{a}$; P.2 V. 12.83. 1) Mt. पुरा भरतो-; P.1 -न चो- । 2) P.2 कोपाद् । 3) Mt. -गदस्य ।
31 = Mt. 24.31; P.1 I. 12.73$^{b}$ = a; P.2 V. 12.84. 1) Mt. लता सूक्ष्मा । 2) P.1 -सि । 3) P.2 -वासो ।

शापानुभवनान्ते तु[1]) उर्वशी बुधसूनुना[2]) ॥ 32 ॥
अजीजनत् सुतानष्टौ, नामतस्तान् निबोधत[1]) ।
आयुर्दृढायुर्वश्यायु[2]र्धनायु[3]र्धृतिमान्[4]) वसुः ॥ 33 ॥
दिविजातः[1]) शतायुश्च[2]), सर्वे दिव्यबलौजसः ।
आयुषो नहुषः पुत्रो वृद्धशर्मा तथैव च ॥ 34 ॥
रजिर्दम्भो[1]) विपाप्मा च[2]) वीराः पञ्च महारथाः ।
रजेः पुत्रशतं जज्ञे राजेयमि[3]ति विश्रुतम्[4]) ॥ 35 ॥
रजिराराधयामास नारायणमकल्मषम् ; ।
तपसा तोषितो विष्णुर्वरं[1]) प्रादान् महीपतेः[2]) ॥ 36 ॥
देवासुरमनुष्याणामभूत् स विजयी तदा ।
अथ देवासुरं युद्धमभूद् वर्ष[1]शतत्रयम् ॥ 37 ॥
प्रह्लाद-शक्रयोर्भीमं, न कश्चिद् विजयी तयोः ।
ततो देवासुरैः पृष्टः प्राह[1]) देवश्चतुर्मुखः ॥ 38 ॥
अनयोर्विजयी कः स्याद् ? रजिर्यत्रेति सोऽब्रवीत् ।
जयाय प्रार्थितो राजा सहायस्त्वं भवस्व नः ! ॥ 39 ॥
दैत्यैः प्राह: यदि स्वामी वो भवामि ततस्त्वलम् ।
नासुरैः प्रतिपन्नं तत्, प्रतिपन्नं सुरैस्तथा[1]) ॥ 40 ॥
स्वामी भव त्वमस्माकं, वलं[1]) नाशय विद्विषः[2]) ! ।
ततो विनाशिताः सर्वे, येऽवध्या वज्रपाणिनः[2]) ॥ 41 ॥
पुत्रत्वमगमत् तुष्टस्तस्येन्द्रः कर्मणा विभुः[1]), ।
दत्त्वेन्द्राय पुरा[2]) राज्यं जगाम तपसे रजिः ॥ 42 ॥
रजिपुत्रैस्तदा छिन्नं बलादिन्द्रस्य वैभवम्[1]) ।
यज्ञभागं च[2]) राज्यं च तपोबलगुणान्वितैः ॥ 43 ॥
राज्यभ्रष्टस्तदा[1]) शक्रो रजिपुत्रनि[2]पीडितः ।
प्राह वाचस्पतिं दीनः पीडितोऽस्मि रजेः सुतैः, ॥ 44 ॥
न यज्ञभागो राज्यं मे निर्जितस्य[1]) बृहस्पते, ।
राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप ! ॥ 45 ॥

---

32 = Mt. 24.32; P.1 I. 12.74; P.2 V. 12.85. 1) Mt. शापान्ते भरतस्याथ; P.1 च । 2) Mt. –सूनुतः ।
33 = Mt. 24.33; P.1 I. 12.75; P.2 V. 12.86. 1) P.1 –बोध मे । 2) Mt. –युरश्वायु– । 3) P.1 –र्नैलायु– । 4) P.2 –र्वृत्तिमान् ।
34 = Mt. 24.34; P.1 I. 12.76; P.2 V. 12.87. 1) Mt. T. शुचिविद्यः; P.1 दिव्यजायुः । 2) P.2 सुबाहुश्च ।
35 = Mt. 24.35; P.1 I. 12.77; P.2 V. 12.88. 1) P.1 –र्दण्डो । 2) P.1 विशाखश्च । 3) P.1 P.2 –जेया इ– । 4) P.1 P.2 –श्रुताः ।
36 = Mt. 24.36; P.1 I. 12.78; P.2 V. 12.89. 1) Mt. –रान् । 2) P.2 –पते ।
37 = Mt. 24.37; P.1 I. 12.79; P.2 V. 12.90. 1) P.2 –द्धं बभूवाब्द– ।
38 = Mt. 24.38; P.1 I. 12.80; P.2 V. 12.91. 1) P.1 पृथग् ।
39 = Mt. 24.39; P.1 I. 12.81; P.2 V. 12.92.
40 = Mt. 24.40; P.1 I. 12.82; P.2 V. 12.93. 1) P.1 –स्तदा ।
41 = Mt. 24.41; P.1 I. 12.83; P.2 V. 12.94. 1) Mt. संग्रामे; P.2 T. रणे । 2) Mt. द्विपः । 3) Mt. –पाणिना ।
42 = Mt. 24.42; P.1 I. 12.84; P.2 V. 12.95. 1) P.1 P.2 V. ततः । 2) Mt. तदा ।
43 = Mt. 24.43; P.1 I. 12.85; P.2 V. 12.96. 1) P.1 वै यदा; P.2 T. वै पदम् ; P.2 V. वै तदा । 2) P.1 –भागश्च ।
44 = Mt. 24.44; P.1 I. 12.86; P.2 V. 12.97. 1) P.1 –स्ततः । 2) Mt. –पुत्रैर्नि– ।
45 = Mt. 24.45; P.1 I. 12.87; P.2 V. 12.98. 1) Mt. निर्जितश्च; P.1 पीडितस्य ।

ततो बृहस्पतिः शक्रमकरोद् बलदर्पितम् ।
ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा ॥ 46 ॥
गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः ।
| स्वं विमानं समास्थाय देवराज्याय वेदवित् ॥ 47 ॥
जिनधर्मं समास्थाय वेदबाह्यं स वेदवित्[1]) ।
वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ॥ 48 ॥
वेदबाह्यान् परिज्ञाय . हेतुवादसमन्वितान् ।
जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान् ॥ 49 ॥
नहुषस्य प्र[1]वक्ष्यामि पुत्रान् सप्तैव धार्मिकान् ।
यतिर्ययातिः संयाति[2]रुद्भवः[3]) पर ए[4]व . च ॥ 50 ॥
शर्यातिर्मे[1]धजातिश्च[2]) सप्तैते वंशवर्धनाः ।
यतिः कुमारभावेऽपि योगी वैखानसोऽभवत् ॥ 51 ॥
ययातिर[1]करोद् राज्यं धर्मैकशरणः सदा ।
शर्मिष्ठा तस्य भार्याभूद् दुहिता वृषपर्वणः ॥ 52 ॥
भार्गवस्यात्मजा चैव[1]) देवयानी च सुव्रता ।
ययातेः पञ्च दायादास्तान् प्रवक्ष्यामि नामतः ॥ 53 ॥
देवयानी यदुं पुत्रं तुर्वसुं चाप्यजीजनत्, ।
तथा द्रुह्युम[1]नुं[2]) पूरुं[3]) शर्मिष्ठाजनयत् सुतान् ॥ 54 ॥
यदुः पूरु[1]श्चाभवतां[2]) तेषां[3]) वंशविवर्धनौ[4]) ॥ 55 ॥

---

| ययातिर्नाहुषश्चासीद् *राजा*[1]) सत्यपराक्रमः, । पालयामास स[2]) महीमीजे च *विधिवन्* म[3]खैः ॥ $55_1$ ॥
| अतिभक्त्या पितॄनर्चन्[1]) देवांश्च प्रयतः सदा । *अथाजयत्* प्रजाः *सर्वा*[2]) ययातिरपराजितः ॥ $55_2$ ॥
| स शाश्वतीः समा राजा[1]) प्रजा धर्मेण पालयन् । जरामाच्छंन् महाघोरां नाहुषो रूपनाशिनीम् ॥ $55_3$ ॥
| जराभिभूतः पुत्रान् स राजा वचनमब्रवीत् । यदुं पूरुं तुर्वसुं च द्रुह्युं चानुं च *पार्थिवः*[1]) ॥ $55_4$ ॥

---

46 = Mt. 24.46; P.2 I. 12.88; P.2 V. 12.99.
47 = Mt. $24.47^{a}$; P.1 I. $12.89^{a}$; P.2 V. 12.100.
48 = Mt. $24.47^{b}$, $48^{a}$; P.1 I. $12.89^{b}$, $90^{a}$; P.2 V. 12.101. 1) P.1 P.2 T. धर्मवित् ।
49 = Mt. $24.48^{b}$, $49^{a}$; P.1 I. $12.90^{b}$, $91^{a}$; P.2 V. 12.102.
50 = Mt. $24.49^{b}$, $50^{a}$; P.1 I. $12.91^{b}$, $92^{a}$; P.2 V. 12.103. 1) P.2 च । 2) P.1 शर्याति- । 3) P.1 -रुत्तरः । 4) Mt. पांचिरे- ।
51 = Mt. $24.50^{b}$, $51^{a}$; P.1 I. $12.92^{b}$, $93^{a}$; P.2 V. 12.104. 1) P.1 अयतिर्वि-; P.2 वियतिर्वि- । 2) P.1 -यतिश्चैव; P.2 -श्चसातिश्च ।
52 = Mt. $24.51^{b}$, $52^{a}$; P.1 I. $12.93^{b}$, $94^{a}$; P.2 V. 12.105. 1) Mt. -तिश्चा- ।
53 = Mt. $24.52^{b}$, $53^{a}$; P.1 I. $12.94^{b}$, $95^{a}$; P.2 V. 12.106. 1) Mt. तद्वद् ।
54 = Mt. $24.53^{b}$, $54^{a}$; P.1 I. $12.95^{b}$, $96^{a}$; P.2 V. 12.107. 1) P.1 P.2 द्रुह्यम- । 2) P.1 -णुं । 3) P.2 पुरुं ।
55 = Mt. $24.54^{b}$; P.1 I. $12.96^{b}$; P.2 V. $12.108^{a}$. 1) P.2 पुरु- । 2) P.1 -श्च भरत-; P.2 -श्च भवत- । 3) P.1 -स्तेवै; P.2 -स्तेषां । 4) P.1 -नाः ।

---

| $55_1$ = Mt. 24.55; Mh. I. $3156^{b}$, $3157^{a}$. 1) Mh. -षः सम्राडासीत् । 2) Mh. स पालयामास । 3) Mh. बहुभिर्म- ।
| $55_2$ = Mt. 24.56; Mh. I. $3157^{b}$, $3158^{a}$. 1) Mt. -नर्च्य । 2) Mh. अन्वगृह्णात् प्रजां सर्वां ।
$55_3$ = Mt. 24.57; Mh. I. $3160^{b}$, $3161^{a}$. 1) Mh. राजन् ।
$55_4$ = Mt. 24.58; Mh. I. $3161^{b}$, $3162^{a}$. 1) Mh. भारत ।

यौवनेन चरन्[1]) कामान् युवा युवतिभिः सह ।
विहर्तुमहमिच्छामि साहाय्यं कुरुतात्मजाः[2]) ! ॥ $55_{5}$ ॥

तं पुत्रो दैव[1]यानेयः पूर्वजो यदुर[2]ब्रवीत् ।
साहाय्यं[3]) भवतः कार्यमस्माभिर्यौ[4]वनेन किम्[5]) ? ॥ $55_{6}$ ॥

ययातिरब्रवीत् पुत्रान्[1]) जरा मे प्रतिगृह्यताम् ! ।
यौवनेनाथ भवतां[2]) चरेयं विषयानहम्, ॥ $55_{7}$ ॥

यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।
कामार्थः परिहीनो मे[1]), तृप्तोऽहं[2]); तेन पुत्रकाः ॥ $55_{8}$ ॥

ममकेन[1]) शरीरेण राज्यमेकः[2]) प्रशास्तु वः, ।
अहं तन्वाभिनवया युवा कामान[3]वाप्नुयाम् ॥ $55_{9}$ ॥

न तेऽस्य[1]) प्रत्यगृह्णन्त[2]) यदु-प्रभृतयो जराम्, ।
चतुरस्तान् स राजर्षिरशपच्चेति नः श्रुतम् ॥ $55_{10}$ ॥

तमब्रवीत् ततः पूरुः कनीयान् सत्यविक्रमः ।
राजंश्चराभि[1]नवया तन्वा मे यौवनात् सुखी[2]), ॥ $55_{11}$ ॥

अहं जरां तवा[1]दाय राज्ये स्थास्यामि चाज्ञया[2]) ! ।
एवमुक्तः स राजर्षिस्तपोवीर्यसमाश्रयात् ॥ $55_{12}$ ॥

संस्थाप[1]यामास जरां तदा पुत्रे महात्मनि ।
पौरवेणाथ वयसा राजा यौवनमास्थितः ॥ $55_{13}$ ॥

ययातेश्चाथ[1]) वयसा राज्यं पूरुरकारयत् ।
ततो वर्षसहस्रान्ते ययातिरपराजितः ॥ $55_{14}$ ॥

स्थितः स नृपशार्दूलः शार्दूलसमविक्रमः ।
ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च ॥ $55_{15}$ ॥

विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने ।
नाध्यगच्छत् तदा तृप्तिं कामानां स महायशाः ॥ $55_{16}$ ॥

अवेत्य मनसा राजन्निमां गाथां तदा जगौ ।
न जातु कामः कामानामुपभोगेन शाम्यति, ॥ $55_{17}$ ॥

---

$55_{5}$ = Mt. 24.59; Mh. I. 3162[b], 3163[a]. 1) Mt. चलान् । 2) Mh. साह्यं कुरुत पुत्रकाः ।
$55_{6}$ = Mt. 24.60; Mh. I. 3163[b], 3164[a]. 1) Mt. देव- । 2) Mh. वाक्यम- । 3) Mh. किं कार्यं । 4) Mh. -मस्माकं यौ- । 5) Mh. ते ।
$55_{7}$ = Mt. 24.61; Mh. I. 3164[b], 3165[a]. 1) Mh. तं त्रे । 2) Mh. -नेन त्वदीयेन ।
$55_{8}$ = Mt. 24.62; Mh. I. 3165[bc]. 1) Mh. -ऽयं । 2) Mh. तप्येयं ।
$55_{9}$ = Mt. 24.63; Mh. I. 3166. 1) Mt. स्वकीयेन । 2) Mt. जरामेनां । 3) Mh. -मम- ।
$55_{10}$ = Mt. 24.64; Mh. I. 3167[a] = a. 1) Mh. ते न तस्य । 2) Mh. प्रत्यगृह्णन् ।
$55_{11}$ = Mt. 24.65; Mh. I. 3167[b], 3168[a]. 1) Mt. जरां मा देहि । 2) Mh. यौवनगोचरः ।
$55_{12}$ = Mt. 24.66; Mh. I. 3168[b], 3169[a]. 1) Mh. समा- । 2) Mh. ते ज्ञया ।
$55_{13}$ = Mt. 24.67; Mh. I. 3169[b], 3170[a]. 1) Mh. संचार- ।
$55_{14}$ = Mt. 24.68; Mh. I. 3170[b], 3171[a]. 1) Mh. यायातेनापि ।
$55_{15}$ = Mh. I. 3171[b], 3172[a].
$55_{16}$ = Mh. I. 3172[b], 3173[a].

$55_{17}$ = Mh. I. 3173[b], 3174[a].

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।
पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः, ॥ $55_{18}$ ॥
नालमेकस्य तत् सर्वमिति मत्वा शमं व्रजेत् ।
यदा न कुरुते पापं सर्वभूतेषु कर्हिचित् ॥ $55_{19}$ ॥
कर्मणा मनसा वाचा, ब्रह्म संपद्यते तदा ।
यदा चायं न बिभेति, यदा चास्मान् न बिभ्यति, ॥ $55_{20}$ ॥
यदा नेच्छति न द्वेष्टि, ब्रह्म संपद्यते तदा ।
इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृपः[1]) ॥ $55_{21}$ ॥
समाधाय मनो बुद्धया प्रत्यगृह्णाज् जरां सुतात् ।
दत्त्वा च यौवनं राजा पूरुं राज्येऽभिषिच्य च ॥ $55_{22}$ ॥
अतृप्त इव[1]) कामानां पूरुं पुत्रमुवाच ह ।
त्वया दायादवानस्मि, त्वं मे वंशकरः सुतः, ॥ $55_{23}$ ॥
पौरवो वंश इत्येष[1]) ख्यातिं लोके गमिष्यति ।
ततः स नृपशार्दूलः[2]) पूरुं राज्येऽभिषिच्य च ॥ $55_{24}$ ॥
तपः सुचरितं कृत्वा भृगुतुङ्गे महातपाः ।
कालेन महता पश्चात् कालधर्ममुपेयिवान् ।
कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥ $55_{25}$ ॥

---

पूरुवंशं प्रवक्ष्यामि
शृणुध्वमृषिसत्तमाः ।
यत्र ते भारता जाता
भरतान्वयवर्धनाः ! ॥ 56 ॥

पूरोर्वंशं प्रवक्ष्यामि,
यत्र जातोऽसि पार्थिव, ।
यदोस्तु यादवा जाता
यत्र[1]) तौ बल-केशवौ ।
भारावतरणार्थाय
पाण्डवानां हिताय च ॥ 56 ॥

---

$55_{18}$ = Mh. I. 3174[b], 3175[a].
$55_{19}$ = Mh. I. 3175[b], 3176[a].
$55_{20}$ = Mh. I. 3176[b], 3177[a].
$55_{21}$ = Mh. I. 3177[b], 3178[a]. 1) Mh. T. नृप ।
$55_{22}$ = Mh. I. 3178[b], 3179[a].
$55_{23}$ = Mh. I. 3179[b], 3180[a]; Mt. 24.69. 1) Mh. एव ।
$55_{24}$ = Mh. I. 3180[b], 3181[a]; Mt. 24.70. 1) Mh. इति ते । 2) Mh. –दूंल ।
$55_{25}$ = Mh. I. 3181[b], 3182; Mt. 24.71[a] = b.

56 = Mt. 24.71[bc].

56 = P.1 I. 12.97, 98[a]; P.2 V. 12.108[b], 109. 1) P.2 –तास्तत्र ।

[ Mt. 25.1—3, 25.4—42.29 = Mh. I. 3183 – 3690; Mt. 43.1—4. ]

## चतुर्थोंऽशः

### A.

( Bḍ. II. 69.1—57; Br. 13.153[b]—212[a]; H. 1842—1903; L. 68.1—20; Mt. 43.5—53; P.1 I. 12.98[b]—140; P.2 V. 12.110—152; Vā. 94.1—56; Cp. A. 275.1—11; Bhg. IX. 23.19—30[a]; Ga. 139.19—24; Kū. 22.12[b]—23.4; Vi. IV. 11.1—7. )

यदोर्वंशं प्रवक्ष्यामि ज्येष्ठस्योत्तमतेजसः ।
विस्तरेणानुपूर्व्या[1]) च गदतो मे निबोधत[2]) ! ॥ 1 ॥

यदोः पुत्रा बभूवुर्हि[1]) पञ्च देवसुतोपमाः ।

| | |
|---|---|
| सहस्रदः[1]) पयोदश्च<br>क्रोष्टा नीलोऽञ्जिकस्तथा ॥ 2 ॥ | सहस्रजिद[1]थ[2]) ज्येष्ठः[3])<br>क्रोष्टुर्नी[4]लोऽञ्जिको[5]) लघुः[6]) ॥ 2 ॥ |
| | सहस्रजित्सुतः श्रीमान्[1])<br>शतजिन् ना[2]म पार्थिवः । |
| सहस्र[1]दस्य दायादा-<br>स्त्रयः परमधार्मिकाः ॥ 3 ॥ | शतजितश्च दायादा[3]-<br>स्त्रयः परमधार्मिकाः[4]) ॥ 3 ॥ |

---

1 = Bḍ. II. 69.1; H. 1842; L. 68.1; Mt. 43.5; Vā. 94.1. 1) L. संक्षेपेणानुपूर्व्याच् । 2) H. निबोध तम् ।

$2^a$ = Bḍ. II. 69.2[a]; Br. 13.153[b]; H. 1843[a]; Kū. 22.12[b]; L. 68.2[a]; Mt. 43.6[a]; P.1 I. 12.98[b]; P.2 V. 12.110[a]; Vā. 94.2[a]. 1) Br. H. बभूवुस्तु यदोः पुत्राः; Kū. यदोरप्यभवन् पुत्राः; P.1 –वुश्च ।

$2^b$ = Br. 13.154[a]; H. 1843[b]. 1) Br. सहस्रादः ।

3 = Br. 13.151[b]; H. 1844[a]. 1) Br. –स्रा– ।

$2^b$ = Bḍ. II. 69.2[b]; Kū. 2 .13[a]; L. 68.2[b]; Mt. 43.7[a]; P.1 I. 12.99[a]; P.2 V. 12.110[b]; Vā. 94.2[b]. 1) Mt. –जिर– । 2) Kū. P.1 P.2 –जित् तथा; L. –जित्सुतो; Mt. –थों । 3) Bḍ. Kū. Vā. श्रेष्ठः । 4) P.1 P.2 क्रोष्टा नी– । 5) Kū. जिनो; L. जको; Vā. जितो; Mt. T. –ऽन्तिको । 6) Kū. P.1 P.2 रघुः ।

3 = Bḍ. II. 69.3; Kū. 22.13[b], 14[a]; L. 68.3; Mt. 43.7[b], 8[a]; P.1 I. 12.99[b], 100[a]; P.2 V. 12.111; Vā. 94.3. 1) Kū. L. तस्तद्वच् ; Mt. –स्रजेस्तु दायादो; P.1 P.2 –जितो दायादः । 2) Mt. –जिर्ना– । 3) Bḍ. –जित्तनयाः ख्याता–; Kū. सुताः शतजितोऽप्यासं–; L. सुताः शतजितः ख्याताः; Mt. –जेरपि दायाद–; Vā.शतजित्सुता विख्याता– । 4) L. Mt. परमकीर्तयः ।

हैहयश्च हयश्चैव राजा[1]) वेणुहयस्तथा[2]) ।
हैहयस्य तु दायादो[3]) धर्मनेत्र इति श्रुतः[4]), ॥ 4 ॥

धर्मनेत्रस्य कार्तस्तु,
साह्ञ्जस्तस्य चात्मजः ।
[ साहञ्जनी नाम पुरी
तेन राज्ञा निवेशिता । ]

धर्मनेत्रस्य[1]) कुन्ति[2]स्तु,
साहञ्ज[3]स्तस्य चात्मजः[4]) ।

साहञ्जस्य[1]) तु दायादो महिष्मान्[2]) नाम पार्थिवः[3]), ॥ 5 ॥
[ माहिष्मती नाम पुरी
येन राज्ञा निवेशिता । ]

आसीन् माहिष्मतः पुत्रो[1]) भद्रश्रेण्यः[2]) प्रतापवान्[3]) ।
वाराणस्य[4]धिपो[5]) राजा कथितः[6]) पूर्वमे[7]व हि[8]) ॥ 6 ॥

भद्रश्रेण्यस्य[1]) दायादो[2]) दुर्दमो[3]) नाम पार्थिवः[4]) ।
दुर्दमस्य[5]) सुतो[6]) धीमान्[7]) कनको[8]) नाम वीर्यवान्[9]) ॥ 7 ॥

कनकस्य[1]) तु दायादा[2]श्चत्वारो लोकविश्रुताः[3]) ।

---

4 = Bḍ. II. 69.4; Br. 13.155; H. 1844[b], 1845[a]; Kū. 22.14[b], 15[aIbII]; L. 68.4[abI], 5[aII]; Mt. 43.8[b], 9[a]; P.1 I. 12.100[b], 101[a]; P.2 V. 12.112; Vā. 94.4. 1) Mt. P.1 तथा । 2) Kū. L. Mt. Vā. –यश्च यः; P.1 तालहयश्च यः; P.2 तथोत्तालहयश्च यः । 3) Br. H. Kū. –स्याभवत् पुत्रो । 4) Kū. प्रतापवान् ; Mt. P.1 P.2 –नेत्रः प्रतिश्रुतः; Vā. धर्मतन्त्र इति श्रुतिः ।

5[a] [ ] = Br. 13.156; H. 1845[b], 1846[a].

5[a] = Bḍ. II. 69.5; Kū. 22.16[a]; L. 68.5[b]; Mt. 43.9[b]; P.1 I. 12.101[b]; P.2 V. 12.113[a]; Vā. 94.5[a]. 1) Vā. –मंतन्त्रस्य । 2) Kū. L. Vā. कीर्ति–; P.2 कुम्भि– । 3) Bḍ. Vā. संज्ञेय–; Kū. संज्जित–; L. संजय–; Mt. P.1 P.2 संहृत– । 4) Kū. –स्तत्सुतोऽभवत् ।

5[b] = Bḍ. II. 69.5[b]; H. 1846[b]; L. 68.6[a]; Mt. 43.10[a]; P.1 I. 12.102[a]; P.2 V. 113[b]; Vā. 94.5[b]. 1) Bḍ. Vā. संज्ञेयस्य; L. संजयस्य; Mt. P.1 P.2 संहृतस्य । 2) P.2 T. –ह्मिा । 3) L. धार्मिकः ।

[ ] = H. 1847[a].

6 = Bḍ. II. 69.6; Br. 13.157[a] = a; H. 1847[b], 1848[a]; Kū. 22.16[b] = a; L. 68.6[b] = a; Mt. 43.10[b], 11[a]; P.1 I. 12.102[b], 103[a]; P.2 V. 12.114; Vā. 94.6. 1) Kū. महिष्मः संजितस्याभूद् । 2) Bḍ. P.1 P.2 –सेनः; Mt. रुद्रश्रेण्यः । 3) Kū. –यस्तदन्वयः । 4) Bḍ. –स्या– । 5) Mt. P.1 P.2 –स्यामभूद् । 6) Mt. –थितं । 7) Bḍ. Vā. –वै ए– । 8) H. Mt. तु ।

7 = Bḍ. II. 69.7; Br. 13.157[b], 158[a]; H. 1848[b], 1849[a]; Kū. 22.17; L. 68.7; Mt. 43.11[b], 12[a]; P.1 I. 12.103[b], 104[a]; P.2 V. 12.115; Vā. 94.7. 1) Bḍ. P.1 P.2 –द्रसेनस्य; Mt. रुद्रश्रेण्यस्य । 2) Mt. P.2 पुत्रोऽभूद् ; P.1 पुत्रस्तु । 3) Bḍ. Vā. दुर्मदो; P.2 T. दुर्दर्शो । 4) Br. H. विश्रुतः; P.1 धार्मिकः । 5) Bḍ. Vā. दुर्मदस्य; P.2 T. दुर्दर्शस्य । 6) Vā. ततो । 7) H. राजा; P.1 भीमो; P.2 भीमः । 8) Kū. अन्धको; L. P.1 धनको । 9) Bḍ. Vā. T. विश्रुतः; Br. H. नामतः; L. विश्रुतः; P.2 बुद्धिमान् ।

कृतवीर्यः[4]) कृताग्निश्च[5]) कृतवर्मा[6]) तथैव च[7]) ॥ 8 ॥

कृतौजाश्च[1]) चतुर्थोऽभूत्[2]), कृतवीर्यात्[3]) ततोऽर्जुनः[4]) ।
जज्ञे[5]) बाहु[6]-सहस्रेण सप्तद्वीपेश्वरो नृपः[7]) ॥ 9 ॥

[ जिगाय पृथिवीमेको
रथेनादित्यवर्चसा । ]
स हि वर्षायुतं तप्त्वा
तपः परमदुश्चरम् ।

वर्षायुतं तपस्तेपे
दुश्चरं पृथिवीपतिः, ।

दत्तमाराधयामास कार्तवीर्योऽत्रिसंभवम् ॥ 10 ॥

तस्मै दत्तो वरान् प्रादाच्चतुरो भूरितेजसः[1]) ।
पूर्वं बाहुसहस्रं तु स वव्रे[2]) प्रथमं[3]) वरम्[4]), ॥ 11 ॥

अधर्मे[1]) ध्यायमानस्य[2]) सद्भि[3]स्तत्र[4]) निवारणम् , ।
धर्मेण[5]) पृथिवीं जित्वा धर्मेणैवानुपालनम्[6]) ॥ 12 ॥

संग्रामान् सु[1]बहून् जित्वा हत्वा चारीन् सहस्रशः ।
संग्रामे वर्त[2]मानस्य वधश्चा[3]भ्यधिकाद् रणे[4]) ॥ 13 ॥

---

8 = Bd. II. 69.8; Br. 13.158$^b$, 159$^a$; H. 1849$^b$, 1850$^a$; Kū. 22.18; L. 68.8; Mt. 43.12$^b$, 13$^a$; P.1 I. 12.104$^b$, 105$^a$; P.2 V. 12.116; Vā. 94.8. 1) Kū. अन्धकस्य; L. P.1 धनकस्य । 2) P.1 P.2 सुता ह्यासं- । 3) Kū. L. लोकसंमताः । 4) H. -विर्याः; P.1 P.2 कृताग्निश्च । 5) Br. H. कृतौजाश्च; P.1 P.2 कृतवीर्यः; Vā. कार्तिवीर्यः । 6) Br. कृतधन्वा; P.1 P.2 कृतधर्मा । 7) Kū. च तत्सुतः ।

9 = A. 275.4$^b$ = a; Bd. II. 69.9; Br. 13.159$^b$, 160$^a$; H. 1850$^b$, 1851$^a$; Kū. 22.19$^a$ = a; L. 68.9; Mt. 42.13$^b$, 14$^a$; P.1 I. 12.105$^b$, 106$^a$; P.2 V. 12.117; Vā. 94.9. 1) Br. H. कृताग्निस्तु; Vā. कृतोजातश् । 2) P.2 -र्थस्तु । 3) Kū. L. कार्तवीर्यस् । 4) A. तु सोऽर्जुनः; Bd. वीर्यात्मजोऽर्जुनः; Br. H. -र्याद्थार्जुनः; Kū. तथार्जुनः; P.1 -याच्च सोऽर्जुनः; P.2 -र्यस्य सोऽर्जुनः । 5) Br. योऽसौ; H. यः स; Mt. जातः; P.1 P.2 जातो । 6) Mt. T. कर- । 7) H. -ऽभवत ; L. -रोत्तमः ।

[ ] = Br. 13.160$^b$; H. 1851$^b$.

10$^a$ = Bd. II. 69.10$^a$; Br. 13.161$^a$; H. 1852$^a$; Vā. 94.10$^a$.

10$^a$ = Mt. 43.14$^b$; P.1 I. 12.106$^b$; P.2 V. 12.118$^a$.

10 = Bd. II. 69.10$^b$; Br. 13.161$^b$; H. 1852$^b$; Mt. 43.15$^a$; P.1 I. 12.107$^a$; P.2 V. 12.118$^b$; Vā. 94.10$^b$.

11 = Bd. II. 69.11; Br. 13.162; H. 1853; Mt. 43.15$^b$, 16$^a$; P.1 I. 12.107$^b$, 108$^a$; P.2 V. 12.119; Vā. 94.11. 1) Mt. T. दत्ता वरास्तेन चत्वरः पुरुपोत्तमः; Mt. V. P.1 P.2 -रः पुरुपोत्तमः । 2) Br. H. प्रार्थितं । 3) Br. H. सुमहद् । 4) Mt. P.1 P.2 वव्रे राजसत्तमः ।

12 = Bd. II. 69.12; Br. 13.163; H. 1854; Mt. 43.16$^b$, 17$^a$; P.1 I. 12.108$^b$, 109$^a$; P.2 V. 12.120; Vā. 94.12. 1) Mt. P.1 P.2 T. अधर्मे । 2) Br. H. -ऽधीयमानस्य; Mt. चरमाणस्य; Vā. दीयमानस्य । 3) P.1 भीति-; P.2 T. शब्दै- । 4) Bd. -नस्य सहसास्मा; Mt. P.1 P.2 -श्चापि; Vā. -स्तस्मान् । 5) Br. H. उग्रेण; Mt. P.1 P.2 युद्धेन । 6) Br. H. -णैवानुरञ्जनम् ; P.1 P.2 -र्मेणावाप्य वै बलम् ।

13 = Bd. II. 69.13; Br. 13.164; H. 1855; Mt. 43.17$^b$ = b; P.1 I. 12.109$^b$ = b; P.2 V. 12.121$^a$ = b; Vā. 91.13. 1) Bd. Vā. संग्रामांस्तु । 2) Bd. Vā. युध्य- । 3) Br. H. वधं चा- । 4) Bd. -धः स्यात प्रधने मम; Mt. P.1 P.2 -श्चैवाधिकाद् भवेत ; Vā. -धः स्यादधिकाद् रणे ।

तेनेयं[1]) पृथिवी सर्वा[2]) सप्तद्वीपा सपत्तना[3])।

ससमुद्रा सनगरा
उग्रेण विधिना जिता ॥ 14 ॥
तस्य बाहुसहस्रं तु
युध्यतः किल धीमतः[1])।
योगाद्[2]) योगे[3]श्वरस्येव[4])
प्रादुर्भवति मायया ॥ 15 ॥
तेन सप्तसु द्वीपेषु
सप्त यज्ञशतानि वै।
प्राप्तानि[1]) विधिना राज्ञा
श्रूयन्ते[2]) मुनिसत्तमाः[3]) ॥ 16 ॥

सप्तोदधिपरिक्षिप्ता
क्षात्रेण विधिना जिता[1]) ॥ 14 ॥
जज्ञे बाहुसहस्रं वै[1])
इच्छतस्तस्य धीमतः,।
रथो ध्वजश्च संजज्ञ,
इत्येवमनुशुश्रुम ॥ 15 ॥
दश यज्ञसहस्राणि
तेषु[1]) द्वीपेषु सप्तसु[2])।
निरर्गलानि वृत्तानि[3])
श्रूयन्ते तस्य धीमतः ॥ 16 ॥

सर्वे यज्ञा महाबाहो[1]स्तस्यासन् भूरिदक्षिणाः[2]),।
सर्वे काञ्चनयूपास्ते[3]), सर्वे[4]) काञ्चनवेदिकाः[5]), ॥ 17 ॥

सर्वे दे[1]वैर्महाभागैर्वि[2]मानस्थैरलंकृताः[3])।
गन्धर्वैरप्सरोभिश्च नित्यमेवोपशोभिताः[4]) ॥ 18 ॥

य[1]स्य यज्ञे[2]) जगौ गाथां गन्धर्वो[3]) नारदस्तथा।

---

14a = Bḍ. II. 69.14a; Br. 13.166a; H. 1857a; Mt. 43.18a; P.1 I. 12.110a; P.2 V. 12.121b; Vā. 94.14a. 1) P.1 P.2 एतेनेयं। 2) Bḍ. Vā. कृत्स्ना; P.1 वसुमती; P.2 मही सर्वा। 3) H. Mt. T. सपर्वता।

14b = Br. 13.166b; H. 1857b.

15 = Bḍ. II. 69.15; Br. 13.165; H. 1856; Vā. 94.15. 1) Bḍ. योगतः; Br. भो द्विजाः; H. भारत। 2) Bḍ. –गो। 3) Br. योगी–; Vā. यौद्धो। 4) Vā. ध्वजो रथश्चैव।

16 = Bḍ. II. 69.16; Br. 13.167; H. 1858. 1) Bḍ. कृतानि। 2) Bḍ. श्रूयते। 3) H. जनमेजय।

14b = Bḍ. II. 69.14b; Mt. 43.18b; P.1 12.110b; P.2 V. 12.122a; Vā. 94.14b. 1) Vā. T. जनाः।

15 = Mt. 43.19; P.1 I. 12.111a = a; P.2 V. 12.122b=a. 1) P.1 P.2 च।

16 = Mt. 43.20; Vā. 94.16. 1) Mt. राज्ञां। 2) Mt. वै तदा। 3) Vā. निरर्गलाः स्म निर्वृत्ताः।

17 = Bḍ. II. 69.17; Br. 13.168; H. 1859; Mt. 43.21; P.1 I. 12.111b, 112a; P.2 V. 12.123; Vā. 94.17. 1) Br. मुनिश्रेष्ठाः; H. –बाहो; Mt. महाराज–। 2) Bḍ. Vā. भूरितेजसः; Br. H. सहस्रशतदक्षिणाः। 3) Bḍ. Vā. काञ्चनवेदीकाः; Br. H. –पश्च। 4) Mt. सर्वाः। 5) Bḍ. Vā. –र्वे यूपैश्च काञ्चनैः; Br. H. काञ्चनवेदयः।

18 = Bḍ. II. 69.18; Br. 13.169; H. 1860; Mt. 43.22; P.1 I. 12.112b, 113a; P.2 V. 12.124; Vā. 94.18. 1) Bḍ. सर्वै–। 2) Br. मुनिश्रेष्ठा वि–; H. महाराज वि–; Mt. समं प्राप्तैर्वि–; P.1 P.2 दैवैश्च संप्राप्ता वि–। 3) Br. P.1 –कृतैः। 4) P.1 –मेवापि सेविताः; P.2 –मेवोपसेविताः।

19a = Bḍ. II. 69.19a; Br. 13.170a; H. 1861a; Mt. 43.23a; P.1 I. 12.113b; P.2 V. 12.125a; Vā. 94.19a. 1) Bḍ. Mt. Vā. त–। 2) Bḍ. Vā. राज्ञो। 3) P.2 –र्वौ।

वरीदासात्मजो विद्वान्
महिम्ना तस्य विस्मितः ॥ 19 ॥

कार्तवीर्यस्य[1]) राजर्षे-
र्महिमानं निरीक्ष्य सः[2]) ॥ 19 ॥

न नूनं[1]) कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः[2]) ।
यज्ञैर्दानैस्तपोभिश्च[3]) विक्रमेण[4]) श्रुतेन[5]) च[6]) ॥ 20 ॥

स हि सप्तसु द्वीपेषु
चर्मी खड्गी[1]) शरासनी ।
रथी द्वीपान[2]नुचरन्
योगी संदृश्यते नृभिः[3]) ॥ 21 ॥

द्वीपेषु सप्तसु स वै
खड्गी चर्मी[1]) शरासनी ।
रथी राजा सानुचरो[2])
योगा[3]च्चैवानुदृश्यते ॥ 21 ॥

अनष्टद्रव्यता चासीन्[1]), न शोको[2]) न च विभ्रमः ।
प्रभावेण महाराज्ञः प्रजा धर्मेण रक्षतः[3]) ॥ 22 ॥

पञ्चाशीतिसहस्राणि वर्षाणां स[1]) नराधिपः ।
स सर्वरत्नभाक्[2]) सम्राट्[3]) चक्रवर्ती बभूव ह ॥ 23 ॥

स एव[1]) पशुपालोऽभूत् क्षेत्रपालः स एव[2]) च[3]) ।
स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् ॥ 24 ॥

स वै[1]) बाहुसहस्रेण ज्याघातकठिनत्वचा[2]) ।
भाति रश्मिसहस्रेण शारदेनेव[3]) भास्करः[4]) ॥ 25 ॥

---

19$^b$ = Br. 13.170$^b$; H. 1861$^b$.

19$^b$ = Bḍ. II. 69.19$^b$; Mt. 43.23$^b$; P.1 I. 12.114$^a$; P.2 V. 125$^b$; Vā. 94.19$^b$. 1) Bḍ. Vā. चरितं तस्य । 2) Bḍ. Vā. च ।

20 = A. 275.7$^b$ = a; Bḍ. II. 69.20; Br. 13.171; H. 1862; Mt. 43.24; P.1 I. 12.114$^b$, 115$^a$; P.2 V. 12.126; Vā. 94.20; Vi. IV. 11.4. 1) Vi. नूनं न । 2) Bḍ. Vā. मानवाः; Mt. क्षत्रियाः; A. वै नृपाः । 3) H. P.2 Vi. -भिर्वा । 4) Bḍ. प्रश्रयेण । 5) Vi. दमेन । 6) वा ।

21 = Br. 13.172; H. 1863; Mt. 43.25; P.1 I. 12.115$^b$=b; P.2 V. 12.127$^a$ = b. 1) Mt. -पु खड्गी चक्री । 2) Mt. द्वीपान्य-; P.1 P.2 सप्त द्वीपान- । 3) Mt. -गी पश्यति तस्करान् ; P.1 वेगेन पवनोपमः; P.2 उद्योगे पवनोपमः ।

21 = Bḍ. II. 69.21; Vā. 94.21. 1) Bḍ. धन्वी खड्गी; Vā. T. खड्गी वर- । 2) Vā. ऽप्यनुचरो । 3) Vā. -ऽन्योऽगा- ।

22 = Bḍ. II. 69.22; Br. 13.173; H. 1864; Vā. 94.22. 1) Br. H. चैव; Vā. T. द्रव्यश्चैवासीन् । 2) Bḍ. क्लेशो । 3) Bḍ. रक्षितः ।

23 = Bḍ. II. 69.23; Br. 13.174$^a$ = b; H. 1865; Mt. 43.26; P.1 I. 12.116; P.2 V. 12.127$^b$, 128$^a$; Vā. 94.23. 1) H. वै; P.1 P.2 च । 2) Vā. स सप्तद्वीपवान् । 3) Mt. -रत्नसंपूर्णश् ; P.1 P.2 सप्तद्वीपपृथिव्याश्च ।

24 = Bḍ. II. 69.24; Br. 13.174$^b$, 175$^a$; H. 1866; Mt. 43.27; P.1 I. 12.117; P.2 V. 12.128$^b$, 129$^a$; Vā. 94.24. 1) Bḍ. Vā. एप । 2) Bḍ. Vā. -लस्तथैव । 3) Mt. P.1 P.2 हि ।

25 = Bḍ. II. 69.25; Br. 13.175$^b$, 176$^a$; H. 1867; Mt. 43.28; P.1 I. 12.118; P.2 V. 12.129$^b$, 130$^a$; Vā. 94.25. 1) Mt. P.1 P.2 योऽसौ । 2) Bḍ. Vā. -कठिनेन च । 3) Bḍ. -देनैव; Br. H. शरदीव च; P.2 शरदीव । 4) P.2 दिवाकरः ।

स हि[1]) नागान्[2]) मनुष्येषु[3]) माहिष्मत्यां महाद्युतिः[4]) ।
कर्कोटकसुताञ्[5]) जित्वा पुर्यां[6]) तत्र[7]) न्यवेशयत् ॥ 26 ॥

स वै[1]) वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः[2]) ।
क्रीडन्निव[3]) भुजोद्भिन्नं[4]) प्रतिस्रोतश्च[5]कार ह[6]) ॥ 27 ॥

लुण्ठिता[1]) क्रीडता तेन फेनस्रग्दाम[2]मालिनी ।
चलदूर्मिसहस्रेण
शङ्किताऽभ्येति नर्मदा ॥ 28 ॥

| ऊर्मिभ्रुकुटिसंनादा[1])
| शङ्किताऽभ्येति[2]) नर्मदा ॥ 28 ॥

| एषो[1]) भुजसहस्रेण[2]) अवगाढो[3]) महार्णवम्[4]) ।
| चकारोद्धृत[5]वेलां तां[6]) नर्मदां[7]) प्रावृषोद्धताम्[8]) ॥ $28_1$ ॥

तस्य बाहुसहस्रेण क्षोभ्य[1]माणे महोदधौ ।
भयान् निलीना[2]) निश्चेष्टाः पातालस्था महा[3]सुराः ॥ 29 ॥

---

26 = Bḍ. II. 69.26; Br. 13.176[b], 177[a]; H. 1868; Mt. 43.29; P.1 I. 12.119[a] = a; P.2 V. 12.130[b] = a; Vā. 94.26. 1) Mt. P.1 P.2 एष । 2) Bḍ. Vā. नाग–; Mt. नागं; P.1 P.2 नाम । 3) Bḍ. Vā. सहस्रेण । 4) Bḍ. Vā. नराधिपः । 5) Bḍ. Vā. –समां; Mt. –सुतं । 6) Bḍ. Vā. पुरीं । 7) Br. H. तस्यां ।

27 = Bḍ. II. 69.27; Br. 13.177[b], 178[a]; H. 1869; Mt. 43.30; P.1 I. 12.119[b], 120[a]; P.2 V. 12.131; Vā. 94.27. 1) Mt. P.1 P.2 एष । 2) Mt. P.1 P.2 –ले भजेत वै; Vā. –लाम्बुजेक्षणः । 3) Bḍ. H. Mt. –न्नेव; P.1 क्रीडते स्व । 4) Mt. सुखोद्भिन्नः; V. सुखोद्भिन्नः; P.1 स्वसुखायेवि–; V. –स्वायेति–; P.2 मुखोर्द्वार्णः; Bḍ. सुखोद्विग्नः; Vā. सुखोद्विग्नः । 5) Bḍ. Vā. प्रावृट्कालं च–; Mt. P.1 P.2 –स्रोतो । 6) Mt. P.1 P.2 महीपतिः ।

28[a] = Bḍ. II. 69.28[a]; Br. 13.178[b]; H. 1870[a]; Mt. 43.31[a]; P.1 I. 12.120[b]; P.2 V. 12.132[a]; Vā. 94.29[a]. 1) Bḍ. Vā. लुलिता; Mt. T. ललता; Mt. V. P.1 P.2 ललनाः । 2) Bḍ. Vā. हेमस्रग्दाम–; Br. T. नदी तद्ग्राम–; V. फेनश्वोद्दाम–; Mt. प्रतिस्रग्दाम–; P.1 P.2 प्रतिबद्धोर्मि–; P.2 V. प्रतिस्रोतोर्मि– ।

28[b] = Br. 13.179[a]; H. 1870[b].

| 28[b] = Bḍ. II. 69.28[b]; Mt. 43.31[b]; P.1 I. 12.121[a]; P.2 V. 12.132[b]; Vā. 94.28[b]. 1) Bḍ. ऊर्मिमुक्तार्तसंनादा; Mt. कुटिसंत्रासाच्; P.1 P.2 कुटिमाला सा । 2) Mt. चकिताभ्येति ।

$28_1$ = Bḍ. II. 69.29; Mt. 43.32; P.1 I. 12.121[b], 122[a]; P.2 V. 12.133; Vā. 94.29. 1) Bḍ. Vā. पुरा; Mt. एको । 2) Mt. बहुसहस्रेण; P.1 P.2 एष एव मनोर्वंशे; Vā. स तामनुसरन् । 3) Bḍ. स जगाहे; Mt. T. वगाहे स; V. अपगाधो; P.1 P.2 त्ववगाहेन् । 4) Bḍ. –र्णवे । 5) Bḍ. रोद्वृत्त; Mt. करोत्युद्वृत्त; P.1 P.2 करेणोद्धृत्य; Vā. –रोद्धृत्य । 6) Bḍ. वेलं तं; Mt. वेगां तु; P.1 P.2 वेगं तु । 7) Bḍ. अकाले; Vā. स कालं । 8) Bḍ. मारुतोद्धतम्; Mt. प्रावृडुद्धताम्; P.1 P.2 कामिनीप्रोगनेन तु; Vā. प्रावृषोद्गनम् ।

29 = Bḍ. II. 69.30; Br. 13.179[b], 180[a]; H. 1871; Mt. 43.33; P.1 I. 12.122[b], 123[a]; P.2 V. 12.134; Vā. 94.30. 1) Br. क्षिप्य–; H. क्षुभ्य– । 2) Bḍ. P.1 P.2 Vā. भवन्ति लीना; Mt. भवन्त्यतीव । 3) Br. मही– ।

चूर्णीकृतमहावीचिं चलन्मी[1]नमहा*तिमिम्*[2]) ।
मारुता[3]) विद्धफेनौघमावर्तक्षोभ[4]दुःसहम्[5]) ॥ 30 ॥

प्रावर्तयत् तदा राजा
सहस्रेण च बाहुना ।
देवासुरसमाक्षिप्तः
क्षीरोदमिव मन्दरः ॥ 31 ॥

चकार क्षोभयन् राजा[1])
दोःसहस्रेण सागरम् ।
देवासुरपरिक्षिप्तं
क्षीरोदमिव सागरम् ॥ 31 ॥

मन्दर[1]क्षोभचकिता अ[2]मृतोत्पादशङ्किताः[3]) ।
सहसोत्पतिता[4]) भीता भीमं दृष्ट्वा नृपोत्तमम् ॥ 32 ॥

नता निश्चल[1]मूर्धानो बभूवु[2]स्ते[3]) महोरगाः ।
सायाह्ने कदलीखण्डा[4]) *निर्वात*[5]स्तिमिता इव[6]) ॥ 33 ॥

स वै[1]) बद्ध्वा[2]) धनु[3]र्ज्या*भिरु*[4]त्सिक्तं[5]) पञ्चभिः शरैः[6]) ।
लङ्केशं[7]) मोहयित्वा तु[8]) सबलं रावणं बलात् ।
निर्जित्य वशं चा[9]नीय माहिष्मत्यां बबन्ध तम्[10]) ॥ 34 ॥

| श्रुत्वा तु बद्धं पौलस्त्यं रावणं त्वर्जुनेन च[1]) ।

ततो गत्वा[1]) पुलस्त्यस्तम[2]र्जुनं संप्रसादयन्[3]) ।

---

30 = Bḍ. II. 69.31; Br. 13.180[b], 181[a]; H. 1872; Mt. 43.34; Vā. 94.31. 1) Bḍ. Mt. Vā. –वीचिलं नमी– । 2) Bḍ. Vā. T. –महाविषं; Vā. T. –ह्राविषाः । 3) Bḍ. Vā. पतिता । 4) Bḍ. Mt. Vā. –तैक्षिप्त– । 5) Br. T. –संकुलम् ।

31 = Br. 13.181[b], 182[a]; H. 1873.

31 = Bḍ. II. 69.32; Mt. 43.35[a]=a; Vā. 94.32. 1) Mt. करोत्यालोडयन्नेव ।

32 = Bḍ. II. 69.33; Br. 13.182[b], 183[a]; H. 1874; Mt. 43.35[b]=a; P.1 I. 12.123[b]=a; P.2 V. 12.135[a]=a; Vā. 94.33. 1) P.1 तदूरु– । 2) Bḍ. –क्षोभणभ्रान्तम–; Mt. –किता ह्य–; Vā. क्षोभणकृता ह्य– । 3) Bḍ. मृतोत्पत्तिहेतवे; P.2 मृतोत्थानशङ्किताः; Vā. मृतोदकशङ्किताः । 4) Bḍ. सहसा विद्रुता; Vā. सहसोत्पादि( टि )ता ।

33 = Bḍ. II. 69.34; Br. 13.183[b], 184[a]; H. 1875; Mt. 43.36; P.1 I. 12.124[a] = a; P.2 V. 12.135[b] = a; Vā. 94.34. 1) Bḍ. निश्चितं नत–; Mt. T. तदा निश्चल–; Vā. नतनिश्चल– । 2) Mt. P.1 P.2 भवन्ति । 3) Bḍ. Vā. –वुश्च; Mt. P.1 P.2 च । 4) Br. –खण्डाः; H. –पण्डे; Vā. –षण्डा । 5) Bḍ. निवात–; Br. कम्पिता; H. कम्पितास् । 6) Br. इव वायुना; H. तस्य वायुना ।

34 = Bḍ. II. 69.35, 36[a], Br. 13.184[b], 185; H. 1876, 1877[a]; Mt. 43.37, 38[a]; P.1 I. 12.125, 126[a]; P.2 V. 12.136[b], 137; Vā. 94.35. 1) Mt. V. P.1 P.2 एप; Mt. T. एवं । 2) Bḍ. ज्यामारोप्य; P.1 P.2 धन्वी । 3) Bḍ. दृढे । 4) Bḍ. चापे; Mt. ज्यायाम् ; P.1 P.2 गृह्य; Vā. T. याना; V. ज्यानाम् । 5) Bḍ. सायकैः; Vā. उत्सिक्तः । 6) Bḍ. Vā. शतैः । 7) Mt. P.2 Vā. लङ्कायां । 8) P.2 स । 9) Bḍ. –श्चमा; H. निर्जित्यैव समा–; Mt. Vā. निर्जित्य बद्ध्वा चा–; P.1 P.2 निर्जित्य बद्ध्वा त्वा– । 10) Mt. च; P.2 ह ।

35[a] = Br. 13.196[a]; H. 1877[b]. 1) H. तु ।

35[b(a)] = Bḍ. II. 69.36[b]; Br. 13.186[b]; H. 1878[a]; Mt. 43.38[b]; P.1 I. 12.126[b]; P.2 V. 12.138[a]; Vā. 94.36[a]. 1) P.1 P.2 गतो । 2) Mt. तु ह्य–; P.1 हन्तस्याग्रे; P.2 T. –ऽहं तत्राशु; Vā. –त्यस्तु । 3) Bḍ. च प्रसाधयत् ; Br. H. ददौ स्वयम्; Vā. च प्रसादयत्; V. –द्यम् ।

मुमोच राजा[1]) पौलस्त्यं
पुलस्त्येनानुयाचितः[2]) ॥ 35 ॥

मुमोच राजन्[1]) पौत्रं मे[2]) ।
सख्यं कृत्वा[3]) तु[4]) पार्थिवः ॥ 35 ॥

त[1]स्य बाहुसहस्रस्य[2]) बभूव ज्यातलस्वनः ।
युगान्ते त्वम्बुदस्येव[1])
स्फुटतो ह्यशने[2]रिव ॥ 36 ॥

युगान्ताग्नेः[1]) प्रवृत्तस्य
यथा[2]) ज्यातलनिःस्वनः ॥ 36 ॥

अहो वत[1]) मृधे[2]) वीर्यं[3]) भार्गवस्य[4]), यदच्छि[5]नत् ।
मृधे[6]) सहस्रं बाहूनां[7]) हैमं[8]) तालवनं यथा ! ॥ 37 ॥

तृषितेन कदाचित् स भिक्षितश्चित्रभानुना, ।
स भिक्षामददाद्[1]) वीरः
सप्त द्वीपान् विभावसोः ॥ 38 ॥

सप्त द्वीपांश्चित्रभानोः
प्रादाद् भिक्षां विशांपतिः ॥ 38 ॥

पुराणि ग्रामघोषां[1]श्च विषयांश्चैव[2]) सर्वशः ।
जज्वाल तस्य सर्वाणि[3]) चित्रभानुर्दिधक्षया[4]) ॥ 39 ॥

---

$35^{b}$ = Bḍ. II. 69.$37^{a}$; Br. 13.$187^{a}$; H. $1878^{b}$; Mt. 43.$39^{a}$; Vā. 94.$36^{b}$. 1) Br. H. Mt. रक्षः । 2) Br. –नाभियाचितः; Mt. –स्त्येनेह सान्त्वितम् ; Vā. –नानुपालितम् ; V. –त ।

$35^{b}$ = P.1 I. 12.$127^{a}$; P.2 V. 12.$138^{b}$. 1) P.2 T. पौत्रं; V. भवैः । 2) P.2 T. मे राजन् । 3) P.2 कृत्वा सख्यं । 4) P.1 च ।

$36^{a}$ = Bḍ. II. 69.$37^{b}$; Br. 13.$187^{b}$; H. $1879^{a}$; Mt. 43.$39^{b}$; P.1 I. 12.$127^{b}$; P.2 V. 12.$139^{a}$; Vā. 94.$37^{a}$. 1) Br. H. य– । 2) Mt. –स्रेण ।

$36^{b}$ = Bḍ. II. 69.$38^{a}$; Br. 13.$188^{a}$; H. $1879^{b}$; Mt. 43.$40^{a}$; Vā. 94.$37^{b}$. 1) Bḍ. ऽम्बुदवृन्दस्य; Br. तोयदस्येव; Mt. –न्ताभ्रसहस्रस्य; Vā. ऽम्बुदवृक्षस्य । 2) Bḍ. Vā. स्पुटितस्याशने; Mt. आस्फोटस्त्वशने– ।

$36^{b}$ = P.1 I. 12.$128^{a}$; P.2 V. 12.$139^{b}$. 1) P.2 –न्ताग्नि– । 2) P.2 राज्ञो ।

37 = Bḍ. II. 69.$38^{b}$, $39^{a}$; Br. 13.$188^{b}$, $189^{a}$; H. 1880; Mt. 43.$40^{b}$, $41^{a}$; P.1 I. 12.$128^{b}$, $129^{a}$; P.2 V. 12.140; Vā. 94.38. 1) Bḍ. Vā. मृधे; P.1 बलं । 2) Bḍ. Vā. महा–; Mt. P.1 P.2 –विधेर् । 3) Bḍ. –वीर्यो । 4) Bḍ. –वस्तस्य; Mt. –वोऽयं; P.1 P.2 –वः स; Vā. –वो यस्य । 5) Bḍ. योऽच्छि–; Mt. P.1 P.2 यदाच्छि–; Vā. सोऽच्छि– । 6) Br. H. राज्ञो; Mt. तद्वै । 7) Br. वाहुसहस्रस्य; H. बाहुसहस्रं तु । 8) Bḍ. Mt. T. Vā. हेम– ।

$38^{a}$ = Bḍ. II. 69.$39^{b}$; Br. 13.$1899^{b}$; H. $1881^{a}$; Vā. 94.$39^{a}$.

$38^{b}$ = Br. 13.$190^{a}$; H. $1881^{b}$. 1) H. –मददद् ।

$38^{b}$ = Bḍ. II. 69.$40^{a}$; Vā. 94.$39^{b}$.

39 = Bḍ. II. 69.$40^{b}$, $41^{a}$; Br. 13.$190^{b}$, $191^{a}$; H. 1882; Vā. 94.40. 1) Bḍ. Vā. घोषान् ग्रामां– । 2) Bḍ. Vā. पत्तनानि च । 3) Bḍ. Vā. बाणेषु । 4) Br. –दिदृक्षया ।

स तस्य पुरुषेन्द्रस्य *प्रभावेण*[1]) महात्मनः[2]) ।
ददाह कार्तवीर्यस्य शैलांश्चैव[3]) वनानि च ॥ 40 ॥

स शून्यमाश्रमं *रम्यं*[1]) वरुणस्यात्मजस्य वै ।
ददाह *सवनद्वीपांश्चि*[2]*त्रभानुः* सहैहयः ॥ 41 ॥

यं[1]) लेभे वरुणः पुत्रं पुरा भास्वन्त[2]मुत्तमम् ।
वसिष्ठं नाम[3]), स मुनिः ख्यात आपव इत्युत ॥ 42 ॥

*त*[1]*त्रापव*[2]*स्तु तं*[1]) क्रोधाद[4]र्जुनं शप्तवान्[5]) *विभुः*[6]) ।

| | |
|---|---|
| यस्मान्न वर्जितमिदं वनं ते मम हैहय, ॥ 43 ॥ | यस्माद् वनं प्रदग्धं ते[1]) विश्रुतं मम हैहय, ॥ 43 ॥ |

तस्मात् ते दुष्करं[1]) कर्म कृतमन्यो *हनिष्यति*[2]), ।

| | |
|---|---|
| रामो नाम महाबाहु- र्जामदग्न्यः प्रतापवान् ॥ 44 ॥ | अर्जुनो नाम कौन्तेयो न[1]) च राजा भविष्यति ॥ 44 ॥ |

| [ *अर्जुन त्वां*[1]) महावीर्यो रामः प्रहरतां वरः । ]

छित्त्वा बाहुसहस्रं ते[1]) प्रमथ्य[2]) तरसा बली ।
तपस्वी ब्राह्मणश्च त्वां[3]) वधिष्यति[4]) *स भार्गवः*[5]) ॥ 45 ॥

Br. H. || अनष्टद्रव्यता यस्य बभूवामित्रकर्षिणः[1]) ।
प्रतापेन[2]) नरेन्द्रस्य प्रजा धर्मेण रक्षतः ॥ $45_1$ ॥

---

40 = Bḍ. II. 69.41[b], 42[a]; Br. 13.191[b], 192[a]; H. 1883; Vā. 94.41. 1) Bḍ. Vā. T. प्रतापेन । 2) Bḍ. Vā. महायशाः । 3) Bḍ. Vā. -श्चापि; Br. -श्चैष ।

41 = Bḍ. II. 69.42[b], 43[a]; Br. 13.192[b], 193[a]; H. 1884; Vā. 94.42. 1) Bḍ. Vā. सर्वं । 2) Bḍ. सवनाटोपं चि-; Br. वलत्रद्वीतश्चि-; H. वनवद्वीतश्चि- ।

42 = Bḍ. II. 69.43[b], 44[a]; Br. 13.193[b], 194[a]; H. 1885; Vā. 94.43. 1) Vā. स । 2) Vā. भास्विन- । 3) Bḍ. Vā. वसिष्ठनामा ।

43[a] = Bḍ. II. 69.44[b]; Br. 13.194[b]; H. 1886[a]; Mt. 43.41[b]; P.1 I. 12.129[b]; P.2 V. 12.141[a]; Vā. 94.44[a]. 1) Br. T. H. M. य- । 2) P.1 P.2 यं वसिष्ठ- । 3) Bḍ. Vā. -स्तदा । 4) Mt. T. P.1 P.2 संक्रुद्धो ह्य-; Mt. V. संक्रोधाद- । 5) Br. H. -धाच्छप्तवानर्जुनं । 6) H. Mt. P.2 प्रभुः ।

| | |
|---|---|
| 43[b] = Bḍ. II. 69.45[a]; Br. 13.195[a]; H. 1886[b]; Vā. 94.41[b]. | 43[b] = Mt. 43.42[a]; P.1 I. 12.130[a]; P.2 V. 12.141[b]. 1) Mt. वै । |

44[a] = Bḍ. II. 69.45[b]; Br. 13.195[b]; H. 1887[a]; Mt. 43.42[b]; P.1 I. 12.130[b]; P.2 V. 12.142[a]; Vā. 94.45[a]. 1) P.1 P.2 दुष्कृतं । 2) Mt. हरिष्यति ।

| | |
|---|---|
| 44[b] = Br. 13.196[a]; H. 1887[b]. | 44[b] = Bḍ. II. 69.46[a]; Mt. 43.42[b] ( ); Vā. 94.45[b]. 1) Bḍ. -न्तेयः स । |

| [ ] = Bḍ. II. 69.46[b]; Vā. 94.46[a]. 1) Bḍ. अर्जुनं च ।

45 = Bḍ. II. 69.47; Br. 13.196[b], 197[a]; H. 1888; Mt. 43.43; P.1 I. 12.131; P.2 V. 12.142[b], 143[a]; Vā. 94.46[b], 47[a]. 1) Bḍ. Vā. वै । 2) Mt. प्रथमं । 3) Bḍ. Vā. -णश्चैव-; Br. -णस्त्वां तु; P.1 -णस्त्वां वै । 4) Br. हनिष्यति । 5) Bḍ. Vā. महाबलः; Mt. स वधिष्यति भार्गवः ।

| $45_1$ = Br. 13.197[b], 198[a]; H. 1889. 1) H. -त्रकर्षण । 2) H. -भवेण ।

रामात्[1]) ततोऽस्य मृत्युर्वै
तस्य शापान् महामुनेः[2]), ।

| तस्य रामस्तदा ह्या[1]सीन्[2])
| मृत्युः[3]) शापेन धीमतः[4]), ।

वरस्तथैव[1]) राजर्षेः[2]) स्वयमेव वृतः पुरा ।
तस्य पुत्रशतं त्वासीत्[3]), पञ्च तत्र[4]) महारथाः[5]) ॥ 46 ॥

कृतास्त्रा बलिनः शूरा धर्मात्मानो यशस्विनः[1]) ।
शूरसेनश्च शूरश्च[2]) धृष्णो वै[3]) कृष्ण[4]) एव च[5]) ॥ 47 ॥

जयध्वजश्च नाम्नासीद्
आवन्त्यो नृपतिर्महान् ।
कार्तवीर्यस्य तनया
वीर्यवन्तो महाबलाः ॥ 48 ॥

| जयध्वजश्च वै कर्ता[1])
| अवन्तिषु[2]) विशांपतिः[3]) ॥ 48 ॥

---

46$^{a}$ = Br. 13.198$^{b}$; H. 1890$^{a}$. 1) Br. प्राप्तस् । 2) H. मुनेर्नृप ।

| 46$^{a}$ = Bḍ. II. 69.48$^{a}$; Kū. 22.( 20$^{a}$ ); L. 68.10$^{a}$; Mt. 43.44$^{a}$; P.1 I. 12.132$^{a}$; P.2 V. 12.143$^{b}$; Vā. 94.47$^{b}$. 1) Kū. मोऽभवन् ; Mt. L. –दा त्वा– । 2) Kū. मृत्यु–; P.1 रामोऽथ हन्तासीन् ; P.2 –मश्च हन्तासीन् । 3) P.1 P.2 मुनि– । 4) Kū. –र्जामदग्न्यो जनार्दनः; L. –त्युर्नारायणात्मकः ।

46$^{bc}$ = Bḍ. II. 69.48$^{b}$, 49$^{a}$; Br. 13.199; H. 1890$^{b}$, 1891$^{a}$; Kū. 22.20$^{b}$ = c; L. 68.10$^{b}$ = c; Mt. 43.44$^{b}$, 45$^{a}$; P.1 I. 12.132$^{b}$ = c; P.2 V. 12.144$^{a}$ = c; Vā. 94.48. 1) H. तथैप; Mt. –रश्चैव तु । 2) Br. भो विप्राः; H. कौरव्य; Bḍ. Vā. राज्ञा तेन वरश्चैव । 3) H. पुत्रशतस्यासन् ; Kū. L. –शतान्यासन् ( L. न्यासीत ); Vā. शतं ह्यासीत् । 4) Br. H. शेषा । 5) Br. H. महात्मनः ।

47 = A. 275.9$^{a}$ = b; Bḍ. II. 69.49$^{b}$, 50$^{a}$; Br. 13.200; H. 1891$^{b}$, 1892$^{a}$; Kū. 22.21$^{ab}$; L. 68.11, Cp. 18$^{a}$; Mt. 43.45$^{b}$, 46$^{a}$; P.1 I. 12.133; P.2 V. 12.144$^{b}$, 145$^{a}$; Vā. 94.49. 1) Kū. L. मनस्विनः; Mt. महाबलाः; P.1 महाबल; P.2 महाव्रताः । 2) Bḍ. L. Vā. शूरश्च शूरसेनश्च । 3) A. धृष्टोक्तः; Bḍ. वृषास्यो; Br. वृषणो; H. धृष्णोक्तः; Kū. कृष्णो; L. Mt. धृष्टः; P.1 P.2 –ष्टो वै; Vā. वृष्टयाद्यं । 4) Bḍ. Vā. वृष; V. वृष्ण । 5) Br. मधुपध्वजः; Kū. धृष्णस्तथैव च; L. कृष्णस्तथैव च; Mt. क्रोष्टुस्तथैव च ।

48 = Br. 13.201; H. 1892$^{b}$, 1893$^{a}$.

| 48 = A. 275.9; Bḍ. II. 69.50$^{b}$; Kū. 22.21$^{bI}$ = I; L. 68.12$^{a}$. Cp. 18$^{b}$; Mt. 43.46$^{b}$; P.1 I. 12.134$^{a}$; P.2 V. 12.145$^{b}$; Vā. 94.50$^{a}$. 1) A. नामासीद् ; Bḍ. –जो वंशकर्ता; Kū. बलवान् : L. –जश्च राजासीद् ; P.1 P.2 –जः स वै कर्ता; Vā. T. वै पुत्रा; V. वैकर्ता । 2) A. अवन्त्यो; L. अवन्तीनां; Mt. P.1 P.2 अवन्तिश्च । 3) A. नृपतिर्महान् ; Mt. –पते; P.1 P.2 V. रसापतिः; P.2 T. निशापतिः; Vā. T. –पतेः ।

जयध्वजस्य पुत्रस्तु[1]) तालजङ्घो महाबलः[2]), ।
तस्य पुत्र[3]शतं त्वेव[4]) तालजङ्घा इति स्मृताः[5]) ॥ 49 ॥

तेषां पञ्च[1]) गणाः ख्याता[2]) हैहयानां महात्मनाम् ।
वीतिहोत्राश्च[3]) संजाता[4]) भोजाश्चावन्तय[5]स्तथा[6]) ॥ 50 ॥

तौण्डि[1]केराश्च विक्रान्ता[2]स्तालजङ्घास्तथैव च[3]) ।
| भरताश्च सुजाता[1]श्च बहुत्वान् नानुकीर्तिताः ॥ 51 ॥

---

| वृषप्रभृतयश्चान्ये[1]) यादवाः[2]) पुण्यकर्मिणः[3]) ।
| वृषो वंशधर[4]स्तेषां[5]), तस्य पुत्रोऽभवन् मधुः ॥ 52 ॥
| मधोः पुत्रशतं त्वासीद्[1]); वृषणस्तस्य[2]) वंशकृत्[3]); ।
| वृषणाद्[4]) वृष्णयः सर्वे, मधोस्तु[5]) माधवाः स्मृताः ॥ 53 ॥
| यादवा यदुनाम्ना ते[1]) निरुच्यन्ते च[2]) हैहयाः ॥ 54 ॥

---

49 = Bḍ. II. 69.51; Br. 13.202; H. 1893[b], 1894[a]; Kū. 23.1; L. 68.12[b], 13[a]; Mt. 43.47; P.1 I. 12.134[b], 135[a]; P.2 V. 12.146; Vā. 94.50[b], 51[a]. 1) Kū. L. पुत्रोऽभूत् । 2) Bḍ. Vā. –ङ्घः प्रतापवान्; Kū. –ङ्घ इति स्मृतः । 3) H. P.1 तस्य पुत्राः; Kū. L. शतं पुत्रा- । 4) Bḍ. –तं त्वेवं; Br. H. –तं ख्यातास्; Kū. –स्तु तस्यासन्; L. –स्तु तस्येह; Mt. P.1 P.2 –शतान्येव; Vā. –तं ह्येव । 5) Bḍ. Vā. T. श्रुतम्; L. –ङ्घाः प्रकीर्तिताः; H. Mt. P.2 श्रुताः ।

50 = Bḍ. II. 69.52; Br. 13.203; H. 1894[b], 1895[a]; Kū. 23.2=a[I],b[I]; L. 68.16, 17[a]; Mt. 43.48; P.1 I. 12.135[b], 136[a]; P.2 V. 12.147; Vā. 94.51[b], 52[a]. 1) Br. H. कुले; Kū. ज्येष्ठो । 2) Br. मुनिश्रेष्ठा; H. महाराज; Kū. महावीर्यो; Mt. P.1 कुलाः ख्याताः; P.1 कुलान्यासन्; P.2 कुलान्येव । 3) L. ह्येते; P.2 –त्रश्च; Vā. वीरहोत्रा च । 4) Br. H. –त्राः सुजाताश्च; Kū. –त्रोऽभवन् नृपः; L. हर्याता; Mt. शार्याता; P.2 संजातो; Vā. –त्रा ह्यसंख्याता । 5) Vā. –श्चावर्तय- । 6) Br. H. स्मृताः ।

51(a) = Bḍ. II. 69.53[a]; Br. 13.204[a]; H. 1895[b]; L. 68.17[b]; Mt. 43.49[a]; P.1 I. 12.136[b]; P.2 V. 12.148[a]; Vā. 94.52[b]. 1) Bḍ. P.2 Vā. तुण्डि–; Mt. कुण्डि–; P.1 तुण्ड– । 2) Br. H. विख्याता–; L. शूरसेनास्तु विख्याता– । 3) P.1 –ङ्घाः प्रकीर्तिताः; P.2 –ङ्घाश्च कीर्तिताः ।

| 51[b] = Br. 13.204[b]; H. 1896[a]. 1) H. सुजात्या– ।

---

52 = Br. 13.205; H. 1896[b], 1897[a]; Kū. 23.2[b], 3[a]; L. 68.14. 1) Br. –यो विप्रा; H. –यो राजन् । 2) L. तत्सुताः । 3) L. –र्मणः । 4) Kū. L. –कर– । 5) Br. H. –स्तत्र ।
53 = Br. 13.206; H. 1897[b], 1898[a]; Kū. 23.3[b] = a; L. 68.15[ab]. 1) L. चासीद् । 2) L. वृष्णिस्तस्य तु । 3) Kū. L. वंशभाक् । 4) L. वृष्णेस्तु । 5) L. मधोर्वै ।
54 = Br. 13.207[a]; H. 1898[b]; L. 68.15[c]. 1) H. यदुना चाग्रे; L. यदुवंशेन । 2) L. तु ।

वीति[1]होत्रसुतश्चापि अनन्तो[2]) नाम[3]) पार्थिवः[4]),।
दुर्जय[5]स्तस्य पुत्रस्तु[6]) बभूवामित्रकर्षणः[7]) ॥ 55 ॥
Cp. 451. अनष्टद्रव्यता चैव तस्य राज्ञो बभूव ह।
प्रभावेण[1]) महाराजः[2]) प्रजास्ताः पर्यपालयत्[3]) ॥ 56 ॥
[ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान्[1]),।
येन सागरपर्यन्ता धनुषा निर्जिता मही।
यस्तस्य कीर्तयेन्नाम कल्यमु[2]त्थाय मानवः ] ॥ 57 ॥

---

न तस्य वित्तनाशः स्यान्[1]) नष्टं प्रतिलभेच्च सः[2])।
कार्तवीर्यस्य यो जन्म कथयेदिह धीमतः[3]) ॥ 58 ॥

वित्तवान् भवतेऽत्रैव[1]) धर्मश्चास्य विवर्धते,।
यथा यष्टा[2]) यथा दाता[3]), तथा स्वर्गे[4]) महीयते ॥ $58_1$ ॥

---

एते ययातिपुत्राणां पञ्च वंशा द्विजोत्तमाः[1])।
कीर्तिता लोकवीराणां, ये लोकान् धारयन्ति वै ॥ $58_2$ ॥
भूतानीव मुनिश्रेष्ठाः[1]) पञ्च स्थावरजङ्गमान्।
श्रुत्वा पञ्च विसर्गांश्च[2]) राजा धर्मार्थकोविदः ॥ $58_3$ ॥
वशी भवति पञ्चानामात्मजानां तथेश्वरः।
लभेत् पञ्च वरांश्चैव दुर्लभानिह लौकिकान् ॥ $58_4$ ॥
आयुः कीर्तिं तथा पुत्रानैश्वर्यं भूतिमेव च।
धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य भो द्विजाः[1]) ॥ $58_5$ ॥

---

55 = Bḍ. II. $69.53^{b}$, $54^{a}$; Kū. 23.4; L. 68.20; Mt. $43.49^{bc}$; P.1 I. 12.137; P.2 V. $12.148^{b}$, $149^{a}$; Vā. 94.53. 1) Vā. वीर–। 2) Kū. L. विश्रुतो; Mt. आनर्तो। 3) Kū. –ऽनन्त; L. –ऽनर्त्त। 4) Kū. L. इत्युत; Mt. P.1 P.2 वीर्यवान्। 5) Mt. –र्जेय–। 6) K. P.2 पुत्रोऽभूत्; L. –यः कृष्णपुत्रस्तु। 7) Kū. सर्वशास्त्रविशारदः; Vā. –त्रदर्शनः; P.2 स चैवामित्रकर्षणः।

56 = Bḍ. II. $69.54^{b}$, $55^{a}$; Mt. $43.50^{a}$ = b; P.1 I. $12.138^{a}$ = b; P.2 V. $12.149^{b}$ = b; Vā. 94.54. 1) Mt. P.1 P.2 सद्भावेन। 2) Mt. –राज 3) Mt. P.1 P.2 –जा धर्मेण पालयन्।

57 = Mt. $43.50^{b}$, 51; P.1 I. $12.138^{b}$, 139; P.2 V. 12.150, $151^{a}$. 1) P.1 –स्रभृत्। 2) P.2 प्रातरु–।

58 = Bḍ. II. $69.55^{b}$, $56^{a}$; Br. $13.207^{b}$, $208^{a}$; H. 1899; Mt. $43.52^{ab}$; P.1 I. $12.140^{ab}$; P.2 V. $12.151^{b}$, $152^{a}$; Vā. 94.55. 1) Bḍ. स्याद्; H. नाशोऽस्ति; Vā. –शश्च। 2) Vā. T. प्रतिलभेत सः; Mt. P.1 P.2 –ष्टं च लभते पुनः। 3) Br. H. नित्यशः।

$58_1$ = Bḍ. II. $69.56^{b}$, 57; Mt. $43.52^{c}$ = b; P.1 I. $12.140^{c}$ = b; P.2 V. $12.152^{b}$ = b; Vā. 94.56. 1) Bḍ. वर्धन्ते विभवाः शश्वद्। 2) P.2 इष्ट्वा यज्ञान्; Vā. त्वष्टा। 3) Mt. यथावत् स्विष्टपूतात्मा। 4) P.1 P.2 स्वर्गलोके।

---

$58_2$ = Br. $13.208^{b}$, $209^{a}$; H. 1900. 1) H. विशांपते।
$58_3$ = Br. $13.209^{b}$, $210^{a}$; H. 1901. 1) H. महाराज। 2) Br. –र्गांस्तु।
$58_4$ = Br. $13.210^{b}$, $211^{a}$; H. 1902.
$58_5$ = Br. $13.211^{b}$, $212^{a}$; H. 1903. 1) H. भारत।

## B.

( Bḍ. II. 70.1—49; Br. 13.212b—213, 15.1—29; H. 1904—1905, 1969—1998; L. 68.21—51; Mt. 44.1—46; P.1 I. 13.1—30; P.2 V. 13.1—30; P.2 V. 13.1—30; Vā. 95.1—48; Cp. A. 275.12–23; Bhg. IX. 23.30b—24.5; Ga. 139.25—35; Kū. 24.1—32; Vi. IV. 12.1—17. )

ऋषय ऊचुः
किमर्थं तु वनं1) दग्धमापवस्य महात्मनः ।
कार्तवीर्येण विक्रम्य तन्नः2) प्रब्रूहि पृच्छताम्3) ॥ 11 ॥
रक्षिता स तु राजर्षिः प्रजानामिति नः श्रुतम्, ।
कथं स1) रक्षिता भूत्वा अदहत् तत्2तपोवनम् ? ॥ 12 ॥
सूत उवाच :
आदित्यो विप्र1रूपेण कार्तवीर्यमुपस्थितः ।
तृप्तिकामः1) प्रयच्छास्मा3दित्योऽहं न संशयः4) ॥ 13 ॥
राजोवाच :
भगवन् केन ते तृप्तिर्भ1वेद्, ब्रूहि2) दिवाकर, ।
कीदृशं भोजनं दद्मि, श्रुत्वा च3) विदधाम्यहम् ! ॥ 14 ॥
आदित्य उवाच :
स्थावरं देहि मे सर्वमाहारं ददतां वर, ।
तेन तृप्तो भवेयं वै, न तृप्ये1न्येन2) पार्थिव ! ॥ 15 ॥
राजोवाच :
न शक्यं1) स्थावरं2) सर्वं3) तेजसा मानुषेण तु4) ।
निर्दग्धुं तपतां5) श्रेष्ठ, त्वामेव6) प्रणमाम्यहम् ॥ 16 ॥
आदित्य उवाच :
तुष्टस्तेऽहं शरान् दद्मि अक्षयान् सर्वतोमुखान्1) ।
ये क्षिप्ताः2) प्रज्व3लिष्यन्ति मम तेजःसमन्विताः ॥ 17 ॥

---

11 = Bḍ. II. 70.1; Mt. 44.1; Vā. 95.1. 1) Mt. तद्वनं; Vā. भुवनं । 2) Mt. सूत । 3) Mt. तत्त्वतः ।

12 = Bḍ. II. 70.2; Mt. 44.2; Vā. 95.2. 1) Mt. स कथं । 2) Bḍ. Vā. V. नाशयेत; Vā. T. -त्वानाशयत तत् ।

13 = Bḍ. II. 70.3; Mt. 44.3; Vā. 95.3. 1) Mt. द्विज- । 2) Mt. तृप्तिमेकां । 3) Mt. -यच्छस्व आ- । 4) Mt. नरेश्वर ।

14 = Bḍ. II. 70.4; Mt. 44.4; Vā. 95.4. 1) Mt. तृप्तिरते भ-; Vā. T. तुष्टिर्भ- । 2) Mt. -वत्येव । 3) Mt. तु ।

15 = Bḍ. II. 70.5; Mt. 44.5; Vā. 95.5. 1) Vā. न तुष्ये । 2) Mt. वै सा मे तृप्तिर्हि ।

16 = Bḍ. II. 70.6; Mt. 44.6; Vā. 95.6. 1) Bḍ. -क्यः; Mt. -क्याः । 2) Bḍ. -रः; Mt. -राः । 3) Bḍ. -र्वस् ; Mt. -र्वे । 4) Mt. -सा च बलेन च । 5) Bḍ. Vā. V. -पसां । 6) Mt. तेन त्वां ।

17 = Bḍ. II. 70.7; Mt. 44.7; Vā. 95.7. 1) Vā. -र्वतः सुखान् । 2) Vā. T. प्रक्षिप्ताः । 3) Mt. T. ये प्रक्षिप्ता ज्व- ।

आविष्टं[1]) तेजसा मेऽद्य[2]) स्थावरं शोषमेष्यति[3]), ।
शुष्कं[4]) भस्म करिष्यामि[5]), तेन तृप्तिर्[6]नराधिप[7] ) ॥ $1_8$ ॥
सूत उवाच :
ततः शरानथा[1]दित्यस्त्वर्जुनाय प्रयच्छत[2]), ।
ततो ददाह संप्राप्य[3]) स्थावरं[4]) सर्वमेव हि[5]) ॥ $1_9$ ॥
आश्रमानथ ग्रामांश्च घोषांश्च[1]) नगराणि च ।
तपोवनानि रम्याणि वनान्युपवनानि च ॥ $1_{10}$ ॥
एवं प्राचीं समदहत्[1]), ततः सर्वां स दक्षिणाम्[2]), ।
निर्वृक्षा निस्तृणा भूमिर्दग्धा[3]) सौरेण[4]) तेजसा ॥ $1_{11}$ ॥
एतस्मिन्नेव काले तु आपवो जलमा[1]स्थितः[2]) ।
दशवर्षसहस्राणि जलवासात्[3]) महान् ऋषिः ॥ $1_{12}$ ॥
पूर्णे व्रते महातेजा उदतिष्ठत् त[1]पोधनः ।
सोऽपश्यदाश्रमं दग्धमर्जुनेन महान् ऋषिः[2]), ।
क्रोधाच्छशाप राजर्षि, कीर्तितं वो यथा मया ॥ $1_{13}$ ॥

क्रोष्टोः[1]) शृणुत[2]) राजर्षे[3]र्वंशमुत्तमपौरुषम्[4]), ।
[ यदोर्वंशधरस्याथ यज्वनः[1]) पुण्यकर्मणः ।
क्रोष्टु[2]र्वंशं हि श्रुत्वैव[3]) सर्वपापैः प्रमुच्यते । ]
यस्यान्ववाये संभूतो[1]) विष्णु[2]र्वृष्णिकुलोद्वहः ॥ 2 ॥

---

$1_8$ = Bḍ. II. 70.8; Mt. 44.8; Vā. 95.8. 1) Bḍ. आविद्धं; Mt. आविष्टा; Vā. आदिष्टं । 2) Mt. मम तेजोभिः; Vā. -सा मेध- । 3) Mt. शोषयिष्यन्ति स्थावरान् ; Vā. T. सागरं शोषयिष्यन्ति; V. शोषमेष्यति । 4) Mt. शुष्कान् । 5) Mt. T. भस्मीकरिष्यन्ति; V. -करिष्यामि । 6) Bḍ. क्षणेनैव न-; Vā. तेन प्रीतो न- । 7) Bḍ. -पः ।

$1_9$ = Bḍ. II. 70.9; Mt. 44.9, Vā. 95.9. 1) Mt. -रांस्तदा- । 2) Bḍ. -याददात् प्रभुः । 3) Bḍ. ततः संप्राप्य स शरान् ; Mt. T. -ह संप्राप्तान् ; Vā. ततः संप्राप्य सुमहत् । 4) Mt. स्थावरान् । 5) Mt. च ।

$1_{10}$ = Bḍ. II. 70.10; Mt. 44.10; Vā. 95.10. 1) Mt. ग्रामांस्तथाश्रमांश्चैव घोषाणि ।

$1_{11}$ = Bḍ. II. 70.11; Mt. 44.11; Vā. 95.11. 1) Bḍ. तच्चापक्षिप्तबाणौघा; Mt. T. -चीमन्वदहत् ; Vā. प्राचीनमदहत् । 2) Bḍ. अदहन् स्थावरान् नृप; Vā. T. सूर्यप्रदक्षिणम् ; V. सर्वप्र- । 3) Mt. -हंता । 4) Vā. सूर्येण; Mt. घोरेण ।

$1_{12}$ = Bḍ. II. 70.12; Mt. 44.12; Vā. 95.12. 1) Bḍ. -ऽजलमा-; Vā. नियम- । 2) Bḍ. Vā. V. -माश्रितः; Vā. V. स्थितः । 3) Mt. तत्रास्ते स; Vā. -वासा ।

$1_{13}$ = Bḍ. II. 70.13, 14[a]; Mt. 44.13, 14[a]; Vā. 95.13. 1) Mt. -र्धंस्त- । 2) Mt. -ह्यामुनिः ।

$2^a$ = Bḍ. II. 70.14[b]; Br. 13.212[b]; H. 1904[a]; L. 68.21[a]; Mt. 44.14[b]; P.1 I. 13.1[a]; P.2 V. 13.1[a]; Vā. 95.14[a]. 1) L. -ष्टु- । 2) Br. -ष्टोर्वंशं; H. -ष्टोस्तु शृणु; L. -श्च शृणु; P.1 शृणु त्वं; P.2 शृणुष्व । 3) Br. मुनिश्रेष्ठा; H. P.1 P.2 राजेन्द्र । 4) Bḍ. P.1 P.2 Vā. पूरुषं; Br. शृणुध्वं गदतो मम ।

[ ] = Br. 13.213[ab]; H. 1904[b], 1905[a]. 1) Br. -ज्विनः । 2) Br. -ष्टोर्वं- । 3) H. -रवेमं ।

$2^b$ = Bḍ. II. 70.15[a]; Br. 13.213[c]; H. 1905[b]; L. 68.21[b]; Mt. 44.15[a]; P.1 I. 13.1[b]; P.2 V. 13.1[b]; Vā. 95.14[b]. 1) Br. H. -न्ववायतो विष्णुर् ; L. यस्यान्वये तु । 2) Bḍ. Vā. वृष्णि-; Br. H. हरि- ।

क्रोष्टोरेवा[1]भवत् पुत्रो वृजिनीवान्[2] महायशाः[3], ।
वार्जिनीवतमिच्छन्ति स्वाहिं स्वाहाकृतां[4] वरम्[5] ॥ 3 ॥

स्वाहेः[1] पुत्रोऽभवद् राजा[2]
उषद्गु[3]र्वदतां[4] वरः, ।
ततः[1] प्रसूति[2]मिच्छन् वै[3] उषद्गुः[4] सोऽर्ग्यमात्मजम्[5] ॥ 4 ॥

तस्य पुत्रोऽभवत् स्वातिः[1]
कुशङ्कुस्तत्सुतोऽभवत् ।

महाक्रतुभिरीजे स[1] विविधैराप्त[2]दक्षिणैः ।
जज्ञे चि[3]त्ररथस्तस्य[4] पुत्रः[5] कर्मभिरन्वितः[6] ॥ 5 ॥

आसीच्[1] चैत्ररथिर्वी[2]रो
यज्वा[3] विपुलदक्षिणः[4] ।
शशबिन्दुः परं वृत्तं[5]
राजर्षीणामनुष्ठितः[6] ।
चक्रवर्ती[7] महासत्त्वो
महावीर्यो बहुप्रजः[8] ॥ 6 ॥

शशबिन्दुरिति ख्यात-
श्चक्रवर्ती बभूव ह ॥ 6 ॥

---

3 = Bd. II. $70.15^{b}$, $16^{a}$; Br. 15.1; H. 1969; Kū. $24.1^{a}$ = a; L. $68.22^{a}$ = a; Mt. $44.15^{b}$, ($16^{a}$); P.1 I. $13.2^{a}$=a; P.2 V. $13.2^{a}$ = a; Vā. 95.15. 1) Bd. Kū. L. Vā. –रेक्रोऽ–; Br. –रथा– । 2) Kū. वज्रवानिति । 3) Kū. विश्रुतः; Mt. –रथः; P.2 T. –मनाः । 4) Bd. Vā. –हावतां । 5) Mt. वृजिनीवतश्च पुत्रोऽभूत् स्वाहो नाम महाबलः ।

$4^{a}$ = Bd. II. $70.16^{b}$; Br. $15.2^{a}$; H. $1970^{a}$; Mt. $44.16^{b}$; Vā. $95.16^{a}$. 1) Br. स्वामि–; Mt. स्वाह– । 2) Mt. राजन् । 3) Bd. रुशेकु–; Vā. रशादु–; Mt. उषङ्गु– । 4) Bd. –र्ददतां ।

$4^{a}$ = Kū. $24.1^{b}$; L. $68.22^{b}$; P.1 I. $13.2^{b}$; P.2 V. $13.2^{b}$. 1) Kū. –वच्छान्तिः; L. स्वाती; P.2 स्वाती (च॒ वाही) । 2) Kū. कशिक–; P.2 –कु ( रुशेकुस् ) ।

$4^{b}$ = Bd. II. $70.17^{a}$; Br. $15.3^{a}$; H. $1971^{a}$; L. $68.23^{a}$; Mt. $44.17^{a}$; Vā. $95.16^{b}$. 1) Bd. सुतः; L. अथ; Mt. स तु; Vā. सुतं । 2) Vā. –सुत– । 3) Bd. –च्छंस्तु; Vā. च्छन्ति । 4) Bd. रुशेकुः; L. कुशङ्कुः; Mt. रुषङ्गुः; Vā. रशादोर् । 5) Bd. प्रयतात्मवान् ; L. सुमहाबलः; Mt. T. सौम्यमात्मजम् ; Vā. अग्र्यमात्मजम् ।

5 = Bd. II. $70.17^{b}$, $18^{a}$; Br. $15.2^{b}$, $3^{b}$; H. $1970^{b}$, $1971^{b}$; L. $68.23^{b}$, $24^{a}$; Mt. $44.17^{b}$ = b; P.1 I. 13.($3^{a}$) = b; P.2 V. 13.($3^{a}$) = b; Vā. 95.17. 1) Br. H. यो; L. –ऽसौ । 2) Br. H. –भूरि– । 3) Mt. चित्रश्चि; Vā. चित्रश्चि– । 4) Mt. –श्चास्य । 5) Vā. –त्र– । 6) P.1 P.2 कुशङ्कोरभवत् पुत्रो नाम्ना चित्ररथोऽस्य तु ।

6 = Bd. II. $70.18^{b}$, 19; Br. 15.4 = ab; H. 1972 = ab; Mt. $44.18^{a}$ = a; L. $68.24^{b}$, $25^{a}$(b); Vā. 95.18, $19^{a}$. 1) Bd. जज्ञे; L. Mt. अथ; Vā. एवं । 2) Vā. चित्ररथो वी– । 3) Mt. जज्ञे; Vā. यज्ञान् । 4) Vā. –णान् । 5) Vā. वृत्तो । 6) L. –न्दुस्तु वै राजा अन्वयाद् व्रतमुत्तमम् । 7) Bd. –र्त्ती । 8) L. –प्रजाः ।

6 = Mt. $44.18^{b}$; P.1 I. $13.3^{b}$; P.2 V. $13.3^{b}$.

अत्रा[1]नुवंशश्लोकोऽयं यस्मिन् गीतः[2]) पुरातनैः[3]) ।
शशबिन्दोस्तु[4]) पुत्राणां शतानामभव[5]च्छतम् ॥ 7 ॥
धी[1]मतामनु[2]रूपाणां भूरिद्रविणतेजसाम् , ।
तेषां षट् च[3]) प्रधानास्तु[4]) पृथुसाह्वा[5]) महाबलाः ॥ 8 ॥

पृथुश्रवाः पृथुयशा
राजासी(!) च्छाशबिन्दवः[1]) ॥ 9 ॥

पृथुश्रवाः पृथुयशाः
पृथुधर्मा[1]) पृथुंजयः[2]) ।
पृथुकीर्तिः पृथुंदाता[3])
राजानः शाश[4]बिन्दवः ॥ 9 ॥

शंसन्ति च पुराणज्ञाः[1]) पार्थ[2]श्रवसमन्तरम्[3]), ।
अन्तरस्य[4]) सुयज्ञस्तु[5]), सुयज्ञतनयो[6])ऽभवत्[7]) ॥ 10 ॥

उशना[1]) यज्ञमखिलं
स्वधर्ममुषतां वरः[2]) ।
शिनेयु[3]रभवत्[4]) पुत्र[5])
औशनः[6]) शत्रुतापनः[7]), ॥ 11 ॥

उशना[1]) स तु धर्मात्मा
अवाप्य[2]) पृथिवी[3]मिमाम् ।
आजहाराश्वमेधानां
शतमुत्तमधार्मिकः[4]) ॥ 11 ॥

---

7 = Bḍ. II. 70.20; L. 68.26$^{a}$ = b; Mt. 44.19; P.1 I. 13.4; P.2 V. 13.4; Vā. 95.19$^{b}$, 20$^{a}$. 1) Bḍ. Vā. तत्रा– । 2) Mt. P.2 गीतस्तस्मिन् ; P.1 गीतस्तस्य । 3) Mt. P.1 P.2 पुराभवत्; Vā. पुराविदैः । 4) Vā. –विन्दोऽस्तु । 5) L. –णां सहस्राणामभू– ।

8 = Bḍ. II. 70.21; Mt. 44.20; P.1 I. 13.5; P.2 V. 13.5; Vā. 95.20$^{b}$, 21$^{a}$. 1) Bḍ. श्री– । 2) Mt. –तां चाभि–; P.1 P.2 –तां चारु– । 3) Bḍ. वै । 4) Mt. P.1 P.2 शतप्रधानानां । 5) Bḍ. –शुस्वाहा ।

9 = Br. 15.5$^{a}$; H. 1973$^{a}$. 1) H. –च्छशविन्दुजाः; Br. V. –जः ।

9 = Bḍ. II. 70.22; Mt. 44.21; P.1 I. 13.6; P.2 V. 13.6; Vā. 95.21$^{b}$, 22$^{a}$. 1) Bḍ. पृथुकर्मा; P.1 P.2 पृथुतेजाः । 2) P.1 P.2 –थूद्भवः । 3) Bḍ. –दातो; Mt. –थुमना; P.1 –थुमतो; P.2 –मती । 4) Bḍ. Mt. P.1 शश– ।

10 = Bḍ. II. 70.23; Br. 15.5$^{b}$, 6$^{a}$; H. 1973$^{b}$, 1974$^{a}$; L. 68.26$^{b}$, 27$^{a}$; Mt. 44.22; P.1 I. 13.7$^{a}$ = a; P. V. 13.7$^{a}$( ); Vā. 95.22$^{bc}$. 1) L. –न्ति तस्य पुत्राणां; Vā. पुराणानि । 2) Mt. P.1 P.2 पृथु– 3) H. मुत्तरम् ; L. अनन्तकमनुत्तमम् ; Mt. P.1 P.2 –मुत्तमम् । 4) Bḍ. अक्षरस्य; H. अनन्तरं; L. अनन्तकात ; P.2 अनन्तरय; Vā. T. अन्तरः स । 5) L. सुतो यज्ञो; Mt. सुतज्ञस्य; P.2 परा स्याव सु; Vā. पुरा यस्तु । 6) Bḍ. उशनास्तत्सुतो; L. Vā. यज्ञस्य तनयो; Mt. P.2 सुयज्ञस्तनयो । 7) L. धृतिः ।

11 = Br. 15.6$^{b}$, 7$^{a}$; H. 1974$^{b}$, 1975$^{a}$; Mt. 44.24$^{a}$=b; P.1 I. 13.7$^{b}$, (8$^{a}$); P.2 V. 13.7$^{b}$, (8$^{a}$). 1) Br. उषतः; H. उषन् यो । 2) Br. T. –धर्में च कृतादरः; V. –र्ममु( सु )खतां वरः । 3) Mt. तितिक्षु– 4) P.1 P.2 ततश्चास्याभवत् ( P.1 वन् ) । 5) P.1 –त्राः । 6) Br. H. उषतः; P.1 P.2 उशना । 7) P.1 P.2 पुत्रश्चोशनसस्तस्य शिनेयुर्नाम सत्तमः ।

11 = Bḍ. II. 70.24; L. 68.(27$^{b}$), 28$^{a}$; Mt. 44.23; Vā. 95.23. 1) Bḍ. –नाः; L. –नास् । 2) Mt. –ना तु सुयज्ञस्य यो रक्षन् । 3) L. –नास्तस्य तनयः संप्राप्य तु मही– । 4) Bḍ. –मदक्षिणम् ।

मरुत्त[1]स्तस्य तनयो राजर्षीणामनुत्तमः[2]) ।
मरुत्तो[1]) ऽलभत ज्येष्ठं
सुतं कम्बलबर्हिषम् ॥ 12 ॥
चचार विपुलं धर्मं
ममर्षात् प्रेत्य[1]भागपि ।
शत[2]प्रसूतिमिच्छन्ति[3])
सुतं कम्बलबर्हिषः, ॥ $12_1$ ॥
बभूव रुक्मकवचः
शतप्रसवतः सुतः ।

वीरः[1]) कम्बलबर्हिस्तु
मरुत्ततनयः[2]) स्मृतः[3]), । 12 ॥

पुत्रस्तु रुक्मकवचो
विद्वान् कम्बलबर्हिषः[1]) ।

निहत्य रुक्मकवचः पुरा[1]) कवचिनो[2]) रणे[3]) ॥ 13 ॥
धन्विनो[1]) निशितै[2]र्बाणैरवाप[3]) श्रियमुत्तमाम्[4]), ।
| *अश्वमेधे ददौ[5]) राजा ब्राह्मणेभ्यस्तु[6]) दक्षिणाम्[7])* ॥ 14 ॥
जज्ञे[1]) तु[2]) रुक्मकवचात् पराव्वृत्[3]) परवीरहा[4]), ।

---

$12^a$ = Bḍ. II. 70.25[a]; Br. 15.7[b]; H. 1975[b]; L. 68.29[a]; Mt. 44.24[b]; Vā. 95.24[a]. 1) Br. –त– । 2) Bḍ. –मनुव्रतः; Br. H. –र्षिरभवन् नृपः ( H. नृप ); L. –र्षिवंशवर्धनः; Vā. –मनुष्ठितः ।

$12^b$ = Br. 15.8[a]; H. 1976[a]. 1) Br. –तो ।

$12_1$ = Br. 15.8[b], 9[a]; H. 1976[b], 1977[a]. 1) Br. T. प्रत्य– । 2) Br. T. स सत्– । 3) Br. T. –मिच्छन् वै ।

$13^a$ = Br. 15.9[b]; H. 1977[b].

$12^b$ = Bḍ. II. 70.25[b]; L. 68.29[b]; Mt. 44.25[a]; Vā. 95.24[b]. 1) Bḍ. –र– । 2) L. मरुत्तस्यात्मजः । 3) Mt. आसीन् मरुत्ततनयो वीरः कम्बलबर्हिषः ।

$13^a$ = Bḍ. II. 70.26[a]; L. 68.30[a]; Mt. 44.25[b]; P.1 I. 13.(8[b]); P.2 V. 13.(8[b]); Vā. 95.25[a]. 1) P.1 P.2 आसीच्छिनेयोः पुत्रो यः स रुक्मकवचो मतः ।

$13^b$ = Bḍ. II. 70.26[b]; Br. 15.10[a]; H. 1978[a]; L. 68.30[b]; Mt. 44.26[a]; P.1 I. 13.9[a]; P.2 V. 13.9[a]; Vā. 95.25[b]. 1) Br. H. शतं; L. –चो वीरान् ; Mt. परान् ; P.1 –चो युद्धे । 2) Br. H. –चिनां । 3) Mt. कवचधारिणः; P.1 युद्धे युद्धविशारदः; P.2 –चः परानीकविनाशनः ।

14 = Bḍ. II. 70.27[a](b); Br. 15.10[b] = a; H. 1978[b] = a; L. 68.31[a](b); Mt. 44.26[b], 27[a]; P.1 I. 13.9[b], 10[a]; P.2 V. 13.9[b], 10[a]; Vā. 95.26[a](b). 1) Br. H. धन्विनां । 2) Mh. P.1 P.2 विविधै– । 3) Mt. P.1 –रवाप्य; P.2 –णैश्चावाप्य । 4) Mt. P.1 P.2 पृथिवीमिमाम् । 5) P.1 ऽददात् । 6) P.1 –भ्यश्च; P.2 –भ्यः स । 7) Bḍ. Vā. ब्राह्मणेभ्यो ददौ वित्तमश्वमेधे महायशाः; L. –धे तु धर्मात्मा ऋत्विग्भ्यः पृथिवीं ददौ ।

15 = Bḍ. II. 70.28; Br. 15.11; H. 1979; L. 68.32; Mt. 44.27[b], 28[a]; P.1 I. 13.10[b], 11[a]; P.2 V. 13.10[b], 11[a]; Vā. 95.27. 1) Br. Vā. राज्ञस् ; Mt. P.2 यज्ञे । 2) Br. P.2 च; H. –ऽथ । 3) Bḍ. परावित् ; Br. V. H. पराजित् ; Br. T. परजित् ; Mt. P.2 –चः कदाचित् । 4) Vā. –चादपरावृत्य वीरहाः । 5) P.1 तत पुत्रा जज्ञिरे पञ्च । 6) Bḍ.

जज्ञिरे पञ्च पुत्रास्तु[5]) महावीर्या परावृतः[6]) ॥ 15 ॥

रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो[1]) हरिः ।
परिघं[2]) च हरिं चैव विदेहेऽस्थापयत् पिता[3]) ॥ 16 ॥

रुक्मेषु[1]रभवद् राजा पृथुरुक्मस्तदाश्रयः[2]) ।
ताभ्यां[3]) प्रव्राजितो[4]) राज्याज्[5]) ज्यामघोऽवसदा[6]श्रमे ॥ 17 ॥

प्रशान्तश्चाश्रमस्थश्च[1]) ब्राह्मणैश्चावबो[2]धितः ।
जगाम धनु[3]रादाय देशमन्यं[4]) ध्वजी रथी[5]) ॥ 18 ॥

नर्मदां नृप[1]) एकाकी मेकलां[2]) मृत्तिकावतीम्[3]) ।
ऋक्षवन्तं गिरिं गत्वा[4]) शुक्तिमत्यामु[5]वास सः[6]) ॥ 19 ॥

ज्यामघस्याभवद् भार्या शैब्या[1]) बलवती[2]) सती[3]) ।
अपुत्रोऽपि स वै राजा[4]) भार्याम्[5]) अन्यां[6]) न विन्दति[7]) ॥ 20 ॥

तस्यासीद् विजयो युद्धे, तत्र[1]) कन्यामवाप[2]) सः, ।

---

Vā. –सत्त्वा महाबलाः; Br. T. H. –वीर्याः पराजितः; L. –सत्त्वाः परावृतः; Mt. –वीर्या धनुर्भृतः; Br. V. P.1 P.2 –वीर्यपराक्रमाः ।

16 = Bḍ. II. 70.29; Br. 15.12; H. 1980; L. 68.33; Mt. 44.28[b], 29[a]; P.1 I. 13.11[b], 12[a]; P.2 V. 13.11[b], 12[a]; Vā. 95.28. 1) Br. H. पालितो । 2) Br. H. पालितं । 3) Br. H. –हेभ्यः पिता ददौ; L. –हेषु पिता न्यसत् ।

17 = Bḍ. II. 70.30; Br. 15.13; H. 1981; L. 68.34; Mt. 44.29[b], 30[a]; P.1 I. 13.12[b], 13[a]; P.2 V. 13.12[b], 13[a]; Vā. 95.29. 1) Vā. ब्रह्मेषु– । 2) Br. H. –क्मस्य संश्रयात् ; L. –श्रयात् ; P.1 –स्तथाश्रयः । 3) Bḍ. Mt. Vā. तेभ्यः; L. तैस्तु । 4) Bḍ. पराजितो; Vā. –व्रजितो । 5) Bḍ. Br. T. L. P.2 राजा । 6) Mt. –घस्तु तदा–; Vā. ऽभवदा– ।

18 = Bḍ. II. 70.31; Br. 15.14; H. 1982; L. 68.35; Mt. 44.30[b], 31[a]; P.1 I. 13.13[b], 14[a]; P.2 V. 13.13[b], 14[a]; Vā. 95.30. 1) Bḍ. Vā. –न्तस्तु वने घोरे; Br. T. –श्च तदा राजा; V. –न्तेः सवरस्थश्च; H. –श्चाप्रशान्तश्च; L. –न्तः स वनस्थोऽपि; P.1 –स्थस्तु; P.2 –न्तः स्वाश्रमस्थस्तु । 2) Bḍ. –णेन विरो–; P.1 –णेन विबो–; L. –णैरेव; Mt. P.2 Vā. –णेनावबो– । 3) Br. पुन– । 4) Vā. देशमध्यं । 5) Bḍ. Vā. रथी ध्वजी ।

19 = Bḍ. II. 70.32; Br. 15.15; H. 1983; L. 68.36; Mt. 44.31[b], 32[a]; P.1 I. 13.14[b], 15[a]; P.2 V. 13.14[b], 15[a]; Vā. 95.31. 1) Br. H. –दाकूलम् ; L. –दातीरम् ; P.1 P.2 –दातट–; Vā. T. –दानूप । 2) L. Mt. P.1 P.2 केवलं । 3) Bḍ. –लान्मिरिकावनम् ; L. भार्यया युतः; Mt. वृत्तिकामतः; P.1 P.2 वृत्तिकर्षितः; Vā. T. मेकलावृत्तिका अपि । 4) Br. H. जित्वा । 5) Bḍ. सुक्तिमन्तम–; L. त्यक्तमन्यैरु–; Mt. मुक्तमन्यैरु–; P.1 मुक्तमन्यैरु ; P.2 भुक्तवन्य उ–; Vā. शुक्तिमन्याम– । 6) Bḍ. Vā. थाविशत् ; Mt. P.1 P.2 –पाविशत् ।

20 = Bḍ. II. 70.33; Br. 15.16; H. 1984; L. 68.37[a] = a; Mt. 44.32[b], 33[a]; P.1 I. 13.15[b], 16[a]; P.2 V. 13.15[b], 16[a]; Vā. 95.32. 1) Mt. चित्रा; Vā. सैब्या । 2) L. शीलवती; Mt. P.1 P.2 परिणता । 3) Vā. सुशुम् । 4) Br. –ऽपि स राजा वै; H. ऽपि च राजा स; Mt. –त्रो न्यवसद् राजा; P.1 P.2 ऽप्यभवद् राजा । 5) Br. H. नान्यां । 6) Br. H. भार्याम् । 7) Br. H. अविन्दत; Mt. T. न विन्दत; P.1 अचिन्तयन् ।

भार्यामुवाच संत्रस्तः[3], स्नुषेति स[4]) जनेश्वरः[5]) ॥ 21 ॥

एव[1]मुक्ता[2]ब्रवीदेनं[3]) कस्येयं ते[4]) स्नुषेति वै[5]) ? ।

| अब्रवीत् तदुपश्रुत्य ज्यामघो राजसत्तमः ।

यस्ते जनिष्यते पुत्रस्तस्य भार्या भविष्यति[1]) ॥ 22 ॥

उग्रेण तपसा तस्याः
कन्यायाः सा[1]) व्यजायत ।

| तस्याः[1]) सा[2]) तपसोग्रेण
| शैब्या[3]) वै संप्र[4]सूयत ।

पुत्रं[1]) विदर्भं सुभगा[2]) शैब्या[3]) परिणता सती ॥ 23 ॥

राजपुत्रौ[1]) तु[2]) विद्वांसौ[3]) स्नुषायां क्रथ-कैशिकौ[4]) ।
पश्चाद्[5]) विदर्भोऽजनयच्छू[6]रौ[7]) रणविशारदौ[8]) ॥ 24 ॥

| लोमपादं[1]) तृतीयं[2]) तु[3]) पुत्रं परम[4]धार्मिकम्[5]) ।
| लोमपादात्मजो[6]) बभ्रु[7]र्धृ[8]तिस्तस्य तु चा[9]त्मजः[10]), ॥ 25 ॥

---

21 = Bḍ. II. 70.34; Br. 15.17; H. 1985; Mt. 44.$33^{b}$, $34^{a}$; P.1 I. 13.$16^{b}$, $17^{a}$; P.2 V. 13.$16^{b}$, $17^{a}$; Vā. 95.33. 1) Bḍ. Vā. ततः । 2) Mt. P.1 –वाप्य । 3) Bḍ. भीतः सन् ; Mt. P.1 P.2 सं त्रासात् ; Vā. राजा स । 4) Bḍ. Vā. तु; Br. V. Mt. P.1 P.2 स्नुषेयं ते । 5) Mt. P.1 P.2 शुचिस्मिते; Bḍ. Vā. नरेश्वरः ।

$22^{a}$ = Bḍ. II. 70.$35^{a}$; Br. 15.$18^{a}$; H. $1986^{a}$; Mt. 44.$34^{b}$; P.1 I. 13.$17^{b}$; P.2 V. 13.$17^{b}$; Vā. 95.$34^{a}$. 1) Bḍ. H. एत– । 2) Br. H. –च्छ्रुत्वा–; P.1 –मुक्त्वा – । 3) Bḍ. –देवं; Br. H. –देवी । 4) Br. –स्य देव; H. Mt. –स्य चेयं; P.1 P.2 –स्य केयं । 5) Bḍ. Vā. सा; Mt. च ।

| $22^{b}$ = Br. 15.$18^{b}$; H. $1986^{b}$.

$22^{c}$ = Bḍ. II. 70.$35^{b}$; Br. 15.19; H. $1987^{a}$; Mt. 44.$35^{a}$; P.1 I. 13.$18^{a}$; P.2 V. 13.$18^{a}$; Vā. 95.$34^{b}$. 1) Br. भार्योपपादिता; H. भार्योपदानवी ।

$23^{a}$ = Br. 15.$20^{a}$; H. $1937^{b}$. 1) H. स ।

| $23^{a}$ = Bḍ. II. 70.$36^{a}$; L. 68.$37^{b}$; Mt. 44.$35^{b}$; P.1 I. 13.$18^{b}$; P.2 V. 13.$18^{b}$; Vā. 95.$35^{a}$. 1) Mt. T. तस्मात् ; V. तस्यां; Vā. तस्य । 2) L. सा चैव । 3) Vā. सैव्या । 4) Bḍ. चैव ह्य–; Mt. P.1 कन्यायाः संप्र–; P.2 कन्यायाः सम–; Vā. T. वैशं प्र– ।

$23^{b}$ = Bḍ. II. 70.$36^{b}$; Br. 15.$20^{b}$; H. $1988^{a}$; L. 68.$^{a}$; Mt. 44.$36^{a}$; P.1 I. 13.$19^{a}$; P.2 V. 13.$19^{a}$; Vā. 95.$35^{b}$. 1) L. सुतं । 2) P.1 P.2 –गं । 3) L. वयः; Mt. चैत्रा; Vā. सैव्या ।

24 = Bḍ. II. 70.37; Br. 15.21; H. $1988^{b}$, $1989^{a}$; L. 68.$38^{b}$, $39^{a}$; Mt. 44.$36^{b}$, $37^{a}$; P.1 I. 13.$19^{b}$, $20^{b}$; P.2 V. 13.$19^{b}$, $20^{b}$; Vā. 95.36. 1) Bḍ. –पुत्रस् ; Br. T. H. Mt. P.1 –पुत्र्यां । 2) Mt. च; P.2 सु– । 3) L. –त्रसुतायां तु; Mt. T. विद्वान् स । 4) Br. H. P.1 Vā. T. –कौशिकौ; L. विद्वांसौ क्रथ-कैशिकौ । 5) Bḍ. L. Vā. पुत्रौ; Mt. तस्यां । 6) L. –र्भराजस्य शू– । 7) Mt. P.2 –रान् ; P.1 –रं । 8) Mt. P.2 –दान् ; P.1 –दम् ।

| 25 = Bḍ. II. 70.38; Kū. 24.( $6^{c}$ ) = a; L. 68.($39^{b}$, $40^{a}$); Mt. 44.$36^{c}$, $37^{b}$; P.1 I. 13.$20^{a}$, $21^{a}$; P.2 V. 13.$20^{a}$, $21^{a}$; Vā. 95.37. 1) Kū. –दस् ; L. –रोमपादस् । 2) Kū. –यस् ; L. –यश् । 3) L. च । 4) Bḍ. Vā. तु पश्चाज् ज़ज्ञे सु– । 5) Kū. L. बभ्रुस्तस्यात्मजो नृपः ( L. –जः स्मृतः ) । 6) Bḍ. –पादसुतो; Mt. पादान् मनुः । 7) Mt. –पुत्रो; Vā. वस्तु– । 8) Bḍ. –राकृति–; Mt. ज्ञाति–; P.2 –र्हेति–; Vā. –राहृति– । 9) Bḍ. Vā. –स्य चा– । 10) L. सुधृतिस्तनयस्तस्य विद्वान् परमधार्मिकः ।

। कै[1]शिकस्य चिदिः[2]) पुत्र[3]स्तस्माच् चैद्या[4]) नृपाः स्मृताः[5]) ।

भीमो विधर्भस्य सुतः,
कुन्तिस्तस्यात्मजोऽभवत् , ॥ 26 ॥

क्रथो विदर्भपुत्रस्तु[1]),
कुन्तिस्तस्यात्मजोऽभवत् , ॥ 26 ॥

कुन्तेर्धृष्टः[1]) सुतो[2]) जज्ञे रण[3]धृष्टः[4]) प्रतापवान् ।

धृष्टस्य जज्ञिरे शूरा-
स्त्रयः परमधार्मिकाः ॥ 27 ॥
आवन्तश्च दशार्हश्च
बली विषहरश्च यः[1]) ।

धृष्टस्य[1]) पुत्रो धर्मात्मा[2])
निर्वृतिः[3]) परवीरहा ॥ 27 ॥
तस्य पुत्रो दशार्हस्तु[1])
महाबलपराक्रमः[2]) ।

दशार्हस्य सुतो[1]) व्योमा[2]), व्योम्नो[3]) जीमूत उच्यते[4]), ॥ 28 ॥

---

$26^a$ = A. 275.18ᵇ; Bḍ. II. 70.39ᵃ; L. 68.40ᵇ; Mt. 44.38ᵃ; P.1 I. 13.21ᵇ; P.2 V. 13.21ᵇ; Vā. 95.38ᵃ. 1) A. Bḍ. L. P.1 Vā. कौ– । 2) L. –शिकस्तनयस् । 3) L. तस्माद् ; P.1 –कस्यात्मजश्चेदि– । 4) P.1 –च– । 5) L. –चान्वयः स्मृतः ।

$26^b$ = Br. 15.22ᵃ; H. 1989ᵇ.

$26^b$ = Bḍ. II. 70.39ᵇ; L. 68.41ᵃ; Mt. 44.38ᵇ; P.1 I. 13.22ᵃ; P.2 V. 13.22ᵃ; Vā. 95.38ᵇ. 1) L. –र्भस्य सुतः; P.1 –त्रो यः ।

$27^a$ = Bḍ. II. 70.40ᵃ; Br. 15.22ᵇ; H. 1990ᵃ; L. 68.41ᵇ; Mt. 44.39ᵃ; P.1 I. 13.22ᵇ; P.2 V. 13.22ᵇ; Vā. 95.39ᵃ. 1) L. –र्वृत–; Vā. –ष्ट– । 2) L. P.1 P.2 –स्ततो । 3) Bḍ. रणे; P.1 P.2 धृष्टाद् ; Vā. पुरो । 4) P.1 सृष्टः; P.2 पृष्टः ।

$27^b$ = Br. 15.23ᵃ; H. 1990ᵃ.

$27^b$ = Bḍ. II. 70.40ᵇ; L. 68.42ᵃ; Mt. 44.39ᵇ; P.1 I. 13.23ᵃ; P.2 V. 13.23ᵃ; Vā. 95.39ᵇ. 1) P.1 सृष्टस्य; P.2 पृष्टस्य । 2) L. रणधृष्टस्य च सुतो । 3) L. निधृतिः; Mt. P.1 निवृतिः ।

$28^a$ = Br. 15.23ᵇ; H. 1990ᵃ. 1) Br. T. सः ।

$28^a$ = Bḍ. II. 70.41ᵃ; L. 68.(42ᵇ); Mt. 44.(40ᵃ); P.1 I. 13.23ᵇ; P.2 V. 13.23ᵇ; Vā. 95.40ᵃ. 1) L. दशार्हो नैधृतो नाम्ना; Mt. तदेको निर्वृतेः पुत्रो; P.1 निवृत्तिपुत्रो दाशार्हो; P.2 दाशार्हो निर्वृतेः पुत्रो । 2) L. महारिगण-सूदनः; Mt. P.1 P.2 नाम्ना स तु विदूरथः ।

$28^b$ = A. 275.19ᵃ = b; Bḍ. II. 70.41ᵇ; Br. 15.24ᵃ; H. 1991ᵇ; L. 68.43ᵃ; Mt. 44.40(ᵇ)ᶜ; P.1 I. 13.24ᵃ; P.2 V. 13.24ᵃ; Vā. 95.40ᵇ. 1) P.1 P.2 द(दा)शार्हपुत्रो; Mt. दशार्हस्तस्य वै पुत्रो व्योमस्तस्य च वै स्मृतः; दाशार्हाच्चैव । 2) A. Bḍ. व्योमस् ; L. व्याप्तो; Mt. व्योमाद् तु; P.1 भीमस्तु; P.2 व्योम्नस्तु । 3) A. व्योमात् ; Bḍ. Vā. ततो; Mt. पुत्रो; P.1 भीमाज् ; P.2 व्योम्नाज् । 4) L. –प्तो जीमूत इति तत्सुतः ।

जीमूतपुत्रो विकृति[1]स्तस्य भीमरथः सुतः[2]), ।
अथ[3]) भीमरथस्यासीत्[4]) पुत्रो[5]) नवरथः[6]) किल[7]) ॥ 29 ॥

| दान[1]धर्मरतो नित्यं सत्यशील[2]परायणः ।
| तस्य पुत्रो नवरथस्ततो दशरथः स्मृतः ॥ $29_1$ ॥

तस्य चासीद् दशरथः[1]), शकुनिस्तस्य चात्मजः ।
तस्मात् करम्भः, कारम्भि-
र्दे[1]वरातोऽभवन् नृपः[2]) ॥ 30 ॥

तस्मात् करम्भको धन्वी[1]),
देवरातोऽभवत् ततः ॥ 30 ॥

देवक्षत्रोऽभवद्[1]) राजा[2]) दैवरातिर्महा[3]यशाः, ।
देवगर्भ[1]समो[2]) जज्ञे
देवक्षत्रस्य[3]) नन्दनः[4]) ॥ 31 ॥

देवक्षत्रसुतो जज्ञे
देवनः क्षत्रनन्दनः, ।
देवनाच्च[1]) मधुर्जज्ञे,
यस्य मेधार्थसंभवः[2]) ॥ 31 ॥

मधूनां वंशकृद् राजा
मधुर्मधुरवागपि[1]), ।
मधोर्जज्ञेऽथ वैदर्भ्यां[2])
पुरुद्वान्[3]) पुरुषोत्तमः ॥ 32 ॥

मधुर्नाम[1]) महातेजा,
मधोः[2]) कुरुवश[3]स्तथा[4]), ।
आसीत् कुरुवशात्[5]) पुत्रः
पुरुद्वान्[6]) पुरुषोत्तमः[7]) ॥ 32 ॥

---

29 = A. 275.19[b] = a; Bḍ. II. 70.42; Br. 15.24[b], 25[a]; H. 1992; L. 68.43[b], 44[a]. Mt. 44.41; P.1 I. 13.24[b], 25[a]; P.2 I. 13.24[b], 25[a]; Vā. 95.41. 1) A. P.2 –कल–; H. वृकति–; Mt. –मल– । 2) Br. स्मृतः । 3) Mt. सुतो । 4) P.1 P.2 –स्यापि । 5) Mt. स्मृतो । 6) Bḍ. Vā. रथवरः । 7) Br. H. –थस्तथा ।

| $29_1$ = Bḍ. II. 70.43; L. 68.44[b] = a; Vā. 95.42. 1) Vā. T. दाता । 2) Bḍ. शीलश्रुत– ।

30[a] = Bḍ. II. 70.44[a]; Br. 15.25[b]; H. 1993[a]; L. 68.45[a]; Mt. 44.42[a]; P.1 I. 13.25[b]; P.2 V. 13.25[b]; Vā. 95.43[a]. 1) L. Mt. P.2 T. दृढरथः; Bḍ. Vā. –स्य चैकादशरथः ।

30[b] = Br. 15.26[a]; H. 1993[b]; Mt. 44.42[b]; P.1 I. 13.26[a]; P.2 V. 13.26[a]. 1) P.1 P.2 –म्भस्तस्माच्च दे– । 2) Mt. P.1 P.2 –तो बभूव ह ।

30[b] = Bḍ. II. 70.44[b]; L. 68.45[b]; Vā. 95.43[b]. 1) L. –म्भः संभूतो ।

31[a] = Bḍ. II. 70.45[a]; Br. 15.26[b]; H. 1994[a]; L. 68.46[a]; Mt. 44.43[a]; P.1 I. 13.26[b]; P.2 V. 13.26[b]; Vā. 95.44[a]. 1) L. –रातादभूद् । 2) Br. H. –वत् तस्य । 3) Bḍ. L. Vā. देवरातिर्म–; Br. वृद्धक्षत्रो म–; H. दैवक्षत्रिर्म–; P.1 देवरातान् म– ।

31[b] = Br. 15.27[a]; H. 1994[b]; L. 68.46[b]; Mt. 44.43[b]; P.1 I. 13.27[a]; P.2 V. 13.27[a]. 1) H. –वर्ग– । 2) L. –र्भोपमो । 3) L. यो देवक्षत्र–; Mt. देवनक्षत्र– । 4) L. नामकः; Mt. –त्रनन्दनः ।

32 = Br. 15.27[b], 28[a]; H. 1995; L. 68.47[b], 48[a]. 1) L. मधोस्तु कुरुवंशकः । 2) L. कुरुवंशादनुस्तस्मात् । 3) L. पुरुत्वान् ।

31[bc] = Bḍ. II. 70.45[b], 46[a]; L. 68.(47[a])=c; Vā. 95.44[b], 45[a]. 1) Bḍ. Vā. –नात् स । 2) L. देवक्षत्रसुतः श्रीमान् मधुर्नाम महायशाः ।

32 = Bḍ. II. 70.46[b], 47[a]; Mt. 44.44; P.1 I. 13.27[b], 28[a]; P.2 V. 13.27[b], 28[a]; Vā. 95.45[b], 46[b], Cp. 46[a]. 1) Bḍ. नन्दनश्च; Vā. मधोश्चापि । 2) Vā. मनुर् । 3) Bḍ. पुरुवसुस् ; Mt. पुरवसस् ; Vā. मनुवशस् । 4) P.1 स्मृतः । 5) Bḍ. पुरुवसोः; Mt. पुरवसात् ; Vā. पुरुवशात् । 6) P.1 पुरुहोत्रः; P.2 पुरुषः । 7) P.1 प्रतापवान् ।

अंशु[1]र्जज्ञेऽथ[2]) वैदर्भ्यां
भद्रवत्यां[3]) कुरूद्वह:[4]) ।

जज्ञे पुरुद्वतः पुत्रो
भद्रवत्यां पुरुद्वहः ।

ऐक्ष्वाकी[1]) चा[2]भवद्[3]) भार्या[4]) अंशो[5]स्तस्यां[6]) व्यजायत[7]) ।
सत्त्वान्[8]) सर्वगुणोपेतः[9]) सात्त्वतां[10]) कीर्ति[11]वर्धनः ॥ 33 ॥

इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः[1]) ।
युज्यते परमप्रीत्या
प्रजावांश्च भवेत् सदा[1]) ॥ 34 ॥

प्रजावाने[1]ति सायुज्यं[2])
राज्ञः सोमस्य धीमतः[3]) ॥ 34 ॥

---

33ª = Br. 15.( ); H. 1995ᵇᴵ, 1996ªᴵᴵ; L. 68.48ᵇ; Mt. 44.45ª; P.1 I. 13.28ᵇ; P.2 V. 13.28ᵇ. 1) Br. मधु–; H. मधो–; Mt. P.2 T. जन्तु– । 2) L. च । 3) Mt. भद्रसेन्यां; P.1 –द्रवन्त्यां । 4) H. –ह; L. पुरुत्वतः; Mt. पुरुद्वतः; P.1 पुरुहोत्रतः; P.2 पुरुद्वसुः ।

33ª = Bḍ. II. 70.47ᵇ; Vā. 95.47ª.

33ᵇᶜ = Bḍ. II. 70.48; Br. 15.28ᵇ, 29ª; H. 1996ᵇ, 1997ª; L. 68.49; Mt. 44.45ᵇ, 46ª; P.1 I. 13.29; P.2 V. 1?.29; Vā. 95.47ᵇᶜ. 1) L. –कीं; P.1 P.2 वेत्रकी । 2) Bḍ. P.1 P.2 त्व– । 3) L. अवद्दच् । 4) L. –चांशुः । 5) Bḍ. L. Vā. सत्व–; Br. मधो–; H. सत्त्वां–; Mt. P.2 T. जन्तो– । 6) H. –स्तस्या; L. –स्तस्माद । 7) Bḍ. L. Mt. Vā. अजायत । 8) Bḍ. तस्मात् ; Br. V. L. Vā. सत्त्वात् ; Mt. P.1 P.2 सात्वतः । 9) Bḍ. Br. V. Vā. सत्त्वगुणोपेतः; Mt. सत्त्वसंयुक्तः; P.1 P.2 सत्त्वसंपन्नः । 10) Bḍ. L. Vā. सात्त्वनः; Br. सात्वता; H. सत्त्वतां; P.1 –त्वतान् । 11) L. कुल– ।

34ª = Bḍ. II. 70.49ª; Br. 15.29ᵇ; H. 1997ᵇ; L. 68.(50ᵇ); Mt. 44.46ᵇ; P.1 I. 13.30ª; P.2 V. 13.30ª; Vā. 95.48ª. 1) L. यः पठेच्छृणुयाद् वापी निसृष्टिं ज्यामघस्य तु ।

34ᵇ = Br. 15.29ᶜ; H. 1998. 1) H. तथा ।

34ᵇ = Bḍ. II. 70.49ᵇ; L. 68.(51); Mt. 44.46ᶜ; P.1 I. 13.30ᵇ; P.2 V. 13.30ᵇ; Vā. 95.48ᵇ. 1) L. प्रजीवत्ये– । 2) L. वै स्वर्गं । 3) L. राज्यं सौख्यं च विन्दति ।

---

## C.

( Bḍ. II. 71.1—21[a]; Br. 15.30—45[a], 16.9—11; H. 1999—2014[a], 2040—2042; L. 69.1—12[b]; Mt. 44.47—45.3; P.1 I. 31.31—72; P.2 V. 13.34—75[a]; Vā. 96.1—20[a]; Cp. A. 275.21—26, 38[b]—40[a]; Bhg. IX. 24.6—13[a]; Ga. 139.36—39; Kū. 24.33—39; Vi. IV. 13.1—8 )

सात्त्वतान्[1]) सत्त्वसंपन्नान्[2]) कौश[3]ल्या[4]) सुषुवे सुतान्[5]) ।
भजिनं[6]) भजमानं च[7]) दिव्यं[8]) देवावृधं[9]) नृपम्[10]) ॥ 1 ॥

अन्धकं च महा-भोजं[1]) वृष्णिं च यदुनन्दनम्[2]) ।
तेषां विसर्गा[3]श्चत्वारो[4]), विस्तरेणैव[5]) ताञ् शृणु[6]) ॥ 2 ॥

भजमानस्य सृञ्जय्यौ[1]) बाह्यका चो[2]पबाह्यका[3]) ।
आस्तां भार्ये, तयोस्तस्माज्
जज्ञिरे बहवः सुताः ॥ 3 ॥

| सृञ्जयस्य सुते द्वे[1]) तु
| बाह्यके[2]) ते[3]) उदावहत्[4]) ॥ 3 ॥

---

1 = Bḍ. II. 71.1; Br. 15.30; H. 1999; L. 69.1; Mt. 44.47; P.1 I. 13.31[a] = a; P.2 V. 13.31; Vā. 96.1.
1) Bḍ. सात्त्वताज् ; Br. T. सत्त्वतः; L. सात्त्वतः; P.2 सात्त्वतात् ; Vā. सात्त्वती । 2) Bḍ. जज्ञिरे पुत्राः; L. सत्यसंपन्नः; P.1 -पन्ना; P.2 -पन्नात् ; Vā. रूपसंपन्ना । 3) P.1 कौस- । 4) L. प्रजज्ञे । 5) Bḍ. -ल्यायां महाबलाः; L. चतुरः सुतान् । 6) Bḍ. भजमानो; Br. T. भागिनं; L. भजनं । 7) Mt. P.2 तु; Bḍ. भजिर्दिव्यो; L. भ्राजमानं च । 8) वृष्णिर् । 9) Bḍ. -वृधो । 10) Bḍ. -ऽन्धकः; Mt. नृप ।

2 = Bḍ. II. 71.2([a])[b]; Br. 15.31; H. 2000; L. 69.2; Mt. 44.48; P.1 I. 13.31[b] = b; P.2 V. 13.32; Vā. 96.2.
1) Bḍ. महाभोजश्च विख्यातो; Br. H. महाबाहुं; L. P.2 V. महाभागं । 2) Bḍ. ब्रह्मण्यः सत्यसङ्गरः; P.2 तदनन्तरम् । 3) Bḍ. Vā. हि सर्गाश् ; L. निसर्गा-; Mt. तु सर्गाश् ; P.1 P.2 सर्गाश्च । 4) L. चतुरः । 5) Br. H. -रेणेह । 6) Bḍ. L. Vā. रः शृणुध्वं विस्तरेण वै; Br. -णेह कीर्तिता; Mt. -व तच्छृणु ।

3[a] = Bḍ. II. 71.3[a]; Br. 15.32[a]; H. 2001[a]; Mt. 44.49[a]; P.1 I. 13.32[a]; P.2 V. 13.33[a]; Vā. 96.3[a]. 1) Bḍ. -य्यो; H. -ञ्जय्यौं; Mt. P.1 P.2 -ञ्जय्यां; Vā. सृञ्जय्यां । 2) Br. H. ऽथो । 3) Mt. बाह्यकायां च बाह्यकाः; P.1 P.2 भाजनामा सुतोऽभवत् ; Vā. बाह्यश्चोपरिबाह्यकः ।

3[b] = Br. 15.32[b]; H. 2001[b].

| 3[b] = Bḍ. II. 71.3[b]; Mt. 44.49[b]; P.1 I. 13.32[b]; P.2 V. 13.33[b]; Vā. 96.3[b]. 1) P.1 P.2 सुतायां । 2) Mt. बाह्यकास् ; P.1 P.2 भाजकास् ; Vā. बाह्यकस् । 3) Mt. P.1 P.2 तु । 4) Mt. तदाभवन् ; P.1 P.2 ततोऽभवन् ।

क्रमि[1]श्च क्रमणश्चैव
धृष्णः[2]) शूरः पुरंजयः, ।

तस्य भार्ये[1]) भगिन्यौ ते[2])
प्रसूते तु[3]) सुतान् बहून्[4]) ।
निर्मिश्च[5]) कृकणश्चै[6]व
वृष्णिः[7]) परपुरंजयः[8]), ।

एते[1]) बाह्यकसृञ्जय्यां[2]) भ[3]जमानाद् विजज्ञिरे ॥ 4 ॥

अ[1]युताजित् सहस्राजिच्छताजिद्[2]थ[3]) दासकः[4]) ।
उपबाह्यकसृञ्जय्यां[5]) भजमानाद् विजज्ञिरे ॥ 5 ॥

तेषां[1]) देवावृधो राजा[2]) चचार परमं[3]) तपः ।
पुत्रः सर्वगुणोपेतो मम भूयादिति स्पृहन्[4]) ॥ 6 ॥

संयोज्या[1]त्मान[2]मेवं स[3]) पर्णाशाजल[4]मस्पृशत्[5]) ।
सदोपस्पर्शनात्[6]) तस्य चकार प्रिय[7]मापगा[8]) ॥ 7 ॥

---

4[a] = Br. 15.33[a]; H. 2002[a]. 1) Br. क्रिमि- । 2) Br. धृष्टः ।

4[ab] = Bḍ. II. 71.4; Mt. 44.50[ab]; P.1 I. 13.33; P.2 V. 13.34; Vā. 96.4. 1) P.1 P.2 -स्य भाजस्य । 2) Mt. P.1 P.2 भार्ये द्वे । 3) Mt. P.1.P.2 सुषुवते; Vā. -तेति । 4) Mt. बहून् सुतान् । 5) Bḍ. निम्लोचिः; Mt. P.1 नेमिं च; P.2 विनयं चै- । 6) Bḍ. किंकणश्चै-; Mt. क्रमिलं चै-; P.1 -णं चै-; P.2 कुरुणं चै-; Vā. पणवश्चै- । 7) Bḍ. धृष्टिः; Mt. P.1 P.2 वृष्णि । 8) Mt. P.1 P.2 -ञ्जयम् ।

4[b(c)] = Bḍ. II. 71.5[a]; Br. 15.33[b]; H. 2002[b]; L. 69.3[a]; Mt. 44.50[c]; P.1 I. 13.34[a]; P.2 V. 13.35[a]; Vā. 96.5[a]. 1) Bḍ. Mt. P.1 P.2 ते; Vā. ये । 2) Bḍ. Mt. Vā. बाह्यकायां सृञ्जय्यां; H. -सृञ्जय्यां; L. सृञ्जय्यां भजनाच्चैव; P.1 P.2 भाजकाः स्मृता यस्माद् ; Vā. वाह्यकार्यंसृञ्जय्यां । 3) L. भ्रा- ।

5 = Bḍ. II. 71.5[b], 6[a]; Br. 15.34; H. 2003; L. 69.(3[b]); Vā. 96.5[b], 6[a]. 1) Br. आ- । 2) L. अयुतायुः शतायुश्च बलवान्; Vā. अयुतायुतसाहस्रशतजिद्- । 3) Br. -जित् त्वथ । 4) Bḍ. -जिति नामतः; L. हर्षकृत् स्मृतः; Vā. -थ वामकः । 5) Bḍ. आह्यकायां भगिन्यां ते; L. -अय्यां; Vā. वाह्यकार्याभगिन्यां ये ।

6 = Bḍ. II. 71.6[b]; Br. 15.35; H. 2004; Kū. 24.35; L. 69.4; Mt. 44.51[aIbII], c; P.1 I. 13.34[bI], 35[aII], b; P.2 V. 13.35[bI], 36[aII], b; Vā. 96.6[b], 7[a]. 1) Br. H. यज्वा; Mt. यज्ञे । 2) P.1 P.2 देवावृधः पृथुर्नाम । 3) Br. H. विपुलं । 4) Bḍ. Vā. स्म ह; Br. H. स्यादिति निश्चितः; Kū. प्रभुः; L. स्मरन् ।

7 = Bḍ. II. 71.7, 8[a]; Br. 15.36; H. 2005; Mt. 44.52; P.1 I. 13.36; P.2 V. 13.37; Vā. 96.7[b], 8[a]. 1) H. संयुज्या- । 2) Br. संयुज्यमान-; Mt. -योज्य मन्त्र-; P.1 P.2 -योज्य कृष्ण- । 3) Br. -स्तपसा; H. -मेवं तु; Mt. P.1 P.2 -मेवाथ । 4) Bḍ. -णाशजल-; Br. H. P.1 P.2 -णाशाया जल-; Vā. -मेवं सवर्णा सा जल- । 5) Br. P.1 P.2 -लं स्पृशन् ; H. -लं स्पृशत् । 6) Bḍ. Vā. सा चोपस्पर्शनात् ; Br. H. सदोपस्पृशतस् ; Mt. तदोपस्पर्शनात् ; P.1 सा तोयस्पर्शनात् । 7) Vā. ऋषि- । 8) P.1 सांनिध्यं निम्नगा ह्यगात् ।

कल्याणत्वान्[1]) नरपते[2]स्तस्य[3]) सा निम्नगोत्तमा[4]) ।
चिन्तयाभिपरीता सा[5]) जगामाथ वि[6]निश्चयम् ॥ 8 ॥

नाधि[1]गच्छामि[2]) तां नारीं[3]), यस्यामेवंविधः सुतः ।

भवेत्[1]), तस्मात् स्वयं गत्वा
भवाम्यस्य सहव्रता[2]) ॥ 9 ॥

भवेत् सर्वगुणोपेतो
राज्ञो देवावृधस्य हि, ।
तस्मादस्य स्वयं चाहं[1])
भवाम्यद्य[2]) सहव्रता[3]) ॥ 9 ॥

अथ भूत्वा कुमारी सा[1]) बिभ्रती[2]) परमं वपुः[3]) ।
वरया[4]मास राजानं[5]), तामियेष च स प्रभुः[6]) ॥ 10 ॥

तस्यामाधत्त गर्भं[1]) स[2]) तेजस्विनमुदारधीः, ।
अथ सा नवमे[3]) मासि सुषुवे सरितां वरा ॥ 11 ॥

पुत्रं सर्वगुणोपेतं बभ्रुं[1]) देवावृधान् नृपात्[2]) ।
अत्र[3]) वंशे[4]) पुराणज्ञा गायन्तीति[5]) परिश्रुतम्[6]) ॥ 12 ॥
गुणान् देवावृधस्यापि[1]) कीर्तयन्तो महात्मनः ।

---

8 = Bḍ. II. 71.8[b], 9[a]; Br. 15.37[ba]; H. 2006[ba]; Mt. 44.53; P.1 I. 13.37; P.2 V. 13.38; Vā. 96.8[b], 9[a]. 1) Vā. –ल्याणं च । 2) P.1 P.2 –ण्याणं चरतस्तस्य । 3) Mt. –स्तस्मै । 4) P.1 P.2 शुशोच निम्नगा ततः । 5) Bḍ. Vā. –परीताङ्गी; Mt. P.1 P.2 चिन्तयाथ परीतात्मा । 6) Br. न जगामैव–; H. –गमैक– ।

9[a] = Bḍ. II. 71.9[b]; Br. 15.38[a]; H. 2007[a]; Mt. 44.54[a]; P.1 I. 13.38[a]; P.2 V. 13.39[a]; Vā. 96.9[b]. 1) Bḍ. –भि– । 2) Br. नाध्यगच्छत् तु; H. नाध्यगच्छत । 3) Mt. –गच्छाम्यहं नारीं P.1 P.2 T. भूत्वा गच्छाम्यहं नारी ।

9[b] = Br. 15.38[b]; H. 2007[b]. 1) H. जायेत् । 2) Br. T. सहानुगा ।

9[b] = Bḍ. II. 71.10; Mt. 44.(54[b])=b; P.1 I. 13.(38[b])=b; P.2 V. 13.(39[b]) = b; Vā. 96.10[ab]. 1) Mt. P.1 P.2 जायेत तस्मादद्याहं । 2) Mt. –थ; P.1 P.2 –स्य । 3) Mt. सहस्रशः; P.1 P.2 सुतप्रदा ।

10 = Bḍ. II. 71.11[b], 12[a]; Br. 15.39; H. 2008; Mt. 44.55; P.1 I. 13.39; P.2 V. 13.40; Vā. 96.11. 1) Bḍ. Vā. तु । 2) Vā. सावित्री । 3) Vā. वचः; Bḍ. –री तु सा चिन्तापरमेव च । 4) Mt. P.1 P.2 ज्ञापया–; Vā. चिन्तया– । 5) Br. H. नृपति । 6) Bḍ. Vā. –ष स पार्थिवः; Mt. T. –ष महाव्रतः; V. महीपतिः; P.1 P.2 –ष नृपस्ततः ।

11 = Bḍ. II. 71.12[b], 13[a]; Br. 15.40; H. 2009; Mt. 44.56[a]=b; P.1 I. 13.40[a] = b; P.2 V. 13.41[a] = b; Vā. 96.12. 1) Bḍ. –र्भं । 2) H. च । 3) Br. H. दशमे ।

12 = Bḍ. II. 71.13[b], 14[a]; Br. 15.41; H. 2010; L. 69.5[b]=b; Mt. 44.56[b], 57[a]; P.1 I. 13.40[b], 41[a]; P.2 V. 13.41[b], 42[a]; Vā. 96.13. 1) Vā. यथा । 2) Bḍ. –धात् तदा; Br. –धं द्विजाः; P.1 P.2 –धात् परम् ; Vā. –धेप्सितः । 3) Bḍ. Vā. तत्र; L. Mt. अनु । 4) L. –श– । 5) P.1 ब्रवन्तीति ( श्रुवन्तीति ? ) । 6) Bḍ. Vā. –ज्ञा गाथां गायन्ति वै द्विजाः ।

यथैव श्रृणुमो2) दूरात् संपश्यामस्त3थान्तिकात्4), ॥ 13 ॥

बभ्रुः श्रेष्ठो मनुष्याणां, देवैर्देवावृधः समः ।
षष्टिश्च षट् च1) पुरुषाः2)
सहस्राणि च सप्त च3) ।
एते1) ऽमृतत्वं संप्राप्ता2), बभ्रोर्दे3वावृधाद4पि5) ॥ 14 ॥

| पुरुषाः पञ्चषष्टिश्च1)
| सहस्राणि च सप्ततिः2) ।

यज्वा दानपतिर्धी1रो2, ब्रह्मण्यः सु3दृढव्रतः4) ।
कीर्तिमांश्च महाभागः1)
सत्त्वतानां महारथः ।
तस्यान्ववायः2) सुमहान्3),
भोजा4) ये5) मार्त्तिकावताः6) ॥ 15 ॥

| रूपवान् सु1महातेजा
| भोजोऽतो मृत्तकावतीम्2) ॥ 15 ॥

गान्धारी चैव माद्री च वृष्णेर्भा1र्ये बभूवतुः ।
गान्धारी जनयामास सुमित्रं2) मित्रनन्दनम्3), ॥ 16 ॥

---

13 = A. 275.26a = b; Bḍ. II. 71.14b, 15a; Bhg. IX. 24.9b = b; Br. 15.42; H. 2011; L. 69.6; Mt. 44.57b, 58a; P.1 I. 13.41b = a; P.2 V. 13.42b = a; Vā. 96.14; Vi. IV. 13.4a = b. 1) H. L. P.1 P.2 –स्याथ । 2) Br. H. –वाग्रे तथा; Vā. –व श्रृणुते । 3) Br. पश्यामस्ता–; H. –रादपश्याम त–; Mt. Vi. –रादपश्यामस्त–; Vā. संपश्यति त– । 4) A. गुणांस्तद्वत् समन्तिकात् ; Br. –स्तावदन्तिकात् ।

14a = A. 275.26b; Bḍ. II. 71.15b; Bhg. IX. 24.10a; Br. 15.43a; H. 2012a; L. 69.7a; Mt. 44.58b; P.1 I. 13.42a; P.2 V. 13.43a; Vā. 96.15a; Vi. IV. 13.4b.

14b = Br. 15.43b; H. 2012b; Mt. 44.59a; P.1 I. 13.42b; P.2 V. 13.43b. 1) Mt. पूर्व–; P.1 P.2 –ष्टिः शतं च । 2) P.1 पुत्राणां । 3) Mt. P.1 P.2 च सप्ततिः ।

14b = Bḍ. II. 71.16a; Bhg. IX. 24.10b; L. 69.7b; Vā. 96.15b; Vi. IV. 13.5a. 1) L. तु; Vi. पुरुषाः षट् च षष्टिश्च । 2) Bhg. L. Vi. षट् सहस्राणि चाष्ट च ।

14c = Bḍ. II. 71.16b; Bhg. IX. 24.11a; Br. 15.44a; H. 2013a; L. 69.8a; Mt. 44.59b; P.1 I. 13.43a; P.2 V. 13.44a; Vā. 96.15c, Vi. IV. 13.5b. 1) Bḍ. Mh. L. Vā. Vi. ये । 2) Bḍ. Bhg. L. Vā. Vi. –त्वमनुप्राप्ता; Br. प्राप्ता वै । 3) H. –भ्रुदे–; Vā. भ्रुर्दे– । 4) H. देवावृद्धाव–; Mt. –वृधान् । 5) Mt. नृप ।

15a = Bḍ. II. 71.17a; Br. 15.44b; H. 2013b; L. 69.8b; Mt. 44.60a; P.1 I. 13.43b; P.2 V. 13.44b; Vā. 96.16a. 1) L. –मतिर्धी; P.1 P.2 यज्ञदानतपो धी– । 2) Br. T. P.1 –धीमान् ; Br. V. H. –विद्वान् ; L. Mt. Vā. T. –वीरो । 3) L. तु; Mt. च; Bḍ. Vā. सत्यवाग् बुधः; Br. H. –ढायुधः ।

15bc = Bḍ. II. 71.17b, 18a; Br. 15.45a=c; H. 2014a=c; L. 69.9; Vā. 96.16b, 17a. 1) Bḍ. –भोजः; L. –तेजाः । 2) L. Vā. –वाये । 3) L. ये संभूता; Vā. –महा– । 4) Vā. –ज– । 5) L. वै । 6) Bḍ. भुवि विश्रुताः; Br. सात्त्विकवताः; L. दैवतोपमाः; Vā. –कावलाः ।

15b = Mt. 44.60b; P.1 I. 13.44a; P.2 V. 13.45a. 1) P.1 P.2 –वांश्च । 2) Mt. श्रुतवीर्यधरस्तथा ।

16 = A. 275.38b = a; Bḍ. II. 71.18b, 19a; Br. 16.9; H. 2040; L. 69.10; Mt. 45.1; P.1 I. 13.70; P.2 V. 13.72b; 73a; Vā. 96.17b, 18a. 1) A. धृष्टमा–; Bḍ. धृष्टेर्मा; Br. क्रोष्टुर्मा–; H. P.1 P.2 क्रोष्टोर्मा–; L. Mt. वृष्णिमा– । 2) Br. H. अनमित्रं; P.1 शुनित्रं । 3) Br. H. महाबलम् ; P.1 मित्रवत्सलम् ।

माद्री युधाजितं[1]) पुत्रं, ततो[2]) वै[3]) देवमीढुषम्[4]) ।
अनमित्रममित्राणां[1])
जेतारमपराजितम् ॥ 17 ॥

अनमित्रं शिनिं[1]) चैव
तावुभा[2]) पुरुषोत्तमौ[3]) ॥ 17 ॥

अनमित्रसुतो[1]) निघ्नो, निघ्नस्य[2]) द्वौ[3]) बभूवतुः[4]) ।
प्रसेनश्चाथ सत्राजिच्
छत्रु[1]सेनाजितावुभौ ॥ 18 ॥

प्रसेनश्च[1]) महाभागः[2])
सत्राजिच्च[3]) सुतावु[4]भौ[5]) ॥ 18 ॥

---

17ᵃ = Bḍ. II. 71.19ᵇ; Br. 16.10ᵃ; H. 2041ᵃ; L. 69.11ᵃ; Mt. 45.2ᵃ; P.1 I. 13.71ᵃ; P.2 V. 13.73ᵇ; Vā. 96.18ᵇ. 1) L. लेभे च तं । 2) L. ततः; Vā. सा तु । 3) L. सा । 4) Bḍ. मीढ्वांसमेव च ।

17ᵇ = Br. 16.10ᵇ; H. 2041ᵇ. 1) Br. V. -त्रं च शत्रूणां ।

17ᵇ = Bḍ. 71.20ᵃ; L. 69.11ᵇ; Mt. 45.2ᵇ; P.1 I. 13.71ᵇ; P.2 V. 13.74ᵃ; Vā. 96.19ᵃ. 1) Bḍ. -नं; Mt. T. शिबिं; Vā. शिर्ति Vā. T. सुतं; V. शतं । 2) Mt. पश्चमं; P.1 P.2 पश्चात्र । 3) Mt. P.1 P.2 कृतलक्षणम् (-णाः)

18ᵃ = A. 275.40ᵃ; Bḍ. II. 71.20ᵇ; Br. 16.11ᵃ; H. 2042ᵃ; Kū. 24.39ᵃ; L. 69.12ᵃ; Mt. 45.3ᵃ; P.1 I. 13.72ᵃ; P.2 V. 13.74ᵇ; Vā. 96.19ᵇ. 1) Kū. -त्रादभून् । 2) Br. -घ्नतो । 3) A. Mt. P.1 P.2 -स्यापि । 4) A. प्रसेनकः; Mt. P.1 तु (P.1 च) द्वौ सुतौ; P.2 सुतावुभौ ।

18ᵇ = Br. 16.11ᵇ; H. 2042ᵇ. 1) H. -च्छत्र- ।

18ᵇ = Bḍ. II. 71.21ᵃ; Kū. 24.39ᵇ; L. 69.12ᵇ; Mt. 45.3ᵇ; P.1 I. 13.72ᵇ; P.2 V. 13.75ᵃ; Vā. 96.20. 1) Kū. -स्तु । 2) Mt. P.1 P.2 -वीर्यः । 3) Mt. P.1 P.2 शक्तिसेनश्च; Vā. शक्रजिच्च- । 4) Mt. P.1 P.2 तावु- । 5) Kū. -जिन् नाम चोत्तमः ।

---

## D.

### सन्दर्भस्तबकः ।

( Bḍ. II. 71.21$^{b}$—99; Br. 16.12—49$^{a}$, 58$^{b}$—59, 17.1—40; H. 2043—2080$^{a}$, 2089—2130; L. 69.13—13$^{a}$; Vā. 96.20$^{b}$—98; Cp. A. 275.40$^{b}$—44; Vi. IV. 13.9—71. )

| प्रसेनो द्वारवत्यां तु निवसन् यो[1]) महामणिम् ।
| दिव्यं स्यमन्तकं नाम स *सूर्या*[2])दुपलब्धवान् ॥ 1 ॥

---

तस्य सत्राजितः[1]) सूर्यः सखा प्राणसमोऽभवत् ।
स कदाचित् निशापाये रथेन रथिनां वरः ॥ 1 ॥

तोयं कूलादु[1]पस्प्रष्टु[2]मुपस्थातुं ययौ रविम् ।
तस्योपतिष्ठतः सूर्य[3]) विवस्वानग्रतः स्थितः ॥ 2 ॥

अ[1]स्पष्टमूर्तिर्भगवांस्तेजोमण्डलवान् विभुः[2]) ।
अथ राजा विवस्वन्तमुवाच स्थितमग्रतः ॥ 3 ॥

यथैव व्योम्नि पश्यामि *सदा त्वां*[1]) ज्योतिषां पते ।
तेजोमण्डलिनं देवं[2]) तथैव पुरतः[3]) स्थितम् ॥ 4 ॥

को *विशेषोऽस्ति मे त्वत्तः*[1]) सख्येनोपगतस्य[2]) वै ? ।
एतच्छ्रुत्वा स[3]) भगवान् मणिरत्नं स्यमन्तकम् ॥ 5 ॥

स्वकण्ठादवमुच्याथ[1]) *एकान्ते* न्यस्तवान् *विभुः*[2]) ।
ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा ॥ 6 ॥

---

| 1₁ = Br. 16.12; H. 2043. 1) H. निविशन्त्यां । 2) Br. V. H. समुद्रा- ।

1 = Bḍ. II. 71.21$^{b}$, 22$^{a}$; Br. 16.13; H. 2044; L. 69.13$^{a}$ = a; Vā. 96.20$^{b}$, 21$^{a}$. 1) Vā. T. शक्रजितः ।

2 = Bḍ. II. 71.22$^{b}$, 23$^{a}$; Br. 16.14; H. 2045; Vā. 96.21$^{b}$, 22$^{a}$. 1) Br. तोयकूलमु–; H. तोयं कूलमु–; Vā. –यकूलादु– । 2) Bḍ. –लात् समुद्धर्तुं–; Br. Vā. –दपः स्प्रष्टु– । 3) Vā. सूर्यो ।

3 = Bḍ. II. 71.23$^{b}$, 24$^{a}$; Br. 16.15; H. 2046; Vā. 96.22$^{b}$, 23$^{a}$. 1) Bḍ. सु–; Br. वि– । 2) H. प्रभुः ।

4 = Bḍ. II. 71.24$^{b}$, 25$^{a}$; Br. 16.16; H. 2047; Vā. 96.23$^{b}$, 24$^{a}$. 1) Bḍ. Vā. त्वामहं । 2) Bḍ. Vā. चैव । 3) Bḍ. Vā. –वाप्यग्रतः ।

5 = Bḍ. II. 71.25$^{b}$, 26$^{a}$; Br. 16.17; H. 2048; Vā. 96.24$^{b}$, 25$^{a}$. 1) Bḍ. Vā. –षो विवस्वंस्ते । 2) Vā. –गतेन । 3) Br. तु; H. च ।

6 = Bḍ. II. 71.26$^{b}$, 27$^{a}$; Br. 16.18; H. 2049; Vā. 96.25$^{b}$, 26$^{a}$. 1) H. –च्यैनम् । 2) Bḍ. Vā. –थ बबन्ध नृपतेस्तदा ।

प्रीतिमा[1]नथ तं[2]) दृष्ट्वा मुहूर्तं कृतवान् कथाम्[3]) ।
तमभि[4]प्रस्थितं भूयो विवस्वन्तं स सत्रजित्[5]) ॥ 7 ॥

लोकानुद्भासयस्येतान्[1]) येन त्वं सततं प्रभो, । | प्रोवाचाग्निसवर्णं[6] त्वां[1]) येन लोकः[2]) प्रपश्यति[3]) ।
तदेतन्[1]) मणिरत्नं मे भगवन्[2]) दातुमर्हसि[3]) ! ॥ 8 ॥

ततः स्यमन्तकमणिं[1]) दत्तवांस्तस्य भास्करः[2]) ।
स तमाबध्य[3]) नगरीं[4]) प्रविवेश महीपतिः ॥ 9 ॥

तं जनाः पर्यधावन्त सूर्योऽयं गच्छतीति ह ! ।
स्वां पुरीं स विसिष्माय[1]) राजा त्व[2]न्तःपुरं तथा[3]) ॥ 10 ॥

तं[1]) प्रसेनजिते[2]) दिव्यं मणिरत्नं स्यमन्तकम् ।
ददौ भ्रात्रे नरपतिः प्रेम्णा सत्राजि[3]दुत्तमम् ॥ 11 ॥

स मणिः स्यन्दते रुक्मं वृष्ण्यण्धकनिवेशने, । | स्यमन्तको नाम मणि-र्यस्मिन्[1]) राष्ट्रे स्थितो भवेत् , ।
काल[1]वर्षी च पर्जन्यो न च व्याधिभयं ह्यभूत्[2]) ॥ 12 ॥

लिप्सां चक्रे प्रसेनात् तु[1]) मणिरत्ने[2]) स्यमन्तके[3]) ।
गोविन्दो, न च तं लेभे, शक्तोऽपि न जहार सः[4]) ॥ 13 ॥

कदाचिन् मृगयां यातः प्रसेनस्तेन भूषितः[1]) ।
स्यमन्तककृते सिंहाद् वधं प्राप[2]) वनेचरात्[3]) ॥ 14 ॥

---

7 = Bḍ. II. 71.27[b], 28[a]; Br. 16.19; H. 2050; Vā. 96.26[b], 27[a]. 1) Vā. प्रतिमा- । 2) Vā. तां । 3) Vā. -वांस्तथा । 4) Vā. -ति- । 5) Vā. शक्रजित् ।

8[a] = Br. 16.20[a]; H. 2051[a]. 1) Br. T. -कान् भासयसे सर्वान् । | 8[a] = Bḍ. II. 71.28[b]; Vā. 96.27[b]. 1) Vā. -वर्णां (V. -र्णो) त्वं । 2) Vā. -कान् । 3) Vā. प्रयास्यति ।

8[b] = Bḍ. II. 71.29[a]; Br. 16.20[b]; H. 2051[b]; Vā. 96.27[c]. 1) Vā. तदैव । 2) H. -गवान् ; Vā. तन् मां भवान् । 3) Vā. -र्हति ।

9 = Bḍ. II. 71.29[b], 30[a]; Br. 16.21; H. 2052; L. 69.13[b]=a; Vā. 96.28. 1) Bḍ. Vā. स्यमन्तकं नाम मणिं; L. स्यमन्तको नाम मणिर् । 2) Br. -वान् भास्करस्तदा; L. दत्तस्तस्मै विवस्वता । 3) Bḍ. -मामुच्य । 4) Vā. -रं ।

10 = Bḍ. II. 71.30[b] = b; Br. 16.22; H. 2053; Vā. 96.29. 1) Bḍ. विस्मापयित्वा ह ततः; H. विसिस्माय; Vā. स तान् विस्मापयित्वाथ । 2) Bḍ. Vā. पुरीम- । 3) Bḍ. ययौ ।

11 = Bḍ. II. 71.31; Br. 16.23; H. 2054; Vā. 96.30. 1) Bḍ. स; H. तत् । 2) Bḍ. प्रसेनाय तद् ; Br. -जितं । 3) Vā. शक्रजि- ।

12[a] = Br. 16.24[a]; H. 2055[a]. | 12[a] = Bḍ. II. 71.32[a]; Vā. 96.31[a]. 1) Vā. -र्यस्य ।

12[b] = Bḍ. II. 71.32[b]; Br. 16.24[b]; H. 2055[b]; Vā. 96.31[b]. 1) Bḍ. काम- । 2) Bḍ. तथा; Vā. तदा ।

13 = Bḍ. II. 71.33; Br. 16.25; H. 2056; Vā. 96.32. 1) Br. T. -सेनस्य । 2) Bḍ. Vā. -रत्नं । 3) Bḍ. Vā. -न्तकम् । 4) Bḍ. Vā. च ।

14 = Bḍ. II. 71.34; Br. 16.26; H. 2057; L. 69.14[b], 15[a]; Vā. 96.33. 1) L. प्रसेनेन सहैव सः । 2) Vā. T. प्राप्तः; V. प्राप्य । 3) Bḍ. Vā. सुदारुणम् ; L. वधं प्राप्तोऽसहायश्च सिंहादेव सुदारुणात् ।

अथ सिंहं प्रधावन्तं
ऋक्षराजो महाबलः।
निहत्य मणिरत्नं त-
दादाय बिलमाविशत्[1])॥ 15 ॥
ततो वृष्ण्यन्धकाः कृष्णं
प्रसेनवधकारणात्।
प्रार्थनां तां मणेर्बुद्ध्वा
सर्व एव शशङ्किरे ॥ 16 ॥
स शङ्क्य[1]मानो धर्मात्मा
अकारी[2]) तस्य कर्मणः,।
आहरिष्ये मणिमिति
प्रतिज्ञाय वनं ययौ ॥ 17 ॥

जाम्बवानृक्षराजस्तु
तं सिंहं निजघान वै।
आदाय च मणिं दिव्यं
स्वं[1]) बिलं प्रविवेश ह ॥ 15 ॥
तत् कर्म कृष्णस्य ततो
वृष्ण्यन्धकमहत्तराः।
मणौ[1]) गृध्नोस्तु[2]) मन्वाना-
स्तमेव विशशङ्किरे ॥ 16 ॥
मिथ्याभिशस्ति[1]) तेभ्यस्तां[2])
बलवानरिसूदनः।
अमृष्यमाणो भगवान्
वनं स विचचार ह ॥ 17 ॥

यत्र[1]) प्रसेनो मृगयामचरत्[2]) तत्र[3]) चाप्यथ।
प्रसेनस्य पदं गृह्य पुरुषैराप्तकारिभिः[4]) ॥ 18 ॥

ऋक्षवन्तं गिरिवरं विन्ध्यं च गिरि[1]मुत्तमम्।
अन्वेषयन्[2]) परिश्रान्तः स ददर्श महामनाः ॥ 19 ॥

साश्वं हतं प्रसेनं तु[1]), नाविन्दत च तं[2]) मणिम्।
अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ॥ 20 ॥

ऋक्षेण निहतो दृष्टः, प[1]दैर्ऋक्षस्तु[2]) सूचितः।
पदैस्तैरन्वियायाथ[3]) गुहामृक्षस्य माधवः[4]) ॥ 21 ॥

महत्यृ[1]क्ष[2]बिले वाणीं शुश्राव प्रमदेरिताम्।
धात्र्या कुमारमादाय सुतं जाम्बवतो द्विजाः[3])।
क्रीडयन्त्याथ[4]) मणिना मा रोदीरित्युदीरिताम्[5]) ॥ 22 ॥

---

15 = Br. 16.27; H. 2058. 1) Br. –य प्राविशद् गुहाम्; V. विलम्।

16 = Br. 16.28; H. 2059.

17 = Br. 16.29; H. 2060. 1) Br. V. H. शङ्क्य–। 2) H. न कारी।

15 = Bḍ. II. 71.35; Va. 96.34. 1) Bḍ. स्व–।

16 = Bḍ. II. 71.36; Va. 96.35. 1) Bḍ. –णि। 2) Va. गृध्नुं तु।

17 = Bḍ. II. 71.37; Va. 96.36. 1) Bḍ. –थ्यापवादं। 2) Bḍ. –स्तम्।

18 = Bḍ. II. 71.38; Br. 16.30; H. 2061; Va. 96.37. 1) Bḍ. Va. स तु। 2) Br. –यां व्यचरत्। 3) Bḍ. यत्र। 4) Bḍ. ग्राह्यं पुरं पौराप्तकारिभिः।

19 = Bḍ. II. 71.39; Br. 16.31; H. 2062; Va. 96.38. 1) Bḍ. Va. नग–। 2) Va. –न्वेषण–।

20 = Bḍ. II. 71.40; Br. 16.32; H. 2063; Va. 96.39. 1) Bḍ. Va. तं। 2) Bḍ. Va. विन्दत् तत्र वै।

21 = Bḍ. II. 71.41; Br. 16.33; H. 2064; Va. 96.40. 1) Br. V. Va. पा–। 2) Bḍ. Va. –र्ऋक्षस्य; H. –क्षश्च। 3) Bḍ. Va. –दैरन्वेषयामास। 4) Bḍ. Va. यादवः।

22 = Bḍ. II. 71.42; Br. 16.34, 35; H. 2965, 2066; Va. 96.41. 1) Br. स हि ऋ–। 2) Bḍ. अन्तर्। 3) Va. अपि; H. नृप। 4) Br. –न्त्या च; H. क्रीडापयन्त्या; Va. प्रीतिमत्याथ। 5) Bḍ. –तम्; Br. H. –त्यथेरिताम्।

सिंहः प्रसेनमवधीत्[1]), सिंहो जाम्बवता हतः, ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ! ॥ 23 ॥

व्यक्तीकृत[1]श्च[2]) शब्दः स[3]) तूर्णं चापि[4]) बिलं ययौ[5]) ।

| [ अपश्यच्च बिलाभ्याशे प्रसेनमवदारितम् । ]

प्रविश्य तत्र[1]) भगवांस्तद्[2]) ऋक्षबिलमञ्जसा ॥ 24 ॥

| | |
|---|---|
| स्थापयित्वा बिलद्वारे<br>यदूंल्[1]) लाङ्गलिना सह ।<br>शार्ङ्गधन्वा बिलस्थं तु<br>जाम्बवन्तं ददर्श ह[2]) ॥ 25 ॥ | ददर्श ऋक्षराजानं<br>जाम्बवन्तमुदारधीः ॥ 25 ॥ |

युयुधे वासुदेवस्तु बिले जाम्बवता सह ।
बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिम् ॥ 26 ॥

प्रविष्टे तु[1]) बिलं[2]) कृष्णे वासु[3]देवपुरःसराः ।
पुनर्द्वा[4]रवतीमेत्य[5]) हतं कृष्णं न्यवेदयन् ॥ 27 ॥

वासुदेवस्तु[1]) निर्जित्य जाम्बवन्तं महाबलम् ।
लेभे जाम्बवतीं कन्यामृक्षराजस्य संमताम् ॥ 28 ॥

| भगवत्तेजसा ग्रस्तो जाम्बवान् प्रसभं मणिम् ।
| सुतां जाम्बवतीमाशु विष्वक्सेनाय दत्तवान् ॥ $28_1$ ॥

मणिं स्यमन्तकं चैव जग्राहात्मविशुद्धये, ।
अनुनीयर्क्ष[1]राजं तु[2]) निर्ययौ च ततो[3]) बिलात् ॥ 29 ॥

| उपायाद् द्वारकां कृष्णः स विना तैः[1]) पुरःसरैः ।

एवं स मणिमाहृत्य[1]) विशोध्यात्मानमच्युतः[2]) ।
ददौ सत्राजिते[3]) तं वै[4]) सर्व[5]सात्त्वतसंसदि[6]) ॥ 30 ॥

---

23 = Bḍ. II. 71.43, 44[a]; Br. 16.36; H. 2067; Va. 96.42. 1) Bḍ. Va. प्रसेनमवधीत् सिंहः ।

24[a] = Bḍ. II. 71.44[b]; Br. 16.37[a]; H. 2068[a]; Va. 96.43[a]. 1) Br. T. व्यक्तित–; Va. T. –कृतं । 2) Br. T. स्तस्य; च । 3) Br. –ब्दस्य; Va. T. –ब्दं तं । 4) Br. –र्णमेव; Va. T. सोऽपि; V. वापि । 5) Bḍ. Va. ययौ बिलम् ।
| [ ] = Bḍ. II. 71.45[a]; Va. 96.43[b].

24[b] = Bḍ. II. 71.45[b]; Br. 16.37[b]; H. 2068[b]; Va. 96.44[a]. 1) Bḍ. Va. चापि । 2) Bḍ. –वान् स; H. –तम् ।

25 = Br. 16.38; H. 2069. 1) H. –द्वारि यदून् । 2) Br. सः । | 25 = Bḍ. II. 71.46[a]; Va. 96.44[b].

26 = Bḍ. II. 71.46[b], 47[a]; Br. 16.39; H. 2070; Va. 96.45.

27 = Bḍ. II. 71.47[b], 48[a]; Br. 16.40; H. 2071; Va. 96.46. 1) Bḍ. Va. च; Br. ऽथ । 2) Br. बिले । 3) Bḍ. वसु–; Br. वल– । 4) Br. H. पुरीं द्वा– । 5) Bḍ. –तीं चैत्य– ।

28 = Bḍ. II. 71.48[b], 49[a]; Br. 16.41; H. 2072; Va. 96.47. 1) Br. –वोऽपि ।
| $28_1$ = Bḍ. II. 71.49[b], 50[a]; Va. 96.48.

29 = Bḍ. II. 71.50[b], 51[a]; Br. 16.42; H. 2073; Va. 96.49. 1) Va. –य ऋक्ष– । 2) Bḍ. तम् । 3) Bḍ. Va. तदा ।
| 30[a] = Br. 16.43[a]; H. 2074[a]. 1) Br. विनीतैः ।

30[bc(ab)] = Bḍ. II. 71.51[b], 52[a]; Br. 16.43[b], 44[a]; H. 2074[b], 2075[a]; Va. 96.50. 1) Va. –मादाय । 2) Bḍ. Va. –मात्मना । 3) Va. T. शक्राजिते । 4) Bḍ. रत्नं । 5) Bḍ. Va. मणिं । 6) Bḍ. Va. –संनिधौ ।

एवं मिथ्याभिशस्तेन
कृष्णेनामित्रघातिना ।
आत्मा विशोधितः पापाद्
विनिर्जित्य स्यमन्तकम् ॥ 31 ॥

कन्यां पुनर्जाम्बवती-
मुवाह मधुसूदनः[1] ।
तस्मान् मिथ्याभिशापात् स[1])
व्यमुच्यत जनार्दनः[2]) ॥ 31 ॥

| इमां मिथ्याभिशस्ति[1]) यः कृष्णस्येह व्यपोहिताम् ।
| वेद, मिथ्याभिशस्ति[2]) स नाभिस्पृशति[3]) कर्हिचित् ॥ 31₁ ॥

सत्राजितो दश त्वासन्[1]) भार्यास्तासां[2]) शतं[3]) सुताः ।
ख्यातिमन्तस्त्रयस्तेषां भङ्ग[4]कारस्तु पूर्वजः ॥ 32 ॥

वीरो वात[1]पतिश्चैव उपस्वावां[2]स्तथैव च[3]) ।

कुमार्यश्चापि तिस्रो वै
दिक्षु ख्याता द्विजोत्तमाः[1]) ॥ 33 ॥

अथ द्वारवती[1]) नाम
भङ्गकारस्य सुप्रजाः[2]) ।
सुषुवे सा कुमारीस्तु
तिस्रो रूपगुणान्विताः ॥ 33 ॥

सत्यभामोत्तमा स्त्रीणां[1]) व्रतिनी च दृढव्रता ।
तथा प्रस्वापिनी[2]) चैव, भार्याः[3]) कृष्णाय[4]) ता[5]) ददौ ॥ 34 ॥

| सभाक्षो भङ्गकारिस्तु[1]) नारेयश्च[2]) नरोत्तमौ ।
| जज्ञाते गुणसंपन्नौ विश्रुतौ रूपसंपदा ॥ 34₁ ॥

यत् तत्[1]) सत्राजिते[2]) कृष्णो मणिरत्नं स्यमन्तकम् ।
ददाव[3]हारयद्[4]) बभ्रुर्भो[5]जेन[6]) शतधन्वना ॥ 35 ॥

---

31 = Br. 16.44b, 45a; H. 2075b, 2076a.

| 31 = Bḍ. II. 71.52b, 53a; Vā. 96.51. 1) Bḍ. तु । 2) Bḍ. व्यशुध्यन् मधुसूदनः ।

| 31₁ = Bḍ. II. 71.53b, 54a; Vā. 96.52. 1) Bḍ. –शप्तिं । 2) Bḍ. –शप्तिं; Vā. –शस्तेः । 3) Vā. नाभिशस्यति ।

32 = Bḍ. II. 71.54b, 55a; Br. 16.45b, 46a; H. 2076b, 2077a; Vā. 96.53(a)b. 1) Bḍ. दश त्वासन् सत्रजितो । 2) Vā. दश स्वसृभ्यो भार्याभ्यः शत्रुजित्तः । 3) Bḍ. –स्तस्यायुतं । 4) Br. भगं– ।

33a = Bḍ. II. 71.55b; Br. 16.46b; H. 2077b; Vā. 96.53c. 1) Vā. व्रत– । 2) Bḍ. तपस्वी च; Br. T. वसुमेध–; V. उपश्राव–; Vā. ह्यपस्वन्त– । 3) Bḍ. वहुप्रियः; Vā. –श्च सुप्रियः ।

33b = Br. 16.47a; H. 2078a. 1) H. नराधिप ।

| 33bc = Bḍ. II. 71.56; Vā. 96.54. 1) Bḍ. वीरवती । 2) Bḍ. तु प्रसूः ।

34 = Bḍ. II. 71.57; Br. 16.47b, 48a; H. 2078b, 2079a; Vā. 96.55. 1) Br. T. तासां । 2) Bḍ. Vā. तपस्विनी । 3) Bḍ. Vā. पिता; Br. भार्यां । 4) Vā. –ष्णस्य । 5) Br. Vā. तां ।

| 34₁ = Br. 16.48b, 49a; H. 2079b, 2080a. 1) H. –कारात्तु । 2) Br. नावेयश्च; V. तारेयश्च ।

35 = Bḍ. II. 71.58; Br. 17.1; H. 2091; Vā. 96.56. 1) Bḍ. न च; Br. तु । 2) Bḍ. –जितः; Vā. T. –च्छत्राजिते । 3) Bḍ. आदत्त; H. अदाद–; Vā. T. प्रादात्; V. ददौ । 4) Vā. T. तद धारयद्; V. तदाहरद् । 5) Bḍ. तदुपश्रुत्य भो–; H. तद्धारयामास । 6) H. बभ्रवे ।

सदा[1]) हि प्रार्थयामास सत्यभामामनिन्दिताम् ।
अक्रूरोऽन्त[2]रमन्विच्छन्[3]) मणिं चैव स्यमन्तकम् ॥ 36 ॥
सत्राजितं[1]) ततो हत्वा शतधन्वा महाबलः ।
रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ॥ 37 ॥
अक्रूरस्तु तदा रत्नमा[1]दाय स नरर्षभः[2]) ।
समयं कारयां[3]चक्रे नावेद्योऽहं[4]) त्वये[5]त्युत, ॥ 38 ॥
वयमभ्युपपत्स्यामः[1]) कृष्णेन त्वां प्रधर्षितम्[2]), ।
ममाद्य[3]) द्वारका सर्वा वशे तिष्ठत्यसंशयम् ॥ 39 ॥
हते पितरि दुःखार्ता सत्यभामा मनस्विनी[1]) ।
प्रययौ रथमारुह्य नगरं वारणावतम् ॥ 40 ॥
सत्यभामा तु तद् वृत्तं भोजस्य शतधन्वनः ।
भर्तुर्निवेद्य दुःखार्ता पार्श्वस्थाश्रूण्यवर्तयत् ॥ 41 ॥
पाण्डवानां तु[1]) दग्धानां हरिः कृत्वोदकक्रियाम् ।
कु[2]ल्यार्थे चापि पाण्डूनां[3]) न्ययोजयत[4]) सात्यकिम् ॥ 42 ॥
ततस्त्वरितमागम्य[1]) द्वारकां मधुसूदनः ।
पूर्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ॥ 43 ॥
हतः प्रसेनः सिंहेन सत्रा[1]जिच्छतधन्वना, ।
स्यमन्तकस्तु[2]) मद्गामी[3]), तस्य प्रभुरहं[4]) विभो[5]) ॥ 44 ॥
तदारोह रथं शीघ्रं भोजं हत्वा महारथम्[1]) ।
स्यमन्तको[2]) महाबाहो अस्माकं स[3]) भविष्यति ! ॥ 45 ॥
ततः प्रववृते युद्धं[1]) तुमुलं[2]) भोज-कृष्ण[3]योः ।
शतधन्वा ततो[4]ऽक्रूरं सर्वतोदिशमैक्षत[5]) ॥ 46 ॥

---

36 = Bḍ. II. 71.59; Br. 17.2; H. 2092; Vā. 96.57. 1) Bḍ. Vā. तदा । 2) Bḍ. धन–; Vā. रत्न– । 3) Br. –मन्विष्यन् ।

37 = Bḍ. II. 71.60; Br. 17.3; H. 2093; Vā. 96.58. 1) Vā. भद्रकारं ।

38 = Bḍ. II. 71.61; Br. 17.4; H. 2094; Vā. 96.59. 1) Br. विप्रा आ– । 2) Br. रत्नमादाय चोत्तमम् ; H. –मादाय भरतर्षभ । 3) Vā. कारणं । 4) Vā. बोध्यो नान्यस् । 5) Bḍ. बोध्यो नान्यस्य चे– ।

39 = Bḍ. II. 71.62; Br. 17.5; H. 2095; Vā. 96.60. 1) Bḍ. –पयोत्स्यामः; Br. –मभ्युत्प्रपत्स्यामः; H. –पगच्छामः । 2) Vā. T. त्वं प्रधर्षितः । 3) Bḍ. –म वै; Vā. –म च ।

40 = Bḍ. II. 71.63; Br. 17.6; H. 2096; Vā. 96.61. 1) Bḍ. Vā. यशस्विनी ।

41 = Bḍ. II. 71.64; Br. 17.7; H. 2097; Vā. 96.62.

42 = Bḍ. II. 71.65; Br. 17.8; H. 2098; Vā. 96.63. 1) Br. च । 2) Vā. तु– । 3) Bḍ. Vā. चैव भ्रातॄणां । 4) Vā. नियोजयति ।

43 = Bḍ. II. 71.66; Br. 17.9; H. 2099; Vā. 96.64. 1) Bḍ. –मागत्य ।

44 = Bḍ. II. 71.67; Br. 17.10; H. 2100; Vā. 96.65. 1) Vā. शत्रु– । 2) H. –कः स । 3) Bḍ. –को मार्गणीयः; Vā. –कमहं मार्गे । 4) Vā. प्रहर हे । 5) Bḍ. Vā. प्रभो ।

45 = Bḍ. II. 71.68; Br. 17.11; H. 2101; Vā. 96.66. 1) Bḍ. Vā. महाबलम् । 2) Bḍ. –कं । 3) Bḍ. सामान्यं वो; Vā. तदास्माकं ।

46 = Bḍ. II. 71.69; Br. 17.12; H. 2102; Vā. 96.67. 1) Bḍ. Vā. प्रवृत्ते युद्धे तु । 2) Bḍ. Vā. –मुले । 3) H. वृष्ण– । 4) Bḍ. Vā. V. तम–; Vā. T. न चा– । 5) Bḍ. Vā. अवैक्षत सर्वतो दिशम् ( Vā. T. दिशि ) ।

संरब्धौ तावुभौ[1]) तत्र दृष्ट्वा[2]) भोज-जनार्दनौ ।
शक्तोऽपि शाठ्याद्[3]धार्दिक्य[4]मक्रूरो नान्वपद्यत[5]) ॥ 47 ॥

अपयाने[1]) ततो बुद्धिं भोज[2]श्चक्रे भयार्दितः[3]), ।
योजनानां शतं साग्रं हृदया[4]) प्रत्यपद्यत ॥ 48 ॥

विख्याता[1]) हृदया नाम शतयोजनगामिनी ।
भोजस्य वडवा दिव्या[2]), यया कृष्णमयोधयत् ॥ 49 ॥

क्षीणां जवेन हृदयाम[1]ध्वनः[2]) शतयोजने[3]) ।
दृष्ट्वा रथस्य स्वां[4]) वृद्धिं शतधन्वानमार्दयत्[5]) ॥ 50 ॥

ततस्तस्या हयाया[1]स्तु श्रमात् खेदाच्च वै द्विजाः[2]) ।
खमुत्पेतुरथ प्राणाः, कृष्णो राममथाब्रवीत् ॥ 51 ॥

तिष्ठेह त्वं[1]) महाबाहो, दृष्टदोषा हया मया[2]), ।
पद्भ्यां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकम् ॥ 52 ॥

पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः ।
मिथिलामभितो[1]) तं वै[2]) जघान परमास्त्रवित् ॥ 53 ॥

स्यमन्तकं च ना[1]पश्यद्धत्वा भोजं महाबलम्, ।
निवृत्तं चाब्रवीत् कृष्णं रत्नं[2]) देहीति लाङ्गली ॥ 54 ॥

नास्तीति कृष्णश्चो[1]वाच, ततो रामो रुषान्वितः ।
धिक्शब्दपूर्वमसकृत्[2]) प्रत्युवाच जनार्दनम् ॥ 55 ॥

भ्रातृत्वान् मर्षयाम्येष, स्वस्ति तेऽस्तु, व्रजाम्यहम्, ।

---

47 = Bḍ. II. 71.70; Br. 17.13; H. 2103; Va. 96.68. 1) Bḍ. अनालब्धावहारौ तु; Va. अनष्टाश्वावरोहं तु । 2) Bḍ. Va. कृत्वा; H. दृष्ट्वा तत्र । 3) Bḍ. शाठाद्; Br. शापाद्; Va. साध्याद् । 4) Bḍ. Va. -र्दिक्यो । 5) Bḍ. Va. नाक्रूरोऽभ्युपपद्यत ।

48 = Bḍ. II. 71.71; Br. 17.14; H. 2104; Va. 96.69. 1) Bḍ. -याते । 2) Bḍ. Va. मुय- । 3) Bḍ. Va. -यान्वितः । 4) H. वडवा; Va. यथा च ।

49 = Bḍ. II. 71.72; Br. 17.15; H. 2105; Va. 96.70. 1) Va. विज्ञात- । 2) Br. विप्रा; H. राजन् ।

50 = Bḍ. II. 71.73; Br. 17.16; H. 2106; Va. 96.71. 1) Va. प्रवृद्धवेगा वडवा त्व- । 2) Va. -नां । 3) Va. -नम् । 4) Bḍ. Va. तां । 5) Bḍ. -न्वा समुद्रवत्; Br. -मद्रयत; Va. -न्वानमर्दयत ।

51 = Bḍ. II. 71.74; Br. 17.17; H. 2107; Va. 96.72. 1) Br. हताया- । 2) Br. मो द्विजाः; H. भारत ।

52 = Bḍ. II. 71.75; Br. 17.18; H. 2108; Va. 96.73. 1) Bḍ. Va. तिष्ठस्वेह । 2) Bḍ. Va. मया हया ।

53 = Bḍ. II. 71.76; Br. 17.19; H. 2109; Va. 96.74. 1) Bḍ. -लोपवने; Va. -लाधिपतिं । 2) Br. विप्रा; H. राजन् ।

54 = Bḍ. II. 71.77; Br. 17.20; H. 2110; Va. 96.75. 1) Bḍ. Va. न चा- । 2) Br. T. मणिं ।

55 = Bḍ. II. 71.78; Br. 17.21; H. 2111; Va. 96.76. 1) H. -ष्णः प्रो- । 2) Va. -ब्दमक्षकृत् पूर्वं ।

कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ! ॥ 56 ॥
प्रविवेश ततो रामो मिथिलामरिमर्दनः ।
सर्वकामैरुपहृतैर्मिथिलेनाभि[1]पूजितः ॥ 57 ॥
एतस्मिन्नेव काले तु बभ्रुर्मतिमतां वरः ।
नानारूपान् क्रतून् सर्वानाजहार निरर्गलान् ॥ 58 ॥
दीक्षामयं स क[1]वचं रक्षार्थं प्रविवेश ह ।
स्यमन्तककृते प्राज्ञो[2]) गान्दी[3]पुत्रो महायशाः[4]) ॥ 59 ॥
अथ[1]) रत्नानि चान्यानि[2]) धनानि[3]) विविधानि च ।
षष्टिं वर्षाणि धर्मात्मा यज्ञेष्वेव[4]) न्ययोजयत् ॥ 60 ॥
अक्रूरयज्ञा इति ते[1]) ख्यातास्तस्य महात्मनः ।
बह्वन्नदक्षिणाः सर्वे सर्वकामप्रदायिनः ॥ 61 ॥
अथ दुर्योधनो राजा गत्वा स[1]) मिथिलां प्रभुः ।
गदाशिक्षां ततो दिव्यां बलभद्रा[2]दवाप्तवान् ॥ 62 ॥
प्रसाद्य तु[1]) ततो[2]) रामो वृष्ण्यन्धक-महारथैः ।
आनीतो द्वारकामेव कृष्णेन च महात्मना ॥ 63 ॥
अक्रूरस्त्व[1]न्धकैः सार्धमपायात्[2]) पुरुषर्षभः[3]) ।
हत्वा सत्राजितं युद्धे[1])
सहबन्धुं महाबलः[2]) ॥ 64 ॥

| युद्धे हत्वा तु शत्रुघ्नं
| सह बन्धुमता बली ॥ 64 ॥

| स्वफल्क[1]तनयायां तु नरायां नरसत्तमौ ।
| भङ्गकारस्य तनयौ वीश्रुतौ सुमहाबलौ ॥ $64_1$ ॥
| जज्ञातेऽन्धकमुख्यस्य शत्रुघ्नो बन्धुमांश्च तौ ।
| वधे च[1]) भङ्गकारस्य कृष्णो न प्रीतिमानभूत्[2]) ॥ $64_2$ ॥

ज्ञातिभेदभयात् कृष्ण[1]स्तमुपेक्षितवांस्तथा[2]) ।

---

56 = Bḍ. II. 71.79; Br. 17.22; H. 2112; Vā. 96.77.
57 = Bḍ. II. 71.80; Br. 17.23; H. 2113; Vā. 96.78. 1) Bḍ. Vā. –मैंथिलेनैव ।
58 = Bḍ. II. 71.81; Br. 17.24; H. 2114; Vā. 96.79.
59 = Bḍ. II. 71.82; Br. 17.25; H. 2115; Vā. 96.80. 1) Bḍ. Vā. सक– । 2) Vā. राजा । 3) Vā. गाधि– । 4) Bḍ. गान्दीनोजो महामनाः ।
60 = Br. 17.26; H. 2116; Vā. 96.81. 1) Vā. अर्थान् । 2) Vā. चाढ्याणि । 3) Vā. द्रव्याणि । 4) Vā. पष्टिवर्षगते काले यज्ञेषु वि– ।
61 = Bḍ. II. 71.83; Br. 17.27; H. 2117; Vā. 96.82. 1) Vā. इत्येते ।
62 = Bḍ. II. 71.84; Br. 17.28; H. 2118; Vā. 96.83. 1) Bḍ. Vā. गत्वाथ । 2) Br. बलदेवा– ।
63 = Bḍ. II. 71.85; Br. 17.29; H. 2119; Vā. 96.84. 1) Br. संप्रसाद्य । 2) H. तदा ।
$64^a$ = Bḍ. II. 71.86[a]; Br. 17.30[a]; H. 2120[a]; Vā. 96.85[a]. 1) Bḍ. Br. –रक्षा– । 2) Bḍ. –मथायात् ; Br. –मायातः; Vā. –मुपायात् । 3) H. –भ ।
$64^b$ = Br. 17.30[b]; H. 2120[b]. 1) Br. T. सुतं । 2) H. –लम् ।
| $64^b$ = Bḍ. II. 71.86[b]; Vā. 96.85[b].
| $64_1$ = Bḍ. II. 71.87; Vā. 96.86. 1) Bḍ. सुयज्ञ– ।
| $64_2$ = Bḍ. II. 71.88; Vā. 96.87. 1) Vā. वधार्थे । 2) Vā. –मान् भवेत् ।
65 = Bḍ. II. 71.89; Br. 17.31; H. 2121; Vā. 96.88. 1) Bḍ. Vā. –याद्भीत– । 2) Bḍ. –वानथ; Br. –स्तदा । 3) Bḍ. ततोऽ; Br. तदा– ।

अपयाते तथा[3]क्रूरे नावर्षत् पाकशासनः ॥ 65 ॥

अनावृष्ट्या तदा[1]) राष्ट्रमभवद् बहुधा कृशम्[2]) ।
ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ॥ 66 ॥

पुनर्द्वारवतीं प्राप्ते तस्मिन्[1]) दानपतौ ततः[2]) ।
प्रववर्ष सहस्राक्षः कक्षे[3]) जलनिधेस्ततः[4]) ॥ 67 ॥

कन्यां च[1]) वासुदेवाय स्वसारं शीलसंमताम् ।
अक्रूरः प्रददौ श्रीमान्[2]) प्रीत्यर्थं यदुपुंगवः[3]) ॥ 68 ॥

अथ विज्ञाय योगेन कृष्णो बभ्रुगतं मणिम् ।
सभामध्यगतं[1]) प्राह तमक्रूरं जनार्दनः ॥ 69 ॥

यत् तद्[1]) रत्नं मणिवरं तव हस्तगतं विभो[2]) ।
तत् प्रयच्छस्व[3]) मानार्ह, मयि मानार्यकं[4]) कृथाः ! ॥ 70 ॥

षष्टिवर्षगते काले यद्[1]) रोषोऽभूत् तदा मम[2]) ।
स[3]) संरूढोऽसकृत्[4]) प्राप्तस्तदा[5]) कालात्ययो[6]) महान् ॥ 71 ॥

ततः कृष्णस्य[1]) वचनात् सर्व-सात्त्वतसंसदि ।
प्रददौ तं मणिं बभ्रुरक्लेशेन महामतिः ॥ 72 ॥

ततस्तमार्जवप्राप्तं[1]) बभ्रोर्ह[2]स्तादरिंदमः ।
ददौ हृष्टमनाः कृष्णस्तं[3]) मणिं बभ्रवे पुनः ॥ 73 ॥

स कृष्णहस्तात् संप्राप्य[1]) मणिरत्नं स्यमन्तकम् ।
आबध्य गान्दिनीपुत्रो विरराजांशुमानिव ॥ 74 ॥

इमां मिथ्याभिशस्तिं यः
कृष्णस्य समुदाहृताम् ।

| इमां मिथ्याभिशस्तिं[1]) यो
| विशुद्धि[2]मपि चोत्तमाम् ।

---

66 = Bḍ. II. 71.90; Br. 17.32; H. 2122; Vā. 96.89. 1) Bḍ. Vā. हृतं । 2) Bḍ. Vā. V. यतः; Vā. T. –वत् तद्वधोद्यतम् ।

67 = Bḍ. II. 71.91; Br. 17.33; H. 2123; Vā. 96.90. 1) Bḍ. Vā. तदा । 2) Bḍ. Vā. तथा । 3) Bḍ. Vā. कुक्षो 4) Br. –स्तदा ।

68 = Bḍ. II. 71.92; Br. 17.34; H. 2124; Vā. 96.91. 1) B6. वै । 2) Br. T. H. धीमान् । 3) Bḍ. मुनिपुङ्गवाः; Br. मुनिसत्तमाः; H. कुरुनन्दन ।

69 = Bḍ. II. 71.93; Br. 17.35; H. 2125; Vā. 96.92. 1) Bḍ. Vā. –ध्ये तदा; Br. T. –गतः ।

70 = Bḍ. II. 71.94; Br. 17.36; H. 2126; Vā. 96.93. 1) Vā. यच्च । 2) Bḍ. Vā. प्रभो । 3) Br. –च्छ च । 4) Vā. विमतिमत्र मा ।

71 = Bḍ. II. 71.95; Br. 17.37; H. 2127; Vā. 96.94. 1) Br. T. यो । 2) Br. H. –ऽभून् ममानघ । 3) Bḍ. Vā. सु– । 4) Vā. –ढः सकृत् । 5) Br. T. –स्ततः । 6) Vā. –स्तत्कालाश्रित्य यो ।

72 = Bḍ. II. 71.96; Br. 17.38; H. 2128; Vā. 96.95. 1) Br. H. स ततः कृष्ण– ।

73 = Bḍ. II. 71.97; Br. 17.39; H. 2129; Vā. 96.96. 1) Br. –मार्जवात् प्राप्तं ( Vā. प्त ); H. –स्तं मार्दवप्राप्तं 2) Vā. तत आर्जवसंप्राप्तबभ्रु हृ– । 3) Bḍ. Vā. V. –नास्तुष्टस्तं; Vā. T. ददौ प्रहृष्टमनसा तं ।

74 = Bḍ. II. 71.98; Br. 17.40; H. 2130; Vā. 96.97. 1) Br. T. H. –प्राप्तं ।

वेद, मिथ्याभिशापास्तं
न स्पृशन्ति कदाचन ॥ 75 ॥

वेद, मिथ्याभिशस्ति स
न लभेत[3]) कथंचन ॥ 75 ॥

---

## सन्दर्भस्तवकः II

( Mt. 45.4—21; P.1 I. 13.73—94; P.2 V. 13.75$^{b}$—95. )

स्यमन्तकं[1]) प्रसेनस्य मणिरत्नमनुत्तमम् ।
पृथिव्यां सर्व[2]रत्नानां राजेति *समुदाहृतम्*[3]) ॥ 1 ॥

हृदि कृत्वा तु[1]) बहुशो मणिं *तमभ्ययाचत*[2]), ।
गोविन्दश्च[3]) न तं लेभे, शक्तोऽपि न जहार सः ॥ 2 ॥

कदाचिन् मृगयां यातः प्रसेनस्तेन भूषितः ।
*विले*[1]) शब्दं स शुश्राव कृतं[2]) सत्त्वेन *केनचित्*[3]) ॥ 3 ॥

ततः प्रविश्य स बिलं प्रसेनो ह्यृ[1]क्षमैक्षत[2]) ।
ऋक्षः प्रसेनं च तथा, ऋक्षश्चापि[3]) प्रसेनजित् ॥ 4 ॥

हत्वा ऋक्षः प्रसेनं तु[1]) ततस्तं मणिमाददात्, ।

अदृष्टस्तु हतस्तेन
अन्तर्बिलगतस्तदा ॥ 5 ॥

गुहान्तस्थं विनिहृत्य
प्रसेनमृक्ष आविशत् ॥ 5 ॥

प्रसेनं तु हृतं *ज्ञात्वा*[1]) गोविन्दः परिशङ्कितः ।
[ सत्राजिता तु तद्भ्रात्रा यादवैश्च तथापरैः । ]
गोविन्देन हृतो व्यक्तं[2]) प्रसेनो मणिकारणात् ॥ 6 ॥

प्रसेनस्तु गतोऽरण्यं मणिरत्नेन भूषितः, ।

---

75 = Br. 16.58$^{b}$, 59; H. 2089$^{b}$, 2090.

75 = Bd. II. 71.99; Va. 96.98. 1) Bd. –शप्ति । 2) Va. विशुद्धा– । 3) Va. व्रचेच (?) ।

---

1 = Mt. 45.4; P.1 I. 13.73; P.2 V. 13.75$^{b}$, 76$^{a}$. 1) Mt. –कः । 2) P.2 मणि– । 3) Mt. T. राजा वै सोऽभवन् मणिः ।

2 = Mt. 45.5; P.1 I. 13.74$^{a}$, 75$^{a}$; P.2 V. 13.76$^{b}$, 77$^{a}$. 1) P.1 सु–; P.2 स । 2) Mt. –मभियाचितः; P.1 तं स व्यराजत । 3) Mt. –न्दोऽपि ।

3 = Mt. 45.6; P.1 I. 13.75$^{b}$, 76$^{a}$; P.2 V. 13.77$^{b}$, 78$^{a}$. 1) Mt. T. यथा; P.2 T. पद– । 2) Mt. विले; P.2 विलाव । 3) Mt. पूरिते; P.2 कारितम् ।

4 = Mt. 45.7; P.1 I. 13.76$^{b}$, 77$^{a}$; P.2 V. 13.78$^{b}$, 79$^{a}$. 1) P.2 –न अ– । 2) P.1 P.2 –मासदत् । 3) Mt. –श्चैव; P.1 –क्षं चापि ।

5$^{a}$ = Mt. 45.8$^{a}$; P.1 I. 13.78$^{a}$; P.2 V. 13.79$^{b}$. 1) P.1 च ।

5$^{b}$ = Mt. 45.9$^{b}$.

5$^{b}$ = P.2 V. 13.80$^{a}$.

6 = Mt. 45.9 = ac; P.1 I. 13.78$^{b}$, 79; P.2 V. 13.80$^{b}$, 81$^{a}$ = ac. 1) P.1 P.2 V. श्रुत्वा । 2) P.1 P.2 V. नूनं ।

7$^{a}$ = Mt. 45.10$^{a}$; P.1 I. 13.80$^{a}$; P.2 V. 13.81$^{a}$.

तं दृष्ट्वा स हतस्तेन
गोविन्दः प्रत्युवाच ह ।

| तं दृष्ट्वा निहतस्तेन[1])
| न त्यजन् तं स्यमन्तकम् ।

हन्मि चैनं दुराचारं शत्रुभूतं हि वृष्णिषु[1]) ॥ 7 ॥

अथ दीर्घेण कालेन मृगयां निर्गतः पुनः ।
यदृच्छया च गोविन्दो विलाभ्याश[1]मथागमत्[2]) ॥ 8 ॥

तं दृष्ट्वा तु महाशब्दं
स चक्रे ऋक्षराड् बली ।

| ततः शब्दं यथापूर्वं
| स चक्रे ऋक्षराड् बली ।

शब्दं श्रुत्वा तु गोविन्दः खड्गपाणिः प्रविश्य सः[1]) ।
अपश्यज् जाम्ववन्तं तम्[2]) ऋक्षराजं महावलम् ॥ 9 ॥

ततस्तूर्णं हृषीकेशस्तमृक्षमतिरंहसा[1]) ।
जाम्ववन्तं स जग्राह क्रोधसंरक्तलोचनः ॥ 10 ॥

दृष्ट्वा चैनं[1]) तदा ऋक्षः
कर्मभिर्वैष्णवैः प्रभुम्, ।

ततस्तुष्टस्तु भगवान्
वरेणैनमरोचयत् ॥ 11 ॥

| दृष्ट्वा चैनं तथा विष्णुं
| कर्मभिर्वैष्णवीं तनुम् ।
| तुष्टाव ऋक्षराजोऽपि
| विष्णुसूक्तेन सत्वरम् ।
| ततस्तु भगवांस्तुष्टो
| वरेण समरोचयत् ॥ 11 ॥

इच्छे[1]) चक्रप्रहारेण त्वत्तोऽहं[2]) मरणं प्रभो[3]), ।
कन्या चेयं मम शुभा[4]) भर्तारं त्वामवाप्नुयात् ! ॥ 12 ॥

योऽयं मणिः प्रसेनं[1]) तु हत्वा प्राप्तो मया[2]) प्रभो[3]) ।
| स त्वया गृह्यतां नाथ, मणिरेषोऽत्र[1]) वर्तते ॥ 13 ॥

ततः स[1]) जाम्बवन्तं तं[2]) हत्वा चक्रेण वै प्रभुः[3]) ।
कृतकर्मा[4]) महावाहुः सकन्यं मणिमाहरत्[5]) ॥ 14 ॥

ददौ सत्राजितायैनं

| ततः सत्राजिते चैनं[1])
| मणिरत्नं स वै ददौ, ।

---

7ᵇ = Mt. 45.10ᵇ. | 7ᵇ = P.1 I. 13.80ᵇ; P.2 V. 13.82ᵃ. 1) P.1 निजघानाथ ।

7ᶜ = Mt. 45.10ᶜ; P.1 I. 13.(81ᵃ); P.2 V. 13.82ᵇ. 1) P.2 शत्रुभूतं दुरात्मानं हि केशवः; P.1 जघानैवाप्रदानेन शत्रुभूतं च केशवः ।

8 = Mt. 45.11; P.1 I. 13.82; P.2 V. 13.83. 1) Mt. T. विलस्याभ्यास– । 2) Mt. T. –मागमत् ; V. –मथागतः ।

9ᵃ = Mt. 45.12. | 9ᵃ = P.1 I. 13.83ᵃ; P.2 V. 13.84ᵃ.

9ᵇᶜ = Mt. 45.12ᵇᶜ; P.1 I. 13.83ᵇ, 84ᵃ; P.2 V. 13.84ᵇ, 85ᵃ. 1) P.1 P.2 च । 2) P.1 P.2 च ।

10 = Mt. 45.13; P.1 I. 13.84ᵇ, 85ᵃ; P.2 V. 13.85ᵇ, 86ᵃ. 1) Mt. –मृक्षपतिमञ्जसा ।

11 = Mt. 45.14. 1) Mt. T. तुष्टावैनं । | 11 = P.1 I. 13.85ᵇ, 86; P.2 V. 13 86ᵇ, 87.

12 = Mt. 45.15ᵃᵇ; P.1 I. 13.87; P.2 V. 13.88. 1) इष्टं । 2) P.1 मे । 3) P.1 शुभं; P.2 विभो । 4) P.1 P.2 सुता ।

13ᵃ = Mt. 45.15ᶜ; P.1 I. 13.88ᵃ; P.2 V. 13.89ᵃ. 1) P.1 P.2 –नात् । 2) P.1 चैवाप्तवान् ; P.2 व प्राप्तवान् । 3) P.1 P.2 अहम् ।

| 13ᵇ = P.1 I. 13.88ᵇ; P.2 V. 13.89ᵇ. 1) P.2 –प प्र– ।

14 = Mt. 45.16; P.1 I. 13.89; P.2 V. 13.90. 1) P.1 इत्युक्तो; P.2 ततस्तु । 2) P.1 P.2 वै । 3) P.1 P.2 केशवः । 4) P.1 P.2 –कार्यो । 5) P.1 कन्यां चैवाददौ तदा; P.2 कन्यां चादाय वै हरिः ।

| | |
|---|---|
| सर्वे-यादव-संसदि ॥ 15 ॥ | यल्लब्धमृ[2]क्षराजाच्च<br>सर्वे यादव-संसदि[3]) ॥ 15 ॥ |

तेन मिथ्याप[1]वादेन संतप्तोऽयं जनार्दनः, ।
ततस्ते यादवाः सर्वे वासुदेवमथाब्रुवन् ॥ 16 ॥

अस्माकं *मनसि ह्या*[1]सीद् प्रसेनस्तु त्वया हतः ।
कैकेयस्य *सुता भार्या*[2]) दश सत्राजितः *शुभाः*[3]) ॥ 17 ॥

*तासू*[1]त्पन्नाः सुतास्तस्य शतमेकं च विश्रुताः ।
ख्यातिमन्तो[2]) महावीर्या, भङ्गकारस्तु[3]) पूर्वजः ॥ 18 ॥

*अथ*[1]) व्रतवती तस्माद्[2]) भङ्गकारात् तु[3]) पूर्वजात्[4]) ।

| | |
|---|---|
| सुषुवे सुकुमारीस्तु<br>तिस्रः कमललोचनाः ॥ 19 ॥ | सुषुवे *सा*[1]) कुमारांश्च<br>*महाबलपराक्रमान्*[2]) ॥ 19 ॥ |

सत्यभामा वरा स्त्रीणां व्रतिनी च दृढव्रता ।
तथा पद्मावती चैव, ताश्च कृष्णाय सोऽददात् ॥ $10_1$ ॥

---

| | |
|---|---|
| 15 = Mt. 45.17[a]. | 15 = P.1 I. 13.90; P.2 V. 13.91. 1) P.1 चैतं। 2) P.2 यो लब्ध ऋ- । 3) P.1 -संनिधौ । |

16 = Mt. 45.17[b], 18[a]; P.1 I. 13.91; P.2 V. 13.92. 1) P.1 -प्र- ।

17 = Mt. 45.18[b], 19[a]; P.1 I. 13.92; P.2 V. 13.93. 1) Mt. तु मतिर्ह्या- । 2) P.1 एकैकस्यास्तु सुन्दर्यो; P.2 एकैकस्यां च सु(सौ)न्दर्यो । 3) P.1 P.2 सुताः ।

18 = Mt. 45.19[bc]; P.1 I. 13.93; P.2 V. 13.94. 1) P.1 सत्यो-; P.2 T. सुप्तो-; V. सत्त्वो- । 2) P.1 विख्याताश्च; P.2 ख्यापितास्तु । 3) P.1 -रश्च ।

19[a] = Mt. 45.20[a]; P.1 I. 13.94[a]; P.2 V. 13.95[a]. 1) P.1 P.2 V. सत्या । 2) P.1 P.2 V. स्वप्ना; P.2 T. तस्य । 3) P.1 P.2 -कारस्य । 4) P.1 P.2 -जा ।

| | |
|---|---|
| 19[b] = Mt. 45.20[b].<br>$19_1$ = Mt. 45.21. | 19[b] = P.1 I. 13.94[b]; P.2 V. 13.95[b]. 1) P.1 सुषुवुस्ताः । 2) P.1 शिनीवालः प्रतापवान् । |

## E.

## सन्दर्भस्तवकः I

( Bḍ. II. 71.100—195; Br. 14.3—57, 15.45[b]—62, 16.1—8, 49[b]—58[a]; H. 1908—1968, 2014[b]—2039, 2080[b]—2089[a]; L. 69.15[b]—42[a]; Vā. 96.99—191; Cp. A. 275.27—38[a], 45—51; Bhg. IX. 24.13[b]—67; Ga. 139.40—62; Kū. 24.40—69; Vi. IV. 14.1—15. )

अनमित्राच्छिनि[1]र्जज्ञे कनिष्ठाद्[2]) वृष्णिनन्दनात्, ।

| | |
|---|---|
| | सत्यवाक्[1]) सत्यसंपन्नः<br>सत्यकस्तस्य चात्मजः[2]), ॥ 1 ॥ |
| शैनेयः सत्यकस्तस्माद्<br>युयुधानश्च सात्यकिः ॥ 1 ॥ | सात्यकिर्युयुधानश्च[1]),<br>तस्य भूतिः सुतो[2]ऽभवत्[3]), ।<br>भूते[4]र्युगंधरः पुत्र<br>इति भौत्यः[5]) प्रकीर्तितः[6]) ॥ $1_1$ ॥ |
| माद्र्याः पुत्रौ तु[1]) जज्ञाते[2])<br>श्रुतौ[3]) वृष्ण्यन्धकावुभौ[4]), । | माद्र्याः सुतस्य[1]) जज्ञे तु[2])<br>सुतो वृष्णि[3]र्युधाजितः[4]), । |

जज्ञाते तनयौ वृष्णेः[1]) श्व[2]फल्कश्चत्रकस्तथा[3]) ॥ 2 ॥

---

1[a] = Bḍ. II. 71.100[a]; Br. 14.24[b]; H. 1934[b]; Kū. 24.40[a]; L. 69.15[b]; Vā. 96.99[a]. 1) Kū. T. –त्रात् सिनि–; L. अथ पुत्रः शित्ते– । 2) Kū. –ष्ठो ।

1[b] = Br. 14.25[a]; H. 1935[a].

1[b] = Bḍ. II. 71.100[b]; Kū. 24.40[b]; L. 69.16[a]; Vā. 96.99[b]. 1) Bḍ. सत्यवान् । 2) Kū. –कस्तत्सुतोऽभवत् ।

$1_1$ = Bḍ. II. 71.101; Kū. 24.41[a] = a; L. 69.16[b], 17; Vā. 96.100. 1) Kū. –स्तु; L. तु शितेर्नप्ता प्रतापवान् । असङ्गो युयुधानस्य । 2) L. कुणिस्तस्य सुतो । 3) Kū. तस्यासङ्गोऽभवत् सुतः । 4) L. कुणे– । 5) L. –त्रः शैनेया; Vā. –त्याः । 6) L. इति कीर्तिताः; Vā. ताः ।

2[a] = Br. 14.3[a]; 16.49[b]; H. 1908[a], 2080[b]. 1) Br. 16.49[b] –त्रोऽथ; H. 2080 –त्रस्तु । 2) Br. 16.49[b], H. 2080 –ज्ञेऽथ । 3) Br. 16.49[b], वृष्णि–; H. 1908 स्मृतौ; H. 2080 पृश्निः । 4) Br. 16.49[b], H. 2080 पुत्रो युधाजितः ।

2[a] = Bḍ. II. 71.102[a] = a; Kū. 24.(42[a]); L. 69.18[a]; Vā. 96.101[a]. 1) Vā. माध्र्यांसुतस्य । 2) L. संजज्ञे । 3) L. सुतो वार्ष्णि–; Vā. सुतः पृश्नि– । 4) Kū. –द्र्यां वृष्णिः सुतो जज्ञे वृष्णेर्वै यदुनन्दनः ।

2[b] Bḍ. II. 71.102[b]; Br. 14.3[b], 16.50[a]; H. 1908[b], 2081[a]; Kū. 24.42[b]; Vā. 96.101[b]. 1) H. 2081, Vā. पृश्नेः । 2) Bḍ. Vā. स्व– । 3) Bḍ. Vā. –कश्च यः; Kū. –स्तु हि ।

श्वफल्कस्तु[1]) महाराजो[2]) धर्मात्मा यत्र वर्तते ।
नास्ति व्याधिभ[3]यं तत्र न चावृष्टिभयं तथा[4]) ॥ 3 ॥

कदाचित् काशिराजस्य विभोस्तु[1]) द्विजसत्तमाः[2]) ।
त्रीणि वर्षाणि विषये[3]) नावर्षत् पाकशासनः ॥ 4 ॥

स तत्र वास[1]यामास श्वफल्कं परमार्चितम् , ।

श्वफल्कपरिवर्तेन[1])
ववर्ष हरिवाहनः ॥ 5 ॥

| श्वफल्कपरिवासेन
| प्रा[1]वर्षत् पाकशासनः ॥ 5 ॥

श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत[1]) ।
गान्दिनीं नाम, गां सा हि[2]) ददौ विप्राय[3]) नित्यशः[4]) ॥ 6 ॥

सा मातुरुदरस्था वै[1]) बहून्[2]) वर्षगणान्[3]) किल ।
निवसन्ती[4]) न वै[5]) जज्ञे, गर्भस्थां[6]) तां पिताब्रवीत् ॥ 7 ॥

जायस्व शीघ्रं, भद्रं ते, किमर्थं वापि[1]) तिष्ठसि ? ।
प्रोवाच चैनं गर्भस्था सा कन्या गां[2]) दिने दिने[3]) ॥ 8 ॥

यदि दद्यास्त[1]तो गर्भाद्[2]) बहिः[3]) स्यामीहिते पितः[4]) ।
तथेत्युक्त्वा च[5]) तां तस्याः[6]) पिता कामम[7]पूरयत्[8]) ॥ 9 ॥

दाता यज्वा च शूर[1]श्च[2]) श्रुतवानतिथिप्रियः[3]) ।

---

3 = Bḍ. II. 71.103; Br. 14.4; H. 1909; L. 69.19; Vā. 96.102. 1) L. –कश्च । 2) Br. मुनिश्रेष्ठा; H. –राजा 3) Vā. –धिर्भ– । 4) Br. T. नावर्षस्तपमेव च; H. नावर्षभयमच्युत; L. नावृष्टिहृयमप्युत ।

4 = Bḍ. II. 71.104; Br. 14.5; H. 1910; Vā. 96.103. 1) Br. विषये । 2) Br. मुनिसत्तमाः; H. –भोर्भरतसत्तम । 3) Br. पूर्णानि ।

5[a] = Bḍ. II. 71.105[a]; Br. 14.6[a]; H. 1911[a]; Vā. 96.104[a]. 1) Br. T. चान– ।

5[a] = Br. 14.6[b]; H. 1911[b]. 1) H. वर्ते च । | 5[b] = Bḍ. II. 71.105[b]; Vā. 96.104[b]. 1) Bḍ. प्र– ।

6 = Bḍ. II. 71.106; Br. 14.7, 16.50[b], 51[a]; H. 1912; 2081[b], 2082[a]; Kū. 24.43[a] = a; L. 69.20; Vā. 96.105. 1) L. –मवाप सः; Vā. –मनिन्दिताम् । 2) Br. 14.7 सा च; Br. 16.50[b] तस्याश्च; H. 1912 सा गास्तु; 2082 तस्याथ; L. काश्यो हि । 3) H. 1912 विप्रेषु; L. तस्मै । 4) Br. 16.51[a]; H. 2082 गाः सदा प्रददौ पिता; L. स्वकन्यकाम् ।

7 = Bḍ. II. 71.107; H. 1913; L. 69.21; Vā. 96.106. 1) H. तु । 2) Vā. बहु– । 3) Bḍ. Vā. –पंशतान् । 4) L. वसन्ती; Vā. T. वसति स्म । 5) L. न च सं– । 6) L. स्था ।

8 = Bḍ. II. 71.108; H. 1914; L. 69.22; Vā. 96.107. 1) H. –मिह; L. चाभि; Vā. चापि । 2) H. कन्या गां च; Vā. T. –न्या गौर्दि– । 3) L. –न्या गान्दिनी तदा ।

9 = Bḍ. II. 71.109; H. 1915; L. 69.23[b], 24[a]; Vā. 96.108. 1) H. –थां; Vā. दत्ता । 2) H. ततो जाये; L. ततः कुक्षेर् ; Vā. तदा स्यां हि । 3) Vā. यदि । 4) Bḍ. स्यां हायनैस्त्रिभिः; H. पितरं प्रत्युवाच ह; L. निर्गमिष्याम्यहं पितः; Vā. T. स्यामीहितां पितः । 5) Bḍ. L. Vā. –त्युवाच । 6) H. तां चास्याः; L. तस्या वै । 7) Bḍ. –ताकाम– । 8) Vā. T. –पूरयत् ।

| | |
|---|---|
| अक्रूरः सुषुवे तस्माच्<br>छ्वफल्काद् भूरि[1]दक्षिणः ॥ 10 ॥ | तस्याः पुत्रः स्मृतोऽक्रूरः<br>श्वाफल्को[1]) भूरिदक्षिणः, ॥ 10 ॥ |

उपमद्गु[1]स्तथा मद्गु[2]र्मुदर[3]श्चारिमेजयः[4]) ।
गिरिरक्ष[5]स्तथोपेक्षः[6]) शत्रुघ्नो[7]ऽथारिमर्दनः[8]) ॥ 11 ॥

धर्मभृद्[1]) यतिधर्मा[2]) च गृध्रमोजान्तक[3]स्तथा[4]) ।
आवाह-प्रतिवाहौ च सुन्दरी[5]) च वराङ्गना, ॥ 12 ॥

| विश्रुताश्वस्य[1]) महिषी, कन्या चास्य वसुंधरा ।
| रूपयौवनसंपन्ना सर्वसत्त्वमनोहरा ॥ $12_1$ ॥

अक्रूरादु[1]ग्र[2]सेन्यां तु[3]) सुतौ द्वौ[4]) कुलनन्दनौ[5]) ।
देववानुप[6]देवश्च जज्ञाते देवसंनिभौ[7]) ॥ 13 ॥

चित्रकस्याभवन् पुत्राः[1]) पृथुर्विपृथुरे[2]व च ।
अश्वग्रीवो[3]) ऽश्वबाहु[4]श्च सु[5]पार्श्वक-गवेषणौ[6]) ॥ 14 ॥

---

10[a] = Bḍ. II. 71.110[a]; Br. 14.8[a], 16.51[b]; H. 1916[a], 2082[b]; L. 69.24[b]; Vā. 96.109[a]. 1) Br. 14.8; H. 1916 वीर- । 2) Br. 16.51[b]; H. 2082 तस्यां जज्ञे महाबाहुः; L. दाता शूरश्च यज्वा च । 3) H. 2082 -निति विश्रुतः ।

| | |
|---|---|
| 10[b] = Br. 14.8[b], 16.52[a]; H. 1916[b], 2083[a]. 1) Br. 16.52[a]; H. 2083 अक्रूरोऽथ महाभागो जज्ञे(H. यज्वा ) विपुल- । | 10[b] = Bḍ. II. 71.110[b]; L. 69.25[a]; Vā. 96.109[b]. 1) श्वफल्काद् ; Vā. श्वफल्को । |

11 = Bḍ. II. 71.111; Br. 14.9, 16.52[b], 53[a]; H. 1917, 2083[b], 2084[a]; L. 69.26[b], 27[a]; Vā. 96.110. 1) Bḍ. Vā. -मङ्गु-; L. Br. 14.9 V. उपमन्यु- । 2) Bḍ. Br. 14.9 V. Vā. मङ्गु- । 3) Bḍ. Vā. -र्मृदुर-; Br. 14.9 T. -र्मेदुर-; L. मङ्गुवृतस्तु । 4) Br. 16.9; H. 2083 -श्चारिमर्दनः; L. जनमेजयः । 5) Br. 14.9 अविक्षित-; V. अरिक्षिक-; H. 1917 अविक्षिप-; Br. 16.53[a] T. आरिक्षेप; V. गिरिक्षेप-; H. 2084 गिरिक्षिप- । 6) Bḍ. Vā. -स्ततो यक्षः; Br. 14.9 T. -स्तथाक्षेपः; H. 1917 -स्ततोक्षेपः । 7) Br. 16.53[a]; H. 2084 शत्रुहा । 8) Br. 16.53[a], H. 2084 चारिमेजयः; Br. 14.9 -नश्चारि-; L. नो योऽरि-; Vā. नो वारि- ।

12 = Bḍ. II. 71.112; Br. 14.10, 16.53[b], 54[a]; H. 1918; 2084[b], 2085[a]; L. 69.27[b], 28[a]; Vā. 96.111. 1) Br. 14.10; H. 1918 -र्मधृग् । 2) Bḍ. -र्मवृद्धः शुकर्मा; Br. 16.53[b] V.; H. 2084 -श्चापि धर्मी; Br. T. र्मा; L. वृष्टधर्मा; Vā. -भृच्च श्रृष्टुचयो । 3) Br. 14.10 T. धर्मोक्षान्धकरु-; 16.53 भोजान्धक-; V. गृध्रमो जान्तुक-; L. गोधानोऽथ वर- । 4) Bḍ. गन्धमादस्तथापरः; Vā. वर्ग( V. गन्ध- )मोचस्तथापरः । 5) Bḍ. Vā. वसुदेवा; L. सुधारा ।

| $12_1$ = Br. 16.54[b], 55[a]; H. 2085[b], 2086[a]. 1) H. -श्रुता शाम्ब- ।

13 = Bḍ. II. 71.113; Br. 14.11, 16.55[b], 56[a]; H. 1919; 2086[b], 2087[a]; L. 69.28[b], 29[a]; Vā. 96.112. 1) Br. H. अक्रूरेणो-; L. -रस्यो- । 2) Bḍ. -दौग्र- । 3) Br. H. 1919 -सेनायां । 4) Br. 14.11, H. 1919 सुगात्र्यां; Br. 16.55[b] सुतौ वै; L. पुत्रौ द्वौ । 5) Bḍ. Vā. -नन्दिनौ; Br. 14.11 T. द्विजसत्तमाः; V. कुरुनन्दनौ; H. कुरुनन्दन । 6) Br. 14.11; H. 1919 प्रसेनश्चोप-; Br. 16.56[a] Vā. वसुदेवश्चोप-; H. 2087 सुदेवश्चोप-; V. T. देवश्चानुप- । 7) Br. H. -वर्चसौ; L. -संमतौ; Vā. संमितौ ।

14 = Bḍ. II. 71.114; Br. 14.12, 16.56[b], 57[a]; H. 1920; 2087[b], 2088[a]; Kū. 24.45[b], 46[a]; L. 69.30; Vā 96.113. 1) Kū. -वत् पुत्रः । 2) L. विपृथुः पृथु- । 3) Br. 16.57[a] V. H. 2088 -सेनो- । 4) Bḍ. बाहु-; Kū. L. वः सु । 5) Br. 14.12 स्व । 6) Kū. T. सुधाश्वक गवेक्षकौ; L. सुधासूक गवेक्षणौ ।

अरिष्टनेमिरश्वश्च[1]) सुधर्मा[2]) धर्मभृत् तथा[3]) ।
सुबाहु[4]र्बहुबाहु[5]श्च श्रविष्ठा[6]श्रवणे स्त्रियौ ॥ 15 ॥

अन्धकात्[1]) काश्यदुहिता[2]) लेभे सा[3]) चतुरः सुतान्[4]) ।
कुकुरं[5]) भजमानं च शमिं[6]) कम्बलबर्हिषम्[7]) ॥ 16 ॥

कुकुर[1]स्य सुतो वृष्णि[2]र्वृष्णे[3]स्तु तनयो[4]) ऽभवत्[5]) ।
कपोतरोमा, तस्याथ[6]) तित्तिरिस्त[7]नयोऽभवत्[8]) ॥ 17 ॥

| तस्यासीत् तुम्बुरुसखा[1]) विद्वान् पुत्रो नलः[2]) किल, ।
| ख्यायते यस्य नाम्ना[3]) स[4]) चन्दनोदकदुन्दुभिः[5]) ॥ $17_1$ ॥

जज्ञे पुनर्वसुस्तस्मा-
दभिजिच्च पुनर्वसोः ॥ 18 ॥

| तस्मादप्यभिजित्[1]) पुत्र
| उत्पन्नस्तु[2]) पुनर्वसुः ।
| अश्वमेधं तु[1]) पुत्रार्थमा[2]जहार नरोत्तमः ॥ 18 ॥

---

15 = Bḍ. II. 71.115; Br. 14.13, 16.57$^{b}$, 58$^{a}$; H. 1921; 2088$^{b}$, 2089$^{a}$; L. 69.31; Vā. 96.114. 1) Bḍ. –मिरश्वास्यः; Br. 16.57$^{b}$, H. 2088 –मेश्च सुता । 2) Bḍ. Vā. सुवर्मा; Br. 16.57$^{b}$; L. धर्मो; H. 2088 धर्मा । 3) Br. 16.57$^{b}$; H. 2088, L. –मृदेव च; Bḍ. वर्मभृत् तथा; Vā. T. चर्मवर्मभृत् ; V. वर्मचर्मभृत् । 4) Bḍ. Vā. अभूमि; L. सुभूमि– । 5) Bḍ. L. Vā. –र्भूमि– । 6) H. 2089 –ष्ठ– ।

16 = A. 275.27$^{b}$=b; Bḍ. II. 71.116; Br. 15.45$^{b}$, 46$^{a}$; H. 2014$^{b}$, 2015$^{a}$; Kū. 24.46$^{b}$, 47$^{a}$; L. 69.32; Vā. 96.115. 1) Bḍ. Vā. सत्यकात् ; Kū. T. अन्धकस्य । 2) Bḍ. Vā. काशिदुहिता; Kū. T. सुतायां तु; V. कास्यदुहिता । 3) Bḍ. या; Kū. L. च । 4) Br. H. चतुरोऽलभतात्मजान् । 5) A. –कुरो; Vā. –कुदं । 6) A. –नस्तु शिनिः; Bḍ. L. शुचिं; Br. T. ससकं; V. समकं; H. शमं; Kū. शमीकम् । 7) A. –षः; Br. H. बलबर्हिषम् ; Kū. बलगर्वितम् ; Vā. शमी कम्बलबर्हिषौ ।

17 = A. 275.28$^{a}$=a; Bḍ. II. 71.117; Br. 15.46$^{b}$, 47$^{a}$; H. 2015$^{b}$, 2016$^{a}$; Kū. 24.47$^{b}$, 48$^{a}$; L. 69.33; Vā. 96.116. 1) Vā. ककुद– । 2) A. H. धृष्णु–; Br. Vā. T. वृष्टि– । 3) A. H. –र्धृष्णो–; Br. Vā. T. र्वृष्टे– । 4) L. –वृष्णेः शूरस्ततो । 5) A. धृतिः; Br. H. –यस्तथा । 6) Kū. –रोमा विख्यातस् ; L. –रोमातिबलस् । 7) Br. T. तिलिरिस्त–; Bḍ. विलोमा–; H. तैत्तिरिस्त–; Vā. रेवतो– । 8) Kū. L. तस्य पुत्रो विलोमकः; Bḍ. Vā. –ऽभवदात्मजः ।

| $17_1$ = Bḍ. II. 71.118; Kū. 24.48$^{bc}$; L. 69.34; Vā. 96.117. 1) L. –सखो । 2) Bḍ. –न्धकः; Kū. T. –त्रस्तमः; Vā. –त्रोऽभवत् । 3) Kū. तमस्याप्यभवत् पुत्रः; L. स सुनाम्ना । 4) L. तु । 5) Bḍ. नामान्यचन्दनोदकदुन्दुभिः; Kū. तथैवानकदुन्दुभिः; L. चन्दनानकदुन्दुभिः ।

18 = Br. 15.47$^{b}$; H. 2016$^{b}$.

| 18$^{a}$ = Bḍ. II. 71.119$^{a}$; L. 69.35$^{a}$; Vā. 96.118$^{a}$. 1) Bḍ. तस्याभिजित् ततः; Vā. –स्माच्चाभिजितः । 2) L. –न्नोऽस्य ।

| 18$^{b}$ = Bḍ. II. 71.119$^{b}$; L. 69.35$^{b}$; Vā. 96.118$^{b}$. 1) L. स । 2) Vā. –र्थं आ– ।

| तस्य मध्येऽतिरात्रस्य सदोमध्यात् समुत्थितः[1]) ।
| ततस्तु विद्वान् धर्मज्ञो[2]) दाता यज्वा पुनर्वसुः ॥ $18_1$ ॥

तथा वै[1]) पुत्रमिथुनं बभूवाभिजितः[2]) किल ।
आहुक[3]श्चाहुकी चैव ख्यातौ ख्याति[4]मतां वरौ ॥ 19 ॥

इमांश्चो[1]दाहरन्त्यत्र श्लोकान्[2]) प्रति तमाहुकम् ।
सोपास[3]ङ्गानुकर्षाणां सध्वजानां व[4]रूथिनाम् ॥ 20 ॥

रथानां मेघघोषाणां सहस्राणि दशैव तु ।

नापुत्रवान् नाशतदो
नासहस्रशतायुधः[1]) ॥ 21 ॥
नाशुद्धकर्मा नायज्वा,
यो भोजमभितो व्रजेत् ।

| नासत्यवादी चा[1]सीत् तु
| नायज्वा[2]) नासहस्रदः ।
| नाशुचिर्नाप्यधर्मात्मा
| नाविद्वान् न कृशोऽभवत् ॥ 21 ॥
| आहुकस्य[1]) धृतिः पुत्र
| इत्येवमनुशुश्रुम ।

श्वेतेन[1]) परिवारेण[2]) किशोरप्रतिमो महान्[3]) ॥ 22 ॥

अशीतिचर्मणा[1]) युक्त आ[2]हुकः प्रथमो[3]) व्रजेत्[4]) ।
पूर्वस्यां दिशि नागानां भोजस्य प्रययुः किल[5]) ॥ 23 ॥

रौप्य[1]काञ्चनकक्षाणां सहस्राण्येकविंशतिः ।
तावन्त्ये[2]व सहस्राणि उ[3]त्तरस्यां तथा दिशि ॥ 24 ॥

आभूमिपालान्[1]) भोजान् तु[2])
सातिष्ठत् किङ्किणी किल[3]) ।

| भूमिपालस्य भोजस्य
| उत्तिष्ठेत् किङ्किणी किल ।

---

| $18_1$ = Bḍ. II. 71.120; L. 69.36; Vā. 96.119. 1) Bḍ. –मुच्छ्रितः । 2) L. सर्वज्ञो ।

19 = Bḍ. II. 71.121; Br. 15.48; H. 2017; L. 69.37; Vā. 96.120. 1) Bḍ. तस्याथ; L. Vā. वस्यापि । 2) Vā. बाहुवाणाजितः । 3) Br. T. स्वाहुक– । 4) Bḍ. Vā. मति–; L. कीर्ति– ।

20 = Bḍ. II. 71.122; Br. 15.49ª, 52ª; H. 2018ª, 2021ª; Vā. 96.121. 1) Br. –मां चो । 2) Br. गाथां; H. गाथाः । 3) Bḍ. सोपासा–; Br. सोमात् स– । 4) Br. H. ध्वजिनां सव– ।

21ª = Bḍ. II. 71.123ª; Br. 15.52ᵇ; H. 2021ᵇ; Vā. 96.122ª.

21ᵇ = Br. 15.50ᵇ; H. 2019ᵇ. 1) Br. –युधः ।

22ª = Br. 15.51ª; H. 2020ª.

| 21ᵇᶜ = Bḍ. II. 71.123ᵇ, 124ª; Vā. 96.122ᵇ, 123ª. 1) Vā. त्वा– । 2) Bḍ. नायज्ञो ।
| 22ª = Bḍ. II. 71.124ᵇ; Vā. 96.123ᵇ. 1) Bḍ. आर्द्रकस्य ।

22ᵇ = Bḍ. II. 71.125ª; Br. 15.49ᵇ; H. 2018ᵇ; Vā. 96.124ª. 1) Bḍ. स तेन । 2) Vā. –चारेण । 3) Bḍ. Vā. –मान् हयान् ।

23 = Bḍ. II. 71.125ᵇ, 126ª; Br. 15.50ª, 51ᵇ; H. 2019ª, 2020ᵇ; Vā. 96.124ᵇ, 125ª. 1) Br. T. –वर्मणा । 2) Bḍ. Vā. अशीतिमश्वनियुतान्या– । 3) Br. H. –मं; Bḍ. –कोऽप्रतिमो; Vā. –कप्रतिमो । 4) Bḍ. व्रजन् ; Vā. –ऽव्रजत् । 5) Bḍ. –स्य त्वतिमाभयन् ; Vā. –स्य प्रतिमोऽभवत् ।

24 = Bḍ. II. 71.126ᵇ, 127ª; Br. 15.53; H. 2022; Vā. 96.125ᵇ, 126ª. 1) Bḍ. Vā. रूप्य– । 2) Br. तावत्ये– । 3) H. –णि ह्यु– ।

आहुकीं[4]) चाप्यवन्तिभ्यः
स्वसारं ददुरन्धकाः ॥ 25 ॥
आहुकस्य तु काश्यायां
द्वौ पुत्रौ संबभूवतुः ।
देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ॥ 26 ॥

आहुकश्चाप्यवन्तीषु[1])
स्वसारं त्वाहुकीं ददौ ॥ 25 ॥
आहुकात् काश्यदुहितु-
र्द्वौ[1]) पुत्रौ संबभूवतुः ।

देवकस्याभवन् पुत्रा-
श्चत्वारस्त्रिदशोपमाः ।
देववानुपदेव[1]श्च सुदेवो[2]) देवरक्षितः[3]) ॥ 27 ॥

देवकस्य सुता वीरा[1])
जज्ञिरे त्रिदशोपमाः ।

कुमार्यः सप्त चास्यासन्[1]),
वसुदेवाय ता ददौ ।
देवका शान्तिदेवा च
सु[2]देवा देवरक्षिता ॥ 29 ॥
वृकदेव्युपदेवी च
सुनाम्नी चैव सप्तमी ।

तेषां स्वसारः सप्तासन् ;
वसुदेवाय ता ददौ ।
वृक[1]देवोपदेवा च
तथान्या देवरक्षिता ॥ 28 ॥
श्रीदेवा शान्तिदेवा[1]) च
सहदेवा[2]) तथापरा[3]), ।
सप्तमी देवकी तासां[4])
सुनामा[5]) चारुदर्शना[6]) ।

---

25 = Br. 15.54; H. 2023. 1) Br. –ला । 2) Br. भोजास्तु; H. –जान् स्वान् । 3) Br. T. सन्ति ज्याकिङ्किणीकिनः; V. सातिष्ठन् किङ्किनी किल; H. आतिष्ठत् किङ्किणीकिनः । 4) Br. T. आहुः किं ।

26$^{a}$ = Br. 15.55$^{a}$; H. 2024$^{a}$.

25 = Bḍ. II. 71.127$^{b}$, 128$^{a}$; Vā. 96.126$^{b}$, 127$^{a}$. 1) Vā. T. –कश्चाहुकान्धाय; V. –कश्चाप्यवतिष्ठन् ।

26$^{a}$ = Bḍ. II. 71.128$^{b}$; L. 69.38$^{a}$; Vā. 96.127$^{b}$. 1) Vā. T. आहुकान्धस्य दुहिता द्वौ; V. –कात् काश्यदुहिता द्वौ ।

26$^{b}$ = Bḍ. II. 71.129$^{a}$; Br. 15.55$^{b}$; H. 2024$^{b}$; L. 69.38$^{b}$; Vā. 96.128$^{a}$.

27$^{a}$ = Br. 15.56$^{a}$; H. 2025$^{a}$.

27$^{a}$ = Bḍ. II. 71.129$^{b}$; Kū. 24.62$^{b}$; L. 69.39$^{a}$; Vā. 96.128$^{b}$. 1) L. राज्ञो ।

27$^{b}$ = Bḍ. II. 71.130$^{a}$; Br. 15.56$^{b}$; H. 2025$^{b}$; Kū. 24.62$^{c}$; L. 69.39$^{b}$; Vā. 96.129$^{a}$. 1) Vā. देवानामपि देव– । 2) Br. H. संदेवो । 3) Vā. –रक्षिता ।

28 = Br. 15.57; H. 2026. 1) Br. चास्याथ । 2) H. सं– ।

29$^{a}$ = Br. 15.58$^{a}$; H. 2027$^{a}$.

28 = A. 275.31$^{a}$=a; Bḍ. II. 71.130$^{b}$, 131$^{a}$; Kū. 24.63$^{ab}$; L. 69.40; Vā. 96.129$^{b}$, 130$^{a}$. 1) Bḍ. Kū. धृत–; L. वृष– ।

29$^{ab}$ = A. 275.32$^{a}$ = a; Bḍ. II. 71.131$^{b}$, 132$^{a}$; Kū. 24.63$^{cd}$; L. 69.41; Vā. 96.130$^{b}$, 131$^{a}$. 1) A. –वी सत्यदेवो । 2) A. सुरापी चेति; Vā. महादेवा । 3) A. सप्तमी; Kū. च सुव्रता । 4) Kū. L. देवकी चापि तासा तु (च) । 5) Bḍ. सानुजा । 6) Kū. L. वरिष्ठाभूत् सुमध्यमा ।

नवोग्रसेनस्य सुतास्तेषां कंसस्तु[1]) पूर्वजः ॥ 29 ॥

न्यग्रोधश्च सुनामा च कङ्कः शङ्कुः[1]) सुभूषणः[2]) ।
राष्ट्रपालोऽथ सुतनु-
रनाधृष्टि[1]स्तु पुष्टिमान् ॥ 30 ॥

सुतनू राष्ट्रपालश्च
युद्धमुष्टिः[1]) सुपुष्टिमान्[2]) ॥ 30 ॥

तेषां स्वसारः पञ्चासन्[1]) कंसा कंसवती[2]) तथा ।
सुतनू[3]) राष्ट्रपाली[4]) च कङ्का[5]) चैव वराङ्गना ॥ 31 ॥

उग्रसेनः सहा[1]पत्यो व्या[2]ख्यातः कुकुरोद्भवः ।
कुकुराणामिमं वंशं धारयन्नमितौजसाम् ।
आत्मनो विपुलं वंशं प्रजावानाप्नुयान्[3]) नरः ॥ 32 ॥

भजमानस्य पुत्रोऽथ[1]) रथि[2]मुख्यो विदूरथः, ।
राजा[3]धिदेवः[4]) शूरश्च[5]) विदूरथ[6]सुतोऽभवत् ॥ 33 ॥

राजाधिदेवस्य सुता[1])
जज्ञिरे वीर्यवत्तराः ।
दत्तातिदत्तौ बलिनौ
शोणाश्वः श्वेतवाहनः ॥ 34 ॥
श[1]मी च दत्त[2]शर्मा च
दन्त[3]शत्रुश्च शत्रुजित् ।
श्रवणा च श्रविष्ठा च
स्वसारौ संबभूवतुः ॥ 35 ॥

---

तस्य शूरस्य तु सुता
जज्ञिरे बलवत्तराः ।
वातश्चैव निवातश्च
शोणाश्वः[1]) श्वेतवाहनः ॥ 34 ॥
शमी च गदवर्मा च
निदान्तः[1]) खलु शत्रुजित्[2]) ॥ 35 ॥

---

29b(c) = A. 275.32b; Bḍ. II. 71.132b; Br. 15.58b; H. 2027b; L. 69.42a; Vā. 96.131b. 1) V. Bḍ. Vā. –ता; कंसस्तेषां तु; A. T. –स्तासां च; A. V. ताः कंसस्तेषां च ।

30a = A. 275.33a; Bḍ. II. 71.133a; Br. 15.59a; H. 2028a; Vā. 96.132a. 1) Bḍ. कङ्क-शङ्कु–; Br. तथा कङ्कः Vā. –कद्वशङ्कुश् । 2) Bḍ. सुभामयः; Vā. च भूमयः; A. –ङ्कुश्च भूमिपः ।

30b = Br. 15.59b; H. 2028b. 1) Br. T. –नावृष्टि– ।

30b = A. 275.33b; Bḍ. II. 71.133b; Vā. 96.132b. 1) Bḍ. Vā. T. युद्धतु(स्तु)ष्टश् ; Vā. V. युद्धे तुष्टः । 2) A. समुष्टिकः; Bḍ. च तुष्टिमान् ।

31 = Bḍ. II. 71.134; Br. 15.60; H. 2029; Vā. 96.133. 1) Bḍ. Vā. पञ्चैव । 2) Vā. कर्मधर्मवती । 3) Vā. शतांकू । 4) Vā. T. –ला । 5) Vā. कन्हा ।

32 = Bḍ. II. 71.135, 136a; Br. 15.61, 62; H. 2030, 2031; Vā. 96.134. 1) Bḍ. Vā. T. –सेनो महा– । 2) Vā. वि– । 3) Bḍ. Vā. –वांश्च भवेन् ।

33 = A. 275.34; Bḍ. II. 71.136b, 137a; Br. 16.1; H. 2032; Vā. 96.135. 1) Bḍ. Vā. –त्रस्तु । 2) A. Br. H. Vā. V. रथ– । 3) Vā. राज्या– । 4) H. –देयः । 5) Br. H. –रस्तु । 6) Vā. विदूरश्च ।

34 = A. 275.35a = $a^{I}b^{II}$; Br. 16.2; H. 2033. 1) A. –व पुत्रौ द्वौ ।

35 = Br. 16.3; H. 2034. 1) H. स– । 2) Br. दण्ड– । 3) H. दत्त– ।

34 = Bḍ. II. 71.137b, 138a; Vā. 96.136. 1) Bḍ. Vā. T. शोणितः ।

35 = Bḍ. II. 71.138b; Vā. 96.137a. 1) Vā. –दातः । 2) Vā. शक्रशक्रजित् ।

शमि[1]पुत्रः प्रतिक्षत्रः[2]), प्रतिक्षत्रस्य[3]) चात्मजः[4]) ।
स्वयंभोजः, स्वयंभोजाद् धृदिकः[5]) संबभूव ह ॥ 36 ॥

तस्य पुत्रा बभूवुर्हि
सर्वे भीमपराक्रमाः ।

हृदिकस्य सुतास्त्वासन्
दश भीमपराक्रमाः ।

कृतवर्माग्रज[1]स्तेषां, शतधन्वा तु मध्यमः, ॥ 37 ॥

देवान्तश्च नरान्तश्च[1])
भिषग् वैतरणश्च यः ।
सुदान्त[2]श्चा-तिदान्त[3]श्च
निकाश्यः[4]) कामदम्भकः[5]) ॥ 38 ॥
देवान्तस्याभवत् पुत्रो
विद्वान्[1]) कम्बलबर्हिषः, ।

देवार्हश्च[1]) सुबाहु[2]श्च
भिषग् वैतरण[3]श्च यः ।
सुदान्तश्चाधिदान्त[4]श्च
कनकः[5]) कनकोद्भवः ॥ 38 ॥
देवार्हस्य[1]) सुतो विद्वान्
जज्ञे कम्बलबर्हिषः, ।

असमौजाः सुतस्तस्य ना[1]समौजाश्च तावुभौ[2]) ॥ 39 ॥
अजात[1]पुत्राय सुतान्[2]) प्रददावसमौजसे ।
सुदंष्ट्रं[3]) च सुचारुं[4]) च कृष्णमि[5]त्यन्धकाः स्मृताः[6]) ॥ 40 ॥

| अन्धकानामिमं वंशं कीर्तयेद्यस्तु[1]) नित्यशः ।
| आत्मनो विपुलं वंशं लभते नात्र संशयः ॥ $40_1$ ॥

अश्मक्यां[1]) जनयामास शूरं[2]) वै देवमीढुषम्[3]) ।
महिष्यां[4]) जज्ञिरे शूराद्[5]) भोजायां[6]) पुरुषा दश ॥ 41 ॥

---

36 = A. 275.$36^a$ = a; Bḍ. II. 71.139; Br. 16.4; H. 2035; Va. 96.$137^b$, $138^a$. 1) A. शमी- । 2) Va. T. -क्षिप्तः : 3) A. -क्षेत्रस्य; Va. T. -क्षिप्तस्य । 4) A. भोजकः । 5) Br. T. मदिकः ।

$37^a$ = Br. 16.$5^a$; H. $2036^a$.

| $37^a$ = Bḍ. II. 71.$140^a$; Va. 96.$138^b$.

$37^b$ = Bḍ. II. 71.$140^b$; Br. 16.$5^b$; H. $2036^b$; Va. 96.$139^a$. 1) Va. -र्मा कृत- ।

38 = Br. 16.6; H. 2037. 1) H. देवर्षेश्च्यवनात् तस्य । 2) H. सुदत्त- । 3) H. -दत्त- । 4) कामदा । 5) H. -दत्तिका ।

$39^a$ = Br. 16.$7^a$; H. $2038^a$. 1) H. देववान् दत्तको नाम पुत्रः ।

38 = Bḍ. II. 71.141; Va. 96.$139^b$, $140^a$. 1) Bḍ. देववाहुः । 2) Va. वनार्ह- । 3) Bḍ. -षक् श्वेतरथ-; Va. द्वैत· रथ- । 4) Va. च धीयान्त । 5) Va. T. नकवान्; V. कनकात् ।

$39^a$ = Bḍ. II. 71.$142^a$; Va. 96.$140^b$. 1) Bḍ. देववाहोः; Va. देवार्हश्च ।

$39^b$ = Bḍ. II. 71.$142^b$; Br. 16.$7^b$; H. $2038^b$; Va. 96.$141^a$. 1) Bḍ. Va. सु- । 2) Bḍ. Va. विश्रुतः ।

40 = Bḍ. II. 71.143; Br. 16.8; H. 2039; Va. 96.$141^{bc}$. 1) Va. -जाव- । 2) Bḍ. Va. ततः । 3) Bḍ. सुचन्द्रं; Br. सुदंष्ट्रश् । 4) Bḍ. वसुरुपं; Br. सुचारुश् ; Va. सुरूपं । 5) Bḍ. Br. Va. -ष्ण इ- । 6) H. -काश्रयः ।

| $40_1$ = Bḍ. II. 96.144; Va. 96.142. 1) Va. -यानस्तु ।

41 = Bḍ. II. 96.145; Br 14.14; H. 1922; Va. 96.$143^a$, $144^a$. 1) Br. T. असिक्न्यां । 2) Va. शूरो । 3) H. -षः । 4) Bḍ. मारिश्यां; Va. माष्यं तु । 5) Br. -रा । 6) Br. H. -ज्यायां ।

वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ।
जज्ञे, य[1]स्य प्रसूतस्य दुन्दुभ्यः[2]) प्राणदन्[3]) दिवि ; ॥ 42 ॥

आनकानां च संह्रादः सुमहानभवद् दिवि, ।
पपात पुष्पवर्षं च[1]) शूरस्य भवने महत्[2]) ॥ 43 ॥

मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि, ।
यस्यासीत् पुरुषाग्र्यस्य कान्ति[1]श्चन्द्रमसो यथा ॥ 44 ॥

देवभागस्ततो जज्ञे, ततो[1]) देवश्रवाः पुनः ।

| | |
|---|---|
| अनाधृष्टिः कनवको<br>वत्सवानथ गृञ्ज[1]मः ॥ 45 ॥ | अनाधृष्टिर्वृक[1]श्चैव<br>नन्दनश्चैव सृञ्जयः[2]) ॥ 45 ॥ |

श्यामः शमीको गण्डूषः, पञ्च चास्य[1]) वराङ्गनाः ।

| | |
|---|---|
| पृथुकीर्तिः पृथा चैव<br>श्रुतदेवा श्रुतश्रवा ॥ 46 ॥ | पृथा च श्रुतदेवा[1]) च<br>श्रुतकीर्तिः श्रुतश्रवा[2]) ॥ 46 ॥ |

राजाधिदेवो च तथा पञ्चैता वीरमातरः ।
पृथां दुहितरं चक्रे[1]) कुन्तिस्तां पाण्डुरावहत्[2]) ॥ 47 ॥

शूरः पूज्याय[1]) वृद्धाय[2]) कुन्तिभोजाय तां[3]) ददौ ।
तस्मात् कुन्तीति विख्याता[4]) कुन्तिभोजात्मजा पृथा[5]), ॥ 48 ॥

कुरुवीरः पाण्डुमुख्यस्तस्माद् भार्यामविन्दत ।
पृथा जज्ञे ततः पुत्रांस्त्रीनग्निसमतेजसः ।
लोकेऽप्रतिरथान् वीरान् शक्रतुल्यपराक्रमान् ॥ $48_1$ ॥

| | |
|---|---|
| यस्यां स धर्मविद् राजा<br>धर्माज्ज[1]ज्ञे युधिष्ठिरः । | धर्माद् युधिष्ठिरं पुत्रं<br>मारुताच्च वृकोदरम् । |

---

42 = Bḍ. II. 71.146; Br. 14.15; H. 1923; Vā. 96.144b, 145a. 1) Bḍ. Vā. त- । 2) Bḍ. Vā. -भिः । 3) Bḍ. Vā. -दद् ।

43 = Bḍ. II. 71.147; Br. 14.16; H. 1924; Vā. 96.145b, 146a. 1) Br. T. -र्षश्च । 2) Br. T. जनने महान् ।

44 = Bḍ. II. 71.148; Br. 14.17; H. 1925; Vā. 96.146b, 147a. 1) Bḍ. Vā. कीर्ति- ।

45a = Bḍ. II. 71.149a; Br. 14.18a; H. 1926a; Vā. 96.147b. 1) Br. H. तथा ।

45b = Br. 14.18b; H. 1926b. 1) H. -ञ्जि- । | 45b = Bḍ. II. 71.149b; Vā. 96.148a. 1) Vā. -कड- । 2) Vā. सृञ्जिनः ।

46a = Bḍ. II. 71.150a; Br. 14.19a; H. 1927a; Vā. 96.148b. 1) Bḍ. स्वसारस्तु; Vā. चत्वारस्तु ।

46b = Br. 14.19b; H. 1927b. | 46b = Bḍ. II. 71.150b; Vā. 96.149a. 1) Vā. -वेदा । 2) Bḍ. -वाः ।

47 = Bḍ. II. 71.151a = a; Br. 14.20a = a; H. 1928; Vā. 96.149b, 150a. 1) H. वव्रे । 2) H. कुरुनन्दन ।

48 = Bḍ. II. 71.151b, 152a; H. 1929; Vā. 96.150b, 151a. 1) Vā. अनपत्याय । 2) Bḍ. पृथां दुहितरं शूरः । 3) Bḍ. वै । 4) Bḍ. -स्मात् सा तु स्मृता कुन्ती । 5) Vā. तथा ।

| $48_1$ = Bḍ. II. 71.152b, 153; Vā. 96.151b, 152.

49 = Br. 14.23, 24a; H. 1933, 1934a. 1) Br. -र्मो ज- । | $48_2$ = Bḍ. II. 71.154; Vā. 96.153.

भीमसेनस्तथा वाताद्
इन्द्राच्चैव धनंजयः।
लोकेऽप्रतिरथो वीरः
शक्रतुल्यपराक्रमः ॥ 49 ॥

इन्द्राद् धनंजयं चैव
पृथा पुत्रानजीजनत् ॥ $48_2$ ॥
माद्रवत्यां[1]) तु जनिता-
वाश्विनाविति विश्रुतम्।
नकुलः सहदेवश्च
रूपसत्त्वगुणान्वितौ ॥ 49 ॥

पृथुकीर्त्यां तु संजज्ञे
तनयो वृद्धशर्मणः।
करूषाधिपति[1]र्वीरो दन्तवक्रो महाबलः ॥ 50 ॥

जज्ञे तु[1]) श्रुतदेवायां
तनयो वृद्धशमणः।

कैकेय्यां श्रु[1]त[2]कीर्त्यां तु जज्ञे संतर्दनो *बली*[3])।
चेकितान-बृहत्क्षत्रौ तथैवान्यौ महाबलौ।
विन्दानुविन्दावावन्त्यौ भ्रातरौ सुमहाबलौ ॥ $50_1$ ॥

श्रुतश्रवायां चैद्यस्तु[1]) शिशुपालो *बभूव ह*[2]),।
हिरण्यकशिपुर्योऽसौ
दैत्यराजोऽभवत् पुरा ॥ 51 ॥

दमघोषस्य राजर्षेः पुत्रो विख्यातपौरुषः,।
यः पुरा स[1]) दशग्रीवः संबभूवारिमर्दनः;।
वैश्रवणा[2]नुजस्तस्य कुम्भकर्णोऽनुज[3]स्तथा ॥ $51_1$ ॥
वसुदेवसुतान् वीरान् कीर्तयिष्याम्यतः परम्[1]),।
वृष्णेस्त्रिविधमेवं तु बहुशाखं महौजसम्।
धारयन् विपुलं वंशं नानर्थैरिह युज्यते ॥ $51_2$ ॥

याः पत्न्यो वसुदेवस्य
चतुर्दश वराङ्गनाः।
पौरवी रोहिणी *नाम*[1]) मदिरा चापरा *तथा*[2])।
वैशाखी च *तथा भद्रा*[3]) सुनाम्नी चैव पञ्चमी[4]) ॥ 52 ॥

पत्न्यस्तु वसुदेवस्य
त्रयोदश वराङ्गनाः।

---

$50^a$ = Br. 14.21$^b$; H. 1931$^b$.

| 49 = Bḍ. II. 71.155; Vā. 96.154. 1) Bḍ. –त्या।
| $50^a$ = Bḍ. II. 71.156$^a$; Vā. 96.155$^a$. 1) Vā. च।

$50^b$ = Bḍ. II. 71.156$^b$; Br. 14.22$^a$; H. 1932$^a$; Vā. 96.155$^b$. 1) Bḍ. –ते–।

| $50_1$ = Bḍ. II. 71.157, 158$^a$; Vā. 96.156, 157$^a$. 1) Bḍ. –याच्छ्रु–। 2) Bḍ. –ति–। 3) Vā. –नः पुनः।

$51^a$ = Bḍ. II. 71.158$^b$; Br. 14.20$^b$; H. 1930$^b$; Vā. 96.157$^b$. 1) H. –चस्य। 2) Br. ऽभवन् नृपः; H. महाबलः।

$51^b$ = Br. 14.21$^a$; H. 1931$^a$.

| $51_1$ = Bḍ. II. 71.159, 160$^a$; Vā. 96.158, 159$^a$. 1) Vā. –रासीत्। 2) Vā. पद्मश्रवा–। 3) Vā. रुचकन्यानुज–।
| $51_2$ = Br. 14.34$^b$, 35; H. 1945, 1946. 1) H. –मि ताच्छृणु।

$52^a$ = Br. 14.36$^a$; H. 1947$^a$.

| $52^a$ = Bḍ. II. 71.160$^b$; Vā. 96.159$^b$.

$52^{bc}$ = Bḍ. II. 71.161; Br. 14.36$^b$, 37$^a$; H. 1947$^b$, 1948$^a$; Vā. 96.160$^{ab}$. 1) Bḍ. Vā. चैव। 2) Br. मदिरादित(स्त)थावरा; H. मदिरापि तथा धरा। 3) Bḍ. Vā. तथैव भद्रा वैशाखी। 4) Bḍ. –म्नी पञ्चमी तथा।

सहदेवा शान्तिदेवा श्री[1]देवा[2]) देवरक्षिता।
वृक[3]देवोपदेवा[4]) च देवकी चैव सप्तमी[5])।
सुतनुर्वडवा चैव
द्वे एते परिचारिके ॥ 53 ॥

| सुगन्धी[1]) वनराजी च
| द्वे चान्ये परिचारिके ॥ 53 ॥

पौरवी रोहिणी[1]) *नाम*[2]) वाह्ली[3]कस्यात्म[4]जाभवत्।
ज्येष्ठा पत्नी *महाभागा*[5]) दयितानकदुन्दुभेः ॥ 54 ॥

लेभे ज्येष्ठं[1]) सुतं रामं सारणं[2]) शठमेव च[3])।
दुर्दमं दमनं शु[4]भ्रं पिण्डारककुशीनरम्[5]) ॥ 55 ॥

चित्रां[1]) नाम कुमारीं[2]) च, रोहिणीतनया नव[3])।
वसुदेवाच्च देवक्यां
जज्ञे शौरिर्महायशाः,।
रामाच्च निशठो जज्ञे
रेवत्यां दयितः सुतः ॥ 56 ॥

| पु[1]त्रौ रामस्य जज्ञाते
| विज्ञातौ निशठोल्मुकौ[2]) ॥ 56 ॥

| पार्श्वी च पार्श्वमर्दी[1]) च शिशुः सत्यधृतिस्तथा।
| मन्दवा[2]ह्योऽथ रामाण[3]गिरिकौ[4]) गिरिरे[5]व च ॥ $56_1$ ॥
| शुल्कगुल्मोऽति[1]गुल्मश्च दरिद्रान्तक एव च।
| कुमार्यश्चापि पञ्चान्या[2]), नामतस्ता निबोधत ॥ $56_2$ ॥
| अर्चिष्मती सुनन्दा च सुरसा सुवचास्तथा।
| तथा शतबला चैव सारणस्य सुतास्त्विमाः ॥ $56_3$ ॥
| भद्राश्वो भद्रगुप्तिश्च भद्रविष्ट[1]स्तथैव च।
| भद्रबाहुर्भद्ररथो भद्रकल्पस्तथैव च ॥ $56_4$ ॥

---

53ab = Bḍ. II. 71.162; Br. 14.37b, 38a; H. 1948b, 1949a; Vā. 96.160bII = bII. 1) H. सन्-। 2) Br. -ची। 3) Bḍ. धृत-। 4) Br. H. -व्युपदेवी। 5) Bḍ. Vā. -की सप्तमी तथा।

53c = Br. 14.38b; H. 1949b.

| 53c = Bḍ. II. 71.163a; Vā. 96.161a. 1) Bḍ. -न्धा; Vā. -न्धिर्।

54 = Bḍ. II. 71.163b, 164a; Br. 14.39; H. 1950; Vā. 96.161b, 162a. 1) Bḍ. Vā. रोहिणी पौरवी। 2) Bḍ. Vā. चैव। 3) Br. -ह्लि-; Vā. वाल्मी-। 4) Bḍ. -स्यात्मु-। 5) Bḍ. -ग; H. मुनिश्रेष्ठा; Br. -राज।

55 = Bḍ. II. 71.164b, 165a; Br. 14.40; H. 1951; Vā. 96.162b, 163a. 1) Bḍ. Vā. ज्येष्ठं लेभे। 2) Br. शारण्यं; H. शरण्यं। 3) Bḍ. हि; S. तथा; Vā. निशवं तथा। 4) H. श्व-। 5) Bḍ. Vā. -कुशीतकौ।

56a = Bḍ. II. 71.165b; Br. 14.41a; H. 1952a; Vā. 96.163b. 1) Br. -त्रा। 2) Br. -री। 3) Bḍ. -ण्यष्टौ व्यजायत; H. दश।

56bc = Br. 14.42; H. 1953.

| 56b = Bḍ. II. 71.166a; Vā. 96.164a. 1) Vā. पौ-। 2) Vā. निशितोल्मुकौ।

| $56_1$ = Bḍ. II. 71.166b, 167a; Vā. 96.164b, 165a. 1) Vā. T. -नन्दी। 2) Vā. -चा-। 3) Bḍ. -र्णा। 4) Bḍ. -को। 5) Vā. T. -र ए-।
| $56_2$ = Bḍ. II. 71.167b, 168a; Vā. 96.165b, 166a. 1) Vā. ल्मेति। 2) Vā. -श्चाया।
| $56_3$ = Bḍ. II. 71.168b, 169a; Vā. 96.166b, 167a.
| $56_4$ = Bḍ. II. 71.169b, 170a; Vā. 96.167b, 168a. 1) Vā. T. -विच-; V. -विन्न-।

| सुपार्श्वकः कीर्तिमांश्च रोहिताश्वः *शठात्मजाः*[1]) ।
| दुर्दमश्चा[2]भिभूतश्च रोहिण्याः कुलजाः स्मृताः ।
| नन्दोपनन्दौ मित्रश्च कुक्षिमित्रस्तथा *बलः*[3]) ॥ 56₅ ॥
| चित्रोपचित्रौ[1]) कृतकस्तुष्टिः[2]) पुष्टिरथाप्सरः ।
| मदिरायाः सुता ह्येते *वसुदेवाद्*[4]) विजज्ञिरे 56₆ ॥
| उपबिम्बोऽथ बिम्बश्च सत्त्वदन्तमहौजसौ ।
| चत्वार एते विख्याता भद्रापुत्रा महाबलाः ॥ 56₇ ॥
| वैशाख्या[1]मदधा[2]च्छौरिः पुत्रं कौशिकमुत्तमम्, ।
| देवक्यां जज्ञिरे शौरेः[3]) सुषेणः कीर्तिमानपि ॥ 56₈ ॥
| *उदायी*[1]) भद्रसेनश्च ऋजु[2]दायश्च पञ्चमः ।
| षष्ठो भद्रविदेहश्च[3]), कंसः सर्वान् जघान तान् ॥ 56₉ ॥
| अथ तस्यामवस्थायामायुष्मान् संबभूव ह ।
| लोकनाथः पुनर्विष्णुः पूर्वं[1]) कृष्णः प्रजापतिः, ।
| अनुजाताभवत् कृष्णा[2]) सुभद्रा भद्रभाषिणी ॥ 56₁₀ ॥

*कृष्णा*[1]) सुभद्रेति पुनर्व्या[2]ख्याता *वृष्णिनन्दिनी*[3]) ।
सुभद्रायां रथी पार्थादभिमन्युरजायत ॥ 57 ॥

| [ अक्रूराद् काशिकन्यायां सत्यकेतुरजायत ] ।

वसुदेवस्य भार्यासु महाभागासु सप्तसु ।
ये पुत्रा जज्ञिरे शूरा, नामत[1]स्तान् निबोधत[2]) ॥ 58 ॥

| *पूर्वाद्याः*[1]) सहदेवायां शूराद् *वै*[2]) *जज्ञिरे सुताः*[3]), ।
| शान्तिदेवा जन[4]स्तम्बं[5]) शौरेर्ज[6]ज्ञे कुलोद्वहम्, ॥ 58₁ ॥

---

| 56₅ = Bḍ. II. 71.170b, 171; Vā. 96.168b, 169. 1) Vā. –श्वश्च भद्रजः । 2) Bḍ. –मस्या–; Vā. –मंदश्चा– । 3) Vā. चलः ।
| 56₆ = Bḍ. II. 71.172; Vā. 96.170. 1) Vā. –त्रे । 2) Vā. कन्ये च स्थितः । 3) Bḍ. ता –ए । 4) Vā. सुदेवोऽथ ।
| 56₇ = Bḍ. II. 71.173; Vā. 96.171.
| 56₈ = Bḍ. II. 71.174; Vā. 96.172. 1) Bḍ. वैशाल्या– । 2) Vā. T. –ख्यां समदा–; V. –मददा– । 3) Vā. –रिः ।
| 56₉ = Bḍ. II. 71.175; Vā. 96.173. 1) Bḍ. उदर्षिर्; Vā. T. तदयो; V. तदायी । 2) Vā. यज्ञु– । 3) Bḍ. हि भद्रदेवश्च; Vā. भद्रविदेकस्य ।
| 56₁₀ = Bḍ. II. 71.176, 177a; Vā. 96.174, 175a. 1) Vā. –वै– । 2) Bḍ. –ष्णात् ।

57 = Bḍ. II. 71.177b, 178a; Br. 14.41b, 43a; H. 1952b, 1954a; Vā. 96.175b, 176a. 1) Br. H. चित्रा । 2) Br. H. –विं– । 3) Br. मुनिसत्तमाः; H. कुरुनन्दन ।
| [ ] = Br. 14.43b; H. 1954b.

58 = Bḍ. II. 71.178b, 179a; Br. 14.44; H. 1955; Vā. 96.176bc. 1) Br. –राः समस्तां– । 2) H. –ध मे ।
| 58₁ = Bḍ. II. 71.179b, 180a; Vā. 96.177. 1) Vā. अतोऽस्य । 2) Vā. –रो जज्ञे । 3) Vā. भयासखः । 4) Vā. शान्तिदेवाजनत् । 5) Vā. –म्बु । 6) Vā. –री ज– ।

| उप[1]सङ्गं वसुं चापि तनयौ देवरक्षिता[2]) ।
| एवं दश सुतास्तस्य, कंसस्तानप्यघातयत् ॥ $58_2$ ॥

भोजश्च विजयश्चैव
शान्तिदेवासुतावुभौ, ।
वृकदेवः सुदेवायां[1])
गदश्चास्तां सुतावुभौ ॥ 59 ॥

| विजयं रोचनं चैव
| वर्धमानं च देवलम्[1]) ।
| एतान् सर्वान् महाभागा-
| नुपदेवा व्यजायत[2]) ॥ 59 ॥

अगावहं[1]) महात्मानं[2]) वृकदेवी व्य[3]जायत ।
कन्या विगर्तराजस्य
भार्या[1]) वै शिशिरायणेः[2]) ॥ 60 ॥

| श्रीदेवायां स्वयं जज्ञे
| मन्दको नाम नामतः[1]) ॥ 60 ॥

| सप्तमी[1]) देवकी पुत्रं सुनामा[2]) सुषुवे सुतम्[3]) ।
| गवेषणं महाभागं संग्रामे चित्रयोधिनम् ॥ $60_1$ ॥
| श्राद्धदेव्यां पुरोधाने[1]) वने[2]) तु विचरन्[3]) द्विजाः ।
| वैश्या[4]यामदधाच्छौरिः पुत्रं कौशिकमव्ययम् ॥ $60_2$ ॥
| सुगन्धी वनराजी च शौरेरास्तां परिग्रहौ[1]), ।
| पुण्ड्रश्च कपिलश्चैव सुगन्ध्याश्चा[2]त्मजौ तु तौ, ।
| तयो राजाभवत् पुण्ड्रः, कपिलस्तु वनं ययौ ॥ $60_3$ ॥
| अन्यस्याम[1]भवद् वीरो वसुदेवात्मजो बली ।
| जरा[2]) नाम निषादोऽसौ प्रथमः स धनुर्धरः ॥ $60_4$ ॥

उद्धवो[1]) देवभागस्य[2]) महाभागः सुतोऽभवत् , ।
पण्डितानां परं[3]) प्राहुर्देवश्रवसमुत्तमम्[4]) ॥ 65 ॥

---

| $58_2$ = Bḍ. II. 71.181$^b$, 182$^a$; Vā. 96.178. 1) Bḍ. –पा– । 2) Vā. –तौ ।

59 = Br. 14.45; H. 1956. 1) H. सुनामायां ।

| 59 = Bḍ. II. 71.182$^b$, (183$^a$); Vā. 96.179. 1) Vā. तथैव च । 2) Bḍ. एतान् महात्मनः पुत्रान् सुषाव शिशिरावती ।

$60^a$ = Bḍ. II. 71.180$^b$; Br. 14.46$^a$; H. 1957$^a$; Vā. 96.180$^a$. 1) Bḍ. आगावहो; Vā. T. स्वगाह्वं; V. आगह्वं । 2) Bḍ. –त्मा च । 3) Bḍ. –देव्याम–; Vā. –वी त्व– ।

$60^b$ = Br. 14.46$^b$; H. 1957$^b$. 1) Br. V. H. भर्ता । 2) H. –णः ।

| $60^b$ = Bḍ. II. 71.181$^a$; Vā. 96.(180$^b$). 1) Vā. आगाही च स्वसा चैव सुरूपा शिशिरायिणी ।

| $60_1$ = Bḍ. II. 71.183$^b$, 184$^a$; Va. 96.181. 1) Vā. –मं । 2) Vā. T. –नासा । 3) Bḍ. –मानमसूयत; Vā. T. भुवम् ।
| $60_2$ = Bḍ. II. 71.184$^b$, 185$^a$; Vā. 96.182. 1) Vā. –देवं पुरा येन । 2) Vā. T. –नं । 3) Vā. विरचितं । 4) Vā. सैव्या– ।
| $60_3$ = Bḍ. II. 71.185$^b$, 186; Vā. 96.183. 1) Vā. –हः । 2) Vā. वसुदेवा– ।
| $60_4$ = Bḍ. II. 71.187; Vā. 96.184. 1) Vā. तस्यां सम– । 2) Vā. राजा ।

65 = Bḍ. II. 71.188; Br. 14.25$^b$, 26$^a$; H. 1935$^b$, 1936$^a$; Vā. 96.185. 1) Bḍ. Vā. विख्यातो । 2) Vā. –रातस्य । 3) Bḍ. Vā. मतं । 4) Bḍ. Vā. –वसमुद्भवम् ; H. –वसमुद्धवम् ।

अश्मक्यां[1]) प्रासवान्[2]) पुत्रमनाधृष्टिर्य[3]शस्विनम् ।
निवृत्तशत्रुं[4]) शत्रुघ्नं श्राद्धदेवं महाबलम्[5]) ॥ 66 ॥

अ[1]जायत श्राद्धदेवो[2]), नैषाधिर्यः[3]) परि[4]श्रुतः, ।
एकलव्यो महावीर्यो[5]) निषाधैः[6]) परिवर्धितः ॥ 67 ॥

गण्डूषाय त्व[1]पुत्राय
विष्वक्सेनो ददौ सुतान् ।
चारुदेष्णं सुदेष्णं[2]) च
पञ्चालं कृतलक्षणम् ॥ 68 ॥

गण्डूषायानपत्याय
कृष्णस्तुष्टोऽददात् सुतौ ।
चारुदेष्णं च साम्बं च
कृतास्त्रौ शस्तलक्षणौ ॥ 68 ॥

असंग्रामेण यो वीरो नावर्तत कदाचन ।
रौक्मिणेयो महाबाहुः कनीयान् द्विजसत्तमाः[1]), ॥ $68_1$ ॥
वायसानां सहस्राणि यं यान्तं पृष्ठतोऽन्वयुः ।
चारुनद्योपभो[1]क्ष्यामश्चारुदेष्णहतानिति[2]) ॥ $68_2$ ॥

तन्त्रिजस्तन्त्रि[1]पालश्च
सुतौ कनवकस्य तौ[2]), ।
वृकाय वै[1]) त्वपुत्राय वसुदेवः प्रतापवान् ॥ 69 ॥

तन्त्रिजस्तन्तिपाल[1]श्च
द्वौ[2]) पुत्रौ नन्दन[3]स्य तु[4]) ।

सौमिं[1]) ददौ सुतं वीरं शौरिः[2]) कौशिकमेव च [3]), ।

वीरु[1]श्चाश्वहनुश्चैव
वीरौ तावथ गृध्निमौ ॥ 70 ॥
श्यामपुत्रः शमीकस्तु,
शमीको राज्यमावहत्, ।

सृञ्जयस्य धनु[1]श्चैव
विरजाश्च सुताविमौ[2]) ॥ 70 ॥
अनपत्योऽभवच्छ्यामः,
शमी[1]कस्तु वनं ययौ ।

---

66 = Bḍ. II. 71.189; Br. 14.26$^b$, 27$^a$; H. 1936$^b$, 1937$^a$; Va. 96.186. 1) Br. T. –क्यं । 2) Bḍ. Va. लभते । 3) Va. –ष्टिं य– । 4) H. निनर्तशत्रुं; Va. निवर्तः शक्र– । 5) Br. श्रुतदेवा त्वजायत; H. देवश्रवा व्यजायत ।

67 = Bḍ. II. 71.190; Br. 14.27$^b$, 28$^a$; H. 1937$^b$, 1938$^a$; Va. 96.187. 1) Bḍ. व्य– । 2) Br. श्रुतदेवात्मजास्ते तु; H. श्रुतदेवाप्रजातस्तु । 3) Br. षादि–; Va. –धादि–; V. नैषधादि– । 4) H. प्रति–; Va. र्यतः । 5) Bḍ. –भागो; Br. मुनिश्रेष्ठा; H. –राज । 6) Bḍ. H. –दैः ।

68 = Br. 14.29; H. 1939, 1940$^a$. 1) Br. ह्य– । 2) H. –चारुं ।

68 = Bḍ. II. 71.191; Va. 96.188.

$68_1$ = Br. 14.30; H. 1940$^b$, 1941$^a$. 1) H. भरतर्षभ ।
$68_2$ = Br. 14.31; H. 1941$^b$, 1942$^a$: 1) H. चारुमासनि यो– । 2) H. –तानि तु ।

69$^a$ = Br. 14.32$^a$; H. 1942$^b$. 1) H. –न्द्रि– । 2) H. तु ।

69$^a$ = Bḍ. II. 71.192$^a$; Va. 96.189$^a$. 1) Bḍ. रन्तिश्च रन्तिपाल–; Va. –माल– । 2) Va. स्व– । 3) Va. कनक– । 4) Bḍ. च ।

69$^b$ = Bḍ. II. 71.192$^b$; Br. 14.28$^b$; H. 1938$^b$; Va. 96.189$^b$. 1) Br. वत्सवते; H. वत्सावतेस्; Va. वस्तावनेस्; V. वत्सा– ।

70$^a$ = Bḍ. II. 71.193$^a$; Br. 14.28$^c$; H. 1939$^a$; Va. 96.189$^c$. 1) Br. H. अद्भिर्; Va. T. सौतिर्; V. सौमिर् । 2) Va. –रिं । 3) Br. H. –मौरसम् ।

70$^b$ = Br. 14.32$^b$; H. 1943$^a$. 1) H. –र– ।

70$^b$ = Bḍ. II. 71.193$^b$; Va. 96.190$^a$. 1) Va. तपाश्च कोधनु– । 2) Va. –जाः श्याम-सृञ्जिमौ ।

जुगुप्समानो भोजत्वाद्
राजसूयमवाप सः ॥ 71 ॥
अजातशत्रुः शत्रूणां
जज्ञे तस्य विनाशनः ।

जुगुप्समानो भोजत्वं
राजर्षित्वमवाप्तवान्[2]) ॥ 71 ॥

जिज्ञासां पौरुषे चक्रे, न चस्कन्दे च[1]) पौरुषम्[2]) ।
कृष्णायससमप्रख्यो वर्षे द्वादशमे तथा ॥ $71_1$ ॥
मिथ्याभिशस्तो गार्ग्यस्तु मन्युनाभि[1]समीरितः ।
गोप[2]कन्यामुपादाय मैथुनायोपचक्रमे ॥ $71_2$ ॥
गोपाली त्वप्स[1]रास्तस्य गोपस्त्रीवेषधारिणी ।
धारयामास गार्ग्यस्य गर्भं दुर्धरमच्युतम्[2]) ॥ $71_3$ ॥
मानुष्यां गार्ग्य[1]भार्यायां नियोगाच्छूलपाणिनः ।
स कालयवनो नाम जज्ञे राजा महाबलः ॥ $71_4$ ॥
वृष[1]पूर्वार्धकायास्तम[2]वहन् वाजिनो रणे[3]), ।
अपुत्रस्य स राज्ञस्तु ववृधेऽन्तःपुरे शिशुः ॥ $71_5$ ॥
यवनस्य मुनिश्रेष्ठाः[1]) स कालयवनोऽभवत् ।
स युद्धकामो[2]) नृपतिः पर्यपृच्छद् द्विजोत्तमान्[3]), ॥ $71_6$ ॥
वृष्ण्यन्धककुलं तस्य नारदोऽकथयद् विभुः ।
अक्षौहिण्या तु सैन्यस्य मथुरामभ्ययात् तदा, ॥ $71_7$ ॥
दूतं संप्रेषयामास वृष्ण्यन्धकनिवेशनम् ।
ततो वृष्ण्यन्धकाः कृष्णं पुरस्कृत्य महामतिम् ॥ $71_8$ ॥
समेता मन्त्रयामासुर्यवनस्य भयात् तदा, ।
कृत्वा च[1]) निश्चयं सर्वे पलायनमरोचयन् ॥ $71_9$ ॥
विहाय मथुरां रम्यां मानयन्तः पिनाकिनम् ।
कुशस्थलीं द्वारवतीं निवेशयितुमीप्सवः ॥ $71_{10}$ ॥

इति कृष्णस्य जन्मेदं
यः शुचिर्नियतेन्द्रियः ।
पर्वसु श्रावयेद् विद्वा-
ननृणः, स सु[1]खी भवेत् ॥ 72 ॥

य इदं जन्म कृष्णस्य
पठेत्[1]) नियतव्रतः ।
श्रावयेद् ब्राह्मणश्चापि[2]),
सु[3]महत् सुखमाप्नुयात् ॥ 72 ॥

71 = Br. 14.33, 34[a]; H. 1943[b], 1944.

71 = Bd. II. 71.194; Va. 96.190[bc]. 1) Va. श्याम- । 2) Va. -प्नुयात् ।

$71_1$ = Br. 14.47; H. 1958. 1) H. -न्येऽथ । 2) H. -षे ।
$71_2$ = Br. 14.48; H. 1959. 1) Br. -नाति- । 2) Br. T. घोष- ।
$71_3$ = Br. 14.49; H. 1960. 1) Br. चाप्स- । 2) H. -त ।
$71_4$ = Br. 14.50; H. 1961. 1) Br. गर्ग- ।
$71_5$ = Br. 14.51; H. 1962. 1) Br. T. वृत्त- । 2) Br. यस्तु । 3) Br. सिंहसंहननो युवा ।
$71_6$ = Br. 14.52; H. 1963. 1) H. महाराज । 2) Br. आयुध्यमानो । 3) Br. T. -मं ।
$71_7$ = Br. 14.53; H. 1964.
$71_8$ = Br. 14.54; H. 1965.
$71_9$ = Br. 14.55; H. 1966. 1) Br. वि- ।
$71_{10}$ = Br. 14.56; H. 1967.

72 = Br. 14.57; H. 1968. 1) H. सुसु- ।

72 = Bd. II. 71.195; Va. 96.191. 1) Bd. -ठते । 2) Bd. -णं वापि । 3) Bd. स ।

## सन्दर्भस्तवकः II

( Mt. 45.22—33, 44.61—85, 46.1—29; P.1 I. $13.96^{b}$—$106^{a}$; $44^{b}$—69; $107^{b}$—134; P.2 V. $13.97^{b}$—$107^{a}$; $45^{b}$—$72^{a}$; $108^{b}$—138 ).

अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्[1]) वृष्णिनन्दनात्[2]), ।
सत्यकस्तस्य पुत्रस्तु, सात्यकिस्तस्य चात्मजः ॥ 1 ॥
सत्यवान् युयुधानस्तु शिनेर्नप्ता प्रतापवान्, ।
असङ्गो युयुधानस्य, द्युम्निस्तस्यात्मजोऽभवत् ॥ 2 ॥
द्युम्नेर्युगंधरः पुत्र इति शैन्याः प्रकीर्तिताः, ।
अनमित्रान्वयो ह्येष व्याख्यातो वृष्णिवंशजः ॥ 3 ॥

अनमित्राच्च[1]) संजज्ञे वृष्णि[2]वीरो युधाजितः, ।
अन्यौ तु[3]) तनयौ वीरौ वृष[4]भः क्षत्र[5]) एव च ॥ 4 ॥

वृ[1]षभः काशिराजस्य सुतां भार्यामविन्दत[2]), ।
जयन्तस्तु[3]) जतन्त्यां तु[4]) पुत्रः समभवच्छुभः[5]) ॥ 5 ॥

सदायज्वा[1]तिधी[2]रश्च श्रुतवानतिथिप्रियः ।
अक्रूरः सुषुवे तस्मात् सुदक्षो[3]) भूरि[4]दक्षिणः, ॥ 6 ॥

रत्ना[1]) कन्या च शैब्यस्य[2]), अक्रूरस्तामवाप्तवान् ।
पुत्रानुत्पादयामास एकादश महाबलान् ॥ 7 ॥

उपलम्भं[1]) सदालम्भमुत्कलं[2]) चार्यशैशवम्[3]) ।
सधीरं च[4]) सदापक्षं[5]) शत्रुघ्नं[6]) वारिमेजयम्[7]) ॥ 8 ॥

धर्मभृद्धर्मवर्माणौ[1]) धृष्टमानं[2]) तथैव च ।
सर्वे ते[3]) प्रतिहोतारो[4]) रत्नायां[5]) जज्ञिरे च[6]) ते ॥ 9 ॥

---

1 = Mt. 45.22; P.1 I. $13.96^{b}$ = a; P.2 V. $13.97^{b}$ = a. 1) P.1 –ष्ठो । 2) P.1 P.2 –नः ।
2 = Mt. 45.23.
3 = Mt. 45.24.
4 = Mt. 45.25; P.1 I. 13.97; P.2 V. 13.98. 1) Mt. –त्रस्य । 2) Mt. पृश्न्यां । 3) P.1 च । 4) P.1 P.2 –रावृप- । 5) P.1 P.2 V. –मश्वित्र ।
5 = Mt. 45.26; P.1 I. $13.98^{a}$, $99^{a}$; P.2 V. $13.99^{a}$, $100^{a}$. 1) P.1 P.2 ऋ– । 2) P.1 –निन्दिताम् । 3) P.1 P.2 तस्य । 4) P.1 वै; P.2 –न्त्यास्तु । 5) P.1 –वत् ततः ।
6 = Mt. 45.27; P.1 I. $13.99^{b}$, $100^{a}$; P.2 V. $13.100^{b}$, $101^{a}$. 1) Mt. –यज्ञो । 2) Mt. ऽतिवी– । 3) Mt. सदायशो–; P.2 T. –दीक्षो– । 4) Mt. ऽति ।
7 = Mt. 45.28; P.1 I. $13.100^{b}$, $101^{a}$; P.2 V. $13.101^{b}$, $102^{a}$. 1) P.1 P.2 रत्न– । 2) P.1 P.2 –ब्या च ।
8 = Mt. 45.29; P.1 I. $13.101^{b}$, $102^{a}$; P.2 V. $13.102^{b}$, $103^{a}$. 1) Mt. –म्भः । 2) Mt. –म्भो वृकलो । 3) Mt. वीर्यं एव च । 4) Mt. सवीतरः । 5) Mt. –क्षः; P.1 यक्षं । 6) Mt. –घ्नो । 7) Mt. –यः ।
9 = Mt. 45.30; P.1 I. $13.102^{b}$, $103^{a}$; P.2 V. $13.103^{b}$, $104^{a}$. 1) P.1 P.2 धर्मवृष्टिं( P.1 P.2 V. दृष्टिं )च धर्मं च । 2) Mt. –नस् ; P.1 सृष्टिमौलिं; P.2 सृष्टमौलिं । 3) P.1 P.2 च । 4) P.1 P.2 –हर्तारो । 5) P.1 P.2 –रत्नानां । 6) P.2 तु ।

अक्रूरादुग्र[1]सेनायां सुतौ द्वौ कुलवर्धनौ[2])।
देववानुपदेवश्च जज्ञाते देवसंनिभौ[3])॥ 10 ॥

अश्विन्यां च ततः[1]) पुत्राः पृथुर्विपृथुरेव च।
अश्वत्थामा[2]) सु[3]बाहुश्च सुपार्श्वक-गवेषणौ॥ 11 ॥

वृष्टिनेमिः सुधर्मा च
तथा शर्यातिरेव च।
| रिष्टनेमिः सुवर्चा च
सुधर्मा मृदुरेव च।
सु[1]भूमिर्बहु[2]भूमिश्च श्रविष्ठा-श्रवणे स्त्रियौ[3])॥ 12 ॥

---

अन्धकात् काश्य[1]दुहिता सुषुवे चतुरः सुतान्।
कुकुरं भजमानं च शर्मि[2]) कम्बलवर्हिषम्॥ 13 ॥

कुकुरस्य सुतो[1]) वृष्णि[2]र्वृष्णे[3]स्तु तनयो धृतिः,।
कपोतरोमा तस्याथ[4]), तित्तिरि[5]स्तस्य चात्मजः॥ 14 ॥

तस्यासीत् तुम्बुरुसखा[1]) विद्वान् पुत्रो नलः[2]) किल।
ख्यायते तस्य नाम्ना स[3]) चन्दनोदक[4]दुन्दुभिः॥ 15 ॥

अस्यासीदभिजित् पुत्रस्ततो[1]) जातः पुनर्वसुः,।
| अपुत्रो ह्यभिजित् पूर्वमृषिभिः प्रेरितो मुदा,।
अश्वमेधं तु पुत्रार्थमाजहार[1]) नरोत्तमः॥ 16 ॥

---

10 = Mt. 45.31; P.1 I. 13.103$^{b}$, 104$^{a}$; P.2 V. 13.104$^{b}$, 105$^{a}$. 1) P.1 P.2 अक्रुराच्छूर-। 2) P.1 P.2 -नन्दनौ। 3) P.1 P.2 -संमतौ।

11 = Mt. 45.32; P.1 I. 13.104$^{b}$, 105$^{a}$; P.2 V. 13.105$^{b}$, 106$^{a}$. 1) P.1 P.2 त्रिचतुः-। 2) P.1 P.2 -ग्रीवो। 3) P.1 P.2 V. -ऽश्व-।

12$^{a}$ = Mt. 45.33$^{a}$.

| 12$^{a}$ = P.1 I. 13.105$^{b}$; P.2 V. 13.106$^{b}$..

12$^{b}$ = Mt. 45.33$^{b}$; P.1 I. 13.106$^{a}$; P.2 V. 13.107$^{a}$. 1) Mt. P.1 P.2 अ-। 2) Mt. -वंर्जे-। 3) Mt. स्त्रभिष्ठः श्रवणस्तथा; P.2 T. स्थविष्ठोऽनुवितस्तथा।

---

13 = Mt. 44.61; P.1 I. 13.44$^{b}$, 45$^{a}$; P.2 V. 13.45$^{b}$, 46$^{a}$. 1) Mt. अथ कक्कुस्य; P.1 P.2 सरकान्तस्य। 2) Mt. T. शशिं; V. शमि-; P.1 श्यामं; P.2 समी-; V. श्यामा-।

14 = Mt. 44.62; P.1 I. 13.45$^{b}$, 46$^{a}$; P.2 V. 13.46$^{b}$, 47$^{a}$. 1) P.1 P.2 -रस्यात्मजो। 2) P.1 P.2 V. वृष्टि-; P.2 T. धृष्णु-। 3) P.1 P.2. V. -र्वृष्टे-; P.2 T. -र्धृष्णो-। 4) P.1 -स्यापि। 5) Mt. तैत्तिरि-; P.2 T. नं मत्ति-।

15 = Mt. 44.63; P.1 I. 13.46$^{b}$, 47$^{a}$; P.2 V. 13.47$^{b}$, 48$^{a}$. 1) Mt. तनुजः सर्पो; P.1 बहुपुत्रस्तु; P.2 सुसुतस्तस्माद्। 2) P.1 P.2 नरिः। 3) P.1 P.2 नामान्यच्। 4) Mt. T. नन्दनोदर-।

16$^{a}$ = Mt. 44.64$^{a}$; P.1 I. 13.47$^{b}$; P.2 V. 13.48$^{b}$. 1) Mt. तस्मिन् प्रवितते जज्ञे अभि-।

| 16$^{b}$ = P.1 I. 13.48$^{a}$; P.2 V. 13.49$^{a}$.

16$^{b(c)}$ = Mt. 44.64$^{b}$; P.1 I. 13.48$^{b}$; P.2 V. 13.49$^{b}$. 1) P.1 -जुहाव।

तस्य मध्येऽतिरात्रस्य[1]) सभामध्यात् समुत्थितः ।
अत[2]स्तु विद्वान् ध[3]र्मज्ञो यज्वा[4]) दाता[5]) पुनर्वसुः ॥ 17 ॥

तस्यासीत् पुत्रमिथुनं बभूवाभिजितः[1]) किल ।
आहुकश्चाहुकी चैव ख्यातौ[2]) मतिमतां वरौ[3]) ॥ 18 ॥

इमांश्चोदाहरन्त्यत्र श्लोकान् प्रति तमाहुकम्[1]) ।
सोपासङ्गानुकर्षाणां सध्वजानां[2]) वरूथिनाम् ॥ 19 ॥

रथानां मेघघोषाणां सहस्राणि दशैव तु ।
नासत्यवादी नातेजा नायज्वा[1]) नासहस्रदः[2]) ॥ 20 ॥

| | |
|---|---|
| नाशुचिर्नाप्यविद्वान् हि,<br>यो भोजेष्वभ्यजायत ।<br>आहुकस्य भृतिं प्राप्ता,<br>इत्येतद् वै तदुच्यते ! ॥ 21 ॥ | नाशुचिर्नाप्यविद्वांसो<br>न भोजादधिकोऽभवत् ।<br>आहुकान्तमनुप्राप्ता[1]),<br>इत्येषो[2]ऽन्वय उच्यते ॥ 21 ॥ |

आहुकश्चाप्यवन्तीषु स्वसारं चाहुकीं ददौ ।
आहुकात् काश्य[1]दुहिता द्वौ पुत्रौ[2]) समसूयत ॥ 22 ॥

देवकं[1]) चोग्रसेनं[2]) च देवगर्भसमावुभौ ।
देवकस्य सुता वीरा[3]) जज्ञिरे त्रिदशोपमाः ॥ 23 ॥

देववानुपदेवश्च सु[1]देवी देवरक्षितः ।
तेषां स्वसारः सप्तासन्[2]), वसुदेवाय ता ददौ ॥ 24 ॥

| | |
|---|---|
| देवकी श्रुतदेवी च<br>मित्रदेवी यशोधरा ।<br>श्रीदेवी सत्यदेवी च<br>सुतापी[1]) चेति सप्तमी ॥ 25 ॥ | देवकी श्रुतदेवा च<br>यशोदा च श्रुतिश्रवा ।<br>श्रीदेवा चोपदेवा च<br>सुरूपा[1]) चेति सप्तमी ॥ 25 ॥ |

---

17 = Mt. 44.65; P.1 I. 13.49; P.2 V. 13.50. 1) P.1 P.2 विचरतः । 2) P.1 P.2 अन्ध– । 3) Mt. क– । 4) P.1 P.2 यज्ञ– । 5) P.2 दानात् ।

18 = Mt. 44.66; P.1 I. 13.50; P.2 V. 13.51. 1) Mt. –वाविजितं; P.1 P.2 -वसोश्चारिजितः । 2) Mt. T. –तं; P.1 P.2 –ता । 3) Mt. T. –रम् ; P.1 P.2 –र ।

19 = Mt. 44.67; P.1 I. 13.51; P.2 V. 13.52, 53ª. 1) P.1 P.2 –कांश्चातिरसात्मकान् । 2) P.1 P.2 तनुत्राणां ।

20 = Mt. 44.68; P.1 I. 13.52; P.2 V. 13.53ᵇ, 54ª. 1) P.1 –वादिनो भोजा नायज्ञा; P.2 नायज्ञो । 2) P.1 –दाः ।

21 = Mt. 44.69.

21 = P.1 I. 13.53; P.2 V. 13.54ᵇ, 55. 1) P.1 –प्त । 2) P.2 T. –त्येते ।

22 = Mt. 44.70; P.1 I. 13.54; P.2 V. 13.56. 1) P.1 P.2 –कस्यैव । 2) P.1 P.2 पुत्रौ द्वौ ।

23 = Mt. 44.71; P.1 I. 13.55; P.2 V. 13.57. 1) P.1 P.2 –कश् । 2) Mt. T. –नश् । 3) P.1 –ताश्चैव ।

24 = Mt. 44.72; P.1 I. 13.56; P.2 V. 13.58. 1) P.2 V. सं– । 2) P.1 P.2 –प्तैव ।

25 = A, 275.31ᵇ, 32ª; Mt. 44.73. 1) A. –[illegible] ।

25 = P.1 I. 13.57; P.2 V. 13.59. 1) P.1 T. सुरापी ।

नवोग्रसेनस्य सुताः, कंसस्तेषां तु[1]) पूर्वजः ।
न्यग्रोधश्च[2]) सुनामा च कङ्कः शङ्कुः सुभूषणः[3]) ॥ 26 ॥

*अजभू*[1]) राष्ट्रपालश्च युद्ध[2]मुष्टिः *सुमुष्टिकः*[3]) ।
तेषां स्वसारः पञ्चासन् कंसा कंसवती तथा ॥ 27 ॥

*सुतनू*[1]) राष्ट्रपाली च कङ्का चेति वराङ्गनाः ।
उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः ॥ 28 ॥

भजमानस्य पुत्रोऽथ[1]) रथिमुख्यो विदूरथः, ।
राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ॥ 29 ॥
राजाधिदेवस्य सुतौ जज्ञाते वीर[1]सं[2]मतौ ।
*नियमव्रतप्रधानौ*[3]) शोणाश्वः श्वेतवाहनः ॥ 30 ॥

शोणाश्वस्य सुताः पञ्च शूरा रणविशारदाः ।
शमी च गदव[1]र्मा च *निकुन्तः*[2]) शत्रु[3]*जिच्छुचिः*[4]) ॥ 31 ॥

शमि[1]पुत्रः प्रतिक्षत्रः, प्रतिक्षत्रस्य चात्मजः ।
प्रतिक्षत्र[2]सुतो भोजो, हृदी[3]कस्तस्य चात्मजः ॥ 32 ॥

हृदी[1]कस्याभवन् पुत्रा दश भीमपराक्रमाः ।
कृतवर्माग्रजस्तेषां शतधन्वा च *मध्यमः*[2]), ॥ 33 ॥

देवार्हश्चैव *नाभ*[1]श्च भीषणश्च महाबलः ।
अजातश्चावि[2]जातश्च कनीयक[3]*करम्भकौ*[4]) ॥ 34 ॥

देवार्हस्य सुतो विद्वान् जज्ञे कम्बलबर्हिषः, ।
*असमौजाः*[1]) सु[2]तस्तस्य समौजाश्च '*सुतावुभौ*[3]) ॥ 35 ॥

अजातपुत्रस्य सुतौ
प्रजायेते समौजसौ ।

---

26 = Mt. 44.74; P.1 I. 13.58; P.2 V. 13.60. 1) P.1 च । 2) P.1 –स्तु । 3) Mt. –कुश्च भूयसः; P.1 P.2 सुभूश्च यः ।

27 = Mt. 44.75; P.1 I. 13.59; P.2 V. 13.61. 1) P.1 P.2 अन्यस्तु । 2) P.1 P.2 वद्ध– । 3) Mt. –दः; P.1 समुष्टिकः ।

28 = Mt. 44.76; P.1 I. 13.60; P.2 V. 13.62. 1) Mt. T. –तन्तू ; P.1 P.2 सुरमी ।

29 = Mt. 44.77; P.1 I. 13.61; P.2 V. 13.63. 1) P.1 P.2 ऽभूद् ।

30 = Mt. 44.78; P.1 I. 13.62; P.2 V. 13.64. 1) Mt. T. देव– । 2) Mt. –मि– । 3) P.1 P.2 क्षत्रव्रतेऽतिनिरतौ ।

31 = Mt. 44.79; P.1 I. 13.63; P.2 V. 13.65. 1) Mt. T. देवश–; P.1 P.2 V. राजश–; P.2 T. गदच– । 2) P.1 P.2 निमूर्तः । 3) P.2 T. चक्र– । 4) Mt. शक्रशत्रुजित् ।

32 = Mt. 44.80; P.1 I. 13.64[ab]; P.2 V. 13.66. 1) P.1 P.2 शमो– । 2) Mt. –क्षेत्रः । 3) P.2 –दि– ।

33 = Mt. 44.81; P.1 I. 13.64[c], 65[a]; P.2 V. 13.67. 1) P.2 –दि– । 2) P.1 P.2 सत्तमः ।

34 = Mt. 44.82; P.1 I. 13.65[b], 66[a]; P.2 V. 13.68. 1) P.1 P.2 –श्च सुभानु– । 2) Mt. T. –तो वन–; P.1 P.2 –श्च वि– । 3) P.1 करकश्च; P.2 कारकश्च । 4) P.1 P.2 V. करंधमः; P.2 T. –कः ।

35 = Mt. 44.83; P.1 I. 13.66[b], 67[a]; P.2 V. 13.69. 1) Mt. असामञाः । 2) P.1 P.2 –जास्त– । 3) Mt. T. तमोजातस्य चात्मजः; V. समोजास्तस्य तावुभौ ।

अजातपुत्रा विक्रान्तास्
त्रयः परमकीर्तयः ।

समौज[1]पुत्रा विख्याता[2]-
स्त्रयः परमधार्मिकाः ।

सुदंष्ट्र[1]श्च सुनाभ[2]श्च कृष्ण इत्यन्धका मताः[3]) ॥ 36 ॥
अन्धकानामिमं वंशं यः[1]) कीर्तयति[2]) नित्यशः, ।
आत्मनो विपुलं वंशं प्रजावानाप्नुते नरः[3]) ॥ 37 ॥

---

ऐक्ष्वाकी सुषुवे पुत्रं[1]) शूरं[2]) वै देव[3]मीढुषम् ।
मीढुषाज्[4]) जज्ञिरे शूराद्[5]) भोजायां पुरुषा[6]) दश ॥ 38 ॥
वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः, ।
देवभाग[1]स्ततो[2]) जज्ञे, ततो[3]) देवश्रवाः पुनः ॥ 39 ॥
अनाधृष्टिः[1]) शिनि[2]श्चैव नन्द[3]श्चैव ससृञ्जयः[4]) ।
श्यामः शमीकः[5]) संयूपः[6]); पञ्च चास्य वराङ्गनाः ॥ 40 ॥
श्रुतकीर्तिः पृथा चैव श्रुत[1]देवी श्रुतश्रवाः ।
राजाधिदेवी च तथा पञ्चैता वीरमातरः ॥ 41 ॥

कृतस्य तु श्रुत[1]देवी
सुग्रीवं सुषुवे सुतम्, ।

वृद्धस्य श्रुतदेवी तु
कारूषं सुषुवे नृपम्, ।

कैकेय्यां[1]) श्रुतकीर्त्यां[2]) तु जज्ञे संतर्दनो[3]) नृपः ॥ 42 ॥
श्रुतश्रवसि चैद्यस्य सुनीथः समपद्यत, ।

बहुवो धर्मचारी स
संबभूवारिमर्दनः ॥ 43 ॥

राजाधिदेव्याः संभूतो
धर्माद् भयविवर्जितः[1]) ॥ 43 ॥

---

36ᵃ = Mt. 44.84ᵃ.

36ᵇᶜ = P.1 I. 13.67ᵇ, 68ᵃ; P.2 V. 13.70. 1) P.2 –जः– । 2) P.2 विक्रान्ता– ।

36ᵇ(ᶜ) = Mt. 44.84ᵇ; P.1 I. 13.68ᵇ; P.2 V. 13.71ᵃ. 1) P.1 P.2 V. –दंश–; P.2 T. –दृश– । 2) P.1 P.2 V. सुवंश–; P.2 T. सुरांश– । 3) P.1 P.2 इत्यनुनामतः ।

37. = Mt. 44.85; P.1 I. 13.69; P.1 V. 13.71ᵇ, 72ᵃ. 1) P.2 ये । 2) P.2 –यन्ति । 3) P.1 –जामाप्नोत्ययं ततः; P.2 –जामाप्नुवते ततः ।

---

38 = Mt. 46.1; P.1 I. 13.107ᵇ, 108ᵃ; P.2 V. 13.108ᵇ, 109ᵃ. 1) Mt. शूरं । 2) Mt. ख्यातम् । 3) Mt. T. P.1 P.2 अद्भुत– । 4) Mt. पौरुपाज् ; P.1 –पा । 5) P.1 –रा । 6) Mt. पुत्रका ।

39 = Mt. 46.2; P.1 I. 13.108ᵇ, 109ᵃ; P.2 V. 13.109ᵇ, 110ᵃ. 1) Mt. –मार्ग– । 2) P.1 P.2 –स्तथा । 3) P.1 तथा ।

40 = Mt. 46.3; P.1 I. 13.109ᵇ, 110ᵃ; P.2 V. 13.110ᵇ, 111ᵃ. 1) P.1 –र्ति । 2) P.1 P.2 कुनि– । 3) P.1 P.2 –न्दि– । 4) P.1 सकृधशाः; P.2 –शः । 5) P.2 समीढुः । 6) P.1 P.2 V. सप्ताख्यः; P.2 T. शंसस्युः ।

41 = Mt. 46.4; P.1 I. 13.110ᵇ, 111ᵃ; P.2 V. 13.111ᵇ, 112ᵃ. 1) Mt. T. –ता ।

42ᵃ = Mt. 46.5ᵃ. 1) Mt. T. –ता ।

42ᵃ = P.1 I. 13.111ᵇ; P.2 V. 13.112ᵇ.

42ᵇ = Mt. 46.5ᵇ; P.1 I. 13.112ᵃ; P.2 V. 13.113ᵃ. 1) P.1 P.2–य्याच् । 2) P.1 P.2 –र्तेस् । 3) Mt. सोऽनुव्रतो; P.2 T. सैन्धवको ।

43ᵃ = Mt. 46.6ᵃ; P.1 I. 13.112ᵇ; P.2 V. 13.113ᵇ.

43ᵇ = Mt. 46.6ᵇ.

43ᵇ = P.1 I. 13.113ᵃ; P.2 V. 13.114ᵃ. 1) P.2 T. धर्मभार्याभिमर्दितः; V. –या विसर्जितः ।

संपृक्तो[1]) दानवैर्वृत्रो
घोरे[2]) हालाहले[3]) हतः ।
तदा[1]) विष्णुसहायेन महेन्द्रेण निवर्तितः[2]) ॥ 82 ॥

| स-वृत्रान्[1]) दानवांश्चैव
| संगतान् कृत्स्नशश्च तान् ।

हतो[1]) ध्वजे[2]) महेन्द्रेण मायाछन्न[3]स्तु[4]) योगवित्[5]) ।
ध्वज[6]लक्षणमा[7]विश्य विप्रचित्तिः सहानुजः[8]) ॥ 83 ॥

दैत्यांश्च[1]) दानवांश्चै[2]व संहतान्[3]) कृत्स्नशश्च तान्[4]) ।
जयन्[5]) को[6]लाहले सर्वैर्दे[7]वैः परिवृतो वृषा[8]) ।
यज्ञस्यावभृथे जित्वा[9]) श[10]ण्डामर्कौ[11]) तु दैवतैः ॥ 84 ॥

एते दे[1]वासुरा[2]) वृत्ताः संग्रामा द्वादशैव तु ।
देवा[3]सुरक्षयकराः प्रजानां च[4]) हिताय वै[5]) ॥ 85 ॥

हिरण्यकशिपू राजा[1]) वर्षाणामर्बुदं बभौ[2]) ।
द्विसप्ततिं[1]) तथान्यानि
नियुतान्यधिकानि च[2]) ।
अशीतिं[1]) च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत्[2]) ॥ 86 ॥

| तथा शतसहस्राणि
| ह्यधिकानि द्विसप्ततिः ।

---

82[a] = Mt. 47.51[b]; P.1 I. 13.190[a]; P.2 V. 13.192[b].
1) P.2 –क्ते । 2) Mt. –रो । 3) P.1 P.2 कोलाहले ।

82[a] = Bd. II. 72.83[b]; Vā. 97.84[a]. 1) Vā. संवृतान् ।

82[b] = Bd. II. 72.84[a]; Mt. 47.52[a]; P.1 I. 13.190[b]; P.2 V. 13.193[a]; Vā. 97.81[b]. 1) Bd. जघ्ने; Vā. तथा । 2) Bd. –न्द्रस्तेन वर्धितः; P.1 P.2 निपातितः; Vā. निवर्हिताः ।

83 = Bd. II. 72.84[b], 85[a]; Mt. 47.52[b], 53[a]; P.1 I. 13.191; P.2 V. 13.193[b], 194[a]; Vā. 97.85. 1) P.1 –तस् ; P.2 –ते । 2) P.1 ततो; Vā. –जो । 3) Bd. –छत्र– । 4) Bd. Vā. –श्च । 5) Vā. योधयन् । 6) Vā. –जे । 7) Bd. –जलक्षं समा–; P.1 वज्रेण क्षणमा–; P.2 T. ध्वजेन क्षणमा–; Vā. –जे लक्ष्य समा– । 8) P.1 P.2 –गः; Vā. –तिर्महाभुजः ।

84 = Bd. II. 72.85[b], 86[a], 87[a]; Cp. 86[b]; Mt. 47.53, 54[a]; P.1 I. 13.192[a] = a; P.2 V. 13.194[b], 195; Vā. 97.86. 1) P.1 P.2 –त्याश्च । 2) P.1 P.2 –वाश्चै– । 3) Mt. –यतान् ; P.1 –युताः; P.2 –जाताः । 4) Mt. किल संयुतान् ; P.1 P.2 –शस्तु ते । 5) Bd. जयद् ; Bd. II. 72.86b, Vā. रजिः; P.2 –य– । 6) Bd. धा– । 7) Bd. II. 72.86[b], Mt. T. Vā. –र्वान् दे– । 8) Bd. II. 72.86[b] दैत्यान् परिवृतोऽजयत् ; P.2 –षः; Vā. ऽजयत् । 9) Mt. दृश्यौ; Vā. यज्ञामृतेन विजितौ । 10) Bd. Vā. ष– । 11) P.2 –र्कास् ।

85 = Bd. II. 72.87[b], 88[a]; Mt. 47.54[b], 55[a]; P.1 I. 13.192[b], 193[a]; P.2 V. 13.196; Vā. 97.87. 1) P.1 दै– । 2) Mt. –रे; Vā. –वाः पुरा । 3) Bd. सुरा– । 4) Mt. तु । 5) Bd. –नामशिवश्च ह; Vā. –शिवाय च ।

86[a] = Bd. II. 72.88[b]; Mt. 47.55[b]; P.1 I. 13.193[b]; P.2 V. 13.197[a]; Vā. 97.88[a]. 1) P.2 –पो राज्यं । 2) P.2 –ददयम् ।

86[b] = Mt. 47.56[a]; P.1 I. 13.194[a]; P.2 V. 13.197[b].
1) Mt. –तिं; P.2 –तिस् । 2) P.1 तु ।

86[b] = Bd. II. 72.89[a]; Vā. 97.88[b].

86[c] = Bd. II. 72.89[b]; Mt. 47.56[b]; P.1 I. 13.194[b]; P.2 V. 13.198[a]; Vā. 97.88[c]. 1) Bd. P.2 –तिश् । 2) Mt. –त्यैश्वर्यतो गतः; P.1 –त्यैश्वर्यवानभूत् ; P.2 –यैश्वर्यताभवत् ।

| | |
|---|---|
| पर्यायेण तु राजाभूद्[1]) बलिर्वर्षार्बुदं[2]) पुनः ।<br>षष्टि[1]श्चैव[2]) सहस्राणि<br>नियुतानि च विंशतिः[3]) ॥ 87 ॥ | षष्टिश्चैव सहस्राणि<br>त्रिंशच्च नियुतानि च ॥ 87 ॥ |
| बले[1]) राज्याधिकारस्तु[2]) यावत्कालं बभूव ह[3]), ।<br>तावत्कालं तु प्रह्लादो<br>निवृत्तो[1]) ह्यसुरैः सह ॥ 88 ॥ | प्रह्लादो *निर्जितोऽभूच्च*[1])<br>तावत्कालं *सहा*[2]सुरैः ॥ 88 ॥ |

इन्द्रास्त्रयस्ते[1]) *विख्याता*[2]) अ[3]सुराणां महौजसः[4]); ।
दैत्यसंस्थमिदं सर्वमासीद् दशयुगं *किल*[5]) ॥ 89 ॥

असपत्नं[1]) *ततः*[2]) सर्वं[3]) *राष्ट्रं*[4]) दशयुगं[5]) पुनः[6]) ।
त्रैलोक्यमिदमव्यग्रं[7]) महेन्द्रेणानु[8]पाल्यते[9]) ॥ 90 ॥

प्रह्लादस्य हृते[1]) ह्यस्मिं[2]स्त्रैलोक्ये[3]) काल[4]पर्ययात् ।
पर्यायेणैव[5]) संप्राप्ते[6]) त्रैलोक्यं[7]) पाकशासने[8]) ॥ 91 ॥

ततोऽसुरान् परित्यज्य यज्ञो[1]) देवानु[2]पागमत्[3]) ।
यज्ञे देवानथ गते[4]) *दितिजाः काव्यमब्रुवन्*[5]) ॥ 92 ॥

हृतं[1]) नो मिषतां[2]) राष्ट्रं[3]) त्यक्त्वा यज्ञः[4]) सुरान्[5]) गतः[6]) ।

---

87[a] = Bḍ. II. 72.90[a]; Mt. 47.57[a]; P.1 I. 13.195[a]; P.2 V. 13.198[b]; Vā. 97.89[a]. 1) Bḍ. पारंपर्येण राजा तु; Vā. पर्याये तस्य राजानु । 2) Mt. –र्षायुतं ।

| | |
|---|---|
| 87[b] = Mt. 47.57[b]; P.1 I. 13.195[b]; P.2 V. 13.199[a]. 1) Mt. –ष्टिर् ; P.1 –ष्टिं । 2) Mt. वर्ष– । 3) P.1 –तिम् । | 87[b] = Bḍ. II. 72.90[b]; Vā. 97.89[b]. |

88[a] = Bḍ. II. 72.91[a]; Mt. 47.58[a]; P.1 I. 13.196[a]; P.2 V. 13.199[b]; Vā. 97.90[a]. 1) P.1 –लि– । 2) P.1 –रे तु । 3) P.1 –लश्च कीर्तितः ।

| | |
|---|---|
| 88[b] = Mt. 47.58[b]; P.1 I. 13.196[b]; P.2 V. 13.200[a]. 1) P.2 –वृतो । | 88[b] = Bḍ. II. 72.91[b]; Vā. 97.90[b]. 1) Vā. –देन गृहीतोऽभूत् । 2) Vā. तदा– । |

89 = Bḍ. II. 72.92; Mt. 47.59; P.1 I. 13.197[a] = a; P.2 V. 13.200[b] = a; Vā. 97.91. 1) P.1 जयार्थमेते; P.2 इन्द्रार्थमेते । 2) Mt. P.1 P.2 विज्ञेया । 3) Bḍ. ह्य– । 4) P.2 –साम् । 5) Mt. पुनः ।

90 = Bḍ. II. 72.93; Mt. 47.60[ba]; P.1 I. 13.198[a], 197[b]; P.2 V. 13.201[ba]; Vā. 97.92. 1) Bḍ. अशपत् तु; P.1 P.2 असंपन्नम् । 2) Mt. P.1 P.2 इदं । 3) Bḍ. शुक्रो । 4) Mt. आसीद् ; P.1 P.2 यावद् । 5) P.1 P.2 वर्षायुतं । 6) Vā. T. पुरा । 7) Vā. –मव्ययमिदं । 8) Vā. –ण तु । 9) Bḍ. –न्द्रो ह्यभ्ययाद् बलेः ।

91 = Bḍ. II. 72.94; Mt. 47.61[ab]; P.1 I. 13.198[b] = b; P.2 V. 13.202; Vā. 97.93. 1) Mt. T. हृते; P.2 Vā. V. कृते; Vā. T. तात– । 2) Bḍ. Mt. तस्मिस् ; Vā. T. चादस् । 3) Vā. –क्यं । 4) P.1 कार्य– । 5) Mt. –ण तु; Vā. T. ण च । 6) Bḍ. –'तं । 7) P.2 Vā. –क्ये । 8) Bḍ. –नम् ; Vā. –नः ।

92 = Bḍ. II. 72.95; Mt. 47.61[c], 62[a]; P.1 I. 13.199; P.2 V. 13.203; Vā. 97.94. 1) Mt. T. शुक्रो; Vā. T. यज्ञे । 2) Vā. T. –वा उ । 3) Mt. P.1 P.2 –नगच्छत; Vā. T. –मन् । 4) Mt. T. –तं । 5) Bḍ. Vā. काव्यं ते ह्यसुराब्रुवन् ; Mt. T. –आह्वयन् ।

93 = Bḍ. II. 72.96; Mt. 47.62[b], 66[a]; P.1 I. 13.200; P.2 V. 13.204; Vā. 97.95. 1) Bḍ. किं तन् ; Mt. किं त्वं; Vā. T. हृतं । 2) P.1 P.2 मेघवता । 3) Mt. P.1 P.2 राज्यं । 4) Mt. Vā. –ज्ञं । 5) Mt. Vā. पुनर् । 6) Vā. –ताः ।

स्थातुं न शक्नुमो ह्यत्र[7]), प्रविशामो[8]) रसातलम् ॥ 93 ॥

एवमुक्तोऽब्रवीदेतान्[1]) विषण्णान्[2]) सान्त्वयन् गिरा ।
मा भैष्ट, धारयिष्यामि तेजसा स्वेन वो[3]ऽसुराः ! ॥ 94 ॥

वृष्टि[1]रो[2]षधयश्चैव रसा वसु[3]) च यत्[4]) परम्[5]) ।
कृत्स्नानि मयि[6]) तिष्ठन्ति[7], पादस्तेषां[8]) सुरेषु वै ।
तत् सर्वं वः[1]) प्रदास्यामि
युष्मदर्थे धृतं[2]) मया ॥ 95 ॥

| युष्मदर्थं प्रदास्यामि,
| तत् सर्वं धार्यते मया ॥ 95 ॥

ततो देवास्तु तान्[1]) दृष्ट्वा धृ[2]तान् काव्येन धीमता ।
अमन्त्रयं[3]स्तदा ते[4]) वै संविग्ना[5]) विजिगीषया[6]) ॥ 96 ॥

एष काव्य[1]) इदं सर्वं व्यावर्तयति नो बलात् , ।
साधु गच्छामहे तूर्णं, यावन् नाप्याययेत् तु तान्[2]), ।
प्रसह्य हत्वा शिष्टांस्तु[4]) पातालं प्रापयामहे ॥ 97 ॥

ततो देवास्तु[1]) संरब्धा दानवानुप[2]सृत्य ह[3]) ।
जघ्नुस्ते[4]वध्यमानास्तु[5]) काव्यमेवाभिदुद्रुवुः ॥ 98 ॥

ततः काव्यस्तु तान् दृष्ट्वा तूर्णं देवैरभिद्रुतान् ।
समरक्षत[1]) संत्रस्तान्[2]) देवेभ्यस्तान् दितेः सुतान्[3]) ॥ 99 ॥

---

7) Bḍ. Vā. ह्यच । 8) Bḍ. –म ।

94 = Bḍ. II. 72.97; Mt. 47.63[b], 64[a]; P.1 I. 13.201; P.2 V. 13.205; Vā. 97.96. 1) Mt. –द् दैत्यान् । 2) Bḍ. Vā. –ण्णः । 3) Bḍ. वः; Vā. चा– ।

95[ab] = Bḍ. II. 72.98; Mt. 47.64[b], 65[a]; P.1 I. 13.202; P.2 V. 13.206; Vā. 97.97[ab]. 1) Mt. P.1 मन्त्राश् ; P.2 इष्टिश् । 2) Mt. P.1 P.2 चौ– । 3) Bḍ. वस्तु; P.1 P.2 धरायां । 4) P.1 यत तु; P.2 यच्च । 5) P.1 P.2 वर्तते; Vā. यद् वयम् । 6) Bḍ. –नि ह्यपि; P.1 P.2 मयि तिष्ठति; Vā. –त्स्ना मयि च । 7) P.1 P.2 तत् सर्वं; Vā. T. तु । 8) P.1 P.2 पादमात्रं ।

95[c] = Mt. 47.65[b]; P.1 I. 13.203[a]; P.2 V. 13.207[a]. 1) P.1 च । 2) Mt. T. P.2 –ता ।

| 95[c] = Bḍ. II. 72.99[a]; Vā. 97.97[c].

96 = Bḍ. II. 72.99[b], 100[a]; Mt. 47.66; P.1 I. 13.203[b], 204[a]; P.2 V. 13.207[b], 208[a]; Vā. 97.98. 1) Bḍ. Vā. –वासु-रान् । 2) Mt. T. वृ– । 3) Mt. संमन्त्रयन्ति; P.1 P.2 आमन्त्रयन्त । 4) Mt. P.1 P.2 देवा । 5) Mt. –ग्नास्तु; P.1–ग्नस्तज् ; P.2 सज्जाः सर्वे । 6) Mt. P.1 P.2 जिघृक्षया ।

97 = Bḍ. II. 72.100[b], 101; Mt. 47.67, 68[a]; P.1 I. 13.204[b], 205; P.1 V. 13.208[b], 209; Vā. 97.99. 1) Mt. P.1 P.2 काव्यो ह्येष । 2) Mt. नाध्यापयिष्यति; P.1 P.2 न च्यावयेत वै; Vā. क्षीणानप्याययस्व तान् । 3) P.1 जि– । 4) Vā. T. –ष्टान् वै ।

98 = Bḍ. II. 72.102; Mt. 47.68[b], 69[a]; P.1 I. 13.206; P.2 V. 13.210; Vā. 97.100. 1) Vā. T. –वाः सु– । 2) Mt. P.1 P.2 –नभि– । 3) Bḍ. Vā. वै । 4) Mt. P.1 P.2 ततस्त– । 5) Bḍ. Vā. –स्ते; P.1 –स्तैः ।

99 = Bḍ. II. 72.103; Mt. 47.69[b], 70[a]; P.1 I. 13.207; P.2 V. 13.211; Vā. 97.101. 1) Mt. रक्षां काव्येन; P.1 P.2 रक्षाकार्येण । 2) Mt. P.1 P.2 संहृत्य; Vā. T. –रेऽरक्षतार्तांस्तान् ; V. रक्षतशास्त्रार्तान् । 3) Mt. देवास्तेऽप्य-सुरार्दिताः; P.1 P.2 –भ्यस्तान् सुरार्दितान् ।

काव्यं दृष्ट्वा स्थितं देवा
निःशङ्कमसुरान्[1]) जहुः ।
ततः काव्योऽतु[2]चिन्त्याथ[3])
ब्रह्मणो वचनं हितम् ।
तानुवाच ततो ध्यात्वा[1]) पूर्वं[2]वृत्तमनुस्मरन् ॥ 100 ॥

काव्यो दृष्ट्वा स्थितान् देवां
स्तत्र दैवम[1]चिन्तयत ।

त्रैलोक्यं विजितं[1]) सर्वं वामनेन त्रिभिः क्रमैः, ।
बलिर्बद्धो, हतो जम्भो, निहतश्च विरोचनः ॥ 101 ॥

महासुरा[1]) द्वादशसु संग्रामेषु सुरैर्हताः, ।
तैस्तैरुपायैर्भूयिष्ठा[2]) निहता ये[3]) प्रधानतः ॥ 102 ॥

किं[1]चिच्छिष्टास्तु[2]) यूयं वै[3]),
युद्धंमास्त्विति[4]) मे मतम्, ।
नीतिं वोऽर्थे विधास्यामि[5]),
तिष्ठध्वं[6]) कालपर्ययात्[7]), ।
यास्याम्यहं महादेवं मन्त्रार्थे[1]) विजयावहम्[2]) ॥ 103 ॥

किंचिच्छिष्टास्तु वै यूयं
युद्धेष्वल्पेषु[1]) वै स्वयम्, ।
नीतिं वो हि विधास्यामि,
कालः कश्चित् प्रतीक्ष्यताम्, ।

अग्निमाप्याययेद्धोता, मन्त्रैरेष दहिष्यति[1]), ।
ततो यास्याम्यहं देवं मन्त्रार्थे नीललोहितम् ॥ $103_1$ ॥
युष्माननुग्रहीष्यामि पुनः पश्चादिहागतः, ।
यूयं तपश्चरध्वं वै संवृता वल्कलैर्वने ! ।
न वै देवा वधिष्यन्ति, यावदागमनं मम ॥ $103_2$ ॥

---

100ab = Mt. 47.70b, 71a; P.1 I. 13.208; P.2 V. 13.212. 1) P.1 P.2 निर्विशङ्कास्तु ते । 2) P.2 वि- । 3) Mt. -न्त्यार्थं ।

100a = Bd. II. 72.104a; Va. 97.102a. 1) Vā. देवोऽम्य-

100b(c) = Bd. II. 72.104b; Mt. 47.71b; P.1 I. 13.209a; P.2 V. 13.213a; Va. 97.102b. 1) Mt. P.1 P.2 -तः काव्यः । 2) Mt. -र्वं ।

101 = Bd. II. 72.105; Mt. 47.72; P.1 I. 13.209b, 210a; P.2 V. 13.213b, 214a; Va. 97.103. 1) Mt. वो हतं; P.1 P.2 वो हतं ।

102 = Bd. II. 72.106; Mt. 47.73; P.1 I. 13.210b, 211a; P.2 V. 13.214b, 215a; Va. 97.104. 1) Va. महाहेषु । 2) Mt. -ष्ठं; P.2 V. -ष्ठैर् । 3) Mt. वः; P.1 P.2 -तास्तु ।

103ab = Mt. 47.74; P.1 I. 13.211b, 212a; P.2 V. 13.215b, 216a. 1) P.1 P.2 के । 2) P.1 -ष्टाश्च । 3) P.2 हि । 4) P.1 P.2 नास्तीति । 5) Mt. T. यां वोऽभिधास्यामि; P.1 -त्तयो वो विधातव्या; P.2 तां नीतिं वो विधास्यामि । 6) P.1 उपासे; P.2 उपास्ये । 7) P.2 -यम् ।

103ab = Bd. II. 72.107; Va. 97.105. 1) Bd. -द्धे स्वल्पे तु; Va. T. -ष्वन्त्येषु ।

103c = Bd. II. 72.108a; Mt. 47.75a; P.1 I. 13.212b; P.2 V. 13.216b; Va. 97.106a. 1) Mt. P.1 -र्थं । 2) Bd. -याय च; Va. -याय वः ।

$103_1$ = Bd. II. 72.108b, 109a; Va. 97.106b, 107a. 1) Va. एव बृहस्पतिः ।
$103_2$ = Bd. II. 72.109b, 110; Va. 97.107b, 108a.

अप्रतीपांस्ततो मन्त्रान् देवात्[1]) प्राप्य महेश्वरात् ।
योत्स्या[2]महे[3]) पुनर्देवांस्ततः प्राप्स्यथ वै जयम् ! ॥ 104 ॥
ततस्ते कृतसंवादा देवानूचुस्तदासुराः ।
न्यस्तशस्त्रा वयं सर्वे
निःसंनाहा रथैर्वि[1]ना, ॥ 105 ॥

| न्यस्तशस्त्रा[1]) वयं सर्वे,
| लोकान् यूयं क्रमन्तु वै, ॥ 105 ॥

वयं तपश्चरिष्यामः संवृता वल्कलैर्वने[1]) ।
प्रह्लादस्य[2]) वचः श्रुत्वा सत्याभि[3]व्याहृतं[4]) तु तत्[5]) ॥ 106 ॥
ततो देवा न्यवर्तन्त[1]) विज्वरा मुदिताश्च ह[2]) ।
न्यस्तशस्त्रेषु दैत्येषु स्वान् वै जग्मुर्यथागतान्[3]) ॥ 107 ॥
ततस्तानब्रवीत् काव्यः कंचित् कालमुपास्यताम्[1]) ।
निरुत्सुका[2]स्तपोयुक्ताः[3]), कालः[4]) कार्यार्थसाधकः[5]) ॥ 108 ॥
पितुर्ममाश्रमस्था[1]) वै मां[2]) प्रतीक्षत[3]) दानवाः[4]) ।
स सं[5]दिश्यासुरान् काव्यो महादेवं प्र[6]पद्यत[7]) ॥ 109 ॥

| प्रणम्यैन[1]मुवाचाथ[2]) जगत्प्रभवमीश्वरम् ।

मन्त्रानिच्छाम्यहं[1]) देव, ये न सन्ति बृहस्पतौ, ।
पराभवाय देवानामसुराणां जयाय च[2]) ॥ 110 ॥
एवमुक्तोऽब्रवीद् देवो
व्रतं त्वं चर भार्गव ! ॥ 111 ॥

| एवमुक्तोऽब्रवीद् देवो
| मन्त्रानिच्छसि वै द्विज, ।

---

104 = Bḍ. 'I. 72.111; Mt. 47.75[bc]: P.1 I. 13.213; P.2 V. 13.217; Va. 97.109. 1) P.1 देवान् मन्त्रान् । 2) Mt. T. युध्या- । 3) P.2 T. संयोत्स्यध्वे । 4) P.1 P.2 -वैस्त- ।

105[a] = Bḍ. II. 72.112[a]; Mt. 47.76[a]; P.1 I. 13.214[a]; P.2 V. 13.218[a]; Va. 97.110[a]. 1) Bḍ. Va. तवोऽ ।

105[b] = Mt. 47.46[b]; P.1 I. 13.214[b]; P.2 V. 13.218[b]. 1) P.2 -थं वि- ।

| 105[b] = Bḍ. II. 72.112[b]; Va. 97.110[b]. 1) Va. -वादा ।

106 = Bḍ. II. 72.113; Mt. 47.77; P.1 I. 13.215; P.2 V. 13.219; Va. 97.111. 1) P.1 P.2 -लैस्तथा । 2) P.1 देवास्तेषां । 3) Bḍ. -त्यानु- । 4) Va. -त्यव्याहरणं । 5) P.1 P.2 ततः ।

107 = Bḍ. II. 72.114; Mt. 47.78; P.1 I. 13.216; P.2 V. 13.220; Va. 97.112. 1) P.1 P.2 तो न्यवर्तयन् सर्वे; Va. -वा निवृत्ता वै । 2) Bḍ. Va. ह; Mt. ते; P.2 ये । 3) Mt. P.1 P.2 विनिवृत्तास्तदा सुराः ।

108 = Bḍ. II. 72.115; Mt. 47.79; P.1 I. 13.217; P.2 V. 13.221; Va. 97.113[ab]. 1) Bḍ. -लं प्रतीक्ष्यताम् ; Mt. -मुपास्यथ; P.2 -मुपासिताः; P.1 -य उपाध्वन् तपसि स्थिताः । 2) Mt. T. P.1 P.2 सिक्तास् ; Va. -सुकैस् । 3) Va. -क्तैः । 4) Mt. Va. -लं; P.2 -ल । 5) Mt. -कम् ; P.2 -काः; Va. -कैः ।

1C9 = Bḍ. II. 72.116; Mt. 47.80; P.1 I. 13.218; P.2 V. 13.222; Va. 97.113[c], 114[a]. 1) P.1 P.2 -राश्रमसंस्था । 2) Bḍ. सं । 3) Mt. V. P.1 P.2 -थ । 4) Va. सर्वे देवाः सवासवाः । 5) Mt. तत सं-; P.1 P.2 तानुद्- । 6) P.1 प्रा; P.2 अ- । 7) Bḍ. Va. -द्य च ।

| 110[a] = Bḍ. II. 72.117[a]; Va. 97.114[b]. 1) Bḍ. -व- । 2) Bḍ. -चार्यं ।

110[b(bc)] = Bḍ. II. 72.117[b], 118[a]; Mt. 47.81; P.1 I. 13.219; P.2 V. 13.223; Va. 97.115. 1) Bḍ. -मि हे । 2) Bḍ. Va. -रेष्वभयावहान् ।

111 = Mt. 47.82[a]; P.1 I. 13.220[a]; P.2 V. 13.224[a].

| 111 = Bḍ. II. 72.118[b], 119[a]; Va. 97.116.

| व्रतं चर मयोद्दिष्टं
| ब्रह्मचारी समाहितः ॥ 111 ॥

पूर्णं वर्षसहस्रं तु[1]) कुण्ड[2]धूममवाक्शि[3]राः ।
यदि पास्यसि[4]., भद्रं ते, ततो[5]) मन्त्रान्[6]वाप्स्यसि ॥ 112 ॥

तथेति समनुज्ञाप्य
शुक्रस्तु भृगुनन्दनः ।
पादौ संस्पृश्य देवस्य बाढमित्यभ्यभाषत[1]) ॥ 113 ॥

| तथोक्तो देवदेवेन
| स शुक्रस्तु महातपाः ।

व्रतं चराम्यहं देव[1]), *यथोद्दि*[2]*ष्टोऽसि*[3]) वै प्रभो ! ।
ततो *नियुक्तो*[4]) देवेन कुण्डधारोऽस्य धूमकृत्[5]) ॥ 114 ॥

तदा तस्मिन् गते शुक्रे
ह्य[1]सुराणां हिताय वै ।
मन्त्रार्थं तत्र वसति[1]) ब्रह्मचर्यं महेश्वरे[2]) ॥ 115 ॥

| असुराणां हितार्थाय
| तस्मिन् शुक्रे गते तदा ।

तद् बुद्ध्वा नीतिपूर्वं तु[1]) राज्यं[2]) न्यस्तं[3]) तदासुरैः[4]) ।
त[5]स्मिंश्छिद्रे तदामर्षाद् देवास्तान् *समभिद्रवन्*[6]) ।
*प्रगृहीता*[7]युधाः सर्वे बृहस्पतिपुरो*गमाः*[8]) ॥ 116 ॥

दृष्ट्वासुरगणा देवान् प्रगृहीतायुधान् पुनः ।
उत्पेतुः सहसा सर्वे[1]), संत्रस्तास्ते[2]) ततो[3]ऽब्रुवन्[4]) ॥ 117 ॥

न्यस्ते[1]) शस्त्रे[2]ऽभये[3]) दत्त[4]) आ[5]चार्ये व्रतमास्थिते ।

---

112 = Bḍ. II. 76.119b, 120a; Mt. 47 82bc; P.1 I. 13.220b, 221a; P.2 V. 13.224b, 225a; Va. 97.117. 1) Bḍ. Va. वै । 2) Mt. P.1 P.2 कण- । 3) P.1 P.2 -मधः शि- । 4) Bḍ. -तिं; P.2 पश्यसि । 5) Bḍ. Va. मत्तो । 6) Bḍ. Va. -न्त्रम- ।

113a = Mt. 47.83a; P.1 I. 13.221b; P.2 V. 13.225b. | 113a = Bḍ. II. 72.120b; Va. 97.118a.

113b = Bḍ. II. 72.121a; Mt. 47.83b; P.1 I. 13.222a; P.1 V. 13.226a; Va. 97.118b. 1) Mt. P.1 P.2 -ब्रवीद् वचः ।

114 = Bḍ. II. 72.121b, 122a; Mt. 47.83c, 84a; P.1 I. 13.222b, 223a; P.2 V. 13.226b, 227a; Va. 97.119. 1) Va. शेषं । 2) Mt. P.1 P.2 त्वया । 3) Mt. P.1 -ऽस्य दि; P.2 -ऽस्य दि- । 4) Mt. ऽनुसृष्टो; P.1 P.2 आदिष्टो देव- । 5) P.1 P.2 कृतवान् मार्गवो मुनिः ।

115a = Mt. 47.84b; P.1 I. 13.223b; P.2 V. 13.227b. 1) P.1 P.2 -क्रे अ- । | 115a = Bḍ. II. 72.122b; Va. 97.120a.

115b = Bḍ. II. 72.123a; Mt. 47.84c; P.1 I. 13.224a; P.2 V. 13.228a; Va. 97.120b. 1) P.1 P.2 -र्थं तनुते काव्यो । 2) P.1 P.2 -रात् ।

116 = Bḍ. II. 72.123b, 124; Mt. 47.85, 86; P.1 I. 13.224b, 225; P.2 V. 13.228b, 229; Va. 97.121. 1) P.1 वै । 2) Bḍ. राष्ट्रं; Mt. राज्ये । 3) Mt. P.2 -स्ते । 4) P.1 P.2 राजन्यास्तु तदा सुखम् । 5) Mt. P.1 P.2 अ- । 6) Mt. समुपाद्रवन् ; P.1 P.2 -नभिदुद्रुवुः । 7) Mt. P.1 P.2 दंशिताः सा-; Va. निंशितास्त्रा- । 8) Mt. P.1 P.2 -रःसराः ।

117 = Bḍ. II. 72.125; Mt. 47.87; P.1 I. 13.226; P.2 V. 13.230; Va. 97.122. 1) Mt. ते वै । 2) Mt. P.1 -स्तान् ; P.2 सहत्रासा । 3) Mt. P.1 P.2 वचो । 4) Bḍ. Va. ऽभवन् ।

118a = Bḍ. II. 72.126a; Mt. 47.88a; P.1 I. 13.227a; P.2 V. 13.231a; Va. 97.131a. 1) P.1 P.2 -स्त- । 2) P.1 P.2 -स्त्रा । 3) P.1 P.2 वयं; Va. जये । 4) Mt. -त; P.1 P.2 देवा । 5) Bḍ. ह्या- ।

दत्त्वा भवन्तस्त्व[1])भयं
संप्राप्ता नो जिघांसया ॥ 118 ॥
अनाचार्या[1]) वयं देवास्[2])
त्यक्तशस्त्राश्च सं[3]स्थिताः ।
चीरवल्का[1]जिनधरा निष्क्रिया निष्परिग्रहाः ॥ 119 ॥

संत्याज्य समयं देवास्ते
सपत्नजिघांसवः ॥ 118 ॥
अनाचार्यास्तु भद्रं वो
विश्वस्तास्तपसि[1]) स्थिताः ।

रणे विजेतुं देवांश्च[1])न शक्ष्यामः कथंचन, ।
अयुद्धेन[2]) प्रपत्स्या[3]मः शरणं काव्यमातरम् ॥ 120 ॥
ज्ञा[1]पयामः कृच्छ्रमि[2])दं, यावद[3]भ्येति नो गुरु[4]), ।
निवृत्ते च तथा शुक्रे योत्स्यामो दंशितायुधाः[5]) ॥ 121 ॥
एवमुक्त्वा ततो[1])ऽन्योन्यं[2]) शरणं काव्यमातरम् ।

प्रापद्यन्त ततो भीतास्ते-
भ्योऽदाद[1]भयं तु सा ॥ 122 ॥

प्रापद्यन्त ततो भीतास्त-
या[1]) चैव तदाभयम् ।
दत्तं तेषां तु भीतानां
दैत्यानामभयार्थिनाम् ॥ 122 ॥

न भेतव्यं, न भेतव्यं, भयं त्यजत[1]) दानवाः ।
मत्संनिधौ वर्ततां, वो न भीर्भवितुमर्हति ! ॥ 123 ॥
तया[1]) चाप्यु[2]प[3]पन्नांस्तान्[4])दृष्ट्वादेवास्तदा[5]सुरान्[6]) ।
अभिजघ्नुः[7]) प्रसह्यैतानविचार्य[8]) बलाबलम् ॥ 124 ॥
ततस्तान्[1])वध्यमानांस्तु[2]) देवैर्दृष्ट्वासुरांस्तदा[3]) ।

---

1) P.1P.2Vā. -त॰ 2) P.1P.2 -त्रा । 3) P.1P.2 वयं; Vā. जये . 4) Mt. -त; P.1P.2 देवा
5) Bḍ. ह्या-

$118^{b}$ = Mt. $47.88^{b}$; P.1 I $13.227^{b}$; P.2 V. $13.231^{b}$.
1) Mt. -तो ह्य ।

$118^{b}$ = Bḍ. II.$72.126^{b}$; Vā. $97.123^{b}$.

$119^{a}$ = Mt. $47.89^{a}$; P.1 I. $13.228^{a}$; P.2 V. $13.232^{a}$.
1) P.1P.2 अनमर्षा । 2) P.1 P.2. सर्वे । 3) Mt. -त्रास्त्वव- ।

$119^{a}$ = Bḍ. II.$72.127^{a}$; Vā. $97.124^{a}$. 1) Bḍ. -से ।

$119^{b}$ = Bḍ. II. $72.127^{b}$; Mt. $47.89^{b}$; P.1 I. $13.228^{b}$; P.2 V. $13.232^{b}$; Vā. $97.124^{b}$. 1) Mt. P.1P.2-कृष्णा ।
120 = Bḍ. II. 72.128; Mt. 47.90; P.1 I.13.229; P.2 V. 13 233; Vā. 97.125.
1) Bḍ. Vā. -वान् वै । 2) Vā. अशुद्धेन । 3) Bḍ.Vā. पाया- ।
121 = Mt. 47.91; P.1 I. 13.230; P.2 V. 13.234; Vā. $97.126^{a}$($^{b}$). 1) Mt. या- । 2) Vā. कृत्स्नम् ।
3) P.1P.2 -वान् ना । 4) Vā. -वदागमनं गुरोः । 5) Vā. विनिवृत्ते ततः काव्ये योत्स्यामो युधितान्सुरान् ।
$122^{a}$ = Mt. $47.92^{a}$; P.1 I. $13.231^{a}$; P.2 V. $13.235^{a}$; Vā. $97.127^{a}$. 1) P.1P.2 च ते; Vā. वासुरान् ।
2) Vā. योग्यं ।

$122^{b}$ = Mt. $47.92^{b}$; P.1 I. $13.231^{b}$; P.2 V. $13.235^{b}$.
1) P.2 दत्त्वा ।

$122^{bc}$ = Bḍ. II. 72.129; Vā. $97.127^{b}$,$128^{a}$.
1) Vā. तदा ।

123 = Mt. 47.93; P.1 I. 13.232; P.2 V. 13.236; Vā. $97.128^{b}$, $129^{a}$. 1) P.2 -थ ।
124 = Bḍ. II. 72.130; Mt. 47.94; P.1 I. 13.233; P.2 V. 13.237; Vā. $97.129^{b}$, $130^{a}$. 1) Vā. मयाच ।
2) P.2Vā. चाप्य । 3) Vā. अभि- । 4) P.1 तयाभिरक्षितांस्ताश्च । 5) Mt. ततो- । 6) P.2 तु दानवान्; Vā. -वासुरांस्तदा । 7) Mt. P.1P.2 -जग्मुः । 8) Bḍ.विचार्य च ।
125 = Bḍ. II. 72.131; Mt. 47.95; P.1 I. 13.234; P.2 V. 13.238; Vā. $97.130^{b}$, $131^{a}$.

देवी क्रुद्धाब्रवीद्देवान्[4]) : अनिन्द्रत्वं[5]) करोम्य[6])हम् ! ॥ 125 ॥

संभृत्य[1]) सर्वसंभारान्
इन्द्रं साभ्यचरत्ततः[2]), ।
तस्तम्भ[3]) देवी बलवद्[4])
योगयुक्ता तपोधना ॥ 126 ॥

संस्तभ्य शीघ्रं संरम्भाद्
इन्द्रं साभ्यचरत् ततः ॥ 126 ॥

ततः सं[1]स्तम्भितं दृष्ट्वा शक्रं[2]) देवास्तु[3]) मूढवत्[4]) ।
व्य[5]द्रवन्त ततो भीता दृष्ट्वा शक्रं[6]) वशीकृतम् ॥ 127 ॥

गतेषु सुरसंघेषु विष्णुरिन्द्रम्[1]) अभाषत : ।
मां त्वं प्रविश, भद्रं ते, नेष्यामि[2]) त्वां सुरेश्वर[3]) ! ॥ 128 ॥

एवमुक्तस्ततो विष्णुं[1]) प्रविवेश पुरंदरः ।
विष्णुना[2]) रक्षितं दृष्ट्वा देवी क्रुद्धा वचोऽब्रवीत्[3]): ॥ 129 ॥

एषा त्वां विष्णुना सार्धं दहामि मघवन्बलात्[1]) ।
मिषतां सर्वभूतानां, दृश्यतां मे तपोबलम् ॥ 130 ॥

त[1]याभिभूतौ तौ देवाविन्द्रा[2]-विष्णू बभूवतुः[3]) ।
कथं मुच्येव[4]) सहितौ[5]) ? विष्णुरिन्द्रम् अभाषत ॥ 131 ॥

इन्द्रोऽब्रवीज्जहि ह्य[1])नां, यावन्नौ न[2]) दहेद् वि[3]भो ! ।
विशेषेणाभिभूतोऽहम्[4]), इमां तज्ज[5])हि माचिरम् ! ॥ 132 ॥

---

1) P.2 –तः सा; Vā. तांस्त्रस्तान् 2) Mt. वाध्य–; P.2 तान् ; Vā. –नांश्च । 3) P.2 तथा । 4) Bd. Vā. एनान् । 5) Mt. –द्रान्वः । 6) P.1P.2 निद्रया मोहयाम्य ।

126 = Mt. 47.96; P.1 I. 13.235; P.2 V. 13.239. 1) P.2T. –वृत्य । 2) P.1P.2 निद्रां सा व्य सृजत्तदा । 3) P.2 संस्तभ्य 4) P.1 च बलाद् ; P.2 व्यचरद् ।

126 = Bd. II. 72. 132[a]; Vā. 97. 131[b].

127 = Bd. II. 72. 132[b], 133[a]; Mt. 47.97; P.1 I. 13.236; P2. V. 13.240[ab]; Vā. 97.132. 1) Mt. P.1P.2 –तस्तं । 2) Mt. P.1P.2 ऽइन्द्रं । 3) Mt. P.1P.2 –चाश्च । 4) Mt. मूकवत् ; Vā. यूववत् 5) Mt. P.1P.2 प्रा । 6) Mt. P.1P.2 इन्द्रं दृष्ट्वा ।

128 = Bd. II. 72.133[b], 134[a]; Mt. 47.98; P.1 I. 13.237; P.2 V. 13.240[c], 241[a]; Vā. 97.133 1) Mt. शक्रं विष्णुर । 2) Mt. P.2 नयिष्ये; P.1 राक्षस्ये । 3) Mt. P.1P.2 –रोत्तम ।

129 = Bd. 72.134[b], 135[a]; Mt. 47.99; P.1 I. 13.238; P.2 V. 13.241[b], 242; Vā. 97.134. 1) Bd. –ग्णुः 2) P.1 –नुसं– । 3) Bd. Vā. –चोऽवदत् ; P.2 –धाब्रवीद्वचः ।

130 = Bd. II. 72.135[b], 136[a]; Mt. 47.100; P.1 I. 13.239; P.2 V. 13.243; Vā, 97.135. 1) Vā. –वानिव ।

131 = Bd. II.72.136[b], 137[a]; Mt. 47.101; P.1 I. 13.240; P.2 V. 13.244; Vā. 97.136. 1) P.2 भ– । 2) P.1P.2 –द्र– । 3) Bd.Vā. जजल्पतुः । 4) P.1 –च्येय । 5) P.1 –तो !

132 = Bd. II. 72.137[b], 138[a]; Mt. 47.102; P.1 I. 13.241; P.2 V. 13.245; Vā. 97.137. 1) P.2Vā. जहीह्य । 2) Bd. नो न । 3) Mt. P.1P.2 –हेत्प्र– । 4) Mt.P.1P.2 ऽस्मि । 5) Mt. त्वत्तोऽहं ; P.1 जहीमां; P.2 तदिमां; Vā. अतस्त्वं

ततः समीक्ष्य तां विष्णुः[1]) स्त्रीवधं[2]) कर्तुमा[3])स्थितः।
अभिध्याय ततश्च[4]क्रम् आपन्नं[5]) सत्वरं प्रभुः[6]) ॥ 133 ॥

ततः स[1]) त्वरया युक्तः
शीघ्रकारी भयान्वितः।
ज्ञात्वा विष्णुस्ततस्तस्याः
क्रूरं देव्याश्चिकीर्षितम् ॥ 134 ॥

तस्याः स[1]) त्वरमाणायाः
शीघ्र[2]कारी सुरारिहा।
स्त्रिया[3]) विष्णुस्ततो देव्याः[4])
क्रूरं बुद्ध्वा चिकीर्षितम् ॥ 134 ॥

क्रुद्धस्तद[1])स्त्रमाविध्य[2]) शिरश्चिच्छेद वै भयात्[3])।
तं दृष्ट्वा स्त्रीवधं घोरं चुकोप[4]) भृगुरीश्वरः, ॥135 ॥
ततोऽभि[1]शप्तो भृगुणा विष्णुर्भार्यावधे तदा[2]):।
यस्मात्ते[3]) जानता[4]) धर्मान्[5]) अवध्या स्त्री निषूदिता, ॥ 136 ॥
तस्मात्त्वं सप्तकृत्वो वै[1])मानुषेषूपपत्स्यसे[2]) !।
ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः ॥ 137 ॥
लोके सर्व[1]हितार्थाय जायते मानुषेष्विह।
अनु[2]व्याहृत्य विष्णुं स तदादाय शिरः स्वयम्[3] ॥ 138 ॥
समानीय ततः काये[1]) अपो[2]) गृह्य[3]दमब्रवीत् :।
एषा[4]) त्वां[5]) विष्णुना सत्यं[6]) हतां[7])संजीवयाम्यहम्, ॥ 139 ॥
यदि कृत्स्नो मया धर्मश्चरितो ज्ञायते[1])ऽपि वा; ।
तेन सत्येन जीवस्व[2]), यदि सत्यं ब्रवीम्य[3])हम् ! ॥ 140 ॥

---

133 – Bd. II. 72.138[b], 139[a]; Mt. 47.103; P.1 I. 13.242; P.2 V. 13.246; Vā. 97.133. 1) Mt.P.1P.2 –गुस्तां। 2) Mt. P.1P.2 –धे। 3) Mt. P.1P.2. कृच्छ्रम्। 4) P.1 –तः श। 5) Vā. –नद्यः। 6) Mt. आपादुद्धरणे तु तत्।

134 – Mt. 47.104[ab]; P. I. 13.243; P.2 V. 13.247. 1) Mt. –तस्तु।

134 – Bd. II. 72.139[b], 140[a]; Vā. 97.139[ab]. 1) Bd. सं– 2) Bd. –त्रं 3) Bd. त्रिधा। 4) Bd. Vā. V. देवः।

135 – Bd. II. 72.140[b], 141[a]; Mt. 47.104[c], 105[a]; P.1 I. 13.244; P.2 V. 13.248[ab]; Vā. 97.139[c], 140[a]. 1) Mt. स्वं। 2) Mt. आदाय; P.1 च चक्रमादाय; P.2 चक्रं समादाय। 3) Bd.Vā. मघवः; Mt. वै मिया। 4) Mt. P.1P.2 चुक्रोध।

136 – Bd. II. 72.141[b], 142[a]; Mt. 47.105[b], 106[a]; P.1 I. 13.245; P.2 V. 13.248[c], 249[a]; Vā. 97.140[b], 141[a]; 1) P.1 हि। P.1P.2 कृते। 3) P.1 यत्त्वया। 4) Mt. –त्तो। 5) Mt.P.1P.2 –र्मं।

137 – Bd. II. 72.142[b], 143[a]; Mt. 47.106[b], 107[a]; P.1 I. 13.246; P.2 V. 13.249[b], 250[a]; Vā. 97.141[b], 142[a]. 1) Mt. –वेह; P.1 –वो हि; P.2 –वो ह। 2) Bd. पु प्रपद्यसे; P.1P.2T. पयास्यसि ; Vā. –पु प्रवत्स्यसि।

138 – Bd. II. 72.143[b], 144[a]; Mt. 47.107[b], 108[a]; P.1 I. 13.247; P.2 V. 13.250[b], 251[a]; Vā. 97.142[b], 143[a]. Bd. सर्वलोक– ; Mt. P.1P.2 लोकस्य च। 2) P.1P.2 अथ। 3) Mt. त्वरन्।

139 – Bd. II. 72.144[b], 145[a]; Mt. 47.108[b], 109[a]; P.1 I. 13.248; P.2 V. 13.251[b], 252[a]; Vā. 97.143[b], 144[a]. 1) Mt.P.1P.2 –यं ; Vā.T. कार्यं। 2) Mt. असौ ; P.1P.2 पाणौ। 3) Bd. समायोज्ये–। 4) Bd. एतां; Mt.P.1P.2 एषा। 5) Mt.P.1P.2 त्वं। 6) Mt.P.1P.2 देवि; Vā. सत्ये। 7) Mt.P.1P.2 –ता।

140 – Bd. II. 72.145[b], 146[a]; Mt. 47. 110; P.1 I.13.249; P.2 V. 13.252[b], 253[a]; Vā. 97.144[bc].

तत[1]) स्तां प्रोक्ष्य शीताभिरद्भि[2])र्जीवेति सोऽब्रवीत् ।
सत्या[3]भिव्याहृते[4]) तस्य)[5] देवी संजीविता तदा ॥ 141 ॥

तत[1])स्तां सर्वभूतानि[1]) दृष्ट्वा सुप्तोत्थितामिव ।
साधु साध्वित्यदृश्यानां[2]) वाचस्ताः[3]) सस्त्रनुर्दिशः[4]) ॥ 142 ॥

दृष्ट्वा संजीवितां एवं[1]) देवीं तां[2]) भृगुणा तदा ।
मिषतां सर्वभूतानां[3]), तदद्भुतमिवाभवत् ॥ 143 ॥

असंभ्रान्तेन भृगुणा पत्नीं[1]) संजीवितां[2]) पुनः[3]) ।
दृष्ट्वा शक्रो न लेभेऽथ[4]) शर्म काव्यभयात् ततः[5]) ॥ 144 ॥

प्रजागरे ततश्चेन्द्रो जयन्तीम् इदमब्रवीत्[1])
संचिन्त्य[2]) मतिमान्[3]) वाक्यं स्वां कन्यां पाकशासनः ॥ 145 ॥

एष काव्यो ह्यनिन्द्राय[1]) व्रतं चरति दारुणम्[2]), ।
तेनाहं व्याकुलः पुत्री कृतो मा[3]तिमता दृढम्[4]) ॥ 146 )

गच्छ, संभावय[1]स्वैनं श्रमापनयनैः शुभैः[2]) ।
तैस्तैर्मनोनुकूलैश्च ह्यु[3]पचारैरतन्द्रिता ! ॥ 147 ॥

| आराधय तथा पुत्री[1]), यथा तुष्येत स[2]) द्विजः ।
| गच्छ त्वं, तस्य दत्तासि, प्रयत्नं कुरु मत्कृते[3]) ! ॥ 147 ॥
| एवमुक्ता जयन्ती सा वचः संगृह्य वै[1]) पितुः ।

---

1) Mt.P.1P.2 —नां ज्ञायते चरितो । 2)Vā. —वस्य । 3) Mt. वदाम्य ।

141 = Bḍ. II. 72.147[a], 146[b]; Mt. 47.111; P.1 I. 13.250; P.2 V. 13.253[b], 254[a]; Vā. 97.145[ba]. 1) Bḍ.Vā. —द्रा । 2) P.1 शीताद्भिर्जीव । 3) Mt. P.1P.2 ततो । 4) Bḍ. —तात् ; Vā. —ता । 4) P.1P.1 —भिन् ।

142 = Bḍ. II. 72.147[b], 148[a]; Mt. 47.112; P.1 I. 93.251; P.2 V. 13.254[b], 255[a]; Vā. 97.146. 1) Bḍ.—नां। 2) Mt. चक्रुस्ते; P.1P.2 —ति धृष्टैव । 3) Mt. वचसा; P.1 वचस्तां । 4) Mt. सर्वतोदिशम् ; P.1P.2 सर्वतोऽब्रुवन् ।

143 = Bḍ. II. 72.148[b], 149[a]; Mt. 47.113; P.1 I. 13.252; P.2 V. 13. 255[b], 256[a]; Vā. 97.147. 1) Mt. P.1 P.2 एवं प्रत्याहृता तेन । 2) Mt. P.1P.2 —त्री सा । 3) Mt.P.1P.2 दे(दै)वतानां हि ।

144 = Bḍ. II. 72.149[b], 150[a]; Mt. 47.114[ab]; P.1 I. 13.253; P.2 V. 13.256[b], 257[a]; Vā. 97.148. 1) Mt. P.1P.2 —नी । Mt.P.1P.2 —ता । 3) Bḍ.Vā. ततः । 4) Mt.P.1P.1 चेन्द्रो नालभत । 5) Mt. P.1P.2 पुनः ।

145 = Bḍ. II. 72.150[b], 151[a]; Mt. 47.114[c], 115[a]; P.1 I. 13.254;P. 2 V. 13.257[b], 258; Vā. 97.149 1) Bḍ. Vā. आत्मनः सुताम् । Bḍ. Vā. प्रोवाच । 3) P.1P.2 संधिकामोऽभ्यधाद् ।

146 = Bḍ. II. 72.151[b], 152[a]; Mt. 47.115[bc]; P.1 I. 13.255; P.2 V. 13.259; Vā. 97.150. 1) Mt. अभित्राय । 2) Bḍ.Vā. चरते दारुणं तपः । 3) Bḍ.Vā. धृ— । 4) Mt. भृशम् ।

147 = Bḍ. II. 72.152[b], 153[a]; Mt. 47.116; P.1 I. 13.256[a] = [a]; P.2 V. 13.260[ab]; Vā. 97.151. Mt. संसाधय— । 2) Bḍ. मे—; P.2 गच्छमोहय तं काव्यं शीघ्रमायतलोचने । 3) P.1P.2 च उ— ।

| 147₁ = Mt. 47.117; P.1 I. 13.256[b], 257[a]; P.2 V. 13.261. 1) Mt. काव्यमाराध्य स्वैनं । 2) P.2 ते । 3) P.2T. सुव्रते ।
| 147₂ = Mt. 47.118; P.1 I. 13.257[b], 258[a]; P.2 V. 13.262. 1) P.2 [illegible] । 2) Mt. —न आ— ।

| अगच्छद् , यत्र घोरं स तपो ह्या[2]रभ्य तिष्ठति ॥ 147[2]॥
| तं दृष्ट्वा तु[1]) पिवन्तं सा कणधूममधो[2]मुखम् ।
| यक्षेण पात[3]यमानं च कुण्डधारेण पावनम्[4]) ॥ 147[3] ॥

दृष्ट्वा च तं पात्यमानं[1])
देवी काव्यमवस्थितम् ।
स्वरूप ध्यान[2]शाम्यन्तं[3])
दुर्बलं भूतिम्[4]) आस्थितम् ॥ 148 ॥

| देवी साहीन्द्रदुहिता
| जयन्ती शुभचारिणी ।
| सुस्वरूपवरागात्तं[1])
| दुर्वहं[2]) व्रतमा[3])स्थितम् ॥ 148 ॥

पित्रा यथोक्तं वाक्यं[2]) सा काव्ये कृतवती तदा ।
गीर्भिश्चैवानुकूलाभिः स्तुवन्ती[3]) वल्गुभाषिणी ॥ 149 ॥

गात्रसंवाहनैः काले सेवमाना त्वचः[1]) सुखैः[2]) ।
शुश्रूषन्त्यनुकूला च[3]) उवास[4]) बहुलाः समाः ॥ 150 ॥

पूर्णे धूम[1]व्रते तस्मिन्[2]) घोरे वर्षसहस्रके[3]) ।
वरेण छन्दयामास काव्यं[4]) प्रीतो भव[5])स्तदा : ॥ 151 ॥

एतद् व्रतं[1]) त्वयैकेन चीर्णं नान्येन केनचित्, ।
तस्मात्त्वं[2]) तपसा बुद्ध्या श्रुतेन च बलेन[3]) च ॥ 152 ॥

ते[1]जसा चा[2]पि विबुधान्[3]) सर्वान[4]भिभविष्यसि ।
यच्च किंचिन्मम[5]) ब्रह्मन्[6]) विद्यते भृगुनन्दन ॥ 153 ॥

| सांगं च सरहस्यं च यज्ञोपनिषदस्[1])तथा ।

---

| 143 = Mt. 47.119; P.1 I. 13.258[b], 259[a]; P.2 V. 13.263. 1) P.1P.2 च । 2) Mt. अवां– । 3) P.2 यज्ञेन याप । 4) Mt. पातितम् ।

148 = Mt. 47.120[ab]; P.1 I. 13.259[b], 260[a]; P.2 V. 13.264. 1) P.1P.2 –ऽवातं यतमानं तु । 2) P.1 शत्रूपघारे; P.2शत्रूपधानं । 3) Mt. V. स्वरवरूपधरं दृष्ट्वा; P.1P.2 श्राम्यन्तं । 4) P.1 P.2 –ऌरिथर्ति ।

148 = Bd. II. 72.153[b], 154[a]; Vā. 97.152. 1) Vā. T. युक्तध्यानं च शांयन्तं शुण्डरूपधरं साम्यं । 2) Vā. –वलं । 3) Vā. धृतिं ।

149 = Bḍ. II. 72.154[b], 155[a]; Mt. 47.120[c], 121[a]; P.1 I. 13.260[b], 261[a]; P.2 V. 13.265; Vā. 97.153. 1) Vā. काव्यं । 2) P.2 यदु– । 3) Mt.Vā.T. –वती ।

150 = Bḍ. II. 72.155[b], 156[a]; Mt. 47.121[bc]; P.1 I. 13.261[b], 262[a]; P.2 V. 13.266; Vā. 97.154. 1) Bḍ. त्वचा । 2) Vā. सुखावहैः । 3) Mt.P.1P.2 व्रतचर्यानुकूलाभिर । 4) P.1P.2 उपास्य ।

151 = Bḍ. II. 72.156[b], 157[a]; Mt. 47.122; P.1 I. 13.262[b], 263[a]; P.2 V. 13.267; Vā. 97.155. 1) Vā. –व्र । 2) Bḍ.Vā. चापि । 3) Vā. रिके । 4) P.1P.2 शिवः । 5) P.1P.2 ऽभवत् ।

152 = Bḍ. II. 72.157[b], 158[a]; Mt. 47.123; P.1 I. 13.263[b], 264[a]; P.2 V. 13.268; Vā. 97.156. 1) Vā. एवं व्रुवंस । 2) Mt.P.1P.2 –मद्वै । 3) P.2 द्मेन ।

153 = Bḍ. II. 72.158[b], 159[a]; Mt. 47.124; P.1 I. 13.264[b], 265[a]; P.2 V. 13.269; Vā. 97.157. 1) P.2 ओ– । 2) Bḍ. वा– 3) Mt.P.1P.2 च सुरान्सर्वांस । 4) Mt.P.1P.2 त्वमेको– । 5) Mt. चाभिलषितं; P.1P.2 मयि । 6) Bḍ. –म ।

| 154 = Bḍ. II. 72.159[b]; Vā. 97.158[a]. 1) Vā. –द्रां ।

प्रतिभास्यति[1]) ते[2]) सर्वं, तद्वाच्यं तु न[3]) कस्यचित् ।
सर्वाभिभावी तेन त्वं द्विजश्रेष्ठो भविष्यसि[4]) ॥ 154 ॥

एवं[1]) दत्त्वा[2]) वरांस्[3])तस्मै[4]) भार्गवाय भवः[5]) पुनः ।
प्रजेश[6]त्वं धनेशत्वं अवध्यत्वं च वै ददौ ॥ 155 ॥

एतांल्लब्ध्वा वरान्काव्यः संप्रहृष्टतनूरुहः ।
हर्षात्प्रादुर्बभौ तस्य दिव्य[1]स्तोत्रं महेश्वरे[2]) ॥ 156 ॥

तदा[1]) तिर्यक्स्थितस्त्वेवं[2]) तुष्टुवे नीललोहितम् ।
नमोऽस्तु शितिकण्ठाय सुराद्याय[3]) सुवर्चसे ॥ 157 ॥

लेलि[1]हानाय लेह्या[2]य वत्सराय जग[3]पते ।
कपर्दिने ह्यूर्ध्वरोम्णे[4]) हर्यक्षणे[5]) वरदाय[6]) च ॥ 158 ॥

संस्तु[1]ताय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥ 159 ॥

वसुरेताय रुद्राय तपसे ची[1]रवाससे ।
ह्रस्[2]वाय मुक्तकेशाय सेनान्ये रोहिताय च ॥ 160 ॥

कवये राजवृद्धाय[1]) तक्षकक्रीडनाय च ।
गिरिशायार्कनेत्राय यतये[2]) चा[3]ज्यपाय[4]) च ॥ 161 ॥

सुवृत्ताय सुहस्ताय[1]) धन्विने भार्गवाय च ।
| सहस्रबाहवे चैव सहस्रामलचक्षुषे ॥ 162 ॥

---

154bc(ab) – Bd. II. 72.160; Mt. 47.125; P.1 I. 13.265b, (266a); P.2 13.270a(b); Vā. 97.158b, 159a. 1) Mt. प्रपत्स्यसे तु; P.1P.0 प्रतिदास्यामि । 2) Mt.P.1P.2 तत् । 3) Mt. नानुवाच्यं तु; P.1P.2 त्वया वाच्य; Vā. तच्चाचन्तं । 4) Mt. त्वं भविष्यसि द्विजोत्तम; P.1P.2 किं भाषितेन बहुना अवध्यस्त्वं भविष्यसि ।

155 – Bd. II. 62.161; Mt. 47.126; P.1 I. 13.226b, 267a; P.2 V. 13.271; Vā. 97.159b, 160a. 1) Mt.P.2 एतान्; P.1 तान् । 2) P.1 –चा तु । 3) Bd.P.2 –रं । 4) Bd. –यै । 5) P.1Vā. पुनः । 6) Vā. अजेय– ।

156 – Bd. II. 72.162; Mt. 47.127ab; P.1 I. 13.267b – a; P.2 V. 13.272a = a; Vā. 97.160b, 161a. 1) Bd. यं Vā. देव–; 2) Bd. –हेशितुः; Vā. रम् ।

157 – Bd. II. 72.163; Mt. 47.127c, 128a. Vā. 97.161b, 162a 1) Mt. तथा । 2) Mt. –ज्ञश्चैव । 3) Mt. कनिष्ठाय; Vā. सुरूपाय ।

158 – Bd. II. 72.164; Mt. 47.128b, 129a; Vā. 97.162b,163a. 1) Vā.T. रिरि– । V. रेरि– 2) Mt. काव्य; Vā. लोप– । 3) Mt. –यान्धसः– 4) Mt. करालाय । 5) Bd. –क्षु–; Vā. हयाय । 6) Vā. करणाय

159 – Bd. II. 72.165; Mt. 47.129b 130aI, 132aII; Vā. 97.163b, 164a. 1) Vā. –स्रु–

160 – Bd. II. 72.166; Mt. 47.130b, 131a; Vā. 97.164b, 165a. 1) Mt. चित– 2) Bd. निर–; Mt. हर– ।

161 – Bd. II. 72.167; Mt. 47.131b, 133a; Vā. 97.165b, 166a. 1) Mt. –वृक्षाय । 2) Mt. –शाय नमोऽर्काय वलिने; Vā. यतिने । 3) Mt. आ– 4) Vā. जाम्बवाय ।

162a – Bd. II. 72.168a; Mt. 47.133b; Vā. 97.166b. 1) Mt. –गुप्ताय सुवरत्राय ।

| 162b – Bd. II. 72.168b; Vā. 97.167a.

सहस्रकुक्षये चैव सहस्रचरणाय च ।
सहस्रशिरसे चैव बहुरूपाय वेधसे ॥ 162 ॥
भवाय *विश्व*[1]रूपाय श्वेताय पुरुषाय च ।
निषङ्गिणे *कवचिने*[2]) *सूक्ष्मा*[3]*य* क्षपणाय च ॥ 163 ॥
ताम्राय चैव भीमाय उग्राय च शिवाय च ।
महादेवाय शर्वा[1]य विश्वरूपशिवाय च ॥ 164 ॥
हिरण्याय वसिष्ठा[1]य ज्येष्ठाय[2]) मध्यमाय च ।
बभ्रवे च[3]) पिशङ्गाय पिङ्गलायारुणाय च ॥ 165 ॥
पिनाकिने चेषुमते चित्राय रोहिताय च ।
दुन्दुभ्यायैकपादाय *अर्हाय* वुद्धये *तथा*[1]) ॥ 166 ॥
मृगव्याधाय *शर्वाय*[1]) स्थाणवे भीषणाय च ।
बहुरूपाय[2]) *चोग्राय*[3]) त्रिनेत्रायेश्वराय च ॥ 167 ॥
*कपिलायैक*[1]वीराय मृत्यवे त्र्यम्बकाय च ।
वास्तोष्पते पिनाकाय शङ्कराय शिवाय च ॥ 168 ॥
आरण्याय गृहस्थाय यतये[1]) ब्रह्मचारिणे ।
सांख्याय चैव योगाय *ध्यानिने*[2]) दीक्षिताय च ॥ 169 ॥
अन्तर्हि[1]ताय शर्वा[2]य *तप्याय*[3]) *व्यापिने*[4]) *तथा*[5]) ।
बुद्धाय चैव शुद्धाय मुक्ताय[6]) केवलाय च ॥ 170 ॥
रोधसे चे[1]कितानाय ब्रह्मिष्ठाय महर्षये ।
चतुष्पा[2]दाय मेध्याय *वर्मिणे*[3]) शीघ्रगाय च ॥ 171 ॥
शिखण्डिने कपा[1]लाय दंष्ट्रिणे[2]) विश्वमेधसे ।

---

| 162₁a = Bḍ. II. 72.169a; Vā. 97.167b.

162₁b = Bḍ. II. 72.169b; Mt. 47.132aI, 130aII; Vā. 97.168a.

163 = Bḍ. II. 72.170; Mt. 47.132b, 134a; Vā. 97.168b, 169a. 1) Mt. वराय भव्य– । 2) Mt. च ताराय । 3) Mt. स्वक्ष– ।

164 = Bḍ. II. 72.171; Mt. 47.134b, 135a; Vā. 97.169b, 170b. Bḍ. सर–

165 = Bḍ. II. 72.172; Mt. 47.135b, 138a; Vā. 97.171ab. 1) Mt.T. वरि–, V. विशिष्टा ; Vā.T. च शिष्टा । 2) Bḍ. वर्षाय; Vā.T. श्रेष्ठाय । 3) Bḍ. धाम्ने चैव ।

166 = Bḍ. II. 72.173ab; Mt. 47.138b, 139a; Vā. 97.171c, 172a. 1) Mt. अजाय बुद्धिदाय च ।

167 = Bḍ. II. 72.173c, 174a; Mt. 47.136b, 137a; Vā. 97.172b, 173a. 1) Mt. दक्षाय; Vā. सर्पाय । 2) Mt. T. –नेत्राय । 3) Mt. धुर्याय ।

168 = Bḍ. II. 72.174b, 175a; Mt. 47.137b, 136a1 = abI; Vā. 97.173b, 174a. 1) Mt. कपालिने च ।

169 = Bḍ. II. 72.175b, 176a; Mt. 47.139b, 140a; Vā. 97. 174b, 175a. 1) Bḍ. यतिने । 2) Mt. व्यापिने ।

170 = Bḍ. II. 72.176b, 177a; Mt. 47.140b, 136aII; Vā. 97.175b, 176a. 1) Mt.T. अनाह– । 2) Bḍ. सर– । 3) Mt. भव्येशाय; Vā. मान्याय । 4) Mt. यमाय; Vā. मालिने । 5) Mt. च । 6) Mt. मुक्तये

171 = Bḍ. II. 72.177b, 178a; Mt. 47.141; Vā. 97.177b, 178a. 1) Bḍ. चै– । 2) Mt. –त्र– । 3) Mt. रक्षिणे; Vā. धर्मिणे ।

172 = Bḍ. II. 72.178b, 179a; Mt. 47.142; Vā. 97.178b, 179a. 1) Mt. करा– ।

अप्रती[3]ताय दीप्ताय भास्कराय[4]) सुमेधसे ॥ 172 ॥

क्रूराय वि[1]कृतायैव *वीभत्साय*[2]) शिवाय च ।
सौम्याय चैव पुण्याय[3]) धार्मिकाय शुभाय च ॥ 173 ॥

अवध्यायामृतायैव[1]) नित्याय शाश्वताय च ।
*कट्वाय शरभायैव*[2]) शूलिने च त्रि[3]चक्षुषे ॥ 174 ॥

सोमपायाज्यपायैव धूमपायोष्मपाय च ।
शुचये परिधानाय[1]) सद्योजाताय मृत्यवे ॥ 175 ॥

पिशिताशाय शर्वा[1]य मेधा[2]य विद्युताय च ।
व्याश्रिताय[3] *श्रविष्ठाय*[4]) भरिताय तरक्षवे[5]) ॥ 176 ॥

क्षे[1]माय सहमानाय सत्याय *तपनाय*[2]) च ।
त्रिपुरघ्नाय दीप्ताय च[3]क्राय रोमशाय च ॥ 177 ॥

तिग्मायुधाय मे[1]ध्याय सिद्धाय च[2]) पुलस्तये ।
रोचमानाय च[3]ण्डाय स्फीताय ऋषभाय च ॥ 178 ॥

व्रतिने[1]) युञ्जमानाय शुचये चोर्ध्व[2]रेतसे ।
अघ[3]घ्नाय मख[4]घ्नाय मृत्युघ्ने[5]) यज्ञियाय च ॥ 179 ॥

कृशानवे प्रचेताय वह्नये *निर्मलाय*[1]) च ।
| सिकत्याय प्रसन्नाय वरेण्ययैव चक्षुषे ॥ 180 ॥
| क्षिप्रगवे सुधन्वाय प्रमेध्याय पिवाय च ।
रक्षोघ्नाय पशुघ्नाया[1]विघ्नाय *श्वसिताय*[2]) च ॥ 181 ॥

---

| Bd. दण्डिने । 3) Vā. अप्रतीघा– । 4) Mt. भास्वराय प्रतीताय सुदीप्ताय ।

173 = Bd. II. 72.179$^{b}$ = $^{a}$; Mt. 47.143; Vā. 97.178$^{b}$, 179$^{a}$. 1) Mt. –या– । 2) Mt. भीषणाय । 3) Bd. T. मुख्याय ।

174 = Mt. 47.144$^{a}$, 145$^{b}$; Vā. 97.179$^{b}$, 180$^{a}$. 1) Vā. –ताङ्गाय । 2) Mt. कर्त्रे परशवे चैव । 3) Mt. दिव्य– ।

175 = Bd. II. 72.180$^{a}$ = $^{b}$; Mt. 47.146; Vā. 97.180$^{b}$, 181$^{a}$. 1) Vā. रेरिहाणाय ।

176 = Bd. II. 72.180$^{b}$ = $^{a}$; Mt. 47.147, cfr. 144$^{b}$ = $^{b}$; Vā. 97.181$^{b}$, 182$^{a}$.
1) Mt. सर–; Vā. –खर– । 2) Vā. मेधा– । 3) Mt. 47.144$^{b}$ T. व्यपताय, V. 47.147 व्यावृत्ताया । 4) Mt. 47.144 वसिष्ठाया ; 47.147 वरिष्ठाय । 5) Mt. 47.144$^{b}$ भरताय च साक्षिणे; Vā. भारतायान्तरिक्षये , V. –अवे ।

177 = Mt. 47. 145$^{a}$, 148$^{a}$; Vā. 97.182$^{b}$, 183$^{a}$. 1) Vā. क्ष– । 2) Mt. चामृताय । 3) Mt.T. तीर्थायाद–

178 = Mt. 47.148$^{b}$, 149$^{a}$; Vā. 97.183$^{b}$, 184$^{a}$. 1) Mt. व्याल– । 2) Mt. सुसिद्धाय । 3) Vā. खं ।

179 = Mt. 47.149$^{b}$, 150$^{a}$; Vā. 97.184$^{b}$, 185$^{a}$. 1) Vā. भोगिने । 2) Vā. शान्तायैवोर– । 3) Mt. असुर । 4) Mt.T. स्वा– । 5) –त्यवे ।

180$^{a}$ = Mt. 47.150$^{b}$; Vā. 97.185$^{b}$. 1) Vā. किंशुलाय ।

| 180$^{b}$ = Vā. 97.186$^{a}$
| 1801$^{a}$ = Vā. 97.186$^{b}$.

1801$^{b}$ = Mt. 47.151$^{a}$; Vā. 97.187$^{a}$. 1) Vā. –य– । 2) Vā. शयनाय ।

विश्रान्ताय महान्ताय अत्यन्तं[1]) दुर्गमाय च ।
दक्षाय[2]) च जघन्याय[3]) लोकानामीश्वराय च ॥ 181 ॥
अनामयाय[1]) चेध्माय[2]) समत्वा[3]धिष्ठिताय च ।
हिरण्यबाहवे चैव सत्याय[5]) शमनाय[5]) च ॥ 182 ॥

| असिकल्पाय माधाय हिर[1]ण्यायैकचक्षुषे ।
| श्रेष्ठाय वामदेवाय ईशानाय च धीमते ॥ 182 ॥

महाकल्पाय[1]) दीप्ताय रोदनाय हसाय[2]) च ।
दृढधन्विने कवचिने रथिने च वरूथिने ॥ 183 ॥

भृगुनाथाय शुक्राय गह्वरि[1]ष्ठाय धीमते[2]) ।
अमोघाय प्रशान्ताय[3]) सदा विप्र[4] प्रियाय[5]) च ! ॥ 184 ॥

नमोऽस्तु तुभ्यं भगवन्
विश्वाय कृत्तिवाससे ! ।
| दिग्वासः कृत्तिवासाय
| भगघ्नाय नमोऽस्तु ते ! ।
पशूनां पतये चैव[1]) भूतानां पतये नमः ! ॥ 185 ॥

प्रणवे[1]) ऋग्यजुःसाम्ने स्वाहायै[2]) च सुधाय[3]) च ।
वषट्कारतमायैव[4]) तुभ्यं मन्त्रा[5]त्मने नमः ! ॥ 186 ॥

स्र[1]ष्ट्रे धात्रे तथा क[2]र्त्रे हर्त्रे च क्षपणाय[3]) च ।
भूतभव्यभवेशाय[4]) तुभ्यं कर्मा[5]त्मने नमः ! ॥ 187 ॥

वसवे चैव साध्याय रुद्रासित्याश्विनाय[1]) च ।
विश्वाय मरुते चैव[2]) तुभ्यं देवात्मने नमः ! ॥ 188 ॥

अग्नीषोमविधिज्ञाय[1]) पशुमन्त्रौषधाय च ।

---

181 – Bḍ. II. 72.131$^{a}$ – $^{b}$; Mt. 47.151$^{b}$, 152$^{a}$; Vā. 97.187$^{b}$, 188$^{a}$. 1) Mt.T. अर्गवे; Vā. अन्तये 2) Mt. कृष्णाय । 3) Mt. जयन्ताय ।

182 – Bḍ. II. 72.131$^{b}$I – $^{a}$I; Mt. 47.152$^{b}$, 153$^{a}$; Vā. 97.188$^{b}$, 189$^{a}$. 1) Mt. अनाश्रिताय । 2) Mt. वेध्याय; Vā. चोर्ध्वाय । 3) Vā. संहत्या– । 4) Mt. व्याप्ताय । 5) Mt. च महाय ।

| 182I – Bḍ. II. 72.131$^{b}$II, 132$^{a}$ – $^{a}$II$^{b}$; Vā. 97.189$^{b}$, 190$^{a}$. 1) Vā. रीं(रि)रिं– ।

183 – Bḍ. II. 72.132$^{b}$, 133$^{a}$; Mt. 47.155; Vā. 97.190$^{b}$, 191$^{a}$. 1) Mt. –काशाय । 2) Mt.Vā.V. सहाय ।

184 – Bḍ. II. 72.133$^{b}$. 134$^{a}$; Mt. 47.156; Vā. 97.191$^{b}$, 192$^{a}$. 1) Mt. –रे; Vā. वह्निरि– । 2) Mt. वेधसे । 3) Vā. अघाय अघसंघाय । 4) Vā. विप्रियाय । 5) Mt. सुमेधायवृषाय ।

185$^{a}$ – Mt. 47.157$^{a}$.
| 185$^{a}$ – Bḍ. II. 72.134$^{b}$; Vā. 97.192$^{b}$.

185$^{b}$ – Bḍ. II. 72.135$^{a}$; Mt. 47.157$^{b}$; Vā. 97.193$^{a}$. 1) Mt. तुभ्यं ।

186 – Bḍ. II. 72.135$^{b}$, 136$^{a}$; Mt. 47.158; Vā. 97.193$^{b}$, 194$^{a}$. 1) Bḍ. प्रभवे । 2) Mt. –य; Vā. स्वधायै । 3) Mt. स्वधाय । 4) Mt. –रात्मने चैव । 5) Vā. अन्तात्– ।

187 – Bḍ. II. 72.136$^{b}$, 137$^{a}$; Mt. 47.159; Vā. 97.194$^{b}$. 195$^{a}$. 1) Mt.T. द्र– । 2) Vā. हो । 3. Mt. चक्षुःश्रोत्रमयाय । 4) Vā. –नायैव । 5) Vā. काला ।

188 – Bḍ. II. 72.137$^{b}$, 138$^{a}$; Mt. 47,160; Vā. 97.195$^{b}$, 196$^{a}$. 1) Mt.T. –यसुराय– । 2) Mt. विपाय मारुतायैव ।

189 – Bḍ. II. 72.138$^{b}$, 139$^{a}$; Mt. 47.161$^{ab}$; Vā. 97.196$^{b}$, 197$^{a}$. 1) Vā. – मखिविज्ञाय । 2) Mt. प्रजानां पतये चैव । 3) Mt. ब्रह्मा ।

दक्षिणावभृतायैव[2]) तुभ्यं *यज्ञा*[3]त्मने नमः ! ॥ 189 ॥

आत्मेशायात्मवश्याय
सर्वेशातिशाय च ॥ 190 ॥

तपसे चैव सत्याय
त्यागाय च शमाय च ।
अहिंसायाप्य[1]लोभाय
सुवेशायाति[2]शाय च ॥ 190 ॥

सर्वभूतात्म[1]भूताय तुभ्यं *योगा*[2]त्मने नमः ! ।
पृथिव्यै चान्तरिक्षाय दिवाय च महाय[3]) च ॥ 191 ॥

जनस्तपाथ सत्याय तुभ्यं लोकात्मने नमः ! ।
अव्यक्तायाथ[1]) महते भूतायैवेन्द्रि[2]याय च ॥ 192 ॥

*तन्मात्रायाथ महते*[1]) तुभ्यं *तत्त्वा*[c]त्मने नमः ! ।
नित्याय चाप्य[3]लिङ्गाय सूक्ष्माय चेतराय[4]) च ॥ 193 ॥

शुद्धाय विभवे चैव तुभ्यं *नित्या*[2]त्मने नमः ! ।
नमस्ते त्रिषु लोकेषु स्वरन्तेषु भुवा[3]दिषु[4]) ॥ 194 ॥

सत्यान्तेषु महाद्येषु[1]) चतुर्षु च नमोऽस्तु ते ! ।
नमः[2]स्तोत्रे मया ह्यस्मिन्यद[3])सद्[4])व्याहृतं *प्रभो*[5])
मद्भक्त इति ब्रह्मण्य सर्वं तत[6])क्षन्तुमर्हसि ! ॥ 195 ॥

---

190 – Mt. 47.162[a].

190 – Bḍ. II. 72.189[b], 190[a]; Vā. 97.197[b], 198[a]. 1) Bḍ.Vā.V. –याथ 2) Bḍ. यानि ।

191 – Bḍ. II. 72.190[b], 191[a]; Mt. 47.162[b], 164[a]; Vā. 97.198[b], 199[a]. 1) Bḍ. –तत्प्र–; Mt.T. –ताङ्ग– । 2) Mt. भूता– । 3) Bḍ. महसे त्रिदिवाय ।

192 – Bḍ. II. 72.191[b], 192[a]; Mt. 47.164[b], 165[a]; Vā. 97.199[b], 200[a]. 1) Mt. –प्र । 2) Mt. –तादेरिन्– ।

193 – Bḍ. II. 72.192[b]. 193[a]; Mt. 47.165[b], 166[a]; Vā. 97.200[b], 201[a]. 1) Mt. आत्मज्ञाय; विशेषाय; Vā. –त्राय महान्ताय । 2) Mt. सर्वा । 3) Mt. चात्म–; Vā.T. चाथ । 4) Mt.T. –यैवेतराय; Vā. चेतनाय ।

194 – Bḍ. II. 72.193[b], 194[a]; Mt. 47.166[b], 167[a]; Vā. 97.201[b], 202[a]. 1) Mt. दु– । 2) Mt. मोक्षा– । 3) Vā. भवा– । 4) Mt. नमस्ते परतस्त्रिषु ।

195 – Bḍ. II. 72.194[b], 195; Mt. 47.167[b], 168; Vā. 97.202[b], 203. 1) Bḍ. –यान्तमहराद्येषु; Vā. महान्तेषु । 2) Bḍ. –म– । 3) Vā. सद्– । 4) Mt. यदि न; Vā. अस– । 5) Mt. भवेत; Vā. विभो । 6) Mt. तत्सर्वं ।

## C.

(Bḍ. II. 73.1—126; Br. 13.141[b]; H. 2359–2373[a], 1829[b]; Mt. 47.169—233; P.1 I. 13.268—279; P.2 V. 13.272[b]—284[a]; Vā. 98.1—123.)

एवमाराध्य[1]देवेशमीशानं[2]) नीललोहितम् ।
प्रह्वोऽगति[3]प्रणतस्त[4])स्मै प्राञ्जलिर्वाक्यम[5]ब्रवीत्[6]) ॥ 1 ॥

काव्यस्य गात्रं संस्पृश्य हस्तेन प्रीतिमान्भव ।
निकामं दर्शनं दत्त्वा तत्रैवान्तरधीयत[1]) ॥ 2 ॥

ततः सोऽन्तर्हिते तस्मिन्दे[1])वे सा[2]नुचरे[3]) तदा ।
तिष्ठन्तीं प्राञ्जलिर्भूत्वा[4]) जयन्तीमिदमब्रवीत् ॥ 3 ॥

कस्य त्वं सु[1]भगे का वा दुःखिते मयि दुःखिता, ।
महता तपसा युक्त[2]) किमर्थं मां जिगीषसि[3]) ? ॥ 4 ॥

अनया सततं[1]) भक्त्या प्रश्रयेण दमेन च ।
स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ! ॥ 5 ॥

किमिच्छसि वरारोहे, कस्ते कामः समृध्यताम्[1]) ? ।
तां[2])ते संपूर[3]याम्यद्य, यद्यपि स्यात्सुदुर्लभः[4]) ॥ 6 ॥

एवमुक्ताब्रवीदेनं : तपसा ज्ञातुमर्हसि ।
चिकीर्षितं मे, ब्रह्मिष्ठ[1]), त्वं हि वेत्थ[2]) यथातथम् ॥ 7 ॥

---

1 = Bḍ. II. 73.1; Mt. 47.169; P.1 I. 13.268; P.2 V. 13.272[b],273[a]; Vā. 98.1. 1) Mt.P.1P.2 आभा–। 2) Mt.P.1P.2 ईश्वरं । 3) Mt. –त्रोऽभि–; Vā. ब्रह्वोति । 4) P.2 प्रशान्वितरततस्; P.2 प्रह्वः कविरततस् । 5) Mt. वाग्तो; P.1P.2 प्रणतो । 6) Mt.P.1P.2 ऽभवत् ।

2 = Bḍ. II. 73.2; Mt. 47.170; Vā. 98.2. 1) Bḍ. –अधाद्धरः ।

3 = Bḍ. II. 73.3; Mt. 47.171; P.1 I. 13.269[a] = [a]I[b]II; P.2 V. 13.273[b] = [a]I[b]II; Vā. 98.3. 1) P.1P.2 देवे । 2) Mt. –त्रेशे ; Vā. –त्रेशा– । 3) Mt. चरीं । 4) Mt. पार्श्वतो दृष्ट्वा ।

4 = Bḍ. II. 73.4; Mt. 47.172; P.1 I. 13.269[b], 270[a]; P.2 V. 13.274; Vā. 98.4. 1) Bḍ. शु– । 2) Mt. P.1P.2 –ता । 3) Mt.T. निषेवसे; P.2 जुगुप्ससि; Vā. जुगोपसि ।

5 = Bḍ. II. 73.5; Mt. 47.173; P.1 I. 13.270[b],271[a]; P.2 V. 13.275; Vā. 98.5. 1) Mt.T. संस्तुतो, V. –स्थितो; P.1P.2 संस्थिता ।

6 = Bḍ. II. 73.6; Mt. 47.174; P.1 I. 13.271[b], 272[a]; P.2 V. 13.276; Vā. 98.6. 1) P.1 समुद्यत; P.2 समुद्धृतः । 2) Mt.P.2 त्व । 3) Mt.P.1P.2 –पाद– । 4) Mt.T. –दुष्करः; Mt.V.P.1P.2 –दुष्करम्; Vā. –भम् ।

7 = Bḍ. II. 73.7; Mt. 47.175; P.1 I. 13.272[b],273[a]; P.2 V. 13.277; Vā. 98.7. 1) Mt.P.1P.2 –तं हि मे ब्रह्मन् । 2) P.1 वै वद; P.2 हि वेद ।

एवमुक्तोऽ[1]ब्रवीदेनां दृष्ट्वा दिव्येन चक्षुषा ।
| माहेन्द्री त्वं वरारोहे मद्धितार्थमिहागता ! ॥ 8 ॥

मया सह त्वं सुश्रोणि दश[1]) वर्षाणि भामिनि ।
अदृश्यं[2]) सर्वभूतैस्तु[3]) संप्रयोगमिहेच्छसि ॥ 9 ॥

| | |
|---|---|
| देव चेन्दी[1]वरश्यामे वराहें वामलोचने । | देवीन्द्रनी[1]लवर्णाभे वरारोहे सुलोचने । |

इमं वृणीष्व[1]) कामं[2]) त्वं[3]) मत्तो[4]) वै वल्गुभाषिणि[5]) ! ॥ 10 ॥

एवं भवतु, गच्छावो[1]) गृहान्[2])मे[3]) मत्तकाशिनि[4]) ! ।
ततः स्व[5]गृहमागम्य[6]) जयन्त्या सहितः प्रभुः[7]) ॥ 11 ॥

तया सहावसद्दे[1])व्या दश[2]) वर्षाणि भार्गवः[3]) ।
अदृश्यः सर्वभूतानां मायया संवृतस्तदा[4]) ॥ 12 ॥

कृतार्थमागतं ज्ञात्वा[1]) काव्यं[2]) सर्वे दितेः सुताः ।
अभिजग्मुर्गृहं तस्य मुदितास्ते[3]) दिदृक्षवः ॥ 13 ॥

गता यदा[1]) न[2]) पश्यन्ति[3]) मायया[4]) संवृतं गुरुम् ।
लक्षणं[5]) तस्य तद्बुद्ध्वा[6]) प्रतिजग्मुर्यथागतम्[7]) ॥ 14 ॥

---

8[a] – Bḍ. II. 73.8[a]; Mt. 47.176[a]; P.1 I. 13.273[b]; P.2 V. 13.278[a]; Vā. 98.8[a]. 1) P.2T. एतच्छ्रुत्वा– ।

| 8[b] – Bḍ. II. 73.8[b]; Vā. 98.8[b].

9 – Bḍ. II. 73.9; Mt. 47.176[b], 177[a]; P.1 I. I. 13.274; P.2 V. 13.278[b], 279[a]; Vā. 98.9. 1) P.1P.2T. शत । 2) Mt.P.1P.2 सर्वभूतैर । 3) Mt. अदृश्या च; P.1 अदृश्यान्तः ; P.2 अदृश्या नः ।

| | |
|---|---|
| 10[a] – Mt. 47.177[b]; P.1 I. 13.275[a]; P.2 V. 13.279[b]. 1) P.1P.2 –वि इन्– । | 10[a] – Bḍ. II. 73.10[a]; Vā. 98.10[a]. 1) Vā. –त्रेन्द्रान– । |

10[b] – Bḍ. II. 73.10[b]; Mt. 47.177[c]; P.1 I. 13.275[b]; P.2 V. 13.280[a]; Vā. 98.10[b]. 1) Mt.P.1P.2 एवं वृणोपि । 2) P.1P.2 –मांस । 3) Vā.T. ते, V. तं । 4) P.1 ददे; P.2 यदि । 5) P.1 –पिते ।

11 – Bḍ. II. 73.11; Mt. 47.178; P.1 I. 13.276; P.2 V. 13.280[b], 281[a]; Vā. 98.11. 1) Mt.Vā. मो ; P.1 –व । 2) P.1P.2 –हं । 3) Mt. नो ; Vā. वै । 4) Bḍ. मत्तेभगामिनि । 5) P.1P.2 स । 6) Mt.P.2 –त्य । 7) Mt.T. –याः पाणिउद्वहन्, V. सहितोशणाः; P.1P.2 सह चोशना ।

12 – Bḍ. II. 73.12; Mt. 47.179; P.1 I. 13.277; P.2 V. 13.281[b], 282[a], Vā. 98.12. 1) Bḍ. स तया चावसद् ; P.2 तयावसत्सम ; Vā. स तया संवसेद् (V. –सद् ). 2) P.1P.2T. शत । 3) Vā. T. भागशः । 4) Mt. तः प्रभुः ; P.1P.2 संशितव्रतः ।

13 – Bḍ. II. 73.13; Mt. 47.180; P1 I. 13.278; P.2 V. 13.282[b], 283[a]; Vā. 98.13. 1) Mt. Vā. दृष्ट्वा । 2) P.1P.2 शुक्रं । 3) P.2 –ताश्च ।

14 – Bḍ. II. 73.14; Mt. 47.181; P.1 I. 13.279; P.2 V. 13.283[b],284[a]; Vā. 98.14. 1) Mt. यदा गता । 2) P.2 –ता ये नैव । 3) Vā. –तो । 4) Mt.Vā. जयन्त्या । 5) Vā. दाक्षिण्यं । 6) P.1 चाबुद्ध्वा; P.2 संबुध्य । 7) P.1P.2 नाद्यागच्छति नो गुरुः ।

बृहस्पतिस्तु संरुद्धं ज्ञात्वा काव्यं[1]) वरेण[2]) हृ[3])।
पित्रर्थे[4]) दश वर्षाणि जयन्त्या हितकाम्यया ॥ 15 ॥

बुद्ध्वा तदन्तरं सोऽथ[1]) देवा[2]नामिन्द्रचो[3]दितः।
काव्यस्य रूपमास्थाय सोऽसु[4]रान्समभाषत[5]): ॥ 16 ॥

ततः समा[1]गतान्दृष्ट्वा बृहस्पतिरुवाच तान्[2]) :।
स्वागतं मम याज्यानां संप्राप्तोऽस्मि[3]) हिताय च ॥ 17 ॥

अहं वोऽध्यापयिष्यामि, प्राप्ता विद्या मया हि सा[1])।
ततस्ते हृष्टमनसो विद्यार्थमुपपेदिरे ॥ 18 ॥

पूर्णे[1]) का[2]व्यस्तदा तस्मिन्समये दशवार्षिके।
|(ययौ च समकालं च सद्योत्पन्नमतिस्तदा)।
—समयान्ते देवयानी[1]) सद्योजातमतिस्त[2])दा—।
बुद्धिं चक्रे ततश्चापि[3]) याज्यानां प्रत्यवेक्षणे ॥ 19 ॥

शुक्र उवाच :
देवि गच्छाम्यहं[1]) द्रष्टुं तव[2]) याज्यांशुचिस्मिते।
विभ्रान्त प्रेक्षिते[3]) साध्वि त्रिवर्णायतलोचने! ॥ 20 ॥

एवमुक्ताब्रवीद्देवी[1]) : भज भक्तान्[2]) महाव्रत,।
एष ब्रह्मन् सतां धर्मो[3]), न धर्मं लोपयामि ते! ॥ 21 ॥

ततो गत्वासुरान्दृष्ट्वा देवाचार्येण धीमता।
वाञ्चितान्काव्यरूपेण वचसा पुनरब्रवीत्[1]) : ॥ 22 ॥

काव्यं मां अनु[1]जानीध्वम्, एषो ह्याङ्गिरसो मुनिः[2])।
वञ्चिता वत यूयं वै मयि स[3]क्ते तु[4]) दानवाः! ॥ 23 ॥

---

15 – Bḍ. II. 73.15; Mt. 47.182; Vā. 98.15. 1) Mt. काव्यं ज्ञात्वा। 2) Vā. चकार। 3) Mt. तु।
4) Bḍ. प्रीत्यर्थे; Mt.T. तुष्ट्यर्थं; V. पित्र्यार्थे।

16 – Bḍ. II. 73.16; Mt. 47.183; Vā. 98.16. 1) Mt. ऽपि। 2) Mt.T.Vā. दैत्यां–। 3) Bḍ. मन्त्रचो–; Mt. –द्रनो–; Vā. इव चे.–। 4) Mt. असु–। 5) Mt. समुपाह्वयत्।

17 – Bḍ. II. 73.17; Mt. 47.184; Vā. 98.17. 1) Bḍ. सोऽभ्या–; Mt. –तस्तान् आ–। 2) Mt. ह। 3) Mt. –नां प्राप्तोऽहं वो।

18 – Bḍ. II. 73.18; Mt. 47.185; Vā. 98.18. 1) Bḍ. याः; Mt. विद्याः प्राप्तास्तु या मया।

19ª – Bḍ. II. 73.19ª; Mt. 47.186ª; Vā. 98.19ª. 1) Vā. पूर्वे। 2) Vā. काम–।
| [] – Vā. 98.19ᵇ.

19ᵇᶜ – Bḍ. II. 73.19ᵇ,20ª; Mt. 47.186ᵇᶜ; Vā. 98.20. 1) Bḍ. –याजी। 2) Vā. –ता सुता; Mt. तदोत्पन्ना इति श्रुतिः। 3) Mt. –तः सोऽथ।

20 – Bḍ. II. 73.20ᵇ,21ª; Mt. 47.187; Vā. 98.21. 1) Vā. –महे। 2) Mt. मम। 3) Mt. –त्वीक्षिते।

21 – Bḍ. II. 72.21ᵇᶜ; Mt. 47.188; Vā. 98.23. 1) Mt. एनं। 2) Bḍ. –तां। 3) Mt. एष धर्मः सतां ब्रह्मन्।

22 – Bḍ. II. 73.22,23ª; Mt. 47.189; Vā. 98.23. 1) Mt. ततः काव्योऽब्रवीत्तु तान्; Vā. वेषमासुरमब्रवीत्।

23 – Bḍ. II. 73.23ᵇ, 24ª; Mt. 47.190; Vā. 98.24. 1) Mt. वो वि–; Vā. तात।

श्रुत्वा तथा ब्रुवाणं तं संभ्रान्ता दितिजास्तदा[1]) ।
प्रेक्षन्ते तावु[2])भौ तत्र स्थिता[3]सीनौ[4]) शुचिस्मिताः[5]) ॥ 24 ॥

संप्रमूढाः स्थिताः[1]) सर्वे प्रापद्यन्त न[2]) किंचन ः ।
ततस्तेषु प्र[3]मूढेषु काव्यस्तान्पुनरब्रवीत्[4]) ः ॥ 25 ॥

आचार्यो वो[1]) ह्यहं[2]) काव्यो, देवाचार्योऽयमङ्गिराः ; ।
अनुगच्छत मां सर्वे[3]), त्यजतैनं बृहस्पतिम् ! ॥ 26 ॥

एवमुक्ते तु ते सर्वे[1]) तावुभौ समवेक्ष्य च ।
त[2]दासुरा विशेषं तु न व्यजानंस्तयोर्द्वयोः[3]) ॥ 27 ॥

बृहस्पतिरुवाचैनान्[1]) ः असंभ्रान्तोऽयमङ्गिराः[2]) ।
काव्योऽहं वो[3]) गुरुर्दैत्या, मद्रूपोऽयं बृहस्पतिः ॥ 28 ॥

सं[1]मोहयति रूपेण मामकेनैष वोऽसुराः ! ।
श्रुत्वा तस्य वचस्ते[2]) वै संमन्त्र्याथ वचो[3])ऽब्रुवन्[4]) ः ॥ 29 ॥
अयं नो दश वर्षाणि सततं शास्ति वै प्रभुः ।
एष वै गुरुरस्माकम्, अन्तरेप्सुरयं द्विजः[1]) ॥ 30 ॥
ततस्ते दानवाः सर्वे प्रणिपत्याभिवाद्य[1]) च ।
वचनं जगृहुस्तस्य चिरा[2]भ्यासेन मोहिताः ॥ 31 ॥

ऊचुस्तमसुराः सर्वे क्रुद्धाः[1]) संरक्तलोचनाः ।
अयं गुरुर्हितोऽस्माकं, गच्छ, त्वं नासि नो गुरुः ! ॥ 32 ॥

भार्गवोवा[1]ङ्गिरो[2]) वापि[3]) भगवान्, एष[4]) नो गुरुः ।
स्थिता वयं निदेशेऽस्य, गच्छ[5]) त्वं साधु[6]) माचिरम् ! ॥ 33 ॥

एवमुक्त्वा[1]सुराः सर्वे प्रापद्यन्त बृहस्पतिम् ।

---

2) Mt.T. तोषितो गिरिशो विभुः, V. अयम् आङ्गिरसो मुनिः; Vā. भुवि । 3) Vā. श— । 4) Mt. सर्वे शृणुत ।

24 – Bḍ. II. 73.24[b], 25[a]; Mt. 47.191; Vā. 98.25. 1) Mt. —जास्ते तदाभवन् ; Bḍ. Vā. ततः । 2) Bḍ. संप्रेक्षन्ताव; Mt.T. —जारतव; Vā. —ते स्मह्य । 3) Bḍ. स्थिरा—; Vā. —ताः । 4) Vā. खिन्नाः । 5) Bḍ. —तौ ।

25 – Bḍ. II. 73.25[b], 26[a]; Mt. 47.192; Vā. 98.26. 1) Mt. ततः । 2) Mt. न प्राबुध्यन्त । 3) Mt. अब्रवीत्सं— । 4) Mt. तानसुरांस्तदा ।

26 – Bḍ. II. 73.26[b], 27[a]; Mt. 47.193; Vā. 98.27. 1) Bḍ. यो । 2) Bḍ. अयं । 3) Mt. दैत्यास ।

27 – Bḍ. II. 73.27[b], 28[a]; Mt. 47.194; Vā. 98.28. 1) Mt. इत्युक्ता ह्यसुरास्तेन; Vā. एवमुक्तासुराः सर्वे । 2) Mt. व— । 3) Mt. न जानन्त्युभयोस्तयोः ।

28 – Bḍ. II. 73.28[b], 29[a]; Mt. 47.195; Vā. 98,29. 1) Bḍ. —नाम्; Vā. —तान् । 2) Mt. —जस्तपोधनः । 3) Mt. वोऽहं ।

29 – Bḍ. II. 73.29[b], 30[a]; Mt. 47.196; Vā. 98.30. 1) Vā. स । 2) Mt. Vā. ततस । 3) Mt. समेत्य तु ततो; Vā. —मन्त्र्यार्थवचो । 4) Vā. ऽब्रवीत् ।

30 – Bḍ. II. 73.30[b], 31[a]; Mt. 47.197; Vā. 98.31. 1) Bḍ. —जाः ।

31 – Bḍ. II. 73.31[b], 32[a]; Mt. 47.198; Vā 98.32. 1) Mt. —नन्द्य । 2) Bḍ. विद्या— ।

32 – Bḍ. II. 73.32[b], 33[a]; Mt. 47.199; Vā. 98.33. 1) Mt. क्रोध— ।

33 – Bḍ. II. 73.33[b], 34[a]; Mt. 47.200; Vā. 98.34. 1) Bḍ.Vā. —वोऽङ्गि— । 2) Bḍ.Vā. —रसो । 3) Bḍ. Vā. वयं । 4) Bḍ.Vā. भवत्वेषैव । 5) Mt. साधु । 6) Mt. गच्छ ।

ततस्तं दीर्घतमसं
सुरभिर्वाक्यमब्रवीत् ।
विचार्य यस्माद् गोधर्मं
प्रमाणं ते कृतं विभो ॥ 87 ॥
शक्त्या चानन्ययास्मासु
तेन प्रीतास्मि तेऽनघ ।
तस्मात्तुभ्यं तमोदीर्घम्
आघ्रायापनुदामि ते ॥ 88 ॥
बार्हस्पत्यस्तथैवैष
पाप्मा वै तिष्ठति त्वयि ।

सुरभिर्दीर्घतमसम्
अथ प्रीतो वचोऽब्रवीत् ।
विचार्य यस्माद् गोधर्मं
त्वं एवं कृतवानसि ॥ 87 ॥
भक्त्या चानन्ययास्मासु
मुने[1]) प्रीतोऽस्मि तेन ते ।
तस्मात्तव तमो दीर्घं
निस्तुदाम्यद्य पश्य वै ॥ 88 ॥
बार्हस्पत्यं च यत्तेऽन्यत्
पापं संतिष्ठते तनौ ।

जरा[1]मृत्युभयं[2] चैव आ[3]घ्राय प्रणु[4]दामि ते ॥ 89 ॥

सद्यः स घ्रातमात्रस्तु
असितो मुनिसत्तमः ।

आघ्रातमात्रः सो[1])ऽपश्यत्
सद्यस्तमसि नाशिते ।

आयुष्मांश्च युवा चैव[1]) चक्षुष्मांश्च ततोऽभवत् ॥ 90 ॥

गोभ्याहते तमसि वै
गौतमस्तुऽ ततोऽभत्

गवा हृत[1]तमाः सोऽथ
गौतमः समपद्यत ।

काक्षी[1]वांस्तु ततो गत्वा सह पित्रा गिरिव्रजम्[2]) ॥ 91 ॥

दृष्ट्वा स्पृष्ट्वा पितुर्वै स
ह्युपविष्टश्चिरं तपः ।

यथोद्दिष्टं हि पित्राथ[1])
चचार विपुलं तपः ।

ततः कालेन महता तपसा भावितः स वै[1]) ॥ 92 ॥

विधूय मातृजं कायं
ब्राह्मण्यं प्राप्तवान्विभुः ।

विधूय सानुजो दोषान्
ब्राह्मण्यं प्राप्तवान्प्रभुः ।

ततोऽब्रवीत्पिता त्वेनं[1]) पुत्रवानस्म्यहं प्रभो[2]) ॥ 93 ॥
सत्पु[1]त्रेण त्वया तात[2]) कृतार्थोऽस्मि[3]) यशस्विना ।
मुक्त्वा[4])त्मानं[5]) ततः सोऽथ[6]) प्राप्तवान्ब्रह्मणः क्षयम् ॥ 94 ॥

---

87 – Mt. 48.80
88 – Mt. 48.81
89 – Mt. 48.81b
89b – Bḍ. II. 74.93a; Mt. 48.82b; Vā. 99.91a. 1) Mt. –रां । 2) Mt. युं तमङ्– । 3) Bḍ. ह्रा– । 4) Mt. –यापनु– ।
90a – Mt. 48.83a.
90b – Bḍ. II. 74.91a; Mt. 48.83b; Vā. 99.92a. 1) Mt. वपुष्मांश्च ।
91a – Mt. 48.81a.
91b – Bḍ. II. 74.95a; Mt. 48.84b; Vā. 99.93a. 1) Vā. प्रजाम् ।
92a – Mt. 48.85a
92b – Bḍ. II. 74.96a; Mt. 48.85b; Vā. 99.94a. 1) Mt. –ारस्तु सः ।
93a – Mt. 48.86a.
93b – Bḍ. II. 74.97a; Mt. 48.86a; Vā. 99.95a. 1) Mt. तं वैः चैनं । Vā. त्वया । 2) Mt. त्वया ।
94 – Bḍ. II. 74.87b, 98a; Mt. 47.86b, 87a; Vā. 99.95b, 96a. 1) Bḍ. सु– । 2) Mt. तु धर्मज्ञ । 3) Bḍ. धश्च; Mt. ऽहं । 4) Bḍ.Vā. युक्ता । 5) Vā.T. –मा हि । 6) Mt. –तोऽसौ वै ।

87 – Bḍ. II. 74.92b, 91a; Vā. 99. 88b, 89a.
78 – Bḍ. II. 74.91b, 91a; Vā. 99.89b, 90a 1) Vā. तेन न्यायेन मुमुचे अहं ।
89 – Bḍ. II. 74.92b. Vā. 99.90b.
90a – Bḍ. II. 74.93b; Vā. 99.91b. 1) Bḍ. –त्रोऽसौ ।
91a – Bḍ. II. 74.94b; Vā. 99.92b. 1) Vā.T. दीर्घ– । V. वाद् गत– ।
92b – Bḍ. II. 74.95b; Vā. 99.93b, 1) Vā. त्रार्थे ।
93a – Bḍ. II. 74.96b; Vā. 99.94b.

ब्रह्मण्यं प्राप्य काक्षी[1]वान्सहस्रमसृजत्सुतान् ।
कूष्[2]माण्डा[3]) गौतमास्ते वै[4]) स्मृताः कक्षी[1]वतः सुताः ॥ 95 ॥
इत्येष दीर्घतमसो बलेर्वैरोचनस्य वै) ।
समागमः *समाख्यातः*[2]) संतानश्चो[3])भयोस्तथा[4]) ॥ 96 ॥
बलिस्तानभिषिच्येह[1]) पञ्च पुत्रानकल्मषान् ।

| | |
|---|---|
| कृतार्थः सोऽपि धर्मात्मा<br>योगमायावृतः स्वयम् ।<br>अदृश्यः सर्वभूतानां<br>कालापेक्षः स वै प्रभुः ॥ 97 ॥ | कृतार्थः सोऽपि योगात्मा<br>योगमाश्रित्य च प्रभुः ।<br>अदृश्यः सर्वभूतानां<br>कालाकांक्षी चरत्युत ॥ 97 ॥ |
| अङ्गपुत्रो महानासीद्<br>राजेन्द्रो दधिवाहनः । | तत्राङ्गस्य तु दायादो [1])<br>राजासीद्दधिवाहनः ।<br>सोऽपराधात्[2]) सुदेष्णाया<br>अनपानोऽभवन्नृपः । |

दधिवाहन[1]पुत्रस्तु राजा दिविरथोऽभवत्[2]) ॥ 98 ॥

| | |
|---|---|
| पुत्रो दिविरथस्यासी-<br>च्छक्रतुल्यपराक्रमः ।<br>विद्वान्धर्मरथो नाम<br>तस्य चित्ररथः सुतः ॥ 99 ॥ | पुत्रो दिविरथस्यासी-[1])<br>द्विद्वान्धर्मरथो नृपः ।<br>स वै[2]) धर्मरथः श्रीमान्<br>ये[3]न विष्णुपदे गिरौ ॥ 99 ॥ |
| तेन धर्मरथेनाथ<br>तदा[1]) विष्णुपदे[2]) गिरौ ।<br>यजता सह शक्रेण<br>सोमः पीतो महात्मना ॥ 100 ॥ | सोमः शक्रेण सह वै<br>यज्ञे[1]) पीतो महात्मना<br>सूनुर्धर्मरथस्यापि<br>राजा चित्ररथोऽभवत्[2]) ॥ 100 ॥ |

अथ चित्ररथस्यापि पुत्रो[1]) दश[2]रथोऽभवत् ।

---

95 – Bḍ. II. 74.98$^{b}$, 99$^{a}$; Mt. 48.37$^{b}$. 88$^{a}$; Vā. 99.96$^{b}$,97$^{a}$. 1) Mt. काक्षी– । 2) Mt. कौष । 3) Vā. T. कृष्णाङ्गा । 4) Mt. माश्चैव ।

96 – Bḍ. II. 74.99$^{b}$, 100$^{a}$;Mt. 48.89; Vā. 91.97$^{b}$, 83$^{a}$. 1) Mt. च । 2) Mt. –श्चो वः कथिता । 3) Mt. ततिश्च । Vā. नां । 4) Vā. तयोः ।

87$^{a}$ – Bḍ. II. 74.100$^{b}$; Mt. 48.60$^{a}$; Vā. 99.98$^{b}$. 1) Mt. –नन्वाह ।

97$^{bo}$ – Mt. 48.90$^{b}$, 91.

97$^{bo}$ – Bḍ. II. 74.101; Vā. 91.99.

98$^{a}$ – Br. 13.37$^{a}$; 1693$^{b}$.

98$^{ab}$ – Bḍ. II. 74.102; Mt. 48.91$^{b}$ – $^{a}$; Vā. 99.100. 1) Bḍ.Vā. राजर्षे । 2) Vā. सापराध–

98$^{b}$(°) – Bḍ. I1. 74.103$^{a}$; Br. 13.37$^{b}$; H. 1694$^{a}$; Mt. 48.92$^{a}$; Vā. 99.101$^{a}$. 1) Bḍ.Vā. अनपानस्य । 2) Bḍ.Mt.Vā. थः स्मृतः ।

99 – Br. 13.38; H. 1694$^{b}$, 1695$^{a}$

99 – Bḍ. II. 74.103$^{b}$ – $^{a}$. Mt. 48.93$^{b}$, 93$^{a}$; Vā. 91.101, 102$^{a}$. 1) Mt. आसीद्विरथापत्यं । 2) Mt. हि । 3) Mt. मांस्ते– ।

100 – Br. 13.39; H. 1695$^{b}$, 1696$^{a}$. 1) H. तथा । 2) Br. कालञ्जरे ।

100 – Mt. 48.93$^{b}$, (94$^{a}$); Vā. 99.102$^{b}$, 103$^{a}$. 1) Mt. वै राज्ञा सह । 2) Mt. अथ धर्मरथस्याभूत्पुत्रश्चित्ररथः किल ।

लोमपाद इति ख्यातो य[3]स्य शान्ता सुताऽभवत् ॥ 101 ॥

अथ[1]) दाशरथिर्वीराश्चतुरङ्गो महायशाः[2]) ।
ऋष्यशृङ्गप्रसादेन जज्ञे कुलवि[3]वर्धनः ॥ 102 ॥

चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष[1]) इति स्मृ[2]तः ।
पृथुलाक्ष[1]) सुतश्चापि[3]) चम्पो नाम[4]) *महायशाः*[5]) ॥ 103 ॥

चम्पस्य तु पुरी चम्पा[1]), या मालिन्यभवत्पुरा[2]) ।
पूर्णभद्रप्रसादेन हर्यङ्गोऽस्य सुतोऽभवत् ॥ 104 ॥

ततो वैभाण्डकि[1])स्तस्य वारणं शक्रवारणम्[2] ।
अवतारयामास[3]) महीं मन्त्रैर्वाहनमुत्तमम् ॥ 105 ॥

हर्यङ्गस्य तु दायादो[1]) राजा[2]) भद्ररथः स्मृतः[3]) ।
पुत्रो[4]) भद्ररथस्यासीद् बृहत्कर्मा प्रजेश्वरः[5]) ॥ 106 ॥

बृहद्भानुः[1]) सुतस्तस्य, यस्[2]माज्जज्ञे बृहन्मनाः[3]) ।
बृहन्मनास्तु[4]) राजेन्द्रो जनयामास वै सुतम् ॥ 107 ॥

नाम्ना जयद्रथं नाम[1]) यस्[2]माद् दृढ[2]रथो नृपः ।
आसीद् दृढरथस्यापि[4]) विश्वजिज्जनमेजयः[5]) ॥ 108 ॥

दायादस्तस्य वै कर्णो[1])
विकर्णस्तस्य चात्मजः

दायादस्तस्य चाङ्गो वै[1])
यस्[2]मात्कर्णोऽभवन्नृपः ।

---

101 – Br. 13.40; H. 1997[b] 1697[a]; Mt. 48.(94[b]), 95[a]; Vā. 99.103[bc] 1) राजा । 2) H. द्व– । 3) Mt. तस्य सत्यरथः पुत्रस्तस्मद्दशरथः किल । 3) Mt. –त्रस्त– ।

102 – Br. 13.41; H. 1697[b], 1698[a]; Mt. 48.95[b], 96[a]; Vā. 99.104. 1) Br. H. तस्य । Vā. स तु । 2) Vā. –मनाः । 3) Br. वंशवि– । Mt. स्वकुल– । Vā. ऽथ कुल– ।

103 – Br. 13.42; H. 1699[a]; Mt. 48.96[b], 97[a]; Vā. 99.105[ab]. 1) Vā. –लाश्व । 2) Vā. श्रु– । 3) °Br. H. –तो राजा । 4) Mt. –पनामा । 5) Mt. Vā. बभूव ह ।

104 – Br. 13.43; H. 1699[b], 1700[a]; Mt. 48.97[b], 98[a]; Vā. 99.105[c],1074[c]. 1) Vā. रम्या । 2) Mt. पूर्वं या मालिनी भवत् । Vā. रम्या रम्या या मालिनी भवत् ।

105 – Br. 13.44; H. 1700[b], 1701[a]; Mt. 48. (98[b]), 99[a]; Vā. 99.108. 1) Vā. जज्ञे वैतण्डिकर– । 2) Mt. यज्ञे विभाण्डकाच्चास्य वारणः शत्रुवारणः । 3) Vā. आनयामास स ।

106 – 13.45, H. 1701[b], 1702[a]; Mt. 48.99[b], 100[a]; Vā. 99.109. 1) Br. सुतस्तत्र । 2) Mt. जातो । 3) Mt. Vā. किल । 4) Mt. Vā. अथ । 5) Mt. जनेश्वरः ।

107 – Br. 13.46; H. 1702[b], 1703[a]; Mt. 48.100[b], 101[a]; Vā. 99.110. 1) Br. H. दर्भः । Mt. भानुः । Vā. रथः । 2) Mt. Vā. तर– । 3) Mt. महात्मवान् । 4) Mt. दृढनुर– ।

108 – Br. 13.47; H. 1703[b], 1704[a]; Mt. 48.101[b], 102[a]; Vā. 99.111. 1) H. वीरं । 2) Mt. Vā. तर– । Mt. वृहद्– । 4) वृहद्रथाच्चैव । 5) Br. –यी । H. –य ।

109 – Br. 13.48; H. 1704[b], 1705[a]. 1) कर्णस्तु ।

109 – Mt. 48.102[b], 103[a]; Vā. 99.112. 1) Vā. चांगेभ्यो । 2) Mt. तर– । 3) Vā. सुर– । 4) Mt. पृथुसेन–स्तथात्मजः ।

तस्य पुत्रशतं त्वासीद-
ङ्गानां कुलवर्धनम् । ॥ 109 ॥

कर्णस्य वृष[2]सेनस्तु
द्विजस्तस्यात्मजः[4]) स्मृतः ॥ 109[1] ॥

ऋषय ऊचुः
कथं सूतात्मजः[1]) कर्णः कथमङ्ग[2]स्य चात्मजः[3]) ।
एतदिच्छामहे[4]) श्रोतुमत्यन्त[5]कुशलो ह्यसि! ॥ 109 ॥

सूत उवाच :
बृहद्भानु[1]सुतो जज्ञे[2]) राजा नाम्ना[3]) बृहन्मनाः ।
तस्य पत्नीद्वयं चा[4]सीद्वैनतेयसुते शुभे[5]) ॥ 110 ॥
यशोदेवी च सत्या च, नाम्यां[2]) वंशस्तु भि[2]द्यते[3]) ।
जयद्रथस्तु[1]) राजेन्द्रो[5]) यशोदेव्यां व्यजायत[6]) ॥ 111 ॥
ब्रह्मक्षत्रोत्तरः[1]) सत्यां[2]) विजयो[3]) नाम विश्रुतः[4])
विजयस्य धृतिः[5]) पुत्रस्तस्य पुत्रो धृत[6]व्रतः ॥ 112 ॥
धृतव्रतस्य[1]) पुत्रस्तु सत्यकर्मा महायशाः[2])
सत्यकर्मसुतश्चापि[3]) सूतस्त्व[5]धिरथस्तु वै[5]) ॥ 113 ॥
यः[1]) कर्णं प्रतिजग्राह तेन कर्णस्तु सूतजः ।
एतद्वः कथितं सर्वं कर्णं प्रति महाबलम्[3]) ॥ 114 ॥
कर्णस्य वृषसेनस्तु वृषस्तस्यात्मजः स्मृतः ।
एतेऽङ्ग[1]वंशजाः[2]) सर्वे राजानः कीर्तिता मया ।
सत्यव्रत महात्मानः प्रजावन्तो महारथाः ॥ 115 ॥ | विस्तरेणानुपूर्व्या[1]) च पूरोस्तु शृणुत प्र[2]जाः! ।

---

109[1] – Mt. 48.104; Vā. 99.113. 1) Vā. सूतात्मजः कथं । 2) Vā. चांग– । 3) Vā. वंशजः । 4) Vā. म वै । Vā. अर्थं ।

110 – H. 1705[b], 1706[a]; Mt. 48.105[ab]; Vā. 99.114. 1) H. -दर्भ– । Vā. :मानोः । 2) H. यस्तु 3) Vā. माम्ना राजा । 4) Mt. ह्या– । 5) Mt. सींच्छैन्यस्य तनये शुभे । Vā. सीच्चैवस्योमे । च ते सुते ।

111 – H. 1706[b], 1707[a]; Mt. 48.105[c], 106[a]; Vā. 99.115. 1) Mt. तयो– । 2) H. वि । 3) Mt. शंच मे.शृणु । 4) Mt. थं । 5) H. –द्र । Mt. जानं । 6) Mt. देवी ह्यजीजनत् ।

112 – H. 17007[b], 1708[a]; Mt. 48.106[b], 107[a]; Vā. 99.116. Vā. त्रान्तरः । Mt. सा बृहन्नसः । 2) Mt. –त्या । Vā. –त्य– । 3) Mt.यं 4) Mt. तं । 5) Mt. बृहत्– । 6) Mt. बृहद्रथः ।

113 – H. 1708[b], 1709[a]; Mt. 48.107[b], 108[a]. Vā. 99.117. 1) Mt. बृहद्रथस्य । 2) Mt. -मनाः । 3)Mt.T. मणोऽधिरथः । 4) Mt. चा– । 5) Mt. थः स्मृतः ।

114 – H. 1709[b], 1710[a]; Mt. 48.108[b], 109[a]; Vā. 99.118. 1) Vā. स । 2) Mt.T. तच्चेदं सर्वमाख्यातम् । V. एतद्वः सर्वमाख्यातं । 3) Mt. यथोदितम् । Vā. णे यद्वै प्रचोदितम ।

115[a] – H. 1710[b].

115[b] – Br. 13.40[a]; H. 1171[a]; Mt. 48.103[b]; Vā. 99.119[a]. 1) H. एतेषां । 2) Mt. ह्यस्यात्मजाः ।

115[c] – Br. 13.40[b]; H. 1711[b]

1[a] – Mt. 48.103[c]; Vā. 99.119[b]. 1) Mt.T. याच– । 2) Mt. द्वि– ।

## B.

( Br. 13.3–15[a], 50–64[a], 89–82, 93–141[a]; H. 1655–1668[a]; 1712–1734[a], 1754[b]–1756, 1777–1829[a], 1053–1058[a]; Mt. 49.i.–50.57; Vā. 99.113[b]–25[ba]; cfr. A.278.1–41. Bhg. ix. 20.1–22.33;Ga. 140.1–10; Vi. iv. 19.1–22.12 )

पूरोः पुत्रो महावीर्यो[1]) राजासीज्ज[2])नमेजयः ।
प्राचिन्वांस्तु[3]) सुतस्तस्य यः प्राचीमजयद्दि[4])शम् ॥ 1 ॥

प्रचिन्वतः प्र[1]वीरोऽभून्म[2])नस्युस्तस्य चात्मजः[3]) ।
राजा चा[4]भयदो[5]) नाम मनस्योरभवत्सुतः ॥ 2 ॥

तथैवाभयदस्यासी-
त्सुधन्वनो नाम पार्थिवः[1]) ।
सुधन्वनो बहुगवः
संपातिस्त[2]स्य चात्मजः ॥ 3 ॥

दायादस्तस्य चाप्यासी-
द्धुन्धुर्नाम महापतिः ।
धुन्धोर्बहुगवी[1]) पुत्रः
संपा[2]तिस्तस्य चात्मजः ॥ 3 ॥

संपातेस्तु रहंपाती[1]) रौद्रा[2]श्वस्तस्य वै सुतः[3]) ।
रौद्रा[2]श्वस्य घृताच्यां वै[4]) दशाप्सरसि सूनवः ॥ 4 ॥

ऋचेयुः प्रथमस्तेषां[1])
कृकणेयुस्तथैव च ।
कक्षेयुः[2]) स्तण्डिलेयुश्च
संनतेयुस्तथैव च ॥ 5 ॥

ऋचे[1]युश्च कृते[2]युश्च
कक्षेयुः स्थण्डिलेयुश्च[3]) ।
घृ[4]तेयुश्च जले[5]युश्च
स्थलेयुश्चैव सप्तमः ॥ 5 ॥

---

1ab(bo) – H. 1655; Mt. 49.1; Vā. 99.120. 1) Mt.–नेजा; Vā. वाहु । 2) Mt. जा स । 3) Mt. प्राची–त्वतः..Vā. अविद्धर– । 4) Mt. अकरोद् ।

2 – Br. 13.3; H. 1656; Mt. 41.2; Vā. 99.121. 1) Br. पुरोः पुत्रः सु । Vā. अविद्धतः प्र– 2) Vā. रस्तु । Mt. प्राचीत्वतस्यतनयो । 3) Mt. युश्च तथाभवत् । Vā. युरभवत्सुतः । 4) Vā. जाथो । 5) Mt. –जा । पीतायुधो । Vā.T. जयदो । V. भयदो.

3 – Br. 13.4. H. 1657. 1) Br.V. वा च महीपतिः । 2) Br. त; सुबाहुश्च रौद्राश्वस ।

3 – Mt. 49.3; Vā. 99.122. 1) Mt. विधः 2) Mt. V.Vā. या । Vā.T. जा ।

4 – H. 1658; Mt. 49.4; Vā. 99.123(a)b. 1) Mt. वर्चा । 2) Mt. भद्रा । 3) Mt. चात्मजः । Vā. संजा–तेरथरौद्रांश्वर, तस्यपुत्रान्निबोधत । 4) Mt.T. धृतायां तु ।

5 – Br. 13.5; H. 1659. 1) Br. रौद्राश्वस्य दशार्णेयुः । 2) Br.–यु– ।

5 – Mt. 49.5; Vā. 99.124. 1) Mt.T. औचे– । V. रेचे– । Vā. रजे । 2) Mt. हृपे– । Mt. युश्च स–[illegible] । 4) Mt. [illegible] । 5) Mt. विने । 6) Mt. सत्तमः ।

दशार्णेयु[1])र्जलेयुश्च
स्थलेयुश्च महाबलः ।
धर्मेयुश्च[2]) वनेयुश्च
पुत्रि[3]काश्च दशस्त्रियः ॥ 6 ॥

धर्मेयुः सेनतेयुश्च
वनेयुर्दशमस्तु सः[2]) ॥ 6 ॥

रु[1]द्रा शूद्रा च म[2]द्रा च शलदा[3]) मलदा[1]) तथा ।

खलदा च ततो विप्रा[1])
नलदा सुरसापि च ॥ 7 ॥
तया गोचपला च स्त्री-
रत्नकूटा च ता दश ।
ऋषिर्जातोऽत्रिवंशे तु[1]) तासां
भर्ता प्रभाकरः ॥ 8 ॥

तला खला च सप्तैता
या च गोपजला स्मृता ॥ 7 ॥
तथा ताम्ररसा चैव
रत्नकूटी च ता दश ।
आत्रेयो वंशतस्तासां
भर्ता नाम्ना प्रभाकरः ॥ 8 ॥

रुद्रा[1]यां जनयामास सुतं सोमं यशस्विनम् ।
स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ॥ 8[1] ॥
तमोभिभूते लोके च प्रभा येन प्रवर्तिता ।
स्वस्ति तेऽस्त्विति चोक्तो[1]) वै पतमानो दिवाकरः ॥ 8[2] ॥
वचनात्तस्य विप्रर्षेर्न पपात दिवो महीम् ।
अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ॥ 8[3] ॥
यज्ञेष्वत्रेर्धनं[1] चैव देवैर्यस्य प्रतिष्ठितम्[2]) ।
स तासु जनयामास पुत्रिकासु सनामकान्[3]) ॥ 8[4] ॥
दश पुत्रान्महासत्त्वांस्तपस्युग्रे रतांस्तथा[1])
ते तु गोत्रकरा विप्रा[2]) ऋषयो वेद[3]पारगाः ।
स्वस्त्यात्रेया इति ख्याताः किं त्वत्रि[1]-धनवर्जिताः ॥ 8[5] ॥
ऋचेयोस्तु मुनिश्रेष्ठा रौ[1]द्राश्वतनयस्य वै ।
शृणुध्वं संप्रवक्ष्यामि वंशं राज्ञस्तु मो द्विजाः[2]) ॥ 8[6] ॥

अनाधृष्यस्[1]तु राजर्षि[2]र्ऋचेयुर[3]चैकराट् सुतः[4]) ।
ऋचे[3]यो[5])र्ज्वलना नाम भार्या वै तक्षकात्मजा ॥ 9 ॥

---

6 – Br. 13.6; H. 1660. 1) Br. रचेयुश्च; 2) Br. धनेयुश्च । Br.V.H. वननित्यो । 3) Br. –त्र– ।

6 – Mt. 49.6[a]; Vā. 99.125[a]. 1) Mt. पुण्येयुश्चेति ते दश ।

7[a] – Br. 13.7[a]; H. 1661[a]; Vā. 99.125[b]. 1) Br.T. भ– । 2) H. भ– । 3) H. मलदा । Vā.T. शुभा । V. शलभा । 4) H. मलहा । Vā.T. जामलजा; V. मलजा ।

7[b] – Br. 13.7[b]; H. 1661[b]. 1) H. दा चैव राजेन्द्र ।

7[b] – Vā. 91.126[a].

8 – Vā. 99.126[b], 127[a].

8 – Br. 13.8; H. 1662. 1) Br. च ।

8[1] – Br. 13.9; H. 1663. 1) Br. भद्रा ।
8[2] – Br. 13.10; H. 1664. 1) Br. चोक्त्वा ।
8[3] – Br. 13.11; H. 1665.
8[4] – Br. 12.12, H. 1666. 1) Br. बलं । 2) H. वर्तितम् । 3) Br. –कास्वात्मकात्मजान् ।
8[5] – Br. 13.13, 14[a]. H. 1667, 1668[a]. 1) H. सदा । 2) H. राजन् । 3) Br. देव– । 4) Br. चात्रि– ।
8[6] – Br. 13.50; H. 1712[a](b). 1) H. महाराज वौ– । 2) H. शृणु वंशमनुप्रोक्तं यत्र यातोऽसि पार्थिव ।

9 – H. 1714; Mt. 49.6[b] – [b]; Vā. 99.127[b], 128[a]. 1) Vā. अनादृष्टः । 2) Vā.

तस्यां देव्यां स राजर्षि-
र्मतिनारो महीपतिः ।
मतिनारसुतास्त्वासं-
स्त्रयः परमधार्मिकाः ॥ 10 ॥

तंसुराद्यः)[1] प्रतिरथः
सुबाहुश्चैव धार्मिकः ।

तस्[1]यां देव्यां स राजर्षी[2])
रन्तिनारं[3]) त्वजीजनत्[4]) ।
रन्तिना[3]रः[5]) सरस्वत्यां[5])
पुत्रानजनयच[7])छुभान् ॥ 10 ॥

त्रसुं तथा प्र[1]तिरथं
ध्रुवं चैवाति[2]धार्मिकः ।

गौरी कन्या च विख्याता[1]) मान्धातु[2])र्जननी शुभा[3]) ॥ 11 ॥

| सर्वे वेदविदश्चैव[1]) ब्रह्मण्याः सत्यवादिनः ।
| सर्वे कृतास्त्रा बलिनः सर्वे युद्धविशारदाः ॥ 11[1] ॥

पुत्रः[1]) प्रतिरथस्यापि[2]) कण्वः[3]) समभवन्[4]) नृपः[5]) ।
मेधातिथिः सुतस्तस्य यस्मात्काण्वायना द्विजाः[6]) ॥ 12 ॥

इलिनी नाम[1]) यस्यासी-
त्कन्या वै मुनिसत्तमाः[2]) ।
ब्रह्मवादिन्यधिस्त्री सा[3])
तंसुस्तामभ्यगच्छत ॥ 12[1] ॥

तंसोः सुतोऽथ[1]) राजर्षि-
र्धर्मनेत्रः प्रतापवान् ।
ब्रह्मवादी पराक्रान्त-
स्तस्य भार्योपदानवी ॥ 13 ॥

इलिना तु[1]) यमस्यासी-
त्कन्या, सा[2]जनयत्सुतान् ।
ब्रह्मवादपराक्रान्ता
ऋछु-भदा त्विलिना ह्यभूत् ।
त्रसोः सुदयितं पुत्र-
मेलि[1]नं ब्रह्मवादिनम् ॥ 13 ॥

उपदानवी[1]) सुतां[2])ल्लेभे[3]) चतुरस्[4])त्वैलिनात्मजान्[5]) ।

---

–पि । 2) Va.T. रिदे–, रिचे– । 4) Vā. तस्य चात्मजः । 5) Mt. औचेयोः ।

10 – Br. 13.51; H. 1715. 1) Br. –चेयोस्तनयो राज ।

11[a] – Br. 13.52[a]; H. 1716[a]. 1) Br.T. वसुरोधः ; V. तसुरोधः ।

10 – Mt. 49.(7); Vā. 99.128[b], 129[a]. 1) Vā. यर– । 2) Mt. स जनयामास । 3) Mt.T. अन्तिनारं । Vā. T. रन्ति नाम । V. तिर्नारं । 4). Mt. महीपतिं । 5) Vā. तिर्नारः । 6) Mt. मनस्विन्यां । 7) Mt. जज्ञे परा– ।

11[a] – Mt. 49.(8[a]); Vā. 99.129[b]. 1) Vā. –थो आप्र– । 2) Mt. अमूर्तरयसं वीरं त्रिवमं चेव ।

11[b] – H. 1716[b]; Mt. 49.8[b]; Vā. 99.130[a]. 1) Mt. तृतीय च । H. –तृ । 3) H. तथा ।
| 11[1] – Br. 13.52[b] – [a]; H. 1717. 1) H. –द्रस्तत्र ।

12 – H. 1718; Vā. 99.130[b], 131[a]. 1) Vā. धुर्यो– । 2) H. स्यासीत् । 3) Vā. कण्ठस– । 4) Mt. तस्याभवत् । V. –वन् । 5) Vā.T. सुतः । 6) H. कण्वेऽभवद्द्विजः । Mt. काण्ठायना द्विजाः ।

12[1] – Br. 13.53; H. 1791. 1) Br. इला नाम तु । 2) H. जनमेजय । 3) H. च ।
13 – Br. 13.54; H. 1720. 1) H. सुरंधो ।

13[ab] – Mt. 49.9; Vā. 99.131[b] – [a] 1) Vā. इतिना– तु– । 2) Mt. या ।
13[c] – Vā. 99.132[a]. Vā. मलि–

14 – Br. 13.55; H. 1721; Mt. 4.10; Vā. 99.132[a]. 1) Vā. उपदातं ।

दुष्यन्त[6]मथ सुष्यन्त[7]म्प्रवीरमनघं तथा ॥ 14[1] ॥

| दुष्यन्त[1]स्य दायादो भरतो नाम वीर्यवान् ।
| स सर्वंदमनो नाम नागायुतबलो महान् ॥ 14[2] ॥

चक्रवर्ती सु[1]तो जज्ञे दुष्य[2]न्तस्य महात्मनः[3]) ।
शकुन्तलायां भरतो[4]) यस्य नाम्ना तु[5]) भारताः[6]) ॥ 15 ॥

दुष्यन्तं[1]) प्रति राजानं वागुवाचा[2]शरीरिणी ।
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ 16 ॥

भरस्व पुत्रं दुष्य[1]न्त, मावमंस्थाः शकुन्तलाम् ! ।
रेतोधाः[2]) पुत्रोन्नयति[2]) नरदेव[4]) यमक्षयात्[5]) ॥ 17 ॥

त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ।

| | |
|---|---|
| भरतस्य विनष्टेषु<br>तनयेषु महीपतेः[1]) । | भरतस्तिसृषु स्त्रीषु<br>नव पुत्रानजीजनत् ।<br>नाभ्यनन्दच्च तान् राजा<br>नानुरूपान्ममेत्युत ॥ 18 ॥ |
| मातॄणां तु प्र[2]कोपेण<br>मया तत्कथितं पुरा[3]) ॥ 18 ॥ | ततस्ता मातरः क्रुद्धाः<br>पुत्रान्निन्युर्यमक्षयम् ।<br>ततस्तस्य नरेन्द्रस्य<br>वितथं पुत्रजन्म तत् ॥ 18[1] ॥ |
| बृहस्पतेरङ्गिरसः<br>पुत्रो विप्रो[1]) महामुनिः । | ततो मरुद्भिरानीय<br>पुत्रः स तु[1]) बृहस्पतेः । |

---

2) Br. ततः । Vā. ततो । 3) Br. पुत्रां । 4) Br. रो- । 5) Br. ऽजनयच्छुभान् । H. ऐलिकात्मजान् । Mt.T. इलिनात्मजान् । V. -जान् । Vā.T. इतिसात्मजान् । V. इलिनात्मजान् । 6) H. दुष्मन् । Mt. -ष्यन् । Vā. सुष्मन् । 7) Br.H. सुस्मन- । Mt. दुष्यन् । Vā. दुष्मन्- (यन्-) ।

| 14[1] - Br. 13.56; H. 1722. 1) H. । -यन्- ।

15 - A. 278.7[a] - [b]; Br. 13.57; H. 1723; Mt. 49.11; Vā. 99.133[b], 134[a]. 1) Mt.Vā. त । 2) H. मन् । 3) Mt. यज्ञे दुष्यन्तात्समितिंजयः ; Vā. दौष्म(य)न्तिनृ॑पसत्तमः । 4) A. तु बली । 5) H. स्थ 6) Vā. तन् ।

16 - H. 1724; Mt. 49.12; Vā. 99.134[b], 135[a]; Vi. IV. 19.2[a] - [b]. 1) H. दुष्मन्तं । Mt. दुष्यन्ति । 2) Mt. ऊचे चा- ।

17 - H. 1725; Mt. 49.13[ab]; Vā. 99.235[b]I, 136[b]II, 136[a] - [ab]; Vi. IV. 19.2[b], 3[a]. 1) H.Vi. मन् । Mt. T. धां । 3) Br. त्रामुन्नयति; । Mt.T. नयते पुत्रः, V. पुत्रः उन्नयते; Vā. धाः पुत्रं नयति । 4) Mt. परेतां । 5) Mt. यमसादनात् ।

18[a] - H. 1726[a]. Mt. 49.13[c]; Vā. 99.136[b]I, 135[b]II; Vi. IV. 19.3[b],

18[bc] - Br. 13.58; H. 1726[b], 1727[a]; Mt. 49.14[a](b). 1) Mt. पुरा किल । 2) H. तात । 3) H. यथा । Mt. पुत्राणां मातृकात्कोपात्सुमहान्संक्षयः कृतः ।

19[a] - Br. 13.59[a]; H. 1727[b]. 2) H. राजन् ।

18[bc] - Vā. 99.137.

18[1] - Vā. 99.138.

19[a] - A. 278.8[a]; Mt. 49.15[a]; Vā. 99.139[a]. 1) Vā. त्वस्तु स ।

संक्रामितो भरद्वाजो मरुद्भिः[1]) क्रतुमिर्विभुः[2]) ॥ 19 ॥
अ[1]त्रैवोदाहरन्तीदं[2]) भरद्वाजस्य धीमतः ।
धर्मं[3]संक्रमणं चापि[4]) मरुद्भिर्भरताय वै ॥ 20 ॥

---

पत्न्यमाप[1]न्नगर्भा[2]यामुशि[3]जः सं[4]स्थितः किल[5]) ।
भ्रातुर्भार्यां स दृष्ट्वाथ[6]) बृहस्पतिरुवाच ह ॥ 21 ॥

उपतिष्ठ स्वलंकृत्य
मैथुनाय च मां शुभे ! ।

| अलंकृत्य तनुं स्वां तु
| मैथुनं देहि मे शुभे !

एवमुक्ताब्रवीदेनम् : अन्तर्वत्नी ह्यहं विभो[1]) ॥ 22 ॥
गर्भः परिणतश्चायं ब्रह्म व्याहरते गिरा ।
अमोघरेतास्त्वं चापि धर्मं[1]श्चै[1]व विगर्हितः[2]) ॥ 23 ॥
एवमुक्तोऽब्रवीदेनां स्मयमानो[1]) बृहस्पतिः ।
विनयो नोपदेष्टव्यस्[2]त्वया मम कथंचन[3]) ! ॥ 24 ॥
हर्ष[1]माणः प्रसह्यैनां मैथुनायोपचक्रमे ।
ततो बृहस्पतिं गर्भो हर्ष[1]माणामुवाच ह ॥ 25 ॥
संनिविष्टो ह्यहं पूर्वमिह तात[2]) बृहस्पते ।
अमोघरेताश्च भवान्नावकाशोऽस्ति च[2]) द्वयोः ॥ 26 ॥
एवमुक्तः स गर्भेण कुपितः प्रत्युवाच ह ।

cfr. Kap. A 6 Śl. 45. { यस्मान्मामी[1])दृशे काले सर्वभूतेप्सिते सति ॥ 27 ।
प्रतिषेधसि[1]) तस्मात्त्वं[2]) तमोदीर्घं प्रवेक्ष्यसि ! ।

ततः कामं संनिवर्त्य
तस्यानन्दाद्बृहस्पतेः ॥28 ॥
तद्रेतस्त्वपतद्भूमौ
निवृत्तं शिशुकोऽभवत् ।

| पादाभ्यां तेन तच्छन्नं
| मातुर्द्वारं बृहस्पतेः ॥ 28 ॥
| तद्रेतस्तु तयोर्मध्ये-
| ऽनिवार्यः शिशुकोऽभवत्

सद्योजातं कुमारं तं[1]) दृष्ट्वाथ[2]) ममताब्रवीत् ॥ 29 ॥

---

19b = A. 278.8b; H. 1728a; Mt. 49.15b, cfr. 30b; Vā. 99.030b. 1) A. जः क्रतुभिः । 2) A. वितथोऽभवत् ; Mt. भिर्भरतस्य तु ।
20 = H. 1728b, 1729a; Vā. 99.44. 1) Vā. त– । 2) H. तीमं । 3) Vā. जन्म । 4) Vā. चैव ।
21 = Mt. 49.141ab. 1) Vā. आस– । 2) Mt. सत्त्वा– । 3) Vā.T. अशि । V. उसि– । 4) Mt. स । 5) –तो भुवि । 6) Mt. ट्वा तु ।
22a = Mt. 49.18. | 22a = Vā. 99.141c.
22b = Mt. 49.1.b; Vā. 99.142a. 1) Mt. स्वयमेव बृहस्पतिम् ।
23 = Mt. 49.19; Vā. 99.142b, 143a. 1) Mt. मं । 2) Mt. तं ।
24 = Mt. 49.20; Vā. 99.143b, 144a. 1) Mt. स्वयमेव । 2) Mt. नोपदेष्टव्यो विनयर– । 3) Mt. मे वरवर्णिनी ।
25 = Mt. 49.21; Vā. 99.144b, 145a. 1) Mt.T. घ– ।
26 = Mt. 49.22; Vā. 99.145b, 146a. 1) Mt. नाम । 2) Mt. श इह ।
27 = Mt. 49.23ab; Vā. 99.146b, 147a. 1) Mt. त्वम् ।
28a = Mt. 59.23c; Vā. 99.147b. 1) Mt.T. अभिपेधसि; V. प्रतिपेधयसे । 2) Vā.T. तत्तस्मात् ।
28b = Mt. 49.24a. | 28b = Vā. 99.148a.
29a = Mt. 49.24b. | 29a = Vā. 99.148b.
29b = Mt. 49.25a; Vā. 99.149a. 1) Mt. तु । 2) Mt. –वा तं ।

गमिष्यामि गृहं स्वं वै भरस्वैनं[1]) बृहस्पते ।।
एवमुक्त्वा गता सा तु
गतायां सोऽपि तं त्यजत् ॥ 30 ॥

| एवमुक्त्वा गतायां स
| पुत्रं त्यजति तत्क्षणात् ॥ 30 ॥
| भरस्व बाढमित्युक्तो
| भरद्वाजस्ततोऽभवत् ।

मातापितृभ्यां संत्यक्तं[1]) दृष्ट्वाथ[2]) मरुतः शिशुम् ।
जगृहुस्तं[3]) भरद्वाजं मरुतः[4]) कृपया ततः[5]) ॥ 31 ॥
तस्मिन्काले तु भरतो बहुभिः[1]) ऋतुभिः[2]) क्रमात्[3]) ।
काम्य[4]नैमित्तिकैर्यज्ञैरयजत्[5] ) पुत्रलिप्सया ॥ 32 ॥
यदा स यजमानो वै[1]) पुत्रं[2]) नासादयत्प्रभुः ।
यज्ञं ततो[3]) मरुत्सोमं पुत्रार्थे पुनरा[4]हरत् ॥ 33 ॥
तेन तं मरुतस्तस्य मरुत्सोमेन तोषिताः[1]) ।
| उपनिन्युर्भरद्वाजं पुत्रार्थं भरताय वै ।
| दायादोऽङ्गिरसः सूनोरौरसस्तु बृहस्पतेः ॥ 34 ॥

संक्रामिता भरद्वाजो
मरुद्भिर्भरतं प्रति

| भरद्वाजं ततः पुत्रं
| बार्हस्पत्यं मनीषिणम्

भरतस्तु भरद्वाजं पुत्रं प्राप्य तदा[1]ब्रवीत् ।
प्रजायां संहृतायां वै[2]) कृतार्थोऽहं त्वया विभो ॥ 35 ॥

अयाजयद्भरद्वाजो
महद्[1]भिः ऋतुभिर्विभुः[2]) ।

पूर्वं तु वितथे[1]) तस्य[2]) कृते[3]) वै पुत्रजन्मनि[4]) ।
ततोऽथ[5]) वितथो नाम भरद्वाजात्सुतो[6])ऽभवत् ॥ 36 ॥
| तस्मादपि[1]) भरद्वाजाद्[2]) ब्राह्मणाः[3]) क्षत्रिया[4]) भुवि[5]) ।
| द्व्यामुष्यायणनामानः[6]) स्मृता[7]), द्विपितरस्तु वै[8]) ॥ 36[1] ॥

---

30a - Mt. 49.25b; Vā. 99.149b, 1) Vā. भरद्वाजं ।
30b - Mt. 49.26a.
| 30b - Vā. 99.150a.
| 31a - Vā. 99.150b.

31ab(bc) - Mt. 49.26b; 99.151. 1) Mt. त्यक्तं तु । 2) Mt. -त्रातं । 3) Vā. गृहीत्वैनं । 4) Vā. जग्मुस्ते । 5) Mt. स्थिताः ।

32 - Mt. 49.27; Vā. 99.152. 1) Vā. मरुद्भिः 2) Mt. -भिर्हंतुभि । 3) Mt. विभुः 4) Mt. T. पुत्र- । 5) Vā. यजते ।

33 - Mt. 49.28; Vā. 99.153, 1) Mt. नस्तु । 2) Vā. -त्रान् । 3) Mt. ततः क्रतुं । 4) Mt. समुपा- ।

34a - Mt. 49.29a; Vā. 99.154a 1) Mt. तुष्टुवुः ।
34bc - Mt. 49.20b, 30a.
| 35 - Mt. 49.30b.
| 35a Vā. 99.154b.

35bc - Mt. 49.31; Vā. 48.155. 1 Mt. विभुः । 2) Mt. आदावात्महिताय त्वं ।

36a - Br. 13.59b; H. 1729b. 1) H. मरुद्- । 2) H. हितम् ।

36bc(ab) - Br. 13.60; H. 1730; Mt. 49,32; Vā. 99.156. 1) Vā. T. थं । 2) Mt. तस्मिन । 3) Vā. T. तं । 4) Vā. T. जन्म हि । 5) Mt. -तस्तु । Vā. तः स । 6) Mt. जो नृपो । Vā. जस्तथा ।

| 31₁ - Mt. 49.33; Vā. 99.157. 1) Vā. दिव्यो । 2) Vā. T. -जो । V. ज । 3) Vā. T. मण्याद् । V. णा । 4) Vā. T. -यो । 5) Vā. T. ऽभवत ।

ततोऽथ वितथे जाते[1]) भरतस्तु[2]) दिवं ययौ।

वितथं चाभिषिच्याथ
भरद्वाजो वनं ययौ ॥ 37 ॥

भरद्वाजो दिवं यातो
ह्यभिषिच्य सुतमृषिः ॥ 37 ॥

स चापि वितथः पुत्राञ्जनयामास पञ्च वै ।
सुहोत्रं च सुहोतारं गयं गर्ग[1]) तथैव च।
कपिलं च महात्मानं सुहोत्रस्य[2]) सुतद्वयम् ॥ 37[1] ॥
काशिकश्च[1]) महासत्त्वस्त[2])था गृत्समतिर्नृपः[3]) ।
तथा गृत्समतेः पुत्रा ब्रह्मणाः क्षत्रिया विशः ॥ 37[2] ॥

वितथस्य तु दायादो[1]) भुवमन्युर्बभूव ह[2]) ।
महाभूतोपमाः पुत्राश्च[3]त्वारो भुवमन्युजाः[4]) ॥ 38 ॥
बृहत्क्षत्रो महावीर्यो नरो गर्गश्च[1]) वीर्यवान् ।
नरस्य सं[2]कृतिः पुत्रस्तस्य पुत्रौ महौजसौ[3]) ॥ 39 ॥
गुरुधी *रन्ति*[1]देवश्च सांकृत्यौ[2]) *तावुभौ*[3]) स्मृतौ ।
गर्गस्य चैव दायादः शिनि[4])*र्विद्वानजायत*[5]) ।
स्मृताः शैन्यास्त[6]तो गार्ग्याः[7]) क्ष[8]त्रोपेता द्विजातयः ॥ 40 ॥
महावीर्यसुतश्चापि[1]) *धीमानासीदुरुक्षयः*[2]) ।
तस्य भार्या विशाला तु सुषुवे वै सुत[3]त्रयम् ॥ 41 ॥
त्र्य्यारुणिं पुष्करिणं[1]) कपिं[2]) *चैव महायशाः*[3]) ।
[उरुक्षयाः स्मृता ह्येते सर्वे ब्राह्मणतां गताः ।]
कपेः क्षत्रवरा[4]) ह्येते त्रयः[5]) प्रोक्ता महर्षयः ॥ 42 ॥
गर्गाः[1]) सांकृतयः[2]) काप्याः[3]) क्षत्रोपेता द्विजातयः ।
संश्रित[5]ङ्गिरसं पक्षं[6]) वृहत्क्षत्रस्य च क्षितिः[7]) ॥ 43 ॥

---

V. विशः 6) Mt. कैलिनाः; Vā. T. द्वियमुयखयननामा स, V. द्वयामुख्यायननामानः । 7) Mt. तार; Vā. T. –ञो । 8) Mt. ते द्विविधेन च ।

37a – Br. 13.61a; H. 1731a; Mt. 49.34a Vā. 99.158a. 1) Mt. जाते हि वितये । 2) Mt. तश्च; Vā. । तः स ।

37b – Br. 13.61b; H. 1731b. | 37b – Mt. 49.34b.

37[1] – A. 278.9,10a; Br. 13.62,63a; H. 1732, 1733a 1) A. –मं । A. सुकेतुं च ।

37[2] – Br. 13.63b, 64a; H. 1733b, 1784a. 1) Br. कां; H. शकाश । 2) Br. सत्यं । 3) Br. तिं नृपम् ।

38 – Mt. 49.35; Vā. 99.158b, 159a. 1) Mt. दायादो वितथस्यासीद् । 2) Mt. महायशः । 3) Vā. माश्चासंद्– । 4) Mt. यवः ।

39 – Mt. 49.36; Vā. 99.159b, 160. 1) Vā. T. गाग्रद्– । 2) Vā. सां– । 3) Mt. –त्रो महायशाः ।

40 – Mt. 49.37, 38a; Vā. 99.160b, 161(a)b. 1) Vā. गुरुर्वीर्यस्त्रि । 2) Mt. सत्कृत्यां । 3) Vā. यावरौ । 4) Mt. शिबिर । 5) Vā. दायादाश्चापिगाग्रस्य शिनिवद्धाद्भूख ह । 6) Mt. शैब्यार– । Vā. चैते । 7) Mt. गर्गाः । Vā. T. गग्र्याः । 8) Vā. T. क्षा– ।

41 – Mt. 49.38b, 39a; Vā. 99.162. 1) Mt. आहार्यतनयश्चैव । 2) Mt. T. यः । V. तः । Vā. भीमरतस्माद्–मक्षयः । 3) Mt. पुत्रक ।

42 – Mt. 49.39b, 40; Vā. 99.163–ac. 1) Mt. त्र्युपणं पुष्करिं चैव । 2) Mt. कवि । 3) Vā. तृतीयं सुषुवे कपिम् । 4) Mt. काव्यानां तुवरा । 5) Vā. ततोः ।

43 – Mt. 48,41; Vā. 99.164 1) Vā. [illegible] । 2) Mt. सं । Vā. –यां ।

बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः।
सुहोत्रस्यापि[1]) दायादो हस्ती नाम[2]) बभूव ह।
तेनेदं निर्मितं पूर्वं पुरं[3]) वै[4]) हस्तिनापुरम्[5] ॥ 44 ॥

[आजमीढोऽपरो वंशः
श्रूयतां द्विजसत्तमाः ! ]
सुहोत्रस्य बृहत्पुत्रो
बृहतस्तनयास्त्रयः ।

| हस्तिनश्चापि[1]) दायादा-
| स्त्रयः परमधार्मिकाः[2]) ।

अजमीढो द्विमीढश्च[1]) पुरुमीढश्च वीर्यवान्[2]) ॥ 45 ॥
अ[1]जमीढस्य पत्न्यास्तु तिस्रो[2]) वै यशसान्विताः[3]) ।
नीलिनी[4]) केशिनी[5]) चैव धूमिनी[6]) च वराङ्गना[7]) ॥ 46 ॥

| अजमीढस्य पुत्रास्तु तासु जाताः कुलोद्वहाः[1]) ।
| तपसोऽन्ते सुमहतो[2]) राज्ञो[3]) वृद्धस्य धार्मिकाः ॥ 46[1] ॥
| भरद्वाजप्रसादेन शृणुध्वं तस्य विस्तरम्[1]) ! ।

अजमीढस्य केशिन्यां
जज्ञे जह्नुः प्रतापवान् ॥ 47 ॥

| अ[2]जमीढस्य केशिन्यां
| कण्वः[3]) समभवत्किल ॥ 47 ॥

मेधातिथिः सुतस्तस्य तस्मात्काण्वा[1]यना द्विजाः ।
अजमीढस्य धूमिन्यां जज्ञे बृहदिषु[2]र्नृपः[3]) ॥ 48 ॥

| [ बृहदनोर्बृहन्तोऽथ बृहन्तस्य बृहन्मनाः ।
| बृहन्मनः सुतश्चापि बृहद्भानुरिति श्रुतः ॥ 48[1] ॥ ]

---

3) Mt. काव्यः ; Vā. वीर्यः । 4) Vā.T. क्षा. 5) Mt. संभृत् । 6) Mt. –सो दक्षा । 7) Vā. वसति ।

44 – H. 1053, 1054ª; Mt. 49.42 – bc; Vā. 99.165. 1) Mt. बृहत्क्षत्रस्य । 2) Mt. –तिनामा । 3) Vā. T. नाम्ना । 4) Mt. तु 5) H. हस्तिनापुरमुत्तमं । Mt. गजसाह्वयम् ।

[ ] – Br. 13.80ª.

4–ª – A. 278.15ª; Br. 13.80ᵇ; H. 1754ᵇ.

| 45ª – H. 1054ᵇ; Mt. 49.43ª; Vā. 99.166ª. 1) Mt. चैव । 2) Mt.Vā.V. कीर्तयः ।

45ᵇ – A. 278.15ᵇ. Br. 13.81ª; H. 1055ª, 1755ª; Mt. 49.43ᵇ; Vā. 99.166ª. 1) Vā. द्विजामीढः. 2) H. 1055, Mt.Vā. धरतथैव च ।

46 – Br. 13.81ᵇ, 82ª; H. 1755ᵇ, 1756ª; Mt. 49.44; Vā. 99.167. 1) H. आ– 2) Mt. तिसः ; Vā.शुमाः । 3) Mt.Vā. कुरुकुलोद्वहाः । 4) Br.H. ली च । 5) Mt. धूमिनी । 6) Mt. केशिनी 7)Br. नाः । Mt. चैव विश्रुता ।

| 46₁ – Mt. 49.45ª(ᵇ); Vā. 99.168. 1) Mt. स तासुजनयामास पुत्रान्वै देववर्चसः । 2) Mt. महातेजा । 3) Mt. जाता ।

47 – A. 278.16ª; Br. 13.82ᵇ; H. 1756ᶜ

| 47 – Mt. 49.46; Vā. 99.169. 1) Mt. विस्तरं तेषु मे श्रृणु । 2) Mt. आ । 3) Vā. कण्ठः ।

48ª – Mt. 99.47ª; Vā. 99.170ª. 1) Mt. कण्ठा ।

48ᵇ – H. 1055ᵇ; Mt. 49.47ᵇ; Vā. 99.170ᵇ. 1) Mt. भू । 2) Mt. हदनु– । Vā.T. वसु– । V. धनु– । 3) H. प– ।

| 48₁ – Mt. 49.48.

बृहद्भानुर्बृ[1])हद्दिषोः[2]) पुत्रस्तस्य *जयद्रथः*[3]) ।
| बृहत्कर्मा सुतस्तस्य पुत्रस्तस्य बृहद्रथः ॥ 49 ॥
विश्व[1]जित्तनयस्तस्य[2]) सेनजित्तस्य *चात्मजः*[3]) ।
अथ[4]) सेनजितः पुत्राश्च[5])त्वारो लोकविश्रुताः[6]) ॥ 50 ॥
रुचिराश्वश्च *काव्यश्च*[1]) *राजा*[2] दृढरथस्तथा[3]) ।
वत्सश्चावन्त[4]को राजा यस्यैते[5]) परिवत्सकाः[6]) ॥ 51 ॥
रुचिराश्वस्य[1]) दायादः पृथुषेणो[2]) महायशाः ।
पृथुषेण[2]स्य पा[3]रस्तु पा[3]रान्नीपोऽथ जज्ञिवान् ॥ 52 ॥
नीपस्यै[1]कशतं त्वा[2]सी[3]त्पुत्राणाममितौजसाम्[4]) ।
नीपा इति समाख्याता राजानः सर्व एव ते ॥ 53 ॥
तेषां वंशकरः श्रीमन्नी[1]पानां[2]) कीर्तिवर्धनः ।
काम्पिल्ये[3]) समरो नाम स चे[4]ष्टसमरोऽभवत् ॥ 54 ॥
समरस्य परः पारः[1]) सदश्व इति ते[2]) त्रयः ।
पुत्राः सर्वगुणोपेताः[3]) पारपुत्रः पृथुर्ब[4])भौ[5]) ॥ 55 ॥
पृथोस्तु[1]) सुकृतो[2]) नाम[3]) सुकृतेनेह कर्मणा ।
जज्ञे *सर्वगुणोपेता* विभ्राजस्तस्य चात्मजः ॥ 56 ॥
विभ्राजस्य तु दायादस्त्व[1]णुहो नाम पार्थिवः[2]) ।
बभूव)) शुक[4]जामाता कृत्वी[5]भर्ता महायशाः ॥ 57 ॥
अणुहस्य तु *दायादो*[1]) ब्रह्मदत्तो *महीपतिः*[2]) ।
यौगदत्तः[3]) सुतस्तस्य[4]) विश्वक्सेनो *महायशाः* ॥ 58 ॥

---

49 – H. 1056[a]; Mt. 49.49[a]; Vā. 99.171[a]. 1) Mt. धनो– ; Vā.T. वसो– । V. धहो– । Mt. सुः । Vā. विष्णुः । 3) H. महायशाः । Mt.V. बहद्रथः । Vā. महाबलः ।

| 49[b] – Vā. 99.171[b]; cfr. H. 1056[b], 1057[a]. बृहद्धर्मेति विख्यातो राजा परमधर्मिकः । सत्यजित्तस्य तनयो, विश्वजित्तस्य चात्मजः ।

50 – H. 1057[b]; 1058[a]; Mt. 49.49[b], 50[a]; Vā. 99.172. 1) Mt. अश– । 2) H. पुत्रो विश्वजितश्चापि । 3) H. पृथिवीपतिः । 4) H. पुत्राः । 5) H.नश्चासंद्द– । 6) H. संमताः ।

51 – H. 1058[b], 1059[a]; Mt. 49.50[b], 51[a]; Vā. 99.173. H. रः श्वेतकेतुः । 2) Vā. रामो । 3) H. महिम्ना रस्तथैव च ; Vā. धनुस्तथा । 4) Mt. व;– । 5) Vā. य ते । 6) Vā. –रः ।

52 – H. 1059[b], 1060[a]; Mt. 46.51[b], 52[a]; Vā. 99.174. 1) H. स्य तु । 2) Mt. सेनो । 3) Mt. पौ ।

53 – H. 1060[b], 1061[b]; Mt. 49.52[b], 53[a]; Vā. 99.175. 1) Vā. यस्य चै । 2) Vā. च । 3) H. तात । 4) Vā. इति नः श्रुतम् ।

54 – H. 1062; Mt. 49.53[b], 54[a]; Vā. 99.176. 1) H. करो राजा । 2) Vā. राजासीत् 3) Mt.काव्याच्च । 4) Mt.T. सदे । V. सवे– ।

55 – H. 1063; Mt. 49.54[b], 55[ab]I; Vā. 99.177. 1) Mt. पर–संपारौ । 2) Vā. सत्वदश्विति । 3) H. परम धर्मज्ञाः । 4) Vā. त्रो वृपु– । 5) Mt. त जातौ वै विश्रुत भुवि । पारपुत्रः पृथुजतिः ।

56 – H. 1064; Mt. 49.55[b]II, 56[a] – [a]I[b]; Vā. 99.178. 1) Vā. वृपो– । 2) Vā. ति– । 3) Mt. ऽभवत् ।

57 – H. 1075; Mt. 49.56[b], 57[a]; Vā. 99.179. 1) H. पुत्रोऽभूद् । 2) Mt. वीर्यवान् । 3) H. बभौ । 4) H. कस्य । 5) Vā. ऋची ।

58 – H. 1066; Mt. 49.57[b], 58[a]; Vā. 99.180. 1) H. सुतोऽणुहस्य राजर्षिः । 2) H. ऽभवत्प्रभुः । Vā. महातपाः 3) H. योगात्मा । Mt.

विभ्राजः पुनरा[1])जातः[2]) सुकृतेनेह कर्मणा ।
विश्वक्सेनस्य पुत्रस्तु उदक्सेनो बभूव ह[3]) ॥ 59 ॥
भल्लाटस्तस्य पुत्रस्तु, तस्यासीज्जनमेजयः ।

| भल्लाटस्तस्य दायादो येन राजा पुरा हतः[1]) ।
| भल्लाटस्य तु दायादो राजासीज्जनमेजयः[2]) ।

उग्रायुधेन तस्या[1]र्थे सर्वे नीपाः प्र[2]णाशिताः ॥ 60 ॥

ऋषय ऊचुः :

उग्रायुधः कस्य सुतः, कस्मिन्वं[1])शे स[2]) कीर्त्यते[3]) ।
किमर्थं चैव[4]) नीपास्ते[5]) तेन सर्वे[6]) प्रणाशिताः[7]) ? ॥ 61 ॥

[ सूत उवाच :

उग्रायुधः सूर्यवंश्यस्तपस्तेपे वराश्रमे ।
स्थाणुभूतोऽब्दसाहस्रं, तं भेजे जनमेजयः ॥ 62 ॥
तस्य राज्यं प्रतिश्रुत्य नीपानाजघ्निवान्प्रभुः ।
उवाच सान्त्वं विविधं, जघ्नुस्ते वै ह्युभावपि ॥ 63 ॥
हन्यमानागतानूचे : यस्माद्धेतोर्न मे वचः ।
शरणागतरक्षार्थं, तस्मादेवं शपामि वः ॥ 64 ॥
यदि मेऽस्ति तपस्तप्तं, सर्वान्नयतु वो यमः ! ।
ततस्तान्कृष्यमाणांस्तु यमेन पुरतः स तु ॥ 65 ॥
कृपया पर्याविष्टो जनमेजयमूचिवान् ।
गतानेतानिमान्वीरांस्त्वं मे रक्षितुमर्हसि ॥ 66 ॥

जनमेजय उवाच :

अरे पापा दुराचारा भवितारोऽस्य किंकराः ! ।
तथेत्युक्तस्ततो राजा यमेन युयुधे चिरम् ॥ 67 ॥
व्याधिभिर्नारकैर्घोरैर्यमेन सह तान्बलात् ।

---

युगदत्तः ; Vā. योगसूनुः । 4) H. तस्य तनयो । 5) H. —नः परंतपः ; Vā. ऽभवन्नृपः ।
59 – H 1067[a],1070[a]; Mt. 49.58[b], 59[a]; Vā. 99.181. 1) Vā. T. —जपुत्रा । 2) Mt. —तो (!); Vā. राजानः । 3) H. —त्रो ऽभूद्दण्डसेनो महीपतिः ।
60[a] – Mt. 49.50[b].
60[ab] – H. (1070[b], 1071[b]); Vā. 99.182[ab]. 1) H. —तोऽस्य कुमारोऽभूद् । राज्ञेन हतः पुरा । 2) H. स्तुत्रो दुर्बुद्धिरभवश्च युधिष्ठिर ।
60[c] – H. 1072[b]; Mt. 49.59[c]; Vā. 99.182[c]. 1) H. य— 2) H. पा दि— ।
61 – H. 1074; Mt. 49.60; Vā. 99.183. 1) Mt. कस्य । 2) Vā. च 3) H. जज्ञिवान् ; Mt. कथ्यते । 4) Mt. तेन । 5) Mt. ते नीपाः । 6) Mt. —पाः सर्वे चैव । 7) H.भवत निहतास्तद्ब्रवीहि मे ।
62 – Mt. 49.61. 1) T. ह— ।
63 – 49.62.
64 – 49.63.
65 – 49.64.
66 – 49.65.
67 – 49.66.

विजित्य मुनये प्रादात्तदद्भुतमिवाभवत् ॥ 68 ॥
यमस्तुष्टस्ततस्तस्मै मुक्तिज्ञानं ददौ परम् ।
सर्वे यथोचितं कृत्वा जग्मुस्ते कृष्णमव्ययम् ॥ 69 ॥
येषां तु चरितं गृह्य हन्यते नापमृत्युभिः ।
इह लोके परे चैव *सुखमक्षय्यमश्नुते* ॥ 70 ॥

---

द्विमीढस्य तु[1]) दायादो[2]) विद्वाञ्जज्ञे[3]) यवीनरः ।
धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः[4]) ॥ 71 ॥
अथ[1]) सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान् ।
दृढनेमिसुतश्चापि सुधर्मा[2]) नाम पार्थिवः ॥ 72 ॥
आसीत्सुध[1]र्मणः पुत्रः[2]) सार्वभौमः प्रतापवान्[3]) ।
सार्वभौम इति[4]) ख्यातः पृथिव्यामेकराड् बभौ[5]) ॥ 73 ॥
तस्यान्ववाये[1]) महति महान्[2]) पौरवनन्दनः ।
महतश्चापि[3]) पुत्रस्तु राजा रुक्मरथः स्मृतः ॥ 74 ॥
अथ[1]) रुक्मरथस्यापि[2]) सुपार्श्वो नाम पार्थिवः ।
सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिकः ॥ 75 ॥
सुमतेरपि धर्मात्मा *राजा संनतिमान्प्रभुः*[1]) ।
तस्यासी[2])त्संनतिमतः[3]) कृतो नाम[4]) सुतो महान्[5]) ॥ 76 ॥
शिष्यो हिरण्यनाभस्य[1]) कौशल्यस्य[2]) महात्मनः ।
चतुर्विंशतिधा तेन[3]) *प्रोक्ता* वै[4]) सामसंहिताः ॥ 77 ॥
स्मृतास्ते प्राच्यसा[1]मानः कर्ता *साम्नां* तु[2]) सामगाः ।
कार्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः[3]) ॥ 78 ॥
वभूव, येन विक्रम्य पृषतस्य पितामहः[1]) ।
नीपो[2]) नाम महातेजाः[3]) पञ्चालाधिपतिर्हतः[4]) ॥ 79 ॥

---

68 – Mt. 49.67.
69 – Mt. 49.68.
70 – Mt. 49.69.

71 – H. 1075; Mt. 49.70ab; Vā. 99.184. 1) H. Mt. अजमीडस्य तु । Vā. T. तस्य तु। 2) Mt. धूमिन्यां । 3) H. राजा । 4) Mt. स्मृतः ।
72 – H. 1076; Mt. 49.70c, 71a; Vā. 99.185. 1) H. जज्ञे । 2) Vā. सुवर्मा ।
73 – H. 1077; Mt. 49.71b, 72a; Vā. 99.186. 1) Vā. सुव– । 2) Mt. मातनयः । 3) H. प्रजेश्वरः । 4) Mt. –मेति वि– । 5) H. विभुः ।
74 – H. 1078; Mt. 49.72b, 73a; Vā. 99.187. 1) Vā. T. यान्वये च । 2) Mt. हा । Vā. –हत् । 3) Mt. महापौरवा– । Vā. महत्पं– ।
75 – H. 1079; Mt. 49.73b, 74a; Vā. 99.188. 1) H. पुत्रो । 2) Mt. यासीत् ।
76 – H. 1080; Mt. 49.74b, 75a; Vā. 99.189. 1) H. संनतिर्नाम वीर्यवान; Mt. अपि । 2) H. य वै । 3) H. तेः पुत्रः । Vā. सनतिर्नाम । 4) Vā. तस्तस्य । 5) H. महाबलः । Vā. ऽभवत् ।
77 – H. 1081; Mt. 49.75b, 76a; Vā. 99.190. 1) Mt. हिरण्यनाभिनः शिष्यः । Vā. –मेस्तु । 2) Vā. कौथुपस्य । 3) Mt. येन । 4) H. सप्राच्याः । Vā. वास्ताः ।
78 – H. 1082; Mt. 49.76b, 77a; Vā. 99.191. 1) Vā. ना । 2) H. कर्तयोनाम; Mt. ता नामेह । 3) Mt. –थोऽसौ वै महापौरव वर्धनः
79 – H. 1083; Mt. 49.77b, 78a; Vā. 99.192. 1) Mt. पृथुकस्य पिता हतः । 2) Mt. Vā. नीलो । 3) Mt. [illegible] Vā. [illegible] 4) Mt. [illegible] ।

उग्रायुधस्य दायादः क्षेम्यो[1]) नाम महायशाः ।
क्षेम्यात्सु[2])वीरः[3]) संजज्ञे[4]) सुवीरात्तु[5]) नृपंजयः ।
नृपंजयाद् वहु[6]रथ इत्येते पौरवाः स्मृताः ॥ 80 ॥

---

अजमीढस्य[1]) नीलिन्यां[2]) नीलः समभवन्नृपः ।
नीलस्य तपसोग्रेण सुशान्तिरुदपद्यत[3]) ॥ 81 ॥

| | |
|---|---|
| पुरुजातिः सुशान्तेश्च<br>वाह्याश्वः पुरुजातितः ।<br>व्राह्याश्वतनयाः पञ्च<br>वभूवुरमरोपमाः[1]) ॥ 82 ॥ | पुरुजानुः[1]) सुशान्तेस्तु<br>पृथु[2])स्तु पुरुजानुजः[3]) ।<br>भद्राश्वः पृथु[4]दायादो<br>भद्राश्वतनयाञ्छृणु[5]) ॥ 82 ॥ |

सुद्[1]गलः सृ[2]ञ्जयश्चैव राजा वृहदिपुस्त[3]था ।
य[4]वीनरश्च[5]) विक्रान्तः[6]) क्रमिलाश्वश्च[7]) पञ्चमः ।
पञ्चानां[8]) रक्षणायालं[9]) देशाना[10]मिति विश्रुताः[11]) ॥ 83 ॥
पञ्चानां विद्धि[1]) पञ्चाला[2])न्स्फीतै[3])र्जनपदै[4]र्वृतान्[5]) ।
अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः[6]) ॥ 84 ॥

| | |
|---|---|
| मुद्गलस्य तु दायादो<br>मौद्गल्य सुमहायशाः ।<br>सर्वे एते महात्मानः<br>क्षत्रोपेता द्विजातयः ॥ 85 ॥ | मुद्गलस्यापि[1]) मौद्गल्याः[2])<br><br><br>क्षा[3]त्रोपेता[4]) द्विजातयः ॥ 85 ॥ |

---

80 – H. 1084, 1085[a]; Mt. 49.78[b], 79; Vā. 99.193. 1) Mt. Vā. –मो । 2) Mt. Vā. –मात् । 3) H. –रो । Mt. सुनीथः । 4) H. नृपति– । 5) Mt. सुनीथस्या; Vā. –वीरस्य । 6) Mt. याच्च वि–; Vā. याद्वीर– ।

---

81 – Br. 13.93[a] – [a]IbII; H. 1777[b]–[a]IbII; Mt. 50.1; Vā. 99.194. 1) Br. H. –ढात्तु । 2) Br. T. नील्यां वै । 3) Vā. अभ्यजायत ।

82 – Br. 13·93[b], 94[a]; H. 1777[b], 1778[a]. 1) Br. T. स्फीता जनपदवृताः ।

82 – Mt. 50.2; Vā. 99.195. 1) Vā. V. –जन्तः । 2) Vā. रिक्षर– । 3) Mt. T. चः । 4) Vā. ततस्तु रिक्ष– । 5) Vā. भेदाच्च तनयास्त्विमे ।

83 – A. 278.20[ab]I – aIb; Br. 13.94[b], 95; H. 1778[b],1779; Mt. 50.4 – ab; Vā. 99.196, 197[a]. 1) A. मुकु– 2) Mt. लश्च । Vā. शृ– । 3) Mt. पुर– । 4) Mt. ज– । 5) Vā. वीयांश्चापि । 6) A. क्रमिलाः । 7) Mt. कपिलश्चैवा । Vā. काम्पिल्यश्चैव । 8) Br. T. H. –चैते । 9) Vā –गार्थाय । 10) Vā. पितैतान । 11) H. नः श्रुतम् । Vā. अभ्यभाषत ।

84 – A. 278.20[b]II – [b]II; Br. 13.96; H. 1780; Mt. 50.4; Vā. 99.197[b], 198[a]. 1) Br. तेतु । Mt. चैव । 2) Br. –लाः । Vā. पञ्चैतान् । 3) Br. Vā. ता । Mt. एतां । 4) Br. –दा– । Mt. दान् । Vā. –दा– । 5) Br. ताः । Mt. विदुः । Vā. युताः 6) Mt. पञ्चालरक्षिणो ह्येते देशानामिति नः श्रुतम् ।

85 – Br. 13.97[a] – a; H. 1781.

85 – A. 378.21[a]; Mt. 50.5[a]; Vā. 99.193[b]. 1) A. कलस्य तु । 2) A. मौकुल्याः । 3) Mt. क्ष– । 4) Vā. T. –त्र– ।

एते ह्याङ्गिरसः पक्षं[1]) संश्रिताः काण्व[2]-मुद्गलाः ।
मुद्गलस्य[3]) सुतो ज्येष्ठो[4]) ब्रह्मिष्ठः[5]) सुमहायशाः ॥ 86 ॥

इन्द्रसेना यतो गर्भं[1]) वध्र्यश्वं[2]) प्रत्यपद्यत[3]) ।
वध्र्यश्वा[4]न्मिथुनं जज्ञे मेनकायामिति[5]) श्रुतिः ॥ 87 ॥

दिवोदासश्च राजर्षिरहल्या च यशस्विनी ।
शा[1]रद्वतस्तु[2]) दायादमहल्या सम[3]सूयत ॥ 88 ॥

शतानन्दमृषिश्रेष्ठं, तस्यापि सुमहायशाः[1]) ।
पुत्रः[2]) सत्यधृतिर्नाम धनुर्वेदस्य पारगः ॥ 89 ॥

तस्य[1]) सत्यधृते रेतो[2]) दृष्ट्वाप्सरसमग्रतः[3]) ।
अवस्कन्नं[4]) शरस्तम्भे मिथुने समपद्यत[5]) ॥ 90 ॥

कृपया तच्च जग्राह[1]) शं[2]तनुर्मृगयां गतः ।
कृपः स्मृतः स वै तस्माद् गौतमी च कृपी तथा[3]) ॥ 91 ॥

एते शा[1]रद्वताः प्रोक्ता[2]) एते ते[3]) गोतमाः स्मृताः[4]) ।
अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य संततिम्[5]) ॥ 92 ॥

दिवोदासस्य दायादो ब्रह्मर्षि[1]र्मित्रयुर्नृपः ।
मैत्रायणस्ततः[2]) सोमो[3]) मैत्रेयास्[4])तु[5]) ततः स्मृता[6]) ॥ 93 ॥

---

86 – H. 1782; Mt. 50.5[b], 6[a]; Vā. 99.199. 1) Mt. V. Vā. –ने । Vā. कष्ठ– । 3) H. मौद्गल्यस्य । 4) Mt. जज्ञे । 5) H. –मर्पिः ।

87 – Br. 13.97[b] – a; H. 1783; Mt. 52.(6[b]), 7[a]; Vā. 99.200. 1) Mt. नः सुतस्तस्य । 2) Br. T. वध्र्य च ; V. वध्वश्वं । H. वध्रस्वं । Mt. T. विन्ध्याश्वर– । V. वन्ध्याश्व– । Vā. T. वध्यश्वं । V. वध– । 3) Mt. तस्य चाप्त्मजः । 4) H. वध्रस्वान् । Mt. T. विन्ध्याश्वान् । Vā. वध्याश्वान् । 5) Vā. क्वा इति नः ।

88 – H. 1784; Mt. 50.7[b], 8[a]; Vā. 99.201. 1) Vā. सा– । 2) H. तश्च । 3) Mt. संप्र ।

89 – Br. 13.97[b]( ) – b; H. 1785; Mt. 50.8[b] 9[a]; Vā. 99.202. 1) Mt. तपाः । 2) Mt. सुतः ।

90 – Br. 13.97[b] ( ); H. 1786; Mt. 50.9[b], (10); Vā. 99.203. 1) Mt. आसीत् । Vā. अथ । 2) Mt. Vā. तः शुक्रं । 3) Mt. अमोघं धार्मिकस्य तु । 4) Vā. प्रचस्कन्धे । 5) Mt. स्कन्ने रेतः सत्यधृतेर्दृष्ट्वा चाप्सरसं जले । मिथुनं तत्र संभूतं तस्मिन्सरसि संभृतम् ।

91 – Br. 13.97[b] ( ); H. 1787; Mt. 50.11(a) b – a; Vā. 99.204. 1) Br. गृहे । Mt. ततः सरसि तस्मिंस्तु क्रममाणं महीपतिः । दृष्ट्वा जग्राह कृपाया । 2) H. शं । 3) Br. स्मृता ।

92 – Br. 13.97[b] ( ); H. 1788; Mt. 50.12; Vā. 99.205. 1) Mt. श– । 2) Vā. तः पुत्रा । 3) Mt. T. आख्याता । Mt. V. Vā. V. औतथ्या; Vā. T. रितथ्या । 4) Mt. मावराः ; Vā. मान्वयाः । 5) Mt. वै प्रजाः ।

93 – Br. 13.97[b] ( ); H. 1789; Mt. 50.13; Vā. 99.206. 1) Mt. धर्मिष्ठो । Vā. ब्रह्मिष्ठो । 2) Br. मित्तयोस्तु । H. –गो । (!); Vā. मैत्रेयस्तु । 3) Mt. णावरः सोऽथ । Vā. ततो जज्ञे ततः । 4) Mt. –यस् । 5) Br. ते । 6) Mt. [illegible] Vā. स्मृता [illegible] संश्रिताः ।

एतेऽपि[1]) संश्रिताः पक्षं[2]) क्ष[3]त्रोपेता[4]स्तु भार्गवाः[5]) ।

आसीत्पञ्चजनः पुत्रः
सृञ्जयस्य महात्मनः ।
सुतः पञ्चजनस्यापि
सोमदत्तो महीपतिः ॥ 94 ॥

सोमदत्तस्य दायादः
सहदेवो महायशाः ।
सहदेवसुतश्चापि
सोमको नाम पार्थिवः[1]) ॥ 95 ॥

| रजापि च्यवनो विद्वां-
स्ततोऽप्रतियोऽभवत्[1]) ॥ 94 ॥
अथ वै च्यवनाद्धीमा-
न्सुदासः समपद्यत[1]) ।
सौदासः सहदेवश्च
सोमकस्तस्य चात्मजः ॥ 95 ॥

अजमीढः[1]) पुन[2]र्जातः क्षीणे वंशे तु[3]) सोमकः ।
सोमकस्य सुतौ जन्तुर्यस्य पुत्रशतं[4]) बभौ[5]) ॥ 96 ॥

तेषां यवीयान्पृषतो द्रुपदस्य पिता प्रभुः[1]) ।
धृष्टद्युम्नः सुतस्तस्य धृष्टकेतुश्च तत्सुतः ॥ 97 ॥

| आजमीढाः स्मृता[1]श्चैते महात्मनस्तु सोमकाः ।
पुत्राणामजमीढस्य सोमकत्वं[1]) महात्मनः ।
महिषी त्व[2]जमीढस्य धूमिनी पुत्रगृद्धिनी[3]) ॥ 98 ॥

| पतिव्रता महाभागा कुलजा मुनिसत्तमाः[1]) ।
| सा तु[2]) पुत्रार्थिनी देवी व्रतचर्यासमन्विता ॥ 98[1] ॥

ततो[1]) वर्षायुतं तप्त्वा
तपः परमदुश्चरम् ।

| पुत्राभावे[1]) तपस्तेपे
शतं वर्षाणि दुश्चरम् ।

हुत्वाग्निं[1]) विधिवत्सा तु[2]) पवित्र[3]मित[4]भोजना ॥ 99 ॥

---

94[a]– Br. 13.97[b] ( ); H. 1790[a]; Mt. 50.14[a]; Vā. 69.207[a]. 1) H. वै । 2) Mt. एते वंश्या यतेः पक्षाः । 3) Mt. Vā. T. क्षा । 4) Br. –त्रोत्पन्नार– । 5) Br. –वम् ।

94[bc]– Br. 13.98; H. 1790[b], 1791[a].

95 – Br. 13.99; H. 1791[b] 1792[a]. 1) Br. विश्रुतः ।

| 94[b]– Mt. 50.(14[b]); Vā. 99.207[b]. 1) Mt. राजा चैचवरो नाम मैत्रेयस्य सुतः स्मृतः ।
95 – Mt. 50.(15[a]) – a; Vā. 96.203. 1) Mt. अथ चैचवराद्विद्वान्सुदासस्तस्य चात्मजः ।

96 – Br. 13.100; H. 1792[b], 1763[a]; Mt. 50.15[b], 16[a]; Vā. 99.209. 1) Br. –ढ– । H. ढात्– । 2) Br. सुतो । 3) Vā. स । 4) Mt. Vā. हते तस्मिञ्शतं । 5) Vā. विभो ।

97 – Br. 13.101[a] – a; H. 1793[b], 1794[a]; Vā. 99.210[b], 211[a]; 1) Vā. ताभवत् ।

| 98[a] – Br. 13.101[b]; H. 1794[b]. 1) H. ह्ये– ।

98[bc]– Br. 13.102[a] – c; H. 1795; Mt. 50.16[b], 17[a]; Vā. 99.210[a], 211[b]. 1) Mt. कस्ये । Vā. –त्व । 2) Vā. चा । 3) Mt. T. वर्धिनी । Vā. गर्धिनी ।

| 98[1]– Br. 13.102[b], 103[a]; H. 1796([a])[a]. 1) H. तृतीय तव पूर्वेषांजननो पृथिवीपते । 2) Br. च ।

| 99[a]– Mt. 50.17[b]; Vā. 99.212[a]. 1) Vā. पुनर्भवे ।

99[a]– Br. 13.103[b]; H. 1797[a]. 1) H. तेपे ।

99[b]– Br. 13.104[a]; H. 1797[b]; Mt. 50.18[a]; Vā. 99.212[b]. 1) H. नीन् । 2) Mt.

अग्निहोत्र[1]कुशेष्वेव[2]) सु[3]ष्वाप सुमहाव्रता[4]) ।

| | |
|---|---|
| धूमिन्या स तया देव्या<br>त्वजमीढः समीयिवान् ॥ 100 ॥ | तस्यां वै धूम्र[1]वर्णाया-<br>मजमीढः समीयिवान्[2]) ॥ 100 ॥ |

ऋक्षं सं[1]जनयामास धूम्र[2]वर्णं सुदर्शनम्[3]) ।
ऋक्षात्संवरणो जज्ञे कुरुः संवरणात्ततः[4]) ॥ 101 ॥

यः प्रयागाद[1]ति[2]क्रम्य कुरुक्षेत्रं चकार ह[3]) ।
पुण्यं च रमणीयं च पुण्यकृद्भिर्निषेवितम्[4]) ॥ 102 ॥

तस्यान्ववायः सुमहान्, यस्य नाम्नाथ[1]) कौरवाः[2]) ।

| | |
|---|---|
| कुरोस्तु[1]) पुत्रश्चत्वारः<br>सुधन्वः सुधनुस्तथा ॥ 103 ॥ | कुरोस्तु दयिताः पुत्राः<br>सुधन्वा जह्नुरेव च ॥ 103 ॥ |

परीक्षिच्च[1]) महाबाहुः[2]) प्रवर[3]श्चारिमेजयः[4]) ।
सुधन्वानस्तु दायादः सुहोत्रो मतिमान्स्मृतः[5]) ॥ 104 ॥

च्यवनस्तस्य पुत्रस्तु राजा[1]) धर्मार्थकोविदः[2]) ।

| | |
|---|---|
| च्यवनात्कृतयज्ञस्तु<br>इष्ट्वा यज्ञैः स[1])धर्मवित् ॥ 105 ॥ | च्यवनस्य कृतः[1]) पुत्र<br>इष्ट्वा[3]) यज्ञै[4]र्महातपाः ॥ 105 ॥ |

विश्रुतं जनयामास पुत्रमिन्द्रसखं[1]) नृपः[2]) ।

---

सम्यक्त । Vā. हुतग्न्यनिद्र ह्यभवत् । 3) Br. त्रा । Mt. T. त्री । 4) Mt. कृत ।

100a– Br. 13.104b; H. 1798a; Mt. 50.18b; Vā. 99.213a. 1) Vā. अहोरात्रं । 2) Mt. T) त्रक्रमेणैव । V. –होत्रे कुशेष्वेर । 3) Mt. सा सु । 4) Br. मुनिसत्तमाः । H. जनमेजय । Mt. महाव्रता ।

100b– Br. 13.105a; H. 1798b.

100b– Mt. 50.19a; Vā. 99.213b. 1) Mt. –म– । 2) Vā. ढाश्च वीर्यवान् ।

101a– A. 278.26a – b; Br. 13.105b, 106a; H. 1799; Mt. 50.19b, 20a; Vā. 99.214. 1) Mt. Vā. T. सा । 2) Mt. –म– । 3) Mt. शप्तग्रजम् । Vā. सिताग्रजम् । 4) Br. H. णात्तथा । Vā. णादभूत् ।

102 – A. 278.26b – a; Br. 12.106b, 107a; H. 1800. Mt. 50.20b, 22a; Vā. 99.215a, 216b. 1) Vā. Vā. गं । 2) A. अपा– । Vā. पदा– । 3) A. हि । Mt. अकल्पयत् । 4) Mt. कुरुक्षेतं तु ततस्मृतम् ।

103a– Br. 13.107b; H. 1801a; Mt. 50.22b; Vā. 99.217a. 1) H. ना स्थ । Mt. ना तु । 2) Vā. यजाः ख्याताः कौरवो नृपसत्तमाः ।

103b– Br. 13.108a; H. 1801b. 1) –रोश्च ।

103b– Mt. 50.23a; Vā. 13.217b.

104 – Br. 13.108a ( ); H. 1802; Mt. 50.23b, 24a; Vā. 99.213. 1) Vā. T. क्षितो । V. क्षश्च । 2) Mt. तेजाः । Vā. राजः । 3) Mt. प्रजनद्– । Vā. पुत्रक– । 4) Mt. Vā. मर्दनः । 5) Mt. पुत्रो सतिमतां वरः ।

105a– Br. 13.108b ( ); H. 1803a; Mt. 50.24b; Vā. 99.219a. 1) –जन् । 2) Mt. तत्त्ववित् ।

105b– Br. 13.108b ( ); H. 1805b. 1) Br. णौस्तु ।

105b– 50.25a; Vā. 99.219b. 1) Mt. कृमिः । 2) Mt. ऋक्षा– । 3) Mt. जज्ञे ।

106 – Br. 13.108b ( ); H. 1804; Mt. 50 (25b), 26a; Vā. 99.220. 1) H. शम ।

चैद्यो[3]परिच[4]रं वीरं वसु[5]) नामा[6]न्तरिक्षगम्[7]) ॥106॥
चैद्यो[1]परिच[2]राज्जज्ञे गिरिका सप्त *मानवान्*[3]) ।
महारथो मगधराड्[4]), विश्रुतो यो बृहद्रथः ॥ 107 ॥
प्रत्यग्रहः[1]) कुशश्चै[2]व, यमाहुर्मणिवाहनम्[3]) ।
*मारुतश्च*[1]) यदुश्चैव[5]) मत्स्यः[6]) काली[7]) च सप्तमः[8]) ॥ 108 ॥
बृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः ।
कुशाग्रस्यात्मजो *विद्वान्*[1])ऋषभो नाम वीर्यवान् ॥ 109 ॥
ऋ[1]षभस्यापि[2]) दायादः पुष्प[3]वान्नामधार्मिकः[4]) ।
दायादस्त[5]स्य विक्रान्तो[6]) राजा सत्यहितः स्मृतः[7]) ॥ 110 ॥
तस्य पुत्रः सुधन्वा च[1]), तस्मादू[2]र्जस्तु जज्ञिवान्[3]) ।
ऊर्ज[4]स्य नभसः[5]) पुत्रस्तस्माज्जज्ञे[6]) स वीर्यवान्[7]) ॥ 111 ॥
शकले द्वे स वै जातो[1]) जरया संधितस्तु सः[2]) ।
जरया संधितो यस्माज्जरासंधस्ततः स्मृतः[3]) ॥ 112 ॥
सर्वक्षत्रस्य जेतासौ[1]) जरासंधो महाबलः ।
सरासंधस्य पुत्रस्तु[2]) सहदेवः प्रतापवान् ॥ 113 ॥
सहदेवात्मजः श्रीमान्सोमाधिः[1]) स[2]) महातपाः[3]) ।
सोमाधि[1])र्जनयामास
पुत्रं परमधार्मिकम् ।

---

2) Br. पम् ; Mt. कृमेः पुत्रो महावीर्यः ख्यातस्त्वन्द्रसमो विभुः । 3) Vā.T. विद्यो– । 4) Br. –व– । 5) Mt. रो वीरो वसुः । 6) Br. –ना– । 7) Mt. गः ।

107 – Br. 13.108^b ( ); H. 1805; Mt. 50.26^b, 27^a; Vā. 99.221. 1) Vā.T. विद्– । 2) Br. –वा– । 3) Mt. वै सुतान् । Vā. सूनवः । 4) Br. –ध इति ।

108 – Br. 13.108^b ( ); H. 1806; Mt. 50.27^b, 28^a; Vā. 99.222. 1) Br. –ग्रथः । Mt. अश्रवाः । 2) Br. 3) Mt. चतुर्थ हरिवाहनः । 4) Br. शाकलद– । Mt. पञ्चमद– । Vā. मार्थल्यद– । 5) Mt. ऋथद– । –जुश्चैव । Vā. ललित्थश्च । 6) H.Vā. –य– । 7) Vā. लद– । 8) Mt. –मी– ।

109 – Br. 13.108^b ( ); H. 1807; Mt. 50.28^b, 29^a; Vā. 99.223. 1) Mt.Vā. जश्चैव । 2) H.Mt. वृ । 3) Mt.T. पुण्य– ।

110 – H. 1808; Mt. 50.29^b, 30^a; Vā. 99.224. 1) H.Mt. वृ– । 2) Mt. य तु । 4) Mt. वार्थिवः 5) Vā. विक्रान्तर– । 6) Mt. पुण्यः पुण्यवतश्चैव । Vā. दायादो । 7) Mt. धृतिस्ततः ।

111 – H. 1809; Mt. 50.(30^b), 31^a; Vā. 99.225. 1) H. स धर्मात्मा । 2) H. नाम्ना. 3) Vā. जः प्रताप–वान् । Mt. दायादस्तस्य धनुषस्तस्मात्सर्वश्च जज्ञिवान् । 4) Mt. सर्व । 5) H. संभवः । 6) H. त्रो यस्य जज्ञे । Mt. राजा । 7) Mt. बृहद्रथः ।

112 – H. 1810; Mt. 50.31^b, 32^a; Vā. 99.226^a(^b). 1) Mt. द्वे तस्य शकले जाते । 2) H. तः स तु । Mt. तश्च सः । 3) Vā. जरासंधोमहाबाहुर्जरया संधितस्तु सः

113 – H. 1811; Mt. 50.32^b, 33^a; Vā. 99.227. 1) Mt. जेता सर्वस्य क्षत्रस्य । 2) H. –त्रो वै ।

114^a – H. 1812^a; Mt. 50.33^b; Vā. 99.228^a. 1) H. उदापुः । Mt. सोमवित् । 2) Vā. सु– । 3)H. यशाः ।

114^bc – H. 1812^b, 1813^a. 1) H. उदपुर ।

श्रुतशर्मेति नामानं
मगधान्योऽवसत्प्रभुः ॥ 114 ॥

परीक्षितस्तु[2]) दायादो धार्मिको[2]) जनमेजयः ।

श्रुतसेनोग्रसेनौ[1]) च
भीमसेनश्च नामतः ।
एते सर्वे महाभागा
विक्रान्ता बलशालिनः ॥ 115 ॥

जनमेजयस्य पुत्रौ[1]) तु
सुरथो मतिमांस्तथा ।
सुरथस्य तु विक्रान्तः
पुत्रो जज्ञे विदूरथः ॥ 116 ॥

विदूरथस्य दायाद
ऋक्ष एव महारथः ।
द्वितीयस्त्वभवद्रा[1])जा[2])
नाम्ना तेनैव विश्रुतः [1] 117 ॥
द्वावृक्षो सोम[1]वंशोऽस्मि-
न्द्वावेव च परी[2]क्षितौ ।
भीमसेनास्त्रयो विप्रा[3])
द्वौ चापि जनमेजयौ ॥ 118 ॥

श्रुतश्रवारतु सोमाधे-[1])
मागधः[2]) परिकीर्तितः[3]) ॥ 114 ॥

जनमेजयस्य पुत्रस्तु
सुरथो नाम भूमिपः ।
सुरथस्य तु दायादो[1])
भीमसेनोऽपि नामतः ॥ 115 ॥
जह्नुस्त्वजनयत्पुत्रं
सुरथं[1]) नाम भूमिपम् ।
सुरथस्य तु दायादो
वीरो राजा विदूरथः ॥ 116 ॥
विदूरथसुतश्चापि
सार्वभौम इति स्मृतः[1]) ।
सार्वभौमाज्जयत्सेन
*आराधि*[2])स्तस्य चात्मजः ॥ 117 ॥
*आराधितो महासत्त्व*
*अयुतायुस्ततः स्मृतः*[1]) ।
अक्रोधनोऽयुतायोस्तु[2])
तस्माद्देवातिथिः स्मृतः ॥ 118 ॥
देवातिथेस्तु दायाद
ऋक्ष[1]) एव बभूव ह ।

---

114[b] – Mt. 50.34[a]; Vā. 99.228[b]. 1) Mt. –द्वैर । 2) Mt. धाः । 3) Mt. ताः ।

115[a] – A. 278.31[b]; Br. 13.109[a]; H. 1813[b]; Vā. 99.220[a]. 1) A.Vā.T. तस्य । 2) Vā. बभूय ।

115[bc] – A. 278.32[b] – [b]; Br. 13.109[b], 110[a]; H. 1814[b], 1815[a]. 1) Br. नोऽग्रसेनद्– ।

116 – A.278.33[a] – [a]; Br. 13.110[b], 111[a]; H. 1815[b], 1816[a]. 1) Br. त्रर– ।

117 – Br. 13.111[b], 112[a]; H. 1816[b], 1817[a]. 1) H. यः स बभौ । 2) Br. भरद्वाजान् ।

118 – Br. 13.112[b], 113[a]; H. 1817[b], 1818[a]. 1) H. तव । 2) H. –रि । 3) H. राजन् ।

115[bc] – Vā. 99.220[bc].

116 – Br. 13.102[b] ( ); Mt. 50.34[b], 35[a]; Vā. 99.230. 1) Br. –थो

117 – Mt. 50.35[b], 36[a]; Vā. 99.231. 1) Vā.T. इति श्रुतिः । V. –तः । 2) Mt. –नो रुचिरस– ।

118 – Mt. 50.(36[b]), 37[a]; Vā. 99.343. 1) Mt. रुचि–रात्त ततो भौमर–; त्वरितायुरततोऽभवत् । 2) Mt.T. –नस्त्वायुसुतरV । V. –मोश्च ।

ऋक्षस्य तु[1]) द्वितीयास्य
भीमसेनोऽभवत्सुतः ।
प्रतीपो भीमसेनात्तु,
प्रतीपस्य तु शां[2]तनुः ॥ 119 ॥
देवापिर्बाह्लिकश्चैव
त्रय एव महारथाः[1]) ।
शांतनोस्त्वभवद्भीष्म-
स्तस्मिन्वंशे द्विजोत्तमः[2]) ॥ 120 ॥

भीमसेनस्तथा ऋक्षाद्[2])
दिलीपस्तस्य चात्मजः ॥ 119 ॥
दिलीपस्य[1]) प्रतीपस्तु[2])
तस्य पुत्रास्त्रयः स्मृताः ।
देवापिः शांतनुश्चैव
वाह्लीकश्चैव ते त्रयः ॥ 120 ॥

बाह्लीकस्य तु दायादाः[1]) सप्त वाह्लीश्वरा नृपाः[2]) ।
बाह्ली[3]कस्य सुतश्चैव सौमदत्तो महायशाः[4]) ॥ 121 ॥

जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ।
| देवापिस्तु प्रवव्राज[1]) वनं धर्मपरीप्सया ।
उपाध्यायस्तु देवानां देवापिर[1])भवन्मुनिः ॥ 122 ॥

च्यवनस्य कृतः पुत्र[1]) इष्टश्चासी[2])न्महात्मनः ।
शां[3]तनुस्त्वभवद्राजा कौरवाणां धुरंधरः[4]) ॥ 123 ॥

शांतनोः संप्रवक्ष्यामि
वंशं त्रैलोक्यविश्रुतम्[1]) ।

| इमं[1]) चोदाहरन्त्यत्र श्लोकं प्रति महाभिषम्[2]) ।
| यं यं कराभ्यां स्पृशति[3]) जीर्णं रोगिणमेव च[4]) ।
| पुनर्युवा स[5]) भवति, तस्मात्तं[6]) शांतनुं विदुः ॥ 123[1] ॥

---

119 – A. 278.34; Br. 13. 113[b], 114[a], H. 1818[b], 1819[a]. 1) H. च– । 2) A. शं– ।
120 – A. 278.35[a] – [a]; Br. 13.114[b], 115[a]; H. 1819[b], 1820[a]. 1) A. सोमदत्तस्तु सोमतनोः । 2) H. नोः प्रसवस्त्वेष, यत्र जातोऽसि पार्थिव ।

119 – Mt. 50.37[b], 38[a]; Vā. 99.233. 1) Mt. दो दक्ष । 2) Mt. ततो दक्षाद् ।
120 – Mt. 50.38[b], 39[a]; Vā. 99.234. 1) Vā. –पसूनुः । 2) Vā. –तिपर– ।

121 – A. 278.(35[b]I) – [b]; Br. 13.115[b], 116[a]; H. 1820[b], 1821[a]; Mt. 50.39[b] – [a]; Vā. 99.235[ab]. 1) Br. राजर्षेर; H. राज्यं वै; Vā. विज्ञेयः । 2) Br. वंशं शृणुत भो द्विजाः ; H. सप्तवाह्यं नरेश्वत; Vā. –रो नृपः । 3) Br.H. –ह्नि– । 4) A. वाह्लिकात्सोमदत्तोऽभूद् ।

122[a] – A. 278.35[b]II – [a]II; Br. 43.116[b]; H. 1821[b]; Vā. 19.235[c].
| 122[b] – Mt. 50.39[c]I – I; Vā. 94.236[a]. 1) Mt. ययप्यतः ।

122[b](c) – Br. 13.117[a]; H. 1822[a], Mt. 50.39[c]II – II; Vā. 99.236[b]. Mt. प्रजाभिर– ।

123 – Br. 13.117[b], 118[a]; H. 1822[b], 1823[a]; Mt. 50.42[a] – [b]; Vā. 99.237. 1) Br. –नपुत्रः कृतव; Vā. –नोऽस्य हि पुत्रस्तु । 2) Br. इष्ट आसीन् । Vā. इष्टकश्च । 3) Mt.Vā. शं– । 4) Mt. विद्वान्स वै महाभिषक; Vā. विद्वान्वै स महाभिषः ।

123[1] – Br. 13.118[b]; H. 1823[b]. 1) H. यत्र जातोऽसि पार्थिव ।

| 123[1] – Mt. 50.42[b], 43; Vā. 99.238, 239[a]; Vi. IV. 20.5[a] – [b]. 1) Mt.Vā.V. इदं । 2) Mt.–यक । 3) Vā. राजसत्तमाति वै ।

तत्तस्य[1]) शंतनुत्वं हि[2]) प्रजाभिरि[3])ह कीर्यते[1]) ॥
ततोऽवृणुत भार्यार्थे[5]) शंतनुर्जाह्नवीं नृपः[6]) ॥ 123[2] ॥

तस्यां[1]) देवव्रतं नाम[2]) पुत्रं सो[3])ऽजनयत्प्र[4]भुः ।
स तु[5]) भीष्म इति ख्यातः पाण्डवानां[6]) पितामहः ॥ 124 ॥

काली[1]) विचित्रवीर्यं तु दासेय्य[2]जनयत्सुतम्[3]) ।
शां[4]तनोर्दयितं पुत्रं धर्मा[5]त्मानमकल्मषम्[6]) ॥ 125 ॥

कृष्णद्वैपायनश्चै[1])व[2]) क्षेत्रे वैचित्रवीर्यके ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ 126 ॥

धृतराष्ट्र[1]स्तु गान्धार्यां पुत्रानजनयच्च[2]छतम् ।
तेषां दुर्योधनः श्रे[3]ष्ठः सर्वेषामपि[4]) स[5]) प्रभुः ॥ 127 ॥
माद्री राज्ञी पृथा[1]) चैव पाण्डोर्भार्ये बभूवतुः ।
देवदत्ताः सुतास्ताभ्यां[2]) पाण्डोरर्थे वि[3]जज्ञिरे ॥ 127[1] ॥
धर्माद्युधिष्ठिरो जज्ञे, वायोर्जज्ञे[1]) वृकोदरः ।
इन्द्राद्धनंजयो जज्ञे शक्र[2]तुल्यपराक्रमः ।
नकुलं सहदेवं च मद्र्यश्विभ्यामजीजनत्[3]) ॥ 127[2] ॥
पञ्चैव[1]) पाण्डवेभ्यश्च[2]) द्रौपद्यां जज्ञिरे सुताः ।
द्रौपद्यजनयज्ज्ये[3]ष्ठं प्रतिविन्ध्यं युधिष्ठिरात् ॥ 127[3] ॥
[ श्रुतसेनं भीमसेनाच्छ्रुतकीर्तिं धनंजयात् ।
चतुर्थं श्रुतकर्माणं सहदेवादजायत ॥ 127[4] ॥
नकुलाच्च शतानीकं, द्रौपदेयाः प्रकीर्तिताः ।

---

4) Vā. णं स२यतो नाम; Vi. यौवनमेति सः । 5) Mt. च । 6) Vā. ते । 7) –प ।
$123_2$ – Mt. 50.44; Vā. 99.239[cd]. 1) Vā. ततोऽस्य । 2) Vā. वै । 3) Vā. जास्व । 4) Vā. परिश्रुतम् । 5) Vā. स तूपयेमे धर्मात्मा । 6) Mt. –प ।

124 – Br. 13.119; H. 1824, Mt. 50.45[a] – [a]; Vā. 99.210. 1) Br.H. गाङ्ग । 2) Vā. भीष्मं । 3) Mt. कुमारं । 4) Mt. जनयद्वि– । 5) Vā. च । 6) H. कौरवाणां ।

125 – Br. 13.120; H. 1825; Mt.[b],45[b], 64[a]; Vā. 99.211[ab]. 1) Vā. ले । 2) Mt. दाशेयी जनयत् । 3) Br. H. जनयामासःमो द्विजाः ( भारत ) । 4) Mt. शं– । 5) Mt. शान्ता । 6) Vā. प्रजाहितकरं प्रभुम् ।

126 – A. 278.36[b], 37[a]; Br. 13.121; H. 1826; Mt. 50.46[b], 47[a]; Vā. 99.241[c], 242[a]. 1) Br. नाच– । 2) Mt. –नो माम । 3) A. वै चै ।

127 – Br. 13.122; H. 1827. Mt. 50.47[b], 44[a]; Vā. 99.242[b], 243[a]. 1) Vā. ट्रात् । 2) Br. उत्पादयच । Vā. –धारी पुत्राणां शुपुवे । 3) Vā. –नो ज्ये– । 4) H. एव । Mt.Vā. वक्षत्ररय । 5) Mt. वै ।
$127_1$ – Mt. 50.48[b], 49[a]; Vā.99.243[b], 244[a]. 1) Mt. कुन्ती तथा । 2) Mt. पञ्च । 3) Mt.ऽभि–
$127_2$ – Mt. 50.49[b], 50; Vā. 99.244[b], 245[a](b). 1) Mt. मारुताच्च । 2) Mt. यश्चैव इन्द्र । 3) Vā. अश्विभ्यां सहदेवश्च नकुलश्चापि माद्रिजौ ।
$127_3$ – Mt. 50.51; Vā. 99.246. 1) Mt. –चैते । 2) Mt. यस्तु । 3) Mt. यच्छ्रे ।

$127_4$ – Mt. 50.52.

तेभ्योऽपरे पाण्डवेयाः षडेवान्ये महारथाः ॥ $127^{5}$ ॥
हिडम्बा[1]) भीमसेनात्तु जज्ञे पुत्रं[2]) घटोत्कचम्[3]) ।
काश्या पुनर्भीमसेनाज्ज[4])ज्ञे वै सर्वगं[5]) सुतम् ॥ $127^{6}$ ॥
सुहोत्रं विजया[1]) माद्री सहदेवादजा[2]यत ।
करेणुमत्यां[3]) चै[4]द्यायां निरमित्रस्तु नाकुलिः ॥ $127^{7}$ ॥
सुभद्रायां रथी पार्थादभिमन्युरजायत ।
यौधेय्यां[1]) देवकश्चै[2])व पुत्रो[3]) जज्ञे युधिष्ठिरात् ॥ $127^{8}$ ॥

पाण्डोर्धनंजयः पुत्रः
सौभद्रस्तस्य चात्मजः ।
अभिमन्योः परी[1]क्षित्तु
पिता पारीक्षितस्य ह[2]) ॥ 128 ॥

अभिमन्योः परीक्षित्तु
पुत्रः परपुरंजयः[1]) ।
परीक्षितस्तु दायादो
राजासीज्जनमेजयः[2]) ॥ 128 ॥

पारीक्षितस्य काश्यायां द्वौ पुत्रौ संबभूवतुः ।
चन्द्रापीडस्तु नृपतिः सूर्यापीडश्च मोक्षवित् ॥ $128^{1}$ ॥
चन्द्रापीडस्य पुत्राणां शतं उत्तमधन्विनाम् ।
जानमेजयमित्येवं क्षात्रं भुवि परिश्रुतम् ॥ $128^{2}$ ॥
तेषां ज्येष्ठस्तु तत्रासीत्पुरे वारणसाह्वये ।
सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः ॥ $128^{3}$ ॥
सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान् ।
अपुत्रः स तु धर्मात्मा प्रविवेश तपोवनम् ॥ $128^{4}$ ॥
तस्माद्वनगता गर्भं यादवी प्रत्यपद्यत ।
सुचारोर्दुहिता सुभ्रूर्मालिनो ग्राहमालिनो ॥ $128^{5}$ ॥
संभूते स च गर्भे च श्वेतकर्णः प्रजेश्वरः ।
अन्वगच्चत्कृतं पूर्वं महाप्रस्थानमच्युतम् ॥ $128^{6}$ ॥

---

$127_{5}$ = Mt. 50.53. 1) Mt. हैडम्बो । 2) Mt. पुत्रो जज्ञे । 3) Mt. –चः ।
$127_{6}$ = Mt. 50. 54; Vā. 99.217. 4) Mt. –शी वउधराद्वीमाज– । 5) Vā. :सर्ववृकं ।
$127_{7}$ = Mt. 50.55; Vā. 99.218. 1) Mt. तनयं । 2) Mt. असू– । 3) Vā.T. कनेरत्यां तु । V. करम– । 4) Vā.T. वै– ।
$127_{8}$ = Mt. 50.59; Vā 99.219[a] – [a] 1) Mt. –येयं । 2) Mt. की । 3) Mt. त्रं ।

128 = Br. 13.153; H. 1828. 1) H. – रि – । 2) H. तव जनेश्वर ।

128 = Mt. 50.57[a](b); Vā. 99.(249), 250[b]. 1) Vā. उत्तरायां तु वैराट्यां परीक्षिदभिमन्युजः । 2) Mt. जनमेजयः परीक्षितः पुत्रः परमधार्मिकः ।

---

$128_{1}$ = Br. 13.124.
$128_{2}$ = Br. 13.125.
$128_{3}$ = Br. 13.126.
$128_{4}$ = Br. 13.127.
$128_{5}$ = Br. 13.128.
$128_{6}$ = Br. 13.129.

सा तु दृष्ट्वा प्रियं तं च मालिनी पृष्ठतोऽन्वगात् ।
सुचारोर्दुहिता साध्वी वने राजीवलोचना ॥ 128[7] ॥
पथि सा सुषुवे बाला सुकुमारं कुमारकम् ।
तमपास्याथ तत्रैव राजानं सान्वगच्छत ॥ 128[8] ॥
पतिव्रता महाभागा द्रौपदीव पुरा सती ।
कुमारः सुकुमारोऽसौ गिरिपृष्ठे रुरोद ह ॥ 128[9] ॥
दयार्थं तस्य मेघास्तु प्रादुरासन्महात्मनः ।
श्रविष्ठायास्तु पुत्रौ द्वौ पैप्पलादिश्च कौशिकः ॥ 128[10] ॥
दृष्ट्वा कृपान्वितौ गृह्य तौ प्राक्षालयतां जले ।
निघृष्टौ तस्य पार्श्वौ तु शिलायां रुधिरप्लुतौ ॥ 128[11] ॥
अजश्यामः स पार्श्वाभ्यां घृष्टाभ्यां सुसमाहितः ।
अजश्यामौ तु तत्पार्श्वौ देवेन संबभूवतुः ॥ 128[12] ॥
अथा[1]जपार्श्व इति वै चक्राते नाम तस्य तौ[2]) ।
स तु रे[3] मकशालायां द्विजाभ्याममभि[4]वर्धितः ॥ 128[13] ॥
रे[1]मकस्य तु भार्या तमुद्वहत्(!)पुत्रकारणात् ।
रे[1]मक्याः[2]) स तु पुत्रोऽभूद्, ब्राह्मणौ सचिवौ तु[3]) तौ ॥ 128[14] ॥
तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः ।
स एष पौरवो वंशः पाण्डवानां महात्मनाम्[1]) ॥ 128[15] ॥
श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना ।
जरासंक्रमणे पूर्वं तदा[1]) प्रीतेन धीमता ॥ 128[16] ॥
अचन्द्रार्कग्रहा भूमिर्भवेदियमसंशयम्[1]) ।
अ-पौरवा मही नैव[2]) भविष्यति कदाचन ॥ 128[17] ॥

---

एष वः[1]) पौरवो वंशो विख्यातः कथितो मया[2]) ॥ 128[18] ॥

---

128₇ – Br. 13.130
128₈ – Br. 13.131
128₉ – Br. 13.132
128₁₀ – Br. 13.133.
128₁₁ – Br. 13.134.
128₁₂ – Br. 13.135.
128₁₃ – Br. 13.136, 121 (). 1) Br. 13.121 () तः– । 2) Br. 13.121 () तस्य नाम तत् । 3) Br. 13.121 () वे 4) Br. 13.121 () –जनां परि– ।
128₁₄ – Br. 13.237, 121 (). 1) Br. 13.121 () वे 2) Br. 13.137 त्याः । 3) Br. 13.121 ()च
128₁₅ – Br. 13.138, 121 () प्रतिष्ठितः ।
128₁₆ – Br. 13.139, 121 (). 1) Br. 13.121 () भृशं ।
128₁₇ – Br. 13.140, 121 (). 1) Br. 13.121 () अत्र न संशयः । 2) Br. 13.121 () न तु मही ।

---

128₁₈ – Br. 13.141[a], 121 (); H. 1829[a]. 1) H. ते 2) H. यत्र जातोऽसि पार्थिव ।

# नामानुक्रमणिका

( नागरी अङ्क पुस्तक की पृष्ठ संख्या और अंग्रेजी अङ्क श्लोक संख्या तथा पाठान्तर के हैं। )

## अ

